# सुश्रुतसंहिता ।

## सूत्रस्थानम् ।

रामपुरबोयालिया-प्रवासि-

श्रीहाराणचन्द्र-चक्रवर्त्ति-कविराज-

विरचित-सुश्रुतार्थसन्दीपनभाष्य-समेतम् ।

-राजकीयसंस्कृत...कान्ति-भट्टाचार्य्य-
...मतेन

स... विहितविशेषमुखैः संशोधितम् ।

कलिकातोराजधान्याम्

गि...-विद्यारत्न-वर्त्मनि चतुर्व्विंश-संख्यक-सद्मनि

गिरिश-विद्यारत्न-यन्त्रे

श्रीशशिभूषण-कृतिरत्न-भट्टाचार्य्येण मुद्रितम्

वि,-ए,-उपाधिधारिणा श्रीमत्-सुरेशचन्द्र-चक्रवर्त्तिना

रामपुरबोयालियातः प्रकाशितञ्च ।

# विज्ञप्तिः ।



संशोधनायोपनिनीषितं सुश्रुतसंहिताभाष्यमिदं संशोधयन्त्वार्य्याः सदसद्विवेककुशलाः । सुश्रुतसंहिता नामायुर्व्वेदोदधिमन्थनो‌ तीव रमणीयं भिषजामभीप्सितार्थप्रत्ययकरं तन्त्रं तन्त्रान्तर भूतम् । सम्प्रति च पाश्चात्त्यभाषाप्रचारप्रकर्षेण समं संस्कृतग्र विजातीयराजानुवर्त्तिभिर्वरिष्ठैराढ्यैराढ्यतमैश्चातितरां रधरोत्तरीकृतत्वाच्च तदालोचनायां भिषजां प्रयत्नशैथिल्यात् विवृतयो नावाप्यन्त एकान्तेन, यापि चावाप्यते विवृतिः सापि हेतोः पठनपाठनयोर्विरलप्रचारत्वात् विसंष्ठुला सञ्जातेति पुरुषलक्षणम् नातीव प्रचलिता साम्प्रतं प्रभवन्ति तत्त्वार्थमनुसन्धातुं निगूढाशयत्वाद्ध साराऽसारतमत्वेनातिस्पृहणीयमर्थं संक्षेपतो जिज्ञासूनां तदर्थप्रका काचिद्विवृतिश्चेद्वर्त्तेत तर्हि कियदपि सौकर्य्यं भवेदिति विमृश्यातिम यत्नेन भाष्यमिदमस्माभिर्विरचितम् । तदेतच्चेदेकस्याऽपि कस्यचिद यनार्थिनोऽप्युपि साहाय्यं कर्त्तुमुत्सहते, तर्हि कृतकृत्या भविष्यामः ।

तन्त्रे ह्यस्मिन् सोत्तराणि सूत्रस्थानादीनि षट् प्रकरणानि । तत्र सू स्थानमध्यायाः षट्चत्वारिंशत्, निदानं षोड़श, शारीरं दश, चिकित्सि चत्वारिंशत्, कल्पोऽष्टौ, तदुत्तरञ्च षट्षष्टिरित्येवं षड़शीत्यधिकशता ध्यायस्य भाष्यान्वितत्वेन महीयसः खण्डशो विद्वज्जनगणसमीपनयनं इत्याविष्कुर्व्वन्तः प्रार्थयामो वयमेतत्, रजस्तमोऽविरहितत्वेन भ्रमप्रमा सहचरैर्यदिह किञ्चन कदर्थीकृतमस्माभिस्तत् सर्व्वमखिलेन विज्ञापयन् भवन्तो मदनुग्रहाय । अलमतिविस्तरेणेति ।

भाष्यकारस्य ।

# सूचीपत्रम् ।

समाप्तमिदं सूत्रस्थान-सूचीपत्रम् ।

---

| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पंक्त्यङ्कः |
|---|---|---|---|
| विप्रा | विप्रे | ४० | ५ |
| नाधीयते | नाधीयते | ४० | ६ |
| तेषु | स तथोक्तः | ४० | १४ |
| दर्शनं तेषु | दर्शनं यत्र तेषु | ४० | १६ |
| त खःसंयोगा | तद्दुःखसंयोगा | ४३ | १२ |
| यं | ये | ५६ | ५ |
| का ठाः | काष्ठा | ७१ | २ |
| कलाः | कला | ७१ | २ |
| यत् | ये | ७१ | २१ |
| वर्षास्वित्यादि | तचेत्यादि | ७७ | १८ |
| विष्टभ्यन्वत्र | विष्टभ्यत्वन्वत्र | ७८ | १२ |
| स्नषिकाणां | श्लेषिकाणां | ८१ | १ |
| तत्राव्यापन्नषु | तत्राव्यापन्नेषु | ८२ | १ |
| अध्यवस्यं | अध्यवसेयम् | ८३ | २३ |
| प्रभवात् | प्रभावात् | १०१ | १३ |
| निवेदयिष्यते | निवेदयिष्यन्ते | १०६ | १४ |
| अध्यवस्यम् | अध्यवसितव्यम् | ११३ | २० |
| अभिष्यन्दी | अविष्यन्दी | ११६ | ६ |
| मच्छोपद्रुत | मूर्च्छोपद्रुत | ११८ | ११ |
| तत्साध्यानामपुनर्भावाद्वा तथात्वे च वाक्यभेदप्रसङ्गात् न चानयोरस्ति कश्चिद्विरोधः | तत्साध्यानामपुनर्भावाद्वेति नानुपपत्तिः | १२० | १६-१७ |
| अध्यवस्यम् | अध्यवसितव्यम् | १२३ | २८ |
| चिकित्सां | चिकित्सा | १२५ | १ |
| छिक्कतीत्यर्थः | चवं करोति छिक्कति चेत्यर्थः | १२६ | २० |
| इन्द्रवज्रेणेत्यर्थः | धूमकेतुप्रमुखेणेत्यर्थः | १२८ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पङ्क्तिः |
|---|---|---|---|
| व्याञ्चेन | व्याजेन | २२१ | ११ |
| अतएत | अतएव | २२१ | १५ |
| अपेतनानामिति | अचेतना मामैति | २३२ | २२ |
| अ्यवसातं | अध्यवसातुं | २३४ | २४ |
| सन्निपातिका | श्लैष्मिक | २४३ | १ |
| श्लैष्मिक | सान्निपातिका | २४३ | २ |
| उपक्रान्ता | उपक्रान्ताः | २४४ | ८ |
| उद्वृतौष्ठाः | उद्वतौष्ठाः | २४८ | ६।२० |
| ग्रहिण्यादयो | ग्रहण्यादयो | २५४ | १० |
| ग्रस्तहता | ग्रस्तहताः | २५४ | १८ |
| पहृत्तादयः | प्रहृत्तादयः | २५६ | ११ |
| निपुण | निपुणं | २५८ | ७ |
| गुड़ची | गुडूची | २६७ | २ |
| हस्ताङ्गल | हस्ताङ्गुल | २६७ | ५ |
| सन्निकृष्ट | सन्निकृष्टे | २६८ | २ |
| मन्यस्तम्भा | मन्यास्तम्भा | २७० | १३ |
| विपनिपत्तिः | विप्रतिपत्तिः | २८२ | २२ |
| अभिदह्ममान | अभिदह्यमानं | २८३ | २ |
| समागमं | समागमः | ३०२ | १६ |
| मद्धेपु | मध्येपु | ३१४ | ५ |
| प्रवत्तते | प्रवर्त्तते | ३२१ | १३ |
| दिष्टेऽपि | दिष्टं अपि | ३११ | ४ |
| समूल | समूलमूलक | ३११ | १४ |
| पन्यानं | पन्थान | ३०७ | ६ |
| सतकः | सतेकः | ३१८ | २ |
| मर्म्मोपस्कर | वर्म्मोपस्कर | ३५० | ८ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पंक्त्यङ्कः |
|---|---|---|---|
| सगोवनं | संगोवनं | ३६३ | ११ |
| ग्रदीय | ग्रैदीय | ३६६ | ७ |
| इदत्यादि | इत्यादि | ३८० | २ |
| कालऽपि | कालेऽपि | ४०३ | १४ |
| ज्ञयं | ज्ञेयं | ४०६ | ११ |
| गुर्व्वरा | गुर्व्वी | ४१० | [illegible] |
| खल्वाथो | खल्वाप्यो | ४१५ | [illegible] |
| "चक्रतैलं" इत्यादि, "माहुः" इत्यन्तम् | चक्रतैलसमागतावाधे वक्ष्यमाणम्। | ४४१ | १६ |

समाप्तमिदं सूत्रस्थान-शुद्धिपत्रम्।

श्रीश्रीदुर्गा ।

# अथ मङ्गलाचरणानुविद्धभाष्यकारवंशवर्णनम् ।

शारदा सकलशास्त्रपारदा
शारदाम्बुजमुखी मतिं मम ।
शारदी शशधरस्य कौमुदी
मोदिनीं कुमुदिनीमिव क्रियात् ॥ १ ॥

क्षेमं नेमकृते प्रयाति शरणं यामिष्टसिद्धिप्रदां
मूकं गीष्पतिमाशु या च कुरुते याऽन्यच्च सङ्कोचनम् ।
पङ्गुं लङ्घयते गिरिं गिरिसुते ! या तेऽनुकम्पा शिवे !
सेयं नो विदधातु कल्पलतिका नित्यं शिवं शङ्करी ॥ २ ॥

दृष्ट्वा शास्त्रकृतां विभिन्नमतितां खिन्नोऽसृजद्यं विभु-
स्तेषामंशसमर्पणेन कुशलस्तत्तत्प्रभावैः स्फुटैः ।
योऽलङ्कारविनिर्णयं विपुलधीर्वैशेषिके गोभिले
गृह्यासंग्रहसंज्ञके च विशदं यः श्राद्धकल्पेऽकरोत् ॥ ३ ॥

भाष्यं, काव्यमनेकशो, विवरणं न्यायप्रसूनाञ्जले-
श्चन्द्रालोकमथ स्मृतौ, सविवृतिं तत्त्वावलिं, व्यासवत् ।
यश्चैवं बहुतन्त्रकृत् शमनिधिर्वेदायनैकाध्वगः
प्रत्यूहः कलिसम्पदां तमनिशं श्रीचन्द्रकान्तं भजे ॥ ४ ॥
(युग्मकम् ।)

परमात्मविदो विदस्त्रयी-जलजं यस्य रराज मानसे ।
प्रणतस्तमहं पितामहं "परमानन्द"समन्दनन्दनम् ॥ ५ ॥

मध्येवङ्ग"मिक्षामती"तततटे या "पावना"ख्या पुरी
तां विप्रावलिपल्लिकाऽस्ति निकषा "नाकालिया"नामिका ।
वन्दे तां प्रियजन्मभूमिमतुलां स्वर्गादपि ज्यायसीं
विश्वेशीमिव नौमि "सुन्दरमणिं" देवीं प्रसूतिं सदा ॥ ६ ॥

# सुश्रुतसंहिता ।



## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

अथातो वेदोत्पत्तिं नामाध्यायं व्याख्यास्यामः । यथोवाच भगवान् धन्वन्तरिः सुश्रुताय ॥ १ ॥

---

ॐ नमो गणेशाय । पुरा किल ब्रह्मणा प्रणीतं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तादोषं पुष्कलाभिधानमर्थतत्त्वविनिश्चयप्रधानमेवंविधगुणबहुलम्बानुग्रविकमष्टाङ्गमायुर्व्वेदं परमकारुणिकः प्रजानुजिघृक्षुर्महर्षिः सुश्रुतो भगवतो धन्वन्तरेरधिगम्य, प्रजाहितहेतोर्वचनसन्दर्भविशेषेण प्रणेष्यन् प्रारिप्सितग्रन्थस्य प्रत्यूहव्यूहव्यपोहहेतुं परमाप्ताचारपरम्परापरिप्राप्तं मङ्गलाचरणं कर्त्तुमुचितमिति कायिकवाचनिकमानसिकेषु मङ्गलाचरणेष्वन्त्यस्य मनःसमाधानपुरःसरत्वेन तत्तददृष्टजननं प्रति श्रेयस्तमत्वे सत्यपि शिष्यशिशिक्षयिषया वाचनिकमेव मङ्गलमाचरन् प्रागथशब्दं प्रायुङ्क्त । अथशब्दोऽयमानन्तर्य्यार्थः न त्वधिकारार्थो वेदोत्पत्तेरनधिकार्य्यत्वात् । मङ्गलस्य च वाक्यार्थे समन्वयाभावात् । "कथं सुखिनो भविष्यामः" एवं शिष्य-प्रश्नानन्तर्य्ये प्रयुक्तोऽप्यथशब्दः प्रभावान्मङ्गलाय भवति । तथाच शारीरकभाष्यम् "अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति" इति । उक्तञ्च "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्य्यातौ तस्मान्माङ्गलिकावुभौ" इति । यद्यप्येतावथशब्दस्य "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायात् सकृत् पाठादेवाशेषविघ्नोपशमः सम्भवति

तथाहि "श्रेयांसि बहुविघ्नानि" इति स्मृतेः प्रचुरतरविघ्नमाशङ्कमानेन तद्विघातार्थमेव प्रत्यध्यायमथशब्दः प्रयुज्यते। जैमिनिरपि "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति। यथा लौकिककर्षणादीनां बाहुल्येन फलाधिक्यं तथा वैदिकपाठानामपीत्यर्थः।

अतःशब्दो हेत्वर्थः। यस्मात् "तस्यायुषः पुण्यतमो वेदो वेदविदां मतः। वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः" इत्यादिस्मरणादायुर्वेदो नाम ऐहिकमामुष्मिकञ्च श्रेयः साधयतीति प्रतीयते, तस्मात् वेदोत्पत्तिं नामाध्यायं व्याख्यास्याम इति योजना। वेदोत्पत्तिमिति वेदशब्देनात्रायुर्वेद एवोच्यते पूर्व्वापरयोगात्; उत्पत्तिरिहाभिव्यक्तिर्नित्यत्वात्, वेदस्य उत्पत्तिरुत्पत्त्याख्यानं तदधिकृत्येत्यर्थे "अधिकृत्य कृते ग्रन्थे" इति 'छ'प्रत्ययः, तस्य पुनः "लुबाख्यायिकाभ्यो बहुलम्" इति लुप्; सप्तम्यन्तान्यपदार्थबहुव्रीहिरित्यन्ये। नामेत्ययं प्राकाश्ये, अधीयते सङ्गतार्थबोधको यो ग्रन्थः सोऽध्यायः तं व्याख्यास्यामः विस्तरेण प्रवक्ष्यामः। "अस्मदो द्वयोश्च" इति बहुवचनम्। भगवानिति "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना"। ऐश्वर्य्यं तावत् अणिमादि-प्रादुर्भावः। तत्राणिमा अणुभावः; यतः शिलामपि प्रविशति। लघिमा लघुभावः; यतः सूर्य्यमरीचीनवलम्ब्य सूर्य्यलोकं याति। महिमा महतोभावः; यतो महान् सम्भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यम् इच्छानभिघातः; यतो भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकं वशीभवत्यवश्यम्। ईशित्वं भूतभौतिकानां प्रभवस्थिति-व्यूहानामीष्टे। यच्च कामावसायित्वं सा सत्यसङ्कल्पता; यथास्य सङ्कल्पो भवति भूतेषु, तथैव भूतानि भवन्तीति; ततश्चैश्वर्य्यादिमानित्यर्थः। अन्यत्राप्युक्तम् "उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवान्" इति। विशेषणमिदं सर्व्वज्ञत्वेनास्य वचनमसंशयं विश्वसनीयमिति प्रतिपादनार्थम्। धन्वन्तरिरिति धन्वेः "कृशिचमि-

अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनव-वैतरणौरभ्र-पौष्कलावत-करवीर्य्य-गोपुर-रक्षित-सुश्रुतप्रभृतय ऊचुः—

---

गनिधनिवधिसर्ज्जिखर्ज्जिभ्य उः" इत्यौणादिकेनोप्रत्ययेन धनुः शस्त्रं तात्पर्य्यात् शल्यशास्त्रं वा, तस्यान्तमियर्त्तीति पृषोदरादित्वात्साधु ।

अत्र चरकादिवत् प्रतिसंस्कर्त्तुरश्रुतावपि सुश्रुतायेति पदमभिसमीक्ष्य कथमस्य कर्त्ताऽयमिति वितर्कों नोपन्यस्तव्यः । आचार्य्या हि प्रायेण स्वाभिप्रायमपि पराभिप्रायवद्वर्णयन्ति । येन स्वयं रघुनन्दनेनैवाष्टाविंशतितत्त्वेषु "वक्ति श्रीरघुनन्दनः" इत्युक्तम् ॥ १ ॥

न हि निरभिधेये निष्प्रयोजने च प्रेक्षावतां प्रवृत्तिरुपलभ्यते। उक्तञ्च—"अभिधेयफलज्ञान-विरहस्तिमितोद्यमाः । श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः" । अन्यत्राप्युक्तं "ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः" इति । अत्र ज्ञातार्थमिति ज्ञातौ अर्थौ अभिधेयप्रयोजने यस्य तत्तथोक्तम् । तेनाभिधेयेन सहेत्यर्थः । तस्मात् प्रागभिधेयसम्बन्धप्रयोजनानि प्रदर्शयन् वक्तुमुपक्रमते अथेत्यादिना । अथेत्ययमप्यानन्तर्य्यार्थः । शिष्यत्वेन भगवतो धन्वन्तरेः समीपगमनादनन्तरमिति निष्कर्षः । खल्विति वाक्यालङ्कारे ; गुरोर्यथार्था स्तुतिरप्यभीष्टसाधनायालमिति प्रथमं तावद्भगवन्तमित्यादिना धन्वन्तरिं स्तौति । अमरवरं विष्णोरंशांशसम्भवत्वात् । तथाच श्रीमद्भागवते "स वै भगवतः साक्षात् विष्णोरंशांशसम्भवः । धन्वन्तरिरिति ख्यात आयुर्व्वेददृगिज्यभाक्" इति । ऋषिगणपरिवृतमिति विष्णोरंशांशसम्भवत्वेनैव ब्रह्मर्षिदेवर्षिराजर्षिभिः सर्व्वतो वेष्टितम् ; अनेन च विशेषणद्वयेनास्य अत्यन्तोपादेयवाक्यत्वं प्रतिपादितम् । आश्रमस्थमिति वानप्रस्थाश्रमस्थम्, एतेन राज्यचिन्तापरित्यागादनाकुलचित्तत्वं दर्शितम् । काशिराजं वाराणसीराजम् ; "ङ्यापोः संज्ञाच्छन्दसोर्व्बहुलम्" इति ह्रस्वः । यद्वा काशिराजस्यापत्य-

भगवन्! शारीरमानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीड़ा भवति। तेषां सुखैषिणां रोगोपशमार्थमात्मनः प्राणयात्रार्थञ्च प्रजा-

---

स्मिन्नपि काशिराजपौत्रमित्यर्थः। एतेन पूर्व्वजन्मनि य एव विष्णोरंशांशसम्भूतो धन्वन्तरिः स एवायमिति विज्ञापितम्। तथाच विष्णुपुराणे "काशस्य काशिराजस्ततो दीर्घतमाः पुत्रोऽभवत्। धन्वन्तरिस्तु दीर्घतमसोऽभूत्। स हि संसिद्धकार्य्यकरणः सकलसम्भूतिष्वशेषज्ञानविद्, भगवता नारायणेन चातीतसम्भूतावस्मै वरो दत्तः—काशिराजगोत्रेऽवतीर्य्य सम्यगायुर्व्वेदं करिष्यति"—इत्यादि। दिवोदासमिति द्युशब्देनालोपचाराद्दिवि स्थिता देवा उच्यन्ते। दासन्तु दाशन्त्यस्मै इति "दाशगोघ्नौ सम्प्रदाने" इति निपात्यते। ततः समासे षष्ठ्या अलुगार्षम्। एतेनायं देवानामपि सम्प्रदानमित्युपलब्धेरतिपूज्यतमत्वेन सर्व्वथास्य वचनं प्रामाणिकमिति सूचितम्। केचित्तु दिवोदासमिति दन्त्यान्तं पठन्ति, व्याख्यायन्ते च संज्ञान्तरमिदमिति। तदयुक्तं, तस्य धन्वन्तरिप्रपौत्रत्वेनाभिधानात्। तथाहि विष्णुपुराणे "धन्वन्तरेः पुत्रः केतुमान् केतुमतो भीमरथस्तस्यापि दिवोदासः" इति। औपधेनवादयोऽष्टौ शिष्याः।

शारीरमानसागन्तवो व्याधयोऽनन्तरं स्वयमेव व्याख्यास्यन्ते। तैर्विविधवेदनाभिघातोपद्रुतान् नानाविधदुःखसम्बन्धेनातिक्लिष्टान् विचेष्टमानान् दुःखेनाङ्गं विपरिवर्त्तयमानान् विक्रोशत उच्चैरार्त्तस्वरं रुदतः। सुखैषिणामिति "सुखसंज्ञकमारोग्यम्" इति चरकोक्तेः रोगोपशमनद्वारेण स्वास्थ्यानुवृत्त्या च सुखाभिलाषिणाम्। प्राणयात्रार्थं वृत्त्यर्थम्। एतेन रोगोपशमनं स्वास्थ्यरक्षणं जीविका च प्रयोजनमिति व्याजेनोपदिष्टम्, उपदेक्ष्यते चैहिकमामुष्मिकञ्च श्रेयोऽत्र प्रयोजनत्वेन। एवम्प्रयोजनबहुत्वेऽपि यद्धन्वन्तरिणा केवलं व्याधिपरिमोक्षः स्वास्थ्यरक्षणञ्च प्रयोजनत्वेनोक्तं,

हितहेतोरायुर्व्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम्। अत्रा-यत्तमैहिकमामुष्मिकञ्च श्रेयः। तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति। तानुवाच भगवान् स्वागतं वः। सर्व्वे एवा-मीमांस्या अध्याप्याश्च भवन्तो वत्साः॥ २॥

इह खल्वायुर्व्वेदो नाम यदुपाङ्गमथर्व्ववेदस्यानुत्पाद्यैव

भविष्यति तन्मुच्यतयेत्यनुसन्धेयम्। आयुर्व्वेदं श्रोतुमिच्छामः इत्यायु-र्व्वेदशब्देन चाभिधानाभिधेयलक्षणः सम्बन्धोऽपि सूचितः। तथाहि आयुरत्राभिधेयं; वेदश्चायमभिधायकः। यदुक्तम् आयुरस्मिन् विद्यते अनेन वा विन्दतीत्यायुर्व्वेद इति, यद्वा आयुर्लाभोपायादिकमभिधेयं ग्रन्थश्चाभि-धायक इति। नन्वेवं स्थिते "बीजं चिकित्सितस्यैतत्" इत्यादिना वक्ष्यमाण-वचनेन पुरुषादिचतुष्टयस्याभिधेयत्वेनाभिधानमसङ्गतं स्यादिति न चोद्यम्; अत्रायुषः प्राधान्येनोपदेशात्। वक्ष्यति हि "आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्ष्येतेत्यादि"। प्रसङ्गाद्विप्रकृष्टप्रयोजनमपि दर्शयति अत्रेत्यादिना। ऐहिकं सम्मानादि; आमुष्मिकम् इन्द्रलोकगमनादि; यदुक्तं—"पठेद्धि यः काशिपतिप्रकाशितं स पुण्यकर्म्मा भुवि पूजितो नृपैः। असुक्षये शक्रसलोकतां व्रजेत्" इति। आयत्तं वशीभूतम्। तत् तस्मात्। तानित्यादि। स्वागतं सुखेनागमनम्; कुशलं वेत्यर्थः। वत्साः पुत्त-निर्व्विशेषाः; "वत्सः पुत्त्रादिवर्षयोः" इति मेदिनी। अमीमांस्याः अगम्भ्य-बुद्धिरयञ्च विपुलबुद्धिरेवम्प्रकारेणाविचारणीयाः। एतेन तुल्योपदेशार्हत्वादध्यापनासौगम्यम्। परस्परसम्भाषासौकर्य्याच्चाध्ययनाध्यापनासाफल्यञ्च प्रतिपादितम्। तद्विद्यसम्भाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशद्य-मपि चाभिनिर्व्वर्त्तयति। अध्याप्याश्चेति वक्ष्यमाणाध्याप्यगुणयोगात् अध्यापनीयाः॥ २॥

अध्यापने कृतबुद्धिर्भगवान् प्राक् शिष्यप्रहत्त्यर्थमायुर्व्वेदस्याथर्व्ववेदोपाङ्ग-त्वेन प्रामाणिकत्वं प्रतिपादयन् तदभिव्यक्तेराख्यायिकामभिधत्ते इहेत्या-

प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्।

---

दिना। इह जगति, खलु वाक्यालङ्कारे, नामेत्यव्ययं प्राकाश्ये, आयुर्व्वेद इति प्रसिद्धः। स्वयम्भूः परमात्मा, स्वयं भवति स्वेच्छया शरीरपरिग्रहं करोति, न त्वितरजीववत् कर्म्मायत्तदेहः। तथाच श्रुतिः "स एकधा भवति द्विधा भवति" इति। उपाङ्गमित्युपमितमङ्गेन, उपवनमितिवत् समासः। अङ्गोपमितत्वञ्चास्य दृष्टप्रधानत्वेऽपि क्वचित् धर्म्मार्थत्वात् यतो वक्ष्यति—"तदिदं शाश्वतं पुण्यम्" इत्यादि। अङ्गानि हि धर्म्मप्रमितिप्रधानानि। तथाहि "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश। आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः" इति विष्णुपुराणव्याख्यानावसरे विद्यानां चतुर्द्दशत्वेन चतुष्ट्वेन च द्वैराश्यकरणस्याभिप्रायं दर्शयता स्वार्त्तेन चतुर्द्दश धर्म्मप्रमितिप्रधानानि चतस्रः पुनर्दृष्टप्रधानाः क्वचिदलौकिकमर्थं प्रमापयन्त्यो धर्म्मेऽपि प्रमाणमित्युक्तम्। श्लोकशतसहस्रं श्लोकानां शतं सहस्राणि यत्र तत्तथोक्तम् एवमध्यायसहस्रमित्यपि व्याख्येयम्। कृतवानाविश्चकार, न तूत्पादयामास नित्यत्वात्। ततोऽल्पायुष्ट्वमिति। हेतुरत्र धर्म्महानिः। उक्तं हि "युगे युगे धर्म्मपादः क्रमेणानेन हीयते। गुणपादश्च भूतानामेवं लोकः प्रलीयते। संवत्सरशते पूर्णे याति संवत्सरः क्षयम्। देहिनामायुषः काले यत्र यन्मानमिष्यते" इति। यत्र युगे कृतादौ यन्मानं दिव्याष्टशताधिकचतुःसहस्रादिवर्षरूपं प्रमाणमिष्यते मन्वादिभिरिति शेषः तस्य युगस्य संवत्सरशते तत्तद्युगनियतानां संवत्सराणां शतांशे पूर्णे देहिनामायुषो मन्वाद्युक्तस्य लौकिकचतुश्शतादिवर्षरूपस्य संवत्सरक्षयं यातीति तदर्थः। अल्पमेधस्त्वञ्च भूतानां गुणपादह्रासेन वीजदोषादभ्यवहृतान्नादिदोषाच्चेति ज्ञातव्यम्। अष्टधेति। वक्ष्यमाणैरष्टाभिः प्रकारैः।

तद्यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति॥ ३॥

अथास्य प्रत्यङ्गलक्षणसमासः।

तत्र शल्यं नाम विविध-तृण-काष्ठ-पाषाण-पांशु-लोह-

---

तद्यथेत्यादि। शल्यम् उपरिष्टाद्वक्ष्यमाणं, शलाकामधिकृत्य कृतं तन्त्रं शालाक्यं, तस्याश्च केवलं स्रैष्मिकलिङ्गनाशप्रतिकारोपयोगित्वे सत्यपि दुष्कप्रयोगत्वेन प्राधान्यादिहाधिकारः। कायचिकित्सेति। कायशब्देनेह शरीरं शरीराश्रिता व्याधयो वा। यत्तु "जाठरः प्राणिनामग्निः काय इत्यभिधीयते। यस्तं चिकित्सेत् सीदन्तं स वै कायचिकित्सकः" इति तन्त्रान्तरवचनमुपन्यस्य इह कायोऽग्निरिति केनचिदुक्तं, तन्न युक्तम्, अनन्तरं प्रत्यङ्गलक्षणव्याख्यायामस्याः सर्व्वाङ्गसंश्रितानां व्याधीनामुपशमनार्थत्वेनाभिधानात्। अत्र चिकित्साशब्दस्य भावसाध्यत्वेऽपि पदमिदम् उपनिषदादिवत् गौण्या वृत्त्या तन्त्रे प्रवर्त्तते। भूतविद्येति। भूतानां ग्रहसंज्ञकानां देवाद्यात्मकानां विद्या ज्ञानोपायः। स्वयमपि वक्ष्यते च "ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक्। विद्यया भूतविद्येयमतएव निरुच्यते" इति। कौमारभृत्यमिति। कुमाराणां भृत्या भरणं तस्येदमित्यण्। अगदतन्त्रमिति। भेषजसामान्यवचनोऽप्यगदशब्दोऽत्र विषहरौषध एव प्रवर्त्तते, सामान्यशब्दस्यापि क्वचिद्विशेषवृत्तित्वात्, यथा पञ्चमूलीति। रसायनतन्त्रमिति। रसायनलक्षणमाह चरकः—"यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इति। वाजीकरणतन्त्रमिति। अवाजी सुरतक्षमत्वेन वाजीव क्रियतेऽनेनेति वाजीकरणं शुक्रवर्द्धनमित्यर्थः। नेह पूर्व्वाचार्य्यप्रसिद्धत्वात् शल्यादिषु पञ्चसु तन्त्रशब्द उपात्त इत्यनुसन्धेयम्॥ ३॥

अथेत्यादि। अथशब्दोऽयमानन्तर्य्यार्थः। अस्यायुर्व्वेदस्य प्रत्यङ्गलक्षणसमासः अङ्गम् अङ्गम् प्रति लक्षणसंक्षेपः। उपदिश्यत इति शेषः। तत्र शल्यादिषु मध्ये इत्यर्थः। नाम प्राकाश्ये शल्यमिति प्रसिद्धम्। एव-

लोहास्थि-बाल-नख-पूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्र-शस्त्र-क्षाराग्निप्रणिधान-व्रणविनिश्चयार्थञ्च ॥ ४ ॥

शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवण-नय-वदन-घ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् ॥ ५ ॥

कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वरातीसार-रक्तपित्त-शोषोन्मादापस्मार-कुष्ठ-मेहादीनामुपशमनार्थम् ॥ ६ ॥

भूतविद्या नाम देवासुर-गन्धर्व्व-यक्ष-रक्षः-पितृ-पिशाच-नाग-ग्रहाद्युपसृष्टचेतसां शान्तिकर्म्म-बलिहरणादि ग्रहोपशमनार्थम् ॥ ७ ॥

---

सुत्तरत्रापि व्याख्येयम्। विविधतृणकाष्ठादीनामुपादानमुदाहरणप्रपञ्चार्थं हिंसार्थानामित्युपलक्षणं बोध्यं, तेन वक्ष्यमाणानां ग्रासशल्यादीनामप्युद्धरणार्थत्वमस्य तन्त्रस्य वेदितव्यं भवति। उद्धरणार्थमिति। उद्धरणमर्द्धमधस्तिर्य्यक् वाऽपनयनं तदर्थमित्यर्थः। यन्त्रादिप्रणिधानं यन्त्रादिप्रयोगः इहानुक्तोऽप्युच्यते भवतीति वाऽध्याहार्य्यम् ॥ ४ ॥

शालाक्यमित्यादि। ऊर्द्ध्वजत्रुगतानामिति। जत्रुणी कण्ठस्याधोभागस्थिते नाड्यौ इत्यायुर्व्वेदविदो भाषन्ते। तयोरूर्द्ध्वमित्यूर्द्ध्वजत्रु राजदन्तादिवत् पूर्व्वनिपातः। घ्राणादिसंश्रितानामित्यादिशब्देन शिरो गृहीतम् ॥ ५ ॥

कायचिकित्सेत्यादि स्पष्टम्। भूतविद्येत्यादि। देवेत्यादौ "देवगणो ग्रहाख्यः" इत्यनागतावेक्षणात् देवादय एव ग्रहाः आदिग्रहणादुन्मादापस्माराणामादेशः। ग्रहोपशमनार्थमित्यत्राप्यजहत्स्वार्थया लक्षणया ग्रहोन्मादापस्मारोपशमनार्थमित्यर्थः। शान्तिकर्म्म होमादि। बलिहरण-

कौमारभृत्यं नाम कुमारभरण-धात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रह-समुत्थानाञ्च व्याधीनामुपशमनार्थम् ॥८॥

अगदतन्त्रं नाम सर्प-कीट-लूता-वृश्चिक-मूषिकादिदष्ट-विषव्यञ्जनार्थं विविधविष-संयोगविषोपहतोपशमनार्थम् ॥९॥

रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ॥ १० ॥

वाजीकरणतन्त्रं नाम अल्प-दुष्ट-विशुष्क-क्षीणरेतसा-

---

मिति बलिरुपहारः तस्य हरणं दानम्, आदिग्रहणाद्धूपनादीनां ग्रहणम् । कौमारभृत्यमित्यादि । दुष्टस्तन्यग्रहसमुत्थानाञ्चेति । दुष्टस्तन्येन दुष्टग्रहेण च स्कन्दग्रहादिना समुत्थानाञ्चेति, चकाराद्योनिसमुत्थानाञ्चेति बोध्यं, कौमारतन्त्रे योनिव्यापच्चिकित्सिताभिधानात् ॥ ६—८ ॥

अगदतन्त्रमित्यादि । दष्टविषव्यञ्जनार्थमिति । दष्टपुरुषस्य विषं विषविकारः तस्य व्यञ्जनं लक्षणं तदर्थमित्यर्थः । विविधविष-संयोग-विषोपहतोपशमनार्थमिति । विविधविषाणि स्थावर-जङ्गमात्मकानि नानाविधानि विषाणि, संयोगविषं गरविषं, "गरं संयोगजं विद्यात्" इत्युक्तेः, तैरुपहतानामार्त्तानाम् उपशमनार्थं विकारप्रशमार्थमित्यर्थः । उपहत-विषोपशमनार्थमिति पाठे तु उपहतविषं दूषीविषम् । एवं स्थावरविष-विज्ञानीयसंवादाद्व्याख्येयम् ॥ ९ ॥

रसायनतन्त्रमित्यादि । वयःस्थापनमिति । प्रशस्ततरुणवयःस्थापनम् । यदुक्तम् "अस्य प्रयोगात् वर्षशतमजरं वयस्तिष्ठति" इत्यादि । आयुर्मेधा-बलकरमिति । अत्राऽनियतायुषां युगनियतादायुषोऽधिकस्यायुषः सम्पादकमायुष्करम् ॥ १० ॥

वाजीकरणतन्त्रमित्यादि । अल्पेत्यादौ अल्पं प्रकृत्या एव ईषन्मात्रं, दुष्टं वातादिभिर्विकृतं, विशुष्कं ग्रन्थिभूततया विशेषेण शुष्कमिव, क्षीणं

आप्यायन-प्रसादोपचयजनननिमित्तं प्रहर्षजननार्थञ्च ॥ ११ ॥

एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते। अत्र कस्मै कि-मुच्यतामिति। त ऊचुः। अस्माकं सर्वेषामेव शल्य-ज्ञानं मूलं कृत्वोपदिशतु भगवानिति। स उवाचैवमस्त्विति। ते ऊचुर्भूयोऽपि भगवन्तम्। अस्माकमेकमतीनां मतम-भिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति। अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः। स होवाचैवमस्त्विति। वत्स सुश्रुत! इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च ॥ १२ ॥

आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः।

---

व्याध्यादिभिः म्लानादीनं रेतो येषां तेषां क्रमेण आप्यायनादिनिमित्तम्। अत्र दुष्टत्वेनैव क्षीणविशुष्कयोर्लाभे पृथगुपादानं प्रपञ्चार्थम्। प्रहर्षजननार्थं स्त्रीपुंसाह्लजननार्थम् ॥ ११ ॥

एवमयमायुर्वेद इत्यादि। शल्यज्ञानं मूलम् आद्यम् "मूलमाद्ये शिफा-भयोः" इत्यमरः।

सम्प्रति भगवान् सुश्रुतः प्रारिप्सिते ग्रन्थे स्वशिष्यप्रवृत्त्यर्थं व्याजेनौपधे-नवादिभ्य आत्मनः प्रकर्षं प्रतिपादयन्नाह अस्माकमित्यादि। अत्रात्मनः सर्वसम्मतत्वेन प्रश्नकर्तृत्वेन च प्रकर्षः सूचितः। स होवाचेति। स धन्वन्तरिः। हेति निपातो वाक्यालङ्कारार्थश्छन्दसि पठ्यते प्रायेण। वत्स इत्यादि स्पष्टम् ॥ १२ ॥

आयुरित्यादि। आयुः शरीरेन्द्रिय-सत्त्वात्म-संयोगोपलक्षितः कालः, तच्च हिताहित-सुख-दुःखभेदेन चतुर्विधं भवति। तत्र जितेन्द्रियाणां हितमायुः, अहितं पुनरजितेन्द्रियाणां, तथाऽनातुराणां सुखमायुर्विपरीतं पुनर्विष-

तस्याङ्गवर-माद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमान-मुपधारय ॥ १३ ॥

एतद्ध्यङ्गं प्रथमं प्रागभिघातव्रणसंरोहाद्यज्ञशिरः-सन्धानाच्च । श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्न-

---

हिताहितानाम् । एतद्विस्तरस्तु चरकेऽर्थे दशमहामूलीये द्रष्टव्यः । तदायुर्मानामानाभ्यां विद्यते विचार्य्यतेऽस्मिन् इत्यधिकरणे घञ् । पक्षान्तरमाह अनेन वेति । अनेनायुर्विन्दति लभते हेयोपादेयज्ञानलाभेन हितानामेवोपयोगादिति भावः । चरकेऽप्युक्तं "हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते" इति । प्रकृतार्थं व्याख्यातुमुपक्रमते तस्येत्यादिना । अङ्गवरं शल्याङ्गम् आद्यं प्रथमम्, अस्य च वरत्वमाद्यत्वञ्चानन्तरमुपपत्स्यते । आगमेत्यादि । आगम्यते ज्ञायते अनेनेत्यागमः आप्तोपदेशः शब्द इत्यनर्थान्तरम् । आप्तास्तावत् "रजस्तमोभ्यां निर्म्मुक्तास्तपोज्ञानबलेन ये । येषां त्रैकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टा विबुद्धास्ते" इत्युक्तलक्षणाः । प्रत्यक्षं नाम "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्" इत्युक्तलक्षणं, ज्ञानाकरणकं ज्ञानमिति फलितोऽर्थः । मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानं, तच्च "व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः" इत्युक्तलक्षणम् । उपमानं पुनः सारूप्यज्ञानं, तच्च "प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानम्" इत्युक्तलक्षणम् । अविरुद्धमविपरीतम् । एतेनास्य विश्वसनीयत्वं प्रतिपादितम् । आगमादीनामेव गौतमादिभिः प्रमाणत्वेनाभिधानात् । तथाच "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति ॥ १३ ॥

अङ्गवरत्वेनोपदिष्टस्य शल्याङ्गस्य प्रागुक्तमाद्यत्वं ख्यापयति एतदित्यादिना । एतदित्यङ्गवरप्रत्यवमर्शकम् । हिशब्दस्त्वेवार्थः । एतदङ्गवरं शल्यतन्त्रं नामाङ्गमेव प्रथमम् आद्यमित्यर्थः । कुतः ? प्राक् आदिकाले अभिघातव्रणसंरोहात् देवासुरसंग्रामे असुरैः क्षताभिघातव्रणप्रती-

मिति। ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः। भवद्भ्यां यज्ञस्य शिरः सन्धातव्यम्। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः संहितमिति॥ १४।

अष्टास्वपि चायुर्वेदतन्त्रेष्वेतद्देवाधिकमभिमतमाशुक्रियाकरणाद् यन्त्र-शस्त्र-क्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च। तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरञ्चेति॥ १५॥

ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे। तस्मादश्वि-

कारात्, प्राक् यज्ञशिरःसन्धानाच्चेति समन्वयः प्रागित्यस्यानुषङ्गात्। शास्त्रप्रतिपन्नोऽयं यज्ञशिरःसन्धानरूपोऽर्थो न विशङ्कनीय इत्याह श्रूयत इति। अत्र श्रूयत इति शास्त्रप्रामाण्यादुक्तम्। हिरवधारणार्थः। शास्त्रतः श्रवणप्रकारं दर्शयति यथेत्यादिना। यथेति निदर्शनार्थः। शेषमतिरोहितार्थम्॥ १४॥

स्यादेतत्, कथं पुनरस्य वरत्वं जानीमहे इत्याह अष्टास्वपीत्यादि। अभिमतम् आदृतं सम्मतं वा। सर्वतन्त्रसामान्यादिति। सर्वतन्त्रेषु यथा स्नेहादिक्रिया यथासम्भवमुपदिश्यन्ते तथात्रापीति सामान्यम्। यद्वा सर्वतन्त्रेषु तुल्यतया स्थितिरेवात्र सामान्यं तस्मादित्यर्थः। उक्तञ्च "यत्किञ्चिदावाधकरं तत् सर्वं शल्यसंज्ञितम्। व्यापान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा" इति। पुण्यं दरिद्रादीनामुपकारसाधनत्वेन पुण्यहेतुत्वात्। वृत्तिकरं सद्यःफलत्वेन सुखं जीविकाकरं शरीरवृत्तिकरं वा॥ १५॥

सम्प्रति आयुर्वेदस्य पारम्पर्य्योपदेशव्याख्याप्रसङ्गेन राजकार्य्याणि हित्वा तपस्तमुमाश्रममागतस्यात्मन आयुर्वेदाध्यापनमपि कर्त्तव्यमिति जिज्ञापयिषुराह ब्रह्मेत्यादि। प्रोवाच प्रथममुक्तवान्, प्रजापतिर्दक्षः, अधिजगे

नावश्विभ्यामिन्द्रः इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजा-हितहेतोः ॥ १६ ॥

भवति चात्र

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्।
शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥१७॥

अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्यु-

---

अधीतवान्, प्रदेयं प्रकर्षेणोपदेश्यं, एतेनाप्रतिबन्धेनाध्ययनं भविष्यतीति प्रतिपाद्य शिष्या अभ्युत्साहिताः ॥ १६ ॥

तन्त्रकाराणामियमेव रीतिर्यत् प्राचीनसंवादेन स्वाभिहितमर्थं प्रमाण-यन्ति संगृह्णन्ति चाधिकमर्थमित्युक्तं भवति चात्रेति। श्लोक इति शेषः। अहमित्यादि। आदिदेव इति विष्णुपुराणसंवादादतीतसम्भूतो विष्णो-रंशांशसम्भव इत्यर्थः। इह मर्त्यलोके, भूयः पुनरपि उपदेष्टुं गां पृथ्वीं प्राप्तोऽस्मीत्यन्वयः ॥ १७ ॥

सम्प्रति क्रियाधिष्ठानत्वादायुर्वेदोपयोगिकं पुरुषं लक्षणतो निर्द्दिश-न्नाह अस्मिन्नित्यादि। वेदान्तादावात्मनो विभुत्वमङ्गीकृतम्; इह त्वायुर्वेदशास्त्रेष्वसर्व्वगताः क्षेत्रज्ञा नित्याश्चेत्यादि-वक्ष्यमाणवचनस्मरणा-देतत्पुरुषघटकस्यात्मनः परिच्छिन्नत्वमादृतमिति विरोधभयात् शास्त्रा-न्तरव्यावृत्त्यर्थमस्मिन्नित्युपात्तम्। पञ्चमहाभूतशब्दोऽयं कार्य्यकारणयो-रभेदोपचाराल्लोहितरेतसोः सन्निपातेऽभिव्यज्यन्त इति वक्ष्यमाणत्वाच्च क्षेत्र-ज्ञाधिष्ठानभूतं तद्विकारसमुदायात्मकं शुक्रशोणितारब्धं शरीरमभिधत्ते। शरीरी च क्षेत्रज्ञापरपर्य्यायो जीवात्मेति यावत्, अनयोः समवायोऽपृथ-ग्भावो मेलनमित्यनर्थान्तरम्। "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायान्मिलितमेतदुभयं पुरुष इत्यर्थः। एतेन सामान्यतः शुक्रशोणिता-रब्धशरीरत्वेन जरायुजानामण्डजानाञ्च पुरुषत्वेनोपलम्भेऽपि सामान्य-

च्यते। तस्मिन् क्रिया सोऽधिष्ठानम्। कस्मात्? लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च।

शब्दस्य विशेषपरत्वात् प्रागेव शिष्याणां मनुष्यविषयकायुर्व्वेदाध्ययनेप्सुत्वेन मनुष्याधिकारत्वाद्वा लक्षणमिदं सामान्येनोक्तमपि मनुष्यमेवाधिकरोतीत्यवश्यं वक्तव्यमेव। अन्यथा तत्र पुरुषः प्रधानमिति वक्ष्यमाणवचनमनुपपन्नं स्यात्। न ह्यञ्जसा कार्त्स्न्येनेते प्राधान्यात् पुरुषो भवितुमर्हन्ति; शस्त्रादेव गवाश्वादीनां क्रौञ्च-तित्तिरि-कुलिङ्ग-प्रभृतीनाञ्च मनुष्योपकारार्थं प्रयोज्यत्वेनोपकरणतयोपदेशात्। उक्तञ्च "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति ब्रह्मसूत्रभाष्ये भगवता शङ्कराचार्य्येण। तद्यथा "सर्व्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते इत्यारभ्य ननु प्रति प्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यते इत्यत उत्तरमुच्यते; मनुष्याधिकारत्वादिति। शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति; शक्तत्वादर्थित्वादपर्य्युदस्तत्वादुपनयनादिशास्त्राच्च" इति। सामान्यशब्दस्य विशेषपरत्वन्तु "पञ्चमूल्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषे तात्पर्य्यं, न तु मूलविशेषेणापि" इति शब्दशक्तिप्रकाशिकासंवादादूह्यम्। चरकेऽपि "तस्यायुषः पुण्यतमो वेदो वेदविदां मतः। वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः" इत्यनेन तस्य तन्त्रस्य मनुष्याभिप्रायिकत्वमभिधाय, पुनः "सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत्। लोकस्तिष्ठति संयोगात् तत्र सर्व्वं प्रतिष्ठितम्। स पुमान् चेतनं तच्च तच्चाधिकरणं स्मृतम्। वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः" इत्युक्तेरेवमेव समादधते कुशलाः। तस्मिन् क्रियेति। तस्मिन् पुरुषे क्रिया चिकित्सा सोऽधिष्ठानं यतः स एव कर्म्मफलानामाश्रय इत्यर्थः। ननु "सुखसंज्ञकमारोग्यं विकारो दुःखमेव च" इति स्मरणात् सुखदुःखसमन्वितत्वेनोक्तो द्विविध एव लोकोऽधिष्ठानं भवितुमर्हति कथं पुनः स एवेत्याशयेन पृच्छति कस्मादित्यादिना। लोकस्य द्वैविध्यात् कस्मात् सोऽधिष्ठानमित्यर्थः। मा भूज्जनभुवनोभयार्थवाचिनो लोकशब्दस्येह भुवनार्थस्य ग्रहणात् सुखदुःखरहितत्वेन चिकित्सानर्हाणा-

द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात्। पञ्चात्मको वा॥ १८॥

तत्र चतुर्व्विधो भूतग्रामः। स्वेदजाण्डजोद्भिज्जजरा-

---

मद्यस्मदादीनां चिकित्साप्रसङ्ग इत्यतो विशिनष्टि लोको द्वीत्यादिना। अनन्तरं पार्थिवासु सुवर्णरजतेत्यादिना पार्थिवानां स्थावरेभ्यः पृथक् उपदेशात् स्थावरजङ्गमशब्दाभ्याञ्च पुनर्वनस्पतिवृक्षवीरुधोषधीनामन्तः-संज्ञानां चतुर्णां, चतुर्णाञ्च जरायुजाण्डजस्वेदजोद्भिज्जानां वहिःसंज्ञानां ग्रहणात् स्थावरो जङ्गमश्चेत्यनेन लोकशब्दस्येह सुखदुःखसमन्वितेष्वेव वृत्तिः न त्वस्मदादावपीति विज्ञापितम्। स्थावराणामचेतनत्वे सत्यपि सुखदुःखसमन्वितत्वमाह मनुः "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति। एते वृक्षादयः। नन्वास्तां लोकस्य द्वैविध्यं सौम्यत्वाग्नेयत्व-विशेषाभ्यां पाञ्चभौतिकत्वविशेषेण वा पुरुषोऽधिष्ठानश्चेदित्याशङ्क्याह द्वि-विधात्मक एवेत्यादि। द्विविधात्मकः स्थावरजङ्गमोभयात्मक एव लोक-इति शेषः। एवकारोऽन्ययोगव्यवच्छेदकः। आग्नेयः सौम्यश्चेति, पञ्चानां महाभूतानां सान्निध्ये सत्यपि अग्निगुणबहुलः सोमगुणबहुलश्च। तथाच मार्कण्डेयपुराणम् "अग्नीषोममयं विश्वम्" इति। पञ्चात्मको वेति वा-शब्दस्य समुच्चयार्थत्वात् द्विविधात्मक एवेत्यनेन सम्बन्धः। पञ्चात्मकः पञ्चभूतात्मकः, "सर्व्वं खल्विदं पाञ्चभौतिकम्" इत्युक्तेः॥ १८॥

एवं प्रश्ने दृढ़ीकृते पुरुषस्य श्रेष्ठतमत्वेनोत्तरयन् श्रेष्ठज्ञानादृते श्रेष्ठ-तमत्वाप्रतीतेः प्राक् तेषु लोकेषु श्रेष्ठानेव लक्षयति तत्रेत्यादिना। तत्र लोके चतुर्व्विधो भूतग्रामः जन्तुनिकायः, "क्ष्मादौ जन्तौ च भूतं स्यात्" इत्यमरमाला। अत्र प्राणित्वात् बुद्धिजीवित्वाद्वा श्रेष्ठं इति तात्पर्य्यम्। एषां श्रेष्ठत्वं मनुरप्याह "भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः" इति। अत्र स्थावराणां प्राणीतरत्वादबुद्धिजीवित्वाद्वाऽश्रेष्ठत्वं स्वेदजोद्भिज्जयोस्तु विशेषबुद्ध्यभावेऽप्याहारान्वेषणादिबुद्धियोगात्प्राणित्वाद्वा श्रेष्ठत्वमित्यनु-

ह्युपसंग्रहः। तत्र पुरुषः प्रधानं; तस्योपकरणमन्यत्। तस्मात् पुरुषोऽधिष्ठानम् ॥ १९ ॥

---

सन्धेयम्। तेषु च पुनः पुरुषस्य प्राधान्यं दर्शयन्नाह तत्रेत्यादि। तत्र चतुर्व्विधे भूतग्रामे पुरुषः पञ्चमहाभूतेत्यादिनाऽभिहितो मनुष्यः प्रधानं। "बुद्धिमत्सु नराः श्रेष्ठाः" इति मनुस्मरणात् श्रेष्ठेषु भूतेषु श्रेष्ठतम इत्यर्थः। "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीवमेकत्वे सत्तमे सदा" इति मेदिनी। सत्तमः श्रेष्ठतमः। नन्वेवं मनुष्यस्यैव प्राधान्येनाधिष्ठानं कथन्तर्हि "तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा" इति भूतग्रामस्य चिकित्सार्हत्वख्यापकं शारीरे वक्ष्यमाणवचनं सङ्गच्छत इत्याशङ्क्याह तस्येत्यादि। अन्यत् पुरुषेतरत् सर्व्वं वस्तु तस्य पुरुषस्योपकरणम् आहारौषधरूपतया उपकारकम्। एतेन यथान्नं भुङ्क्ते इत्युक्ते प्रधानस्य क्रियासम्बन्धे सत्यपि अप्रधानस्योपकरणस्य भोजनं प्रतीयते, तद्वदेव पुरुषोपकरणभूतस्येतरस्यापि चिकित्स्यत्वमर्थापन्नं भवतीति नानुपपत्तिरिति भावः। अथातो ब्रह्मजिज्ञासेति शारीरकसूत्रभाष्ये भगवता शङ्कराचार्य्येणाप्युक्तम् "ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानं, तस्मिन् प्रधाने जिज्ञासाकर्म्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि; यथा राजासौ गच्छतीत्युक्ते सपरिवारस्यैव राज्ञो गमनं प्रतीयते तद्वत्" इति। एवञ्च जलौकसामुपकरणत्वे सत्यप्यन्ताभिहितं पोषणादिरूपं कर्म्माविरुद्धमिति सुधीभिर्भाव्यम्। एवं प्रकृतार्थे निश्चिते सुखाववोधार्थं निगमयति तस्मादित्यादिना। यस्मात् पुरुषः प्रधानं, तस्मात् पुरुषोऽधिष्ठानमिति चरमः सिद्धान्तः।

यद्वा कस्मादित्यादिग्रन्थ एवं व्याख्येयः। कथं सोऽधिष्ठानमिति पृच्छति कस्मादिति, उत्तरयति लोकस्य द्वैविध्यादित्यादिना तस्मात् पुरुषोऽधिष्ठानमित्यन्तेन ग्रन्थेन। सर्व्वं वाक्यं सावधारणमिति न्यायेन लोकस्य द्वैविध्यादित्यस्य लोकस्य द्विविधमात्रत्वादित्यर्थः। तदेव विवृणोति लोको हीत्यादिना, हिरवधारणे। अत्रापि पञ्चात्मको वेति वाशब्दः समु-

तद्दुःखसंयोगा व्याधय इत्युच्यन्ते। ते चतुर्व्विधाः,

---

चयें; भूतगुणतारतम्येनाग्नेयः सौम्यश्च, तारतम्यानादरेण च पञ्चात्मको लोकः द्विविधात्मक एवेत्येवं योजना। भवतु लोकस्य द्वैविध्यमात्मत्वं तावताऽपि कथं पुरुषेऽधिष्ठानमित्याह तत्रेत्यादि। तत्र द्विविधात्मके लोके जरायुजादिभेदभिन्नश्चतुर्व्विधो भूतग्रामोऽस्तीति शेषः। इह वने तिलका इतिवत् समुदायस्य एकदेशापेक्षयाऽधिकरणविवक्षया सप्तमीनिर्द्देशः। अथवा पञ्चात्मको वेति बुद्ध्या समाकृष्टं सन्निहितं पदं तच्छब्देन परामृश्यते, पञ्चात्मके लोके चतुर्व्विधो भूतग्राम इत्यर्थः। एवञ्च प्रधानेन व्यपदेशा भवन्तीति न्यायात् पुरुषः प्रधानमित्युक्तं, तदेवोपसंहरति तस्मादित्यादिना। अत्राऽयमाशयः—मनुष्याधिकारमिदं शास्त्रं, मनुष्यलोके च चतुर्व्विध एव भूतग्रामः, तत्र च पञ्चमहाभूतेत्यादिनाऽभिहितो मनुष्यसंज्ञकः पुरुषः प्रधानं, तस्मादुपपन्नं तस्याधिष्ठानत्वम्। यदि हि स्थावरजङ्गमात्मक-द्विविध-लोकातिरिक्ता देवादय इहाप्यास्यन्, ततो मनुष्याणां प्राधान्यं नाभविष्यत्। द्विविधे तु लोके "बुद्धिमत्सु नराः श्रेष्ठाः" इति मनूक्तेः मनुष्याणामेव प्राधान्यमिति तस्याऽधिष्ठानत्वेनोक्तिर्नासङ्गता; एतदभिप्रायेणैव द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात्, पञ्चात्मको वेति मध्येऽभिहितं देवानां तैजसत्वात् तद्व्यावृत्तिसूचनाय॥ १९॥

व्याधावविज्ञाते क्रिया न कर्त्तुं शक्यते इत्यतो व्याधिलक्षणमाह तद्दुःखसंयोगा इत्यादिना। तदिति पुरुषप्रत्यवमर्शकं, दुःखं प्रतिकूलवेदनीयात्मगुणः, तत् खलु त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकञ्च, तच्च पश्चान्निवेदयिष्यते। तस्य पुरुषस्य दुःखं तद्दुःखं तस्य संयोगः साक्षाज्जनकत्वेन सम्बन्धो येषां ते व्याधयः, इत्यस्मिन् शास्त्रे इत्यर्थः। अत्र दुःखस्य साक्षाज्जनकानामेव व्याधित्वेन व्याख्यानात् मिथ्याहाराचारशस्त्राग्निव्यसनादीनां तेषां तेषां विप्रकृष्टकारणानां व्याधित्वेनापरिग्रहः, परिग्रहश्च सन्निकृष्टानां धातुवैषम्यादीनाम्। तत्र हि मिथ्याहाराचारादीनि धातुवैषम्यं, शस्त्रादीनि च व्रणादीन्, इष्टवियोगादीनि च दुःखानुगुणचित्तवृत्तिविशेषादीन्, तत्तत्-

आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति। तेषामाग-न्तवोऽभिघातनिमित्ताः। शारीरास्त्वन्नपानमूला वात-पित्त-

---

कालादीनि च कारणानि क्षुधादीन् जनयन्ति; ततो दुःखमुत्पद्यते; इति दुःखं प्रत्येतेषां विप्रकृष्टकारणत्वं, सन्निकृष्टकारणत्वन्तु धातुवैषम्यादीनाम्। न चैवं स्थिते तिलकालकादीनां नीरुजत्वेन दुःखजनकत्वाभावाद्व्याधित्वं न स्यादिति वाच्यं, तेषामपि मनोदुःखजनकत्वात्। एवं वक्ष्यमाणेषु चतुर्विधेषु व्याधिषु धातुवैषम्यात्मकत्वस्य शारीरत्वेन व्यपदेशात् "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यं विकारो दुःखमेव च" इति चरकोक्तव्याधिलक्षणं शारीरव्याध्यभिप्रायेणेति बोध्यम्। तत्र दुःखमिति दुःखजनकम्। न च दुःखजनकश्चेद्व्याधिस्तर्हि मद्यादिभिर्विमोहितचेतःसु सर्पादिदष्टेषु दुःखाननुभवात् तेषां त्वेषां सर्पादिकृतविकाराणां मृत्युसाधनत्वेऽपि व्याधित्वं न स्यादिति चोद्यं, तत्र तत्र दुःखजननयोग्यतया व्याधित्वसिद्धेः। यथा अपचन्नपि सूपकारः पचन-योग्यतया पाचक उच्यते। एवं धातुवैषम्यस्य व्याधित्वे स्थितेऽपि यत् शारीरास्त्वन्नपानमूला इत्यादौ धातुवैषम्यस्य निमित्तत्वेनाभिधानं तत् समवायिकारणद्रव्यविकारः कार्य्यं तदात्मकमेवेति कार्य्यकारणयोरभेदादेव। यथोक्तं तोयबुद्बुदादयश्चोदकविशेषा एव। अतएवोक्तमात्रेयेण "स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः" इति। अत्राभिघात-निमित्तत्वेनागन्तूनां वैशिष्ट्यमनुसन्धेयम्।

ननु कार्य्यकारणयोरभेदश्चेदिष्टः कथन्तर्हि वमनलङ्घने कफहरे न कफगुल्मं हरतः। यदुक्तं "कफे लङ्घनमा[illegible] तु कर्त्तरि ज्वरगुल्मयोः। तुल्येऽपि देशका[illegible]गुल्मिनां[illegible]दौ लङ्घनं न च सम्मतम्।" तथा "न वामयेत्तैमिरिकं न [illegible] गुल्मिनम्" इति चेन्न, तत्र व्याधिशक्तेरचिन्त्यत्वात्। तेषामित्यादि। अभि-घातनिमित्ताः शस्त्राद्यभिघातहेतुकाः। उक्तञ्च आगन्तवो दुर्ब्बलस्य बलवद्विग्रहात्, तेऽपि द्विविधाः शस्त्रादिकृता व्यालादिकृताश्चेति।

कफ-शोणित-सन्निपातवैषम्यनिमित्ताः । मानसास्तु क्रोध-

शारीरास्त्वन्नपानमूला इति । अत्रान्नेन भक्ष्यमवरुद्धम् अन्नसाधर्म्यात्; पानेन लेह्यञ्च द्रवसाधर्म्यात्; चतुर्व्विधो ह्याहारः प्रायेण द्विविधः प्रसिद्धः । तेन द्वयोरेवान्नपानयोर्ग्रहणमित्यनुसन्धेयम् । अन्नपानशब्दावत्र तत्तद्दोषप्रकोपहेतूनुपलक्षयतः । दूरेचणादीनां परस्वहरणादीनां तथर्त्तुपर्य्यायाणामपि तत्र तत्र हेतुत्वेनोपदेशात् ।

एवञ्च ब्रह्मस्त्रीसज्जनवधादिजन्यानां कुष्ठादीनां तथा अकालप्रवाहणादिजन्यानां वाधिर्य्यादीनां तथैवर्त्तुपर्य्यायादिहेतुकानाञ्च ज्वरादीनां शारीरत्वेनावगमाद्रोगाणां चतुर्व्विधत्वं नापह्नीयते, व्याधिसमुद्देशीये मिथ्याचारादिभवानां शारीरत्वेन व्यपदेशोऽपि न विरुध्यते । चरकस्याप्येवमेवाशयः, यदुक्तं "कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च । द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः" इति । वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता इति । इहोपदेशस्य शल्यज्ञानमूलकत्वेन शल्यतन्त्रप्रधानभूतानां व्रणानां मुख्यस्याधिष्ठानभूतस्य शोणितस्य परमार्थतो दूष्यत्वेऽपि विशेषेण तदाश्रितानां व्रणानां हेतुलिङ्गादि-विशेषव्याख्यानार्थं दोषवदुपचारः क्रियते । यतो वक्ष्यति "शोणितचतुर्थैरेव दोषैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति" इति । येनेह दोषवर्गे शोणितोपादानमित्याहुः । परमार्थतस्तु रोगाभिनिर्वृत्तौ त्रय एव दोषाः, यदुक्तं "सर्व्वेषामेव व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वात्" इति । चरकेऽप्युक्तं "वातः पित्तं कफश्चेति शारीरो दोषसंग्रहः" इति । सन्निपातोऽत्र द्वयोर्बहूनां वा वातादीनां सन्निपतनं तेषामुक्त इत्येकोऽर्थः । एषां वैषम्यन्तु क्षयेण वृद्ध्या क्षयवृद्धिभ्यां वा वैषम्यम् । "ह्रासहेतुविशेषश्च," तथा "विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते" इति । ननु परस्परविरोधिनां वातादीनां तैस्तैर्लघुगुरुशीतोष्णादिभिः स्वैः स्वैर्गुणैः समबलत्वे तुल्यमेव परस्परोपघातादुच्छेदः, तारतम्ये च बलीयसाऽल्पिष्ठस्यावजयान्न जातु सन्निपतनं सम्भवति, तत् कथमुच्यते सन्निपातवैषम्य-

शोक-भय-हर्ष-विषादेर्ष्याऽभ्यसूया-दैन्य-मात्सर्य-लोभ-काम-प्रभृतय इच्छाद्वेषभेदैर्भवन्ति। स्वाभाविकाः क्षुत्पिपासा-

---

निमित्ता इति चेन्, वातादीनां परस्परविरोधित्वे सत्यपि परस्परानुपघातकत्वेनोपदेशात्; तथाहि चरकः "विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वात् घोरं विषमहीनिव" इति। अत्र सहजसात्म्यत्वादिति सहजतो निसर्गतः सात्म्यत्वात्,—आत्मना शरीरेण सहाविरोधादित्यर्थः, "सात्म्यार्थो ह्युपशयार्थः"। कश्चित्तु तत्वमजानन् "विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा। यदा तदाश्मर्युपजायते तु" इत्यत्र पवनेन पित्तकफयोः शोषणश्रवणादेवोपघातं मन्यमानो विरुद्धैरपीत्यादेर्वचनस्य प्रायिकत्वमाह। तन्न समीचीनं, हन्तेस्तत्र वधार्थत्वेन इह च शोषणस्य सतोरेव कफपित्तयोः काठिनीकरणार्थत्वेनानयोर्भिन्नविषयत्वात्।

मानसा इत्यादि। मानसाः रजस्तमोविकारत्वेन मनोऽधिष्ठाना इत्यर्थः। उक्तं हि चरके "रजस्तमश्च मानसौ दोषौ, तयोर्विकाराः कामक्रोधेत्यादयः।" क्रोधः परापकाराय बुद्धिविशेषः; शोकः इष्टवियोगजनितदुःखानुगुणचित्तवृत्तिभेदः; भयं स्वानिष्टसम्भावनात्मिका चित्तवृत्तिः; हर्षोऽत्र मनोऽभिघातहेतुरेव बोध्यः, न तु हर्षमात्रं, तस्य रोगत्वानुपपत्तेः। हर्षस्य मनोऽभिघातकत्वं चरकेऽप्युक्तं तथाच "उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः" इति। विषादो विषण्णता, अवसाद इति यावत्; ईर्ष्या अन्यगुणासहिष्णुता; अभ्यसूया गुणेषु दो[illegible]पः; दैन्यं दीनत्वम्—अहं दरिद्र इत्येवंज्ञान[illegible]दः [illegible]सति यावत्; मात्सर्यम् अन्यशुभद्वेषः; लोभोऽत्र [illegible]। यदुक्तं "[illegible] [illegible]काष्ठद्रव्यादौ [illegible] चातिशयाभिलाषविशेषः। यदाहुः "पर[illegible] [illegible]दिकं दृष्ट्वा नेतुं या हृदि जायते। इच्छा भूमिसुरश्रेष्ठ स लोभ इति कथ्यते" इति। कामः रिरंसा। प्रभृतिग्रहणान्मोहादीनां ग्रहणम्। इच्छाद्वेषभेदैर्भवन्तीति। इच्छा एवं मे भूयादित्येवमभिलाषः; द्वेषोऽनिष्टसाधनताज्ञानजन्यानुरागप्रतिबन्धिचित्तवृत्तिः। तौ च प्रतिपुरुषं

जरामृत्युनिद्राप्रभृतयः । त एते मनःशरीराधिष्ठानाः ॥२०॥

तेषां संशोधनसंशमनाहाराचाराः सम्यक्प्रयुक्ता निग्रह-हेतवः ॥ २१ ॥

---

भिद्यते इति भेदो विशेषः । यत्र यस्येच्छा तस्यालाभात् यत्र यस्य द्वेषस्तस्य पुनर्लाभात् क्रोधादयो भवन्तीत्यर्थः । चरकेऽप्युक्तं "मानसः पुनरिष्टस्यालाभाल्लाभाच्चानिष्टस्योपजायते" इति ।

स्वाभाविकाः स्वभावबलप्रवृत्ता इत्यर्थः । जरा पलितादिः ; मृत्युः शरीरसत्त्वात्मसंयोगध्वंसः । तस्य पुनस्तद्दुःखसंयोगत्वानुपपत्त्या भाविनि भूतवदुपचारात् व्याधित्वमध्यवस्यन्ति कुशलाः । येनोक्तमरिष्टाधिकारे "यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते" इति । निद्रा चेतनास्थानस्य हृदयस्य तमसा संवरणाज्जायते । यदुक्तं "तद्धृदयं विशेषेण चेतनास्थानम्,अतस्तस्मिन् तमसावृते सर्व्वप्राणिनः स्वपन्ति" इति । चरकस्तु "समनस्केन्द्रियाणां विषयतो निवृत्तिर्निद्रा" इत्याह । तथाहि "यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः" इति । प्रभृतिग्रहणाद्दन्तपतनादीनामादेशः । एते पुनः कालजाकालजत्वभेदेन द्वेधा भिद्यन्ते । उक्तं हि "तेऽपि द्विविधाः कालकृता अकालकृताश्च" इति । तत्र कालकृताः शाश्वतिकत्वान्निष्प्रतिक्रियाः ; अकालकृतास्त्वन्नपानमूलत्वेन शारीरवत् प्रतिकार्य्या एव । अतएव भवत्यजीर्णेऽपि तदा बुभुक्षेत्यादिना व्याख्यातानामकालकृतानां क्षुधादिव्याधीनाम् एकान्ततः प्रतीकारमुपदिशन्त्याचार्य्याः ; कालकृतानां पुनः पित्तादिवैषम्यजत्वेऽपि न प्रतिकार्य्यत्वं, नित्यानुबन्धिस्वभावपुरःसरादेव धातुवैषम्यात्तेषामुत्पत्तेः । एवञ्च शारीरागन्तुमानसास्त्रयो रोगाश्चिकित्स्या इति सिद्धान्तः । अतएव चरकोऽप्याह "त्रयो रोगा इति निजागन्तुमानसाः" इति ॥ २० ॥

"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्" इत्युक्तेर्व्याध्युपदेशादनन्तरमौषधोपदेशस्य प्रस्तुतत्वादौषधं निर्द्देष्टुमाह तेषामित्यादि । दोषादीन् संशोधयति बहिर्निःसारयतीति संशोधनं ; तद्द्विविधं बाह्यमाभ्यन्तरञ्च ; तत्र

प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च स षट्सु

---

बाह्यं वह्निःप्रयोज्यं शस्त्राग्निक्षारादि ; आभ्यन्तरन्तु पानादिना प्रयोज्यं वमनादि । संशमनं पुनः "न निर्हरति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति च क्रुद्धान् तत् संशमनमुच्यते" इत्युक्तलक्षणम् । तत् पुनर्दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्चेति त्रिविधमौषधम् । तत्र दैवव्यपाश्रयं मन्त्र-बलिनियमादि, युक्तिव्यपाश्रयं पुनरौषधद्रव्यादीनां योजना, सत्त्वावजय-स्त्वहितेभ्य एवार्थेभ्यो मनोनिग्रहः । एवमनयोः कृत्स्नौषधगमकत्वादेव वाग्भटेनोक्तं "शोधनं शमनञ्चेति समासादौषधं द्विधा" इति । आहारा-चारा इति आहरन्ति रसमस्मादित्याहारश्चतुर्व्विधमन्नपानम् ; आचारः पुनर्वाङ्मनःशरीरचेष्टा । तत्र वाक्चेष्टा सद्वाक्यादि, मनश्चेष्टा पुनर्ज्ञान-विज्ञानादि, शरीरचेष्टा तु व्यायामादि । एवञ्चाहाराचारयोः संशमनत्वे-नोपलम्भेऽपि पथ्यत्वापरधर्म्मतया व्याधिनिग्रहं प्रति प्रधानकारणत्वेन पृथगुपादानम् । उक्तं हि "विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्त्तते" इति । न चेह पथ्यत्वेनानयोरौषधत्वमुपहन्यते इति वाच्यं, कार्य्यविशेषेणैकस्या-ऽप्यनेकसंज्ञासिद्धेः । ततश्च "पथ्यं पथोऽनपेतञ्च" इति चरकोक्तेः स्रोतो-हितत्वेन पथ्यत्वं, व्याधिहरत्वस्वस्थहितत्वाभ्याञ्चौषधत्वमित्यनुसन्धेयम् । चरकस्याऽप्ययमेवाशयः, येनोक्तं युक्तिव्यपाश्रयमौषधं पुनराहारौषधद्रव्या-दीनां योजनेति । सम्यक् प्रयुक्ताः देशकालप्रभृतीनभिवीक्ष्य हितकारत्वे-नोपयुक्ताः ॥ २१ ॥

सम्प्रति सर्व्वेष्वेव चतुर्व्विधेष्वौषधेषु आहारद्रव्याणां प्राधान्यं भङ्गी-विशेषेणोपदिदिक्षुराहारमधिकृत्याभिधत्ते प्राणिनामित्यादि । बहुवचनं प्राणिमात्रबोधकं, पुनःशब्दोऽयमवधारणे, आहार एव मूलमित्यर्थः । मूलमिति प्रधानकारणं, प्रधानत्वन्तु स्थित्युत्पत्तिविनाशहेतुत्वात् । यदुक्तं "ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः" इति । बलं व्यायामशक्तिः ; वर्णो गौरादिरङ्गरागः ; ओजः सर्व्वधातुसारः । एवं बलौजसोर्भेदेऽपि तत्वल्वोजः तदेव बलमिति यदुपरिष्टाद्वक्ष्यति, तत्

रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयाः। द्रव्याणि पुनरोषधयस्ता द्विविधाः स्थावरा जङ्गमाश्च। तासां स्थावरा-

---

कार्य्यकारणयोरभेदादेवेत्यदोषः। स इत्यादि। स आहारः षट्सु रसेष्विति षष्ठीसप्तम्योरर्थं प्रति भेदाभावादुक्तम्। आयत्तं वशीभूतं निपातमात्रं हि रसा एवोपलभ्यन्तेऽयं मधुरोऽयञ्च कटुक इत्ययमाशयः। अत्र षट्स्विति संख्यया निर्द्देशेऽपि मधुरादिभ्योऽनन्यभावात् अव्यक्तरसोऽप्युपदिष्ट एवेति बोध्यम्। अन्यथा रसानां षट्त्वन्तु नोपपद्यते; अतएवाभिहितमात्रेयेण "अव्यक्तीभावस्तु खलु रसानां प्रकृतौ भवत्यनुरसेऽनुरससमन्विते वा द्रव्ये" इति। एवञ्चाव्यक्तरसेऽप्याहार आयत्त इत्युपलब्धेरान्तरीचोदकस्याहारत्व-मुपपन्नम्। नित्यास्वतन्त्राणां रसानां स्वातन्त्र्येणोपयोक्तुमशक्यत्वादाह रसाः पुनर्द्रव्याश्रया इति। इदमत्रावधेयं रसस्याप्यत्वेऽपि "परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यमस्ति उत्कर्षापकर्षात्तु ग्रहणम्" इत्युक्तेः सर्व्वाण्येव पाञ्चभौतिकानि द्रव्याणि रसवन्तीति प्रतीयते; तेन द्रव्याणि-विश्वरूपेणावस्थितानि पाञ्चभौतिकानि वस्तूनि आश्रयो येषामिति वाक्यार्थः। ततश्च द्रव्याणि पल्याख्याय रसानामनवस्थानात् आहारार्थं तानि तानि द्रव्याणि प्रयोज्यानीति प्रतीतेः, परमार्थतो द्रव्यायत्त आहार इत्युपलब्धावपि यदाचार्य्येण षट्सु रसेष्वायत्त इत्युक्तं; तत्प्रसिद्धरसद्रव्यायत्त आहार इति प्रतिपादनार्थम्। तेन सुवर्णरजतादीनां तथाविधरसत्वेनानभ्युपगमान्नाहारत्वम्। एवमाहार-द्रव्याणां प्राधान्यमुपदिश्य पुनर्मुख्यौषधत्वमुपदिशन्नाह द्रव्याणीत्यादि। ओषधिशब्दोऽयमजहत्स्वार्थया लक्षणया वनस्पत्यादिष्वष्टसु प्रवर्त्तते इति गम्यते, अनन्तरं तेषामेवोपादानात्। द्रव्याणीह प्रस्तुतत्वादाहारार्थान्येव पुनःशब्दो विशेषार्थः। आहारद्रव्याणि पुनरोषधित्वेन विशिष्यन्त इति निष्कर्षः। अत्रौषधित्वेन विशेषणम् आहारद्रव्याणां व्याधिप्रतीकारकत्वे

प्रतानवत्यः स्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति॥ २२॥

जङ्गमास्त्वपि चतुर्व्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः। तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्यासस्वरसादयः प्रयोजनवन्तो जङ्गमेभ्यश्चर्म्मनखरोमरुधिरादयः॥ २३॥

---

तेभ्यः फलानीति एवं दृष्टा उभयरूपाः प्रथमान्तात्तसिल्" इति। प्रतानवत्यः तन्तुयुताः त्रपुषालावुप्रभृतयः। स्तम्बिन्यः काण्डरहिता मल्लिकादयो वीरुधः, एतास्तु वीजकाण्डरुहाणामुपलक्षणं, तेन "गुच्छगुल्मन्तु विविधं तथैव तृणजातयः। वीजकाण्डरुहाण्येव प्रताना वल्लय एव च" इति ऋतुना तथाविनीतानां सर्व्वेषामेव ग्रहणम्। गुच्छास्त्वत्र स्तम्बिन्यः, गुल्मा एकमूलाः सङ्घातजाताः शरेक्षुप्रभृतयः, तृणजातयः उलपाद्याः, प्रतानाः प्रतानवत्यः, वल्लयो गुडूच्यादयः। फलपाकनिष्ठाः फलपाकान्ताः ओषधयो व्रीहियवादयः॥ २२॥

जङ्गमास्त्वित्यादि। व्यालाः हिंस्राः पशवः, सर्पाः मन्दगामिनोऽजगरादयः। वक्रं सर्पन्तीति सरीसृपाः दर्व्वीकरादयः। इन्द्रगोपो वर्षाप्रभवो रक्तवर्णकीटविशेषः। स्थावरजङ्गमेभ्यो यानि यानि अस्मिन् प्रयोजनवन्ति तान्याह तत्रेत्यादिना। स्थावरेभ्यस्त्वगादयः, आदिग्रहणात्सारप्रभृतीनां ग्रहणम्। जङ्गमेभ्यश्चर्म्मादयः, इह लादिग्रहणात् मधुगोरसादीनां ग्रहणम्। उक्तं हि चरके "मूलत्वक्सारनिर्य्यासनाड़स्वरसपल्लवाः। क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः। पत्राणि शुङ्गाः

पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः। कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्वयनादयः कालविशेषाः। त-

---

कन्दाश्च प्ररोहायौद्भिदो गणः। मधूनि गोरसाः पित्तं वसा मज्जाऽसृगामिषम्। विण्मूत्रं चर्म रेतोऽस्थि स्नायुशृङ्गनखाः खुराः। जङ्गमेभ्यः प्रयुज्यन्ते केशरोमाणि रोचना" इति ॥ २३ ॥

सुवर्णादय. पार्थिवविशिष्टा अपि स्थावरजङ्गमात्मकौषधिवत् रुक्प्रतीकारे प्रभवन्तीति पार्थिवानामौषधित्वमप्याह अभिधत्ते पार्थिवा इत्यादि। एवमौषधत्रैविध्यात् "तत् पुनस्त्रिविधं प्रोक्तं जाङ्गमं भौममौद्भिदम्" इति चरकवचनं समन्वितं भवति। आदिग्रहणात् लोहदारुचूर्णदन्तप्रभृतीनां ग्रहणम्। यदुक्तं चरके "सुवर्णं समलाः पञ्च लोहाः ससिकताः सुधा। मनःशिलाले मणयो लवणं गैरिकाञ्जने। भौममौषधमुद्दिष्टम्" इति। न हि काश्चिदौषधयः कालविशेषमनाश्रित्य प्रभवन्ति गुणं दोषं वा दर्शयितुमित्यौषधिव्याख्यानानन्तरं कालविशेषान् व्याचिख्यासुराह कालेत्यादि। ... शस्यापि ... सितत्वेनोपचरितत्वं निरूपयति। प्रवातः प्रकृष्टवातः तुकारः प्रस्तुत... सूर्यादिक्रियाभिनिर्वृत्तानां प्रवातादीनां नवानां कालकृतत्वं कालस्य सूर्यादिक्रियाप्रचयरूपत्वेनाभिधानादेव बोध्यम्। कालविशेषत्वं पुनरेषां शब्ददेव तदुपाधिकत्वेनावबोधात्। उक्तञ्च "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति। न चैवं जगतामेव कालत्वं प्रसज्यत इति चोद्यम्, आत्मादीनां द्वादशानां प्रमेयत्ववदेतेषां पारिभाषिककालत्वेनोपदेशात्। तथाच गौतमसूत्रम् "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति। अत्र "प्रमेयशब्दो हि वादादिशब्दवत्परिभाषाविशेषेण द्वादशसु वर्त्तते" इति वृत्तिः। प्रमाविषयत्वेन तु सर्वपदार्थेष्वपीति भावः। आदिग्रहणान्निमेषादीनां ग्रहणम्। त

एते स्वभावत एव दोषाणां सञ्चय-प्रकोप-प्रशम-प्रतीकार-हेतवः प्रयोजनवन्तश्च ॥ २४ ॥

भवन्ति चात्र।

शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः।
चये कोपे शमे चैव हेतुरुक्तश्चिकित्सकैः ॥ २५ ॥

---

एत इत्यादि। ते इति तच्छब्दोऽयं बुद्धिस्थविप्रकृष्टविषयपरामर्शवृत्तितया उपरिष्टात् यथास्थानमुपदिष्टान् प्रवातादीन् लक्षयति। त एते स्वभावतः स्वकीयशीतोष्णादिधर्म्मतः दोषाणां सञ्चयादिहेतवः प्रयोजनवन्तः प्रतीकारविधौ वैद्यकर्म्मानुगुणतया तत्तत्कार्य्यसाधकाश्चेत्यर्थः। अतएवैते प्रवातादय उपदिश्यन्त इति भावः। अत्राविशेषेऽपि प्रतीकारविधौ वैद्यकर्म्मानुगुणत्वेन कालविशेषाणां हेतुत्वं "शरद्वसन्तप्रावृट्सु च कुपितानां निर्हरणं कर्त्तव्यम्" इत्यनागताविक्षणादुन्नेयम्। वैद्य एव हि तांस्तान् कालविशेषानासाद्य तत्तत्कालस्वभावकुपितान् दोषान्निर्हर्त्तुमुत्सहते ते चोपकुर्व्वन्ति सम्यग्योगेनेति। प्रवातादीनां प्रयोजनवत्त्वन्तु "लाजोत्पलोशीरकुचन्दनानि दत्त्वा प्रवाते निशि वासयेत्"—तथा "निवाते देशे निचितं कृत्वा," तथा "दिवा तेनैव सिद्ध्यन्ति सूर्य्यरश्मिबलाहिता" इत्यादौ द्रष्टव्यम् ॥ २४ ॥

सम्प्रति पूर्व्ववत्श्लोकेनाभिहितमधिकञ्चार्थमभिधातुमाह भवन्ति चात्रेत्यादि। विकाराणामिति तद्दुःखसंयोगत्वेन दोषाणां ज्वरादिव्याधीनाञ्च एष पूर्व्वोक्तः स्थावरजङ्गमपार्थिवकालविशेषरूपो वर्गः समूहः, "वृन्दभेदाः समैर्वर्गः" इत्यमरः। चयादौ यथासम्भवं हेतुरित्यर्थः। अत्र प्रतीकारपदस्यानभिधानात्प्रशम एवान्तर्भावमाहुः, तेनैषां चतुर्णां यथासम्भवं प्राकृतमप्राकृतञ्च चयप्रकोपप्रशमप्रतीकारहेतुत्वमुन्नेयम्। अत्राभिचाराभिशापहोमनियमादीनामपि यथासम्भवं चयादिहेतुत्वाद्वचनमिदं प्रस्तुतत्वा-

आगन्तवश्च ये रोगास्ते द्विधा निपतन्ति हि ।
मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया ॥
शरीरपतितानान्तु शारीरवदुपक्रमः ।
मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः ॥ २६ ॥

एवमेतत्पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम् । तत्र पुरुषग्रहणात् तत्सम्भवद्रव्य-समूहो[1] भूतादि[1]रुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांसशिरा-

---

देवोक्तं न तु केवलमेषामेव हेतुत्वादित्यवगन्तव्यम् । येनोक्तं "प्रशाम्यत्यौषधैः पूर्व्वो दैवयुक्तिव्यपाश्रयैः" इति । पूर्व्वोऽत्र शारीरः । त एते इत्यादिना कालविशेषाणां चयादिहेतुत्वमभिहितमपि स्थूणानिखनन-न्यायेन दृढ़प्रतिपत्तये पुनरिहाभिहितमिति न पौनरुक्त्यम् । उक्तञ्च चरके "गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते । तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न शस्यते" इति । आगन्तव इत्यादि । उपक्रमश्चिकित्सा, इष्टः अभिलषितः, शब्दादिर्वर्गः शब्दस्पर्शरूपरसगन्धात्मको वर्गः सुखावहः आरोग्यजननः । शब्दादिपदमत्र मानसव्याधिभेषजानामुपलक्षणं, तेन ज्ञानादीनामप्यादेशः । यदुक्तं चरके "मानसो ज्ञानविज्ञानधैर्य्यस्मृतिसमाधिभिः" इति । एवमतो-ऽपरविधावागन्तोः शारीरे मानसे चान्तर्भावः प्रायिकत्वेन बोद्धव्यः । सद्यो-व्रणचिकित्सितादौ विशेषतः शीतालेपनादिविधेरुपदेशात् ॥ २५ । २६ ॥

उक्तमर्थमुपसंहरन्नाह एवमित्यादि । एवमिति पञ्चमहाभूतेत्यादिना लक्षणचतुष्टयेन इत्येतत्पुरुषादिकं चतुष्टयम् । अत्र क्रियाकाल इति क्रियाणां छेद्यादीनां स्नेहादीनाञ्च प्रवृत्तिनिवृत्तिप्रत्ययभूतः कालः । सम्प्रति कर्म्मपुरुषषटकस्य शरीरिणो निर्गुणत्वेन वक्ष्यमाणत्वात् तथा "वेदनाना-मधिष्ठानं मनो देहश्च सेन्द्रियः" इति चरकवचनाच्छरीरस्य सुखदुःखा-श्रयत्वेन यच्चिकित्स्यत्वमुपलब्धं तदेव विशदयन्नाह पुरुषग्रहणादित्यादि । भूतादिस्तत्सम्भवद्रव्यसमूह उक्त इत्यन्वयः ।

स्नायुप्रभृतयः । व्याधिग्रहणाद्वात-पित्त-कफ-शोणित-सन्निपातवैषम्यनिमित्ताः सर्व्व एव व्याधयो व्याख्याताः । औषधि-

भूतानि पृथिव्यादीनि आदिर्यस्येति भूतादिः, विशेषणमिदं शरीरिणो व्यावृत्त्यर्थं शरीरस्य सुखदुःखमोहात्मकत्वप्रतिपादनार्थञ्च भूतानां तथात्वात् । वक्ष्यति हि "तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् । तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत" इति । तत्र प्राणिशरीराणां प्राकृतिकभूतारब्धत्वादेव सुखदुःखमोहात्मकत्वं प्रतिपादितम् । तत्सम्भवद्रव्यसमूह इति । सम्भवत्यस्मादिति सम्भवः उत्पत्तिकारणमित्यर्थः, द्रव्यविशेषणमेतत् । तच्छब्दस्तु पूर्व्वोक्तपुरुषप्रत्यवमर्शकः, ततश्च तत्सम्भवद्रव्यसमूहः पूर्व्वोक्तपुरुषसम्भवहेतुभूतद्रव्याणीत्यर्थः । पदस्यास्य त्वगाद्युत्पत्तिपूर्व्वावस्थे गर्भे तात्पर्य्यम्, अनन्तरं त्वगादीनां पृथक्त्वेनोपदेशात् । तस्य पुरुषस्य अङ्गप्रत्यङ्गविकल्पाः पुनस्त्वगादय इति यथाश्रुतो वार्थः । सर्व्वथैवागर्भसञ्चयान्मरणं यावच्छरीरं चिकित्साधिष्ठानमिति तात्पर्य्यम् । व्याधिग्रहणादित्यादि । निमित्तमिह लक्ष्म, लक्षणमित्यनर्थान्तरम् । "निमित्तं हेतुलक्ष्मणोः" इत्यमरः ।

आगन्तुकानाम् उत्पत्त्यवस्थायां दोषसम्बन्धाभावेऽपि भाविनि भूतवदुपचाराद्वातादिवैषम्यलक्षणत्वं बोध्यम् । यद्वा "आगन्तुर्हि व्यथापूर्व्वं जायते; जघन्यं निजैर्दोषैरनुबध्यते" इति चरकोक्तौ व्यथापूर्व्वमागन्तोरुत्पत्तिश्रवणादेव तदानीं यथाकथञ्चिद्दोषसम्बन्धोऽस्तीति मन्तव्यं, यदुक्तं स्वयमेव "नर्त्तेऽनिलाद्रुक्" इति । अतएव वाग्भटेनापि "यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यासौ सम्प्राप्तिः" इत्यविशेषेण व्याधिसामान्यस्यैकमेव सम्प्राप्तिलक्षणमुपदिष्टम् । वातादिवैषम्यलक्षणत्वेनोपदेशस्तु सर्व्वेषामेव व्याधीनां यथादोषं प्रतिकर्त्तव्यताप्रतिपादनार्थम् । सर्व्व इति तु विशेषणं "न हि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः" इति श्रुतेर्व्याधीनामपरिसंख्येयत्वादुक्तानुक्तानां ग्रहणार्थम् । पूर्व्वं हि "द्रव्याणि पुनरौषधय" इत्यादिना द्रव्याणामेवौषधत्वं व्यक्तमुक्तं न तु रसा-

ग्रहणाद्द्रव्यगुणरसवीर्य्यविपाकप्रभावाणामादेशः । क्रियाग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्म्माणि व्याख्यातानि । कालग्रहणात् सर्व्वक्रियाकालानामादेशः ॥ २७ ॥

भवति चात्र ।

बीजं चिकित्सितस्यैतत् समासेन प्रकीर्त्तितम् ।
सविंशमध्यायशतमस्य व्याख्या भविष्यति ॥ २८ ॥

---

दीनामित्यत आह ओषधिग्रहणादित्यादि । अत्र वीर्य्याणां पृथगुपादानात् गुणाः खलु वीर्य्यव्यतिरिक्ता एव बोध्याः । प्रभावोऽचिन्त्यशक्तिः । ओषधिग्रहणेन गुणादीनामादेशः ; गुणादीन् विहाय औषधद्रव्याणामनवस्थानात् । एतेन "तद्द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्य्येण सेवितम् । किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा" इति युक्तं भवति । द्रव्यस्यात्मैवात्र प्रभावः । पारिशेष्यात्कालं व्याचिकीर्षुस्तस्य क्रियार्थत्वेन प्रथमं तावत्क्रियामेवोपदिशति क्रियेत्यादिना । क्रियाग्रहणादिति क्रियाकालशब्दोपात्तात्क्रियाग्रहणात् । छेद्यादीनीत्यादिशब्देन भेद्यादीनां ग्रहणम् । स्नेहादीनीत्यादिशब्देन च स्वेदनादीनाम् । सर्व्वक्रियाकालानामिति "लाहाचाराहाच धावेत" इत्यादिना व्याख्यातव्यानां सर्व्वेषां चतुर्धावनादिरूपक्रियाकालानाम् ॥ २७ ॥

सम्प्रति पुरुषादिचतुष्टयस्य चिकित्सां प्रति प्रसरणहेतुत्वेन निमित्तत्वेन वा सर्व्वतन्त्रव्यापकत्वमुपदिशन्नाह बीजमित्यादि । बीजं यथा वृक्षस्य प्रसरणहेतुस्तथैतत् पुरुषादिचतुष्टयमपि चिकित्सितस्य चिकित्सायाः इत्यर्थः । यद्वा बीजं कारणं ; "हेतुर्ना कारणं बीजम्" इत्यमरः । तच्च समवाय्यसमवायिनिमित्तभेदेन त्रिविधमप्यत्र योग्यतया निमित्तसंज्ञकमेव ग्राह्यम् । "भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् । गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये" इति चरकवचनेऽपि टीकाकृद्भिः

तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु। तत्र सूत्रस्थान-निदान-शारीर-चिकित्सित-कल्पेष्वर्थवशात् संविभज्योत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः॥ २९॥

पुरुषौषधयोर्निमित्तत्वमेवादृष्टम्। ततश्चैतच्चतुष्टयं विहाय चिकित्सानुपपत्तेश्चिकित्सार्थस्य खल्वस्य तन्त्रस्य पुरुषादिचतुष्टयव्याख्यार्थत्वं सुखं प्रतीयत इत्युक्तं सविंशमित्यादि। सविंशमिति विंशत्या सह वर्त्तते यदिति वाक्ये "संख्ययाव्ययासन्नदूराधिकसंख्याः संख्येये" इति बहुव्रीहौ "बहुव्रीहौ डच-बहुगणात्" इति डचि "तिविंशतेर्डिति" इति तेर्लोपे सविंशमिति पदम् अध्यायशतस्य विशेषणं, तत्पुनरनन्तरं तच्च सविंशमध्यायशतं पञ्चसु स्थानेष्वित्युक्तः वेदोत्पत्तिमारभ्य कल्पस्थानं यावदुक्तमेव प्रतीयते, तेनेदमत्रावधेयम् उत्तरतन्त्रे व्याख्यातव्यानामप्यध्यायानां वस्तुतः पुरुषादिचतुष्टयव्याख्यार्थत्वे सत्यपि तन्त्रमिदं शल्यज्ञानप्रधानमित्यष्टविधशस्त्रकर्म्मसाध्यत्वेनोक्तानां व्याधीनामिहैव निदानादिविशेषेण समं प्रतीकारविधानात् प्राधान्येन सविंशमध्यायशतमित्युपात्तं न तु सर्व्वथेति उत्तरतन्त्रस्यापि पुरुषादिचतुष्टयव्याख्यार्थत्वं नापह्नीयते। न चास्मिन् सविंशाध्यायशते शिष्योपनयनीयादीनां केषाञ्चिच्छस्त्रकर्म्मार्हव्याध्यभिधायकत्वाभावात् प्राधान्यतः सविंशमध्यायशतमिति वक्तुमसङ्गतं स्यादिति चोद्यं "भूम्ना" इति जैमिनिसूत्रेण बाहुल्येन सृष्टिव्यपदेशवदुपपत्तेः। तथाचोक्तं भाष्यकृता आचार्य्येण शवरस्वामिना "कथन्तु असृष्टिषु सृष्टिषु च सृष्टिशब्द इति भूम्ना बह्वस्तत्र सृष्टिलिङ्गा मन्त्राः अल्पशो विलिङ्गाः" इति। अतएव संविंशाध्यायशतावयवभूतेनानेन प्रथमाध्यायेन पुरुषादिचतुष्टयस्य सूत्रणेऽपि भूयसामध्यायानां व्याख्यार्थत्वेन वक्ष्यमाणत्वात् स्वयमेवात्र व्याख्या भविष्यतीति निर्दिष्टम्। एवञ्च पुरुषादिचतुष्टयस्य सर्व्वतन्त्राभिधेयत्वेन व्यापकत्वं स्फुटमेव॥ २८॥

तच्चेत्यादि तत्पूर्व्वोक्तम्। पञ्चस्विति सूत्रादिषु स्थानेषु। अर्थवशादिति तृतीयाध्याये सूचनात् सूत्रणादित्यादिना वक्ष्यमाणप्रयोजनवशात्। संवि-

भवति चात्र ।

स्वयम्भुवा प्रोक्तमिदं सनातनं
पठेद्धि यः काशिपतिप्रकाशितम् ।
स पुण्यकर्म्मा भुवि पूजितो नृपै-
रसुक्षये शक्रसलोकतां व्रजेत् ॥ ३० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने वेदोत्पत्ति-
र्नाम प्रथमोऽध्यायः ।

---

भव्येति तन्त्रस्यास्य शल्यकर्म्मप्राधान्यात् शल्यकर्म्म प्रकर्षेण विभज्य शेषान् परिशिष्टानर्थान् उत्तरे तन्त्रे व्याख्यास्याम इति योजना ॥ २९ ॥

इदानीमध्यायपरिसमाप्तौ शिष्यप्रोत्साहनार्थमेतच्छास्त्राध्ययनफलमाह स्वय-म्भुवेत्यादि। स्वयम्भूर्ब्रह्मा, सनातनं नित्यं, शक्रसलोकतां इन्द्रसमान-लोकतां, समानस्य सभावः ॥ ३० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने वेदोत्पत्तिर्नाम प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

ब्राह्मण-क्षत्रिय-वैश्यानामन्यतममन्वय-वयः-शील-शौर्य्य-

---

पूर्व्वाध्याये पठेत्तु य इत्यादिना यत् पाठफलमुक्तं, तच्च विधिनैव पठतः सुष्ठु सम्पद्यते;यदुक्तं "पठेद्देतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात्" इत्यादि। तेन पाठविधौ वक्तव्ये प्रागितिकर्त्तव्यतारूपमुपनयनमुपदिशन् शिष्योपनयनीयमारभते अथात इत्यादिना। अथेत्यव्ययमानन्तर्य्ये वेदोत्पत्तेरनन्तरमित्यर्थः। अत इति सप्तम्यास्तसिल्, प्रकरणादायुर्व्वेदग्रन्थपाठारम्भे। शिष्योपनयनीयमिति अध्ययनार्थमाचार्य्यसमीपं नीयतेऽनेनेत्युपनयनं, तच्च नात्र गृह्योक्तं द्विजत्वसम्पादकं कर्म्म किन्तर्हि आयुर्व्वेदाध्ययनेतिकर्त्तव्यतारूपोऽसाधारणाङ्गविशेषः, दण्डग्रहणादीनामनिर्द्देशात्, अन्यथा "स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि" इति विष्णूक्तस्य क्रियाङ्गस्नानस्य यथा, कर्त्तृसंस्कारद्वारत्वेन तद्दिनकर्त्तव्याशेषकर्म्मार्थत्वं तद्वदेव वेदाध्ययनार्थं विहितस्योपनयनस्य कर्त्तृसंस्कारकाङ्गत्वेन तन्त्रतया अशेषाध्ययनार्थकत्वात् पुनरिहोपनयनविधानमकारणं स्यात्। न च विधिरयमनुपनीतविषय इति वाच्यं "न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः" इति शङ्खलिखितोक्तेरनुपनीतत्वेनानधिकारादनधीतवेदस्यायुर्व्वेदाध्ययनाप्रसक्तेः, तदधिकृत्येति पूर्व्ववच्छेः। प्रत्यध्यायं यथोवाच भगवान् धन्वन्तरिः सुश्रुतायेति योज्यम् ॥ १ ॥

ब्राह्मणक्षत्रियवैश्यानामिति पदं गृह्योक्तोपनयनार्हाणामुपलक्षणं, तेन मूर्द्धावसिक्ताम्बष्ठमाहिष्याणाञ्च ग्रहणात् "अम्बष्ठानां चिकित्सितम्" इति मनूक्तमविरुद्धं भवति विषमशिष्टमपि न प्रसज्यते मन्वादिभिः पितृसदृशत्वे-

शौचाचार-विनय-शक्ति-बल-मेधा-धृति-स्मृति-मति-प्रतिपत्ति-युक्तं तनु-जिह्वौष्ठ-दन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्-चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत्। अतो विपरीत-गुणं नोपनयेत् ॥ २ ॥

उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरणमुहूर्त्त-नक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं

---

नोपदेशिनोत्कृष्टतर्योपलम्भात् मूर्द्धावसिक्तादीन् विहाय ततोऽपकृष्टयोः क्षत्रियवैश्ययोरिहोपनयनीयत्वेनानुशासनात्। अन्वयः आयुर्व्वेदविद्यकुलं चरकसंवादात्। शीलं सद्वृत्तं, शौचम् अभक्ष्यपरिहारादि, तथाच स्मृतिः "अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः। स्वधर्म्मे च व्यवस्थानं शौचमित्यभिधीयते" इति। आचारो मन्वाद्युक्तः स्नानाचमनादिः, विनयो नम्रता, शक्तिः उत्साहः, "शक्तिरस्त्रान्तरे शौर्य्यासुत्साहादौ" इति मेदिनी। बलं व्यायामशक्तिः, मेधा धारणावती बुद्धिः, धृतिः नियमात्मिका बुद्धिः धैर्य्यं वा, प्रतिपत्तिः प्रागल्भ्यं प्रत्युत्पन्नमतित्वमिति यावत्। अत इत्यादि अन्वय-वयः-शीलादि-युक्तानामुपनयनविधानादेव तदितरेषामुपनयनप्रसक्त्यभावेऽपि यद्विपरीतगुणं नोपनयेदित्युक्तं स नित्यानुवादः। यथा "सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः। तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्" इत्यत्र ह्रासवृद्ध्यनुसारतः कर्म्मकरणाप्रसक्तावपि ह्रासवृद्धी न कारणमित्युक्तं, तथाच जैमिनिः "परो नित्यानुवादः स्यात्" इति ॥ २ ॥

उपनयनविधिमाह उपनयनीयस्त्वित्यादि। उपनयनीय इति कृत्य-ल्युटोबहुलात् कर्त्तर्य्यनीयः जुहुयादित्यनेनान्वयः। करणाः ज्योतिषोक्ता-एकादश ववादयः। तिथ्यादिप्राशस्त्यं ज्योतिःशास्त्रात् ज्ञेयम्। प्रशस्तायां दिशि प्राच्यामुदीच्यां वा। चतुरस्रं चतुष्कोणम् "अस्रः कोणे

स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पैर्लाजभक्तै-रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वाग्निमुपसमाधाय खदिर-पलाशदेवदारुविल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिर्दार्व्वीहौ-मिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात् सप्रणवाभिर्महा-व्याहृतिभिः ततः प्रतिदैवतमृषींश्च स्वाहाकारञ्च कुर्य्यात् शिष्यमपि कारयेत्। ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति। शूद्रमपि

---

मूर्द्धजोऽस्तम्" इत्यन्वयः। देवताः गणेशादीन्। भिषजः प्रजापत्यश्वि-प्रभृतीन् पूजयित्वा। तत्र स्थण्डिले उल्लिख्य रेखेयं प्रजापतिदेवताका पीतवर्णेत्यादिक्रमेण रेखां कृत्वा अभ्युक्ष्य होमिकेन विधिना पूर्व्वस्थापि-तेन कुशकुसुमसहितजलेन रेखाभ्युक्षणं कृत्वा दक्षिणतो ब्राह्मणं स्थापयित्वा अग्निमुपसमाधायेति "अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य" इति संस्कारतत्त्वघृतकात्यायनवचनस्मरणात् व्युत्क्रमेणान्वयः। सप्रणवाभि-र्महाव्याहृतिभिरिति ॐ भूः ॐ भुवः ॐ स्वः इत्येवंरूपाभिः। दार्व्वी-होमिकेन विधिनेति मीमांसादर्शनस्याष्टमाध्यायस्य चतुर्थपादे लौकिकानां वैदिकानाञ्च होमानां दार्व्वीहोमत्वेनाभिधानात् होमसामान्येन विधिने-त्यर्थः। स्रुवेणाज्याहुतीर्जुहुयादिति सम्बन्धः। तत इत्यादि। देवता एव दैवतम् अग्न्यादिकम् ऋषींश्च प्रजापत्यादीन् प्रति लक्ष्यीकृत्य चकारात् सप्रणवाभिर्महाव्याहृतिभिः स्वाहाकारं स्वाहाशब्दञ्च कुर्य्यादिति वाक्यार्थः। एतेन प्रजापतिर्ऋषिर्गायत्री च्छन्दोऽग्निर्देवता महाव्याहृति-

कुल-गुण-सम्पन्नं सच्छूद्रमप्यनुपनीतमध्यापयेदित्येके ॥ ३ ॥

ततोऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात् काम-क्रोध-लोभ-मोह-मानाहङ्कारेर्ष्या-पारुष्य-पैशुन्यानृता-लस्यायशस्यानि हित्वा-नीचनखरोम्णा शुचिना कषाय-वाससा सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणावश्यं भवितव्यं मदनु-मतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रिय-

---

होमे विनियोगः ॐ भूः स्वाहेत्येवंक्रमेण होमं कुर्य्यादिति बोद्धव्यम् । कुलगुणसम्पन्नमिति कुलं सद्वंशः। गुणाश्च पूर्व्वोक्ताः शान्तवयःप्रभृतयः। एतेनायोगवादीनां शूद्रस्य धर्म्मत्वेऽपि कुलसम्पदोऽभावादुभयोक्तगुणानामप्यन-ध्याप्यत्वम् अध्याप्यत्वञ्च सम्पन्नकुलत्वेन तथाविधानां व्रात्यादीनामिति सूचितम्। कश्चिदाह "स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः" इति चरकवचनविरोधात् वचनमिदमनार्षं, तत्तु न समीचीनं, तस्य समन्त्र-कायुर्व्वेदाध्ययनार्थत्वेन भिन्नविषयतया समाधानसिद्धेः ॥ ३ ॥

ततोऽग्निं त्रिः परिणीय त्रिः प्रदक्षिणीकृत्य कामो विषयसुखेच्छा, क्रोधः परापकारप्रवृत्तिः, मोहः तत्त्वज्ञानमूढ़ता, मानः उत्कर्षाभि-मानात्मिका चित्तवृत्तिः, अहङ्कारः आत्मनि गर्व्वेणैवोन्नत्यध्यासः, ईर्ष्या परोत्कर्षाऽसहिष्णुता, पारुष्यं निष्ठुरवाक्यता, पैशुन्यं खलता, अनृतम् असत्यवचनम्, आलस्यं प्रक्रान्तस्य कर्म्मण्यनुत्साहः, अयशस्यम् निन्दितं कर्म्म, अनीचनखरोम्णेति छेदनेन नीचानि निम्नानि नखरोमाणि यस्य सः तथा, पश्चान्नञ्समासः, नखश्मश्रुधारिणेत्यर्थः। ननु नीचनखरोम्णेत्येवं पाठः चरके श्मश्रुधारिणेत्युक्तेः। व्रतं शास्त्रविहितो नियमः, ब्रह्मचर्य्यं वाङ्मनःशरीरेण मैथुनराहित्यम् आमिषाद्यभक्षणञ्च, अभिवादनं स्वनामो-च्चारणपूर्व्वकं प्रणमनं, यदुक्तं गौतमेन "स्वनाम प्रोच्याऽहमभिवादय इत्यभिवदेत्" इति। तत्परेण तदासक्तेन। स्पष्टमन्यत् ॥ ४ ॥

हितेषु वर्त्तितव्यमतोऽन्यथा ते वर्त्तमानस्याधर्म्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति ॥ ४ ॥

अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च। द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथानामुपगतानाञ्चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेवं साधु भवति। व्याध-शाकुनिक-पतित-पापकारिणां न च प्रतिकर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्म्मार्थकामांश्च प्राप्नोति ॥ ५ ॥

कृष्णेऽष्टमी तन्निधनेऽहनी द्वे
कृष्णेतरेऽप्येवमहर्द्विसन्ध्यम्।

---

द्विजेत्यादि। प्रव्रजिताः सन्न्यासिनः, उपनताः अधीनाः, अभ्युपगताः आश्रयार्थं गृहमागताः। अचिकित्स्यानाह व्याधेत्यादि। व्याधाः मृगहिंसकाः, शाकुनिकाः पक्षिघातकाः, पतिताः प्रायश्चित्तेतरवैदिककर्म्मानर्हाः नरकभागिनः गुरुतल्पगादयः ॥ ५ ॥

इदानीमनध्यायकालमाह कृष्ण इत्यादि। कृष्णे कृष्णपक्षे अष्टमी। तन्निधने इति तस्य कृष्णपक्षस्य निधनं नाशो यत्र ते तथोक्ते द्वे अहनी सन्धिरार्षः, चतुर्द्दशी पञ्चदशी चेत्यर्थः "अमावस्याचतुर्द्दश्योः पौर्णमास्यष्टकासु च" इति मनुवचनैकवाक्यत्वात्। कृष्णपक्षनिधनत्वञ्चनयोः "अष्टमांशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः। अमावस्याष्टमांशे च ततः किल भवेदणुः" इति कात्यायनेन तयोरुभयोरेव चन्द्रस्य नितरां क्षयोपदेशान्नानुपपन्नम्। कृष्णेतरेऽप्येवमिति तिस्रस्तिथयोऽष्टमी चतुर्द्दशी पञ्चदशी चेत्यर्थः। द्वयोः सन्ध्ययोः समाहारो द्विसन्ध्यं ततोऽह्नो द्विसन्ध्यमिति तत्पुरुषे

अकालविद्युत्स्तनयित्नुघोषे
स्व-तन्त्र-राष्ट्र-क्षितिप-व्यथासु ॥
श्मशान-यानायतनाहवेषु
महोत्सवौत्पातिकदर्शनेषु ।
नाध्येयमन्येषु च येषु विप्रा-
नाधीयते नाशुचिना च नित्यम् ॥ ६ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने शिष्योपनयनीयो
नाम द्वितीयोऽध्यायः ।

---

सायं प्रातश्चेत्यर्थः । एष्विति शेषः । अकालविद्युत्स्तनयित्नुघोषे इति अकालोऽत्र मार्गाश्चैत्रं यावत्, तथाच मलमासतत्त्वे स्मृतिः "मार्गान्मासात्-प्रभृति मुनयो व्यासवाल्मीकिगर्गाश्चैत्रं यावत् प्रवर्षणविधौ नेति कालं वदन्ति" इति । अकालविद्युत्स्तनयित्नुघोषो यत्र दिवसे तस्मिन्नित्यर्थः । स्वः आत्मा तन्त्रं परिजनः राष्ट्रं देशः क्षितिपो राजा एषां व्यथासु पीड़ासु सतीषु । अद्यभवोऽद्यतनः आहवो युद्धं यज्ञो वा यत्र नगरे ग्रामे वा तेषु । महोत्सवाः कुवेरमहोत्सवादयः । उत्पाता एवौत्पातिकाः भौमदिव्यनाभस-भेदात् त्रिविधाः तेषां दर्शनं तेषु अन्येषु येषु वीणास्वनादिषु विप्रा-नाधीयते तेष्वपि नाध्येयमित्यर्थः ॥ ६ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने शिष्योपनयनीयो नाम द्वितीयोऽध्यायः ।

# तृतीयोऽध्यायः ।

अथातोऽध्ययनसम्प्रदानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

प्रागभिहितं सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रस्थानमध्यायाः षट्चत्वारिंशत् । षोड़श निदानानि । दश शारीराणि । चत्वारिंशच्चिकित्सितानि । अष्टौ कल्पाः । तदुत्तरं षट्षष्टिः ॥ २ ॥

---

उपनयनादनन्तरं यथाविधि शिष्येणाध्येतव्यं गुरुणा चोपदेष्टव्यमिति शिष्योपनयनीयानन्तरम् अध्ययनसम्प्रदानीयोऽभिधीयते अथातइत्यादिना । अध्ययनमत्र नियमपूर्व्वकविद्याग्रहणं, सम्प्रदानन्तु प्रकरणादुपदेशः । ते अधिकृत्य कृतोऽध्याय इति पूर्व्ववच्छः ॥ १ ॥

अध्ययनसम्प्रदानयोः शास्त्रक्रमाधीनत्वात् प्रथमं तावत् सूचितं मूलक्रममुपदिशति प्रागित्यादिना । षोड़श निदानानीति षोड़श अध्यायाः निदानानीत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । चिकित्सितानीति चिकित्सितं चिकित्साविधिमाचष्टत इति णिचि पचाद्यच् । चिकित्स्यतेऽभिरिति व्युत्पत्त्या बाहुलकात् करणे वा क्तः । चिकित्सातन्त्राणीत्यर्थः । अष्टौ कल्पा इति विषभेषजानि कल्प्यन्ते एभिरिति कल्पाः । तदुत्तरं षट्षष्टिरिति । तेभ्यः सूत्रस्थानादिभ्य उत्तरं पश्चान्निर्दिष्टं तन्त्रं षट्षष्टिरध्यायाः । अतोत्तरं षट्षष्टिरित्युक्ते सिद्धे पुनस्तद्ग्रहणेन ज्ञापयति, तेषामेव परिशिष्टमिदमिति । तथाच सविंशाध्यायशतावशिष्टार्थप्रतिपादनद्वारा तदवयवत्वेनोपलम्भात् सविंशमध्यायशतमस्य व्याख्या भविष्यतीति पूर्व्वोक्तमुपपन्नमेव ॥ २ ॥

वेदोत्पत्तिः शिष्यनयस्तथाध्ययनदानिकः ।
प्रभाषणाग्रहरणाष्टतुचर्य्याय यान्त्रिकः ॥
शस्त्रावचारणं योग्या विशिखा चारकल्पनम् ।
अग्निक्षारजलौकाख्यावध्यायौ रक्तवर्णनम् ॥
दोषधातुमलाद्यानां विज्ञानाध्याय एव च ।
कर्णव्यधालपक्कैषावालेपो व्रणवुपासनम् ॥
हिताहितो व्रणप्रश्नो व्रणास्त्रावश्च यः पृथक् ।
कृत्याकृत्यविधिर्व्याधिसमुद्देशीय एव च ॥
विनिश्चयः शस्त्रविधौ प्रनष्टज्ञानिकस्तथा ।
शल्योद्धृतिर्व्रणज्ञानं दूतस्वप्ननिदर्शनम् ॥
पञ्चेन्द्रियं तथा छाया स्वभावाद्वैकृतं तथा—
ऽवारणो युक्तसेनीय आतुरक्रम-मिश्रकौ ॥
भूमिभागो द्रव्यगणः संशुद्धौ शमने च यः ।
द्रव्यादीनाञ्च विज्ञानं विशेषो द्रव्यगोऽपरः ॥
रसज्ञानं वमनार्थमध्यायो रेचनाय च ।
द्रवद्रव्यविधिस्तद्वदन्नपानविधिस्तथा ॥

---

सूत्रस्थानमध्यायाः षट्चत्वारिंशदिति यदुक्तं तदेव सङ्क्षेपेण विवृण्वन्नाह वेदोत्पत्तिरित्यादि । तथा वारण इत्यत्राऽकारो लुप्तः । उपरिष्टात् "उपद्रवैश्च ये जुष्टा व्याधयो यान्त्यवार्य्यताम्" इत्युपक्रम्याऽभिहितस्य तस्याध्यायस्याऽवारणीयत्वश्रुतेः । एषाञ्चाध्यायानां सम्बन्ध इह व्याकृतो

सूचनात् सूत्रणाच्चैव सन्धानाच्चार्थसन्ततेः ।
षट्चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥ ३ ॥
वातव्याधिरर्शांसि साश्मरिश्च भगन्दरः ।
कुष्ठमेहोदरा मूढ़विद्रध्यः परिसर्पणम् ॥

---

ऽपि दुरधिगमो भवतीति सुखावबोधाय प्रत्यध्यायं व्याकरणीयः । मिलितानां वेदोत्पत्तिप्रभृतीनां षट्चत्वारिंशदध्यायानां सूत्रस्थानत्वं प्रति हेतुं प्रदर्शयन् निरुक्तयति सूचनादित्यादिना । अर्थसन्ततेः सूचनम् एकदेशेनोक्तेनानुक्तार्थग्रहणं, तद्यथा—स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्यासस्वरसादयः प्रयोजनवन्त इत्यत्रादिशब्देन कण्टकभस्मादयः सूचिताः । अर्थसन्ततेः सूत्रणम् "अल्पाक्षरमसन्दिग्धं सारवत् सर्व्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" इत्युक्तलक्षणस्य सूत्रस्याभिधानम् । तद्यथा—तद्दुःखसंयोगा व्याधय इति, एतेन सर्व्वे व्याधयः सूत्रिताः । अर्थसन्ततेः सन्धानमनुसन्धानमन्वेषणमिति यावत्, तच्च यथा "औषधग्रहणात् द्रव्यरसगुणवीर्य्यविपाकप्रभावाणामादेशः" इति । अत्रौषधशब्दो द्रव्यपरः, द्रव्याणि पुना रसादीन् प्रत्याख्याय न भवन्तीत्यनुसन्धानादेव रसादीनां लाभः । सूत्रस्थानमिति । केचिदत्र सूचनादिहेतुत्रयनिर्द्देशात् सूचयति-सूत्रयति-सन्दधातिभ्यो यथासम्भवं निपातनेन पचाद्यचा च निष्पन्नानां त्रयाणां सूत्रशब्दानां "सरूपाणामेकशेष" इत्येकशेषमुशन्ति, परमेतेषां परमार्थतोऽर्थाभेदात् "विरूपाणामपि समानार्थानाम्" एकशेषे न काचिदसुपपत्तिरिति ध्येयम् । तानि च सूत्राणि—"संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च" इति षड्विधानि भवन्तीति त्रयाणां शिष्योपनयनीयादीनां चिकित्सासूत्राभिधायकत्वाभावेऽपि सेतिकर्त्तव्यताकस्याध्ययनविधेरुपदेशार्थकत्वादेव सूत्रस्थानत्वेन परिग्रहो नायुक्तः ॥ ३ ॥

क्रमप्राप्ततया षोड़श निदानानीति यदुक्तं तदेव विवृणोति वातव्याधि-

ग्रन्थि-वृद्धि-क्षुद्र-शूक-भग्नाश्च मूत्ररोगिकम् ।
हेतुलक्षणनिर्द्देशान्निदानानीति षोड़श ॥ ४ ॥
भूतचिन्ता रजःशुद्धिर्गर्भावक्रान्तिरेव च ।
व्याकरणञ्च गर्भस्य शरीरस्य च यत् स्मृतम् ॥
प्रत्येकं मर्म्मनिर्द्देशः शिरावर्णनमेव च ।
शिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा ॥
निर्द्दिष्टानि दशैतानि शारीराणि महर्षिणा ।
विज्ञानार्थं शरीरस्य भिषजां योगिनामपि ॥ ५ ॥
द्विव्रणीयो व्रणः सद्योभग्नानां वातरोगिकम् ।
महावातिकमर्शांसि साश्मरिश्च भगन्दरः ॥

---

कमित्यादिना । हेतुलक्षणनिर्द्देशादिति हेतवो रुक्षशीतादयो वातादयश्च वाह्याभ्यन्तरभेदात् द्विविधाः । लक्ष्यन्ते ज्ञायन्ते व्याधय एभिरिति लक्षणानि पूर्व्वरूपरूपोपशयसम्प्राप्तयः । हेत्वादीनां पञ्चानामेव व्याधिनिर्द्देशकारित्वेन लक्षणत्वे सत्यपि हेतोः पृथगुपादानमेकहेतुकानामनेकव्याधीनामनेकहेतुकस्यैकव्याधेर्हेतुतो निर्द्देशव्यभिचारात् व्यभिचाराच्च सन्निकर्षविप्रकर्षादिना जयपराजयादितो व्याध्युत्पत्तेः । अन्ये तूत्पत्तिज्ञसुखभयहेतुत्वेन पूर्व्वरूपादितो वैशिष्ट्यप्रतिपादनार्थं हेतोः पृथगुपादानमित्याहुः । निर्द्दीयन्तेऽभिधीयन्ते निश्चीयन्ते वा व्याधयः एभिरिति व्युत्पत्त्या निदानानीति रूपम् । इत्येते वातव्याधिकादयः षोड़शाध्यायाः निदानानीत्यर्थः ॥ ४ ॥

दश शारीराणीति पूर्व्वोक्तं वचनं विवृणोति भूतचिन्तेत्यादिना । शारीराणि शरीरसम्बन्धीनि । महर्षिणा धन्वन्तरिरूपिणा विष्णुनेत्यर्थः । महर्षिः कपिलाचार्य्य इति विष्णोः सहस्रनामस्तोत्रम् । योगिनां शरीरस्य विज्ञानार्थं षट्चक्रादिज्ञानार्थम् ॥ ५ ॥

चत्वारिंशच्चिकित्सितानीति यदुक्तं तदेव व्याकरोति द्विव्रणीय इत्या-

कुष्ठानां महताञ्चापि मैहिकं पैड़िकं तथा ।
मधुमेहचिकित्सा च तथा चोदरिणामपि ॥
मूढ़गर्भचिकित्सा च विद्रधीनां विसर्पिणाम् ।
ग्रन्थिदुष्टव्रणदंशानां तथा च क्षुद्ररोगिकम् ॥
शूकदोषचिकित्सा च तथा च मुखरोगिणाम् ।
शोफस्थानागतानाञ्च निषेधो मिश्रकं तथा ॥
वाजीकरञ्च यत्चीणे सर्व्वाबाधशमोऽपि च ।
मेधायुष्करणञ्चापि स्वभावव्याधिवारणम् ॥
निवृत्तसन्तापकरं कीर्त्तितञ्च रसायनम् ।
स्नेहोपयौगिकः स्वेदो वमने सविरेचने ॥
तयोर्व्यापच्चिकित्सा च नेत्रवस्तिविभागिकः ।
नेत्रवस्तिविपत्सिद्धिस्तथा चोत्तरवस्तिकः ॥
निरूहक्रमसंज्ञश्च तथैवातुरसंज्ञकः ।
धूमनस्यविधिश्चाग्र्याश्चत्वारिंशदिति स्मृताः ॥
प्रायश्चित्तं प्रशमनं चिकित्सा शान्तिकर्म्म च ।
पर्य्यायास्तस्य निर्द्दिष्टाश्चिकित्सास्थानमुच्यते ॥ ६ ॥

---

दिना । अग्र्याः श्रेष्ठाः । अग्र्यत्वन्तु रुक्प्रतीकाररूपमुख्यकर्म्मार्थकत्वात् । इहापि इतिशब्दः पूर्व्ववदेव व्याख्येयः । शास्त्रे व्यवहारार्थं चिकित्सित-पर्य्यायानाह प्रायश्चित्तमित्यादि । प्रायश्चित्तं हि पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म्म, चिकित्सा च रुक्प्रतीकार इत्यनयोर्भिन्नार्थबोधकतया पर्य्यायत्वानुपपत्तेः प्रायश्चित्तशब्दोऽत्र आत्मोपकारकत्वसाम्याद्गौण इत्यवश्यं

अन्नस्य रक्षा विज्ञानं स्थावरस्येतरस्य च ।
सर्पदष्टविषज्ञानं तस्यैव च चिकित्सितम् ॥
दुन्दुभेर्मूषिकाणाञ्च कीटानां कल्प एव च ।
अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥ ७ ॥
अध्यायानां शतं विंशमेवमेतदुदीरितम् ।
अतः परं स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥

---

वक्तव्यमेव, तेन प्रायश्चित्तमिवेति वाक्यार्थः । गौणेन च शब्देन पर्य्यायत्वं साधटीकायाम् "आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः" इत्यत्र मल्लिनाथेन सुष्ठु प्रदर्शितम् । तथाहि "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । रोमसंस्थाने तु तत्साम्याद्व्यपदेशः । तदुक्तम् "आवर्त्तसाम्यादावर्त्तो रोमसंस्थानसञ्ज्ञिनाम्" इत्यारभ्य "आवर्त्तो रोमजो देवमणिस्त्वेष निगालजः । निगालस्तु गलोद्देशे सक्तदिति वैजयन्ती" इति । पर्य्याया एकार्थबोधकाः शब्दाः । तस्येति पूर्व्वोक्तस्य चिकित्सितशब्दस्य ॥ ६ ॥

अष्टौ कल्पा इति पूर्व्वोक्तं व्याकुर्व्वन्नाह अन्नस्येत्यादि ॥ ७ ॥

इदानीं पञ्चस्थानकं तन्त्रमुपसंहरति अध्यायानामित्यादिना । विंशमिति विंशतिरधिका यस्मिन्नित्यर्थे डट्, "ति विंशतेर्डिति" इति तिलोपः । विंशत्यधिकमित्यर्थः । सविंशमध्यायशतमिति पाठे तु प्रथमाध्यायवत् व्याख्यानम् । सम्प्रति क्रमप्राप्ततया तदुत्तरं षट्षष्टिरिति यदुक्तं तदेव विवृण्वन्नाह अतः परमित्यादि । स्वनाम्ना उत्तरनाम्ना एवकारो नामान्तरव्यवच्छेदार्थः । शालाक्यतन्त्रादीनान्त्वत्रैवान्तर्भावः । वक्ष्यति हि "शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या । भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते" इति । अतएव स्वनाम्ना शालाक्यतन्त्रं कौमारतन्त्रमित्यादिना नाम्ना इति केनचिदुक्तं हेयम् । पूर्व्वं तदुत्तरं षट्षष्टिरित्यत्र तच्छब्देन यदुत्तरतन्त्रस्य परिशिष्टतया सविंशाध्यायशता-

अधिकृत्य कृतं यस्मात् तन्त्रमेतदुपद्रवान्।
औपद्रविक इत्येष तस्मादग्रत्वान्निरुच्यते ॥ ८ ॥
सन्धौ वर्त्मनि शुक्ले च कृष्णे सर्व्वत्र दृष्टिषु।
संविज्ञानार्थमध्याया गदानान्तु प्रति प्रति॥

---

नधिकत्वं विज्ञापितं, तत् पुनर्द्दृढ़ीकर्त्तुमौपद्रविकसंज्ञं प्रथमाध्यायं निरुक्तयति अधिकृत्येत्यादिना। यस्मात् उपद्रवान् व्रणितोपद्रवत्वेनोक्तान् ज्वरादिव्याधीन् तदुपलक्षितान् पूर्व्वमनुक्तांश्च नयनामयादीनधिकृत्य आरभ्य एतदुत्तरं तन्त्रं कृतं, तस्मात् तस्य उत्तरतन्त्रस्य एषोऽधिकारार्थप्रथमाध्यायः अग्रत्वादधिकृतानामुपद्रवाणां नयनामयादीनाञ्च दुःसाध्यतया अपरिसंख्येयतया च प्राधान्यात् औपद्रविकः औपद्रविकसंज्ञः। इतिशब्द इत्यमर्थे निरुच्यते, प्रकृतिप्रत्ययविभागेनार्थः कथ्यते पूर्व्वाचार्य्यैरिति शेषः। तन्त्रस्यास्य स्थानपञ्चकानुक्तार्थाधिकृतत्वादेव परिशिष्टत्वमूह्यम्। उपद्रवादीनामग्रत्वख्यापकं दुःसाध्यत्वमपरिसंख्येयत्वञ्च "उपद्रवास्तु व्रणिनः कृच्छ्रसाध्या भवन्ति हि," तथा "एतावन्तो यथा स्थूलसुक्तमाङ्गगता गदाः" इत्याद्यनागतावेक्षणादनुसन्धेयम् ॥ ८ ॥

सन्धावित्यादि। दृष्टिष्विति "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति बहुवचनम्। प्रति प्रतीति भागे अर्थे नित्यवीप्सयोरिति वीप्सायां द्विर्व्वचनम्। प्रति प्रति भागे भागे गदानां संविज्ञानार्थम् अध्यायाः षड़िति शेषः। यो हि यद्भागाधिकरणः स तद्गत एवेति सन्धिगतरोगविज्ञानीयो वर्त्मगतरोगविज्ञानीय इत्येवमादिभिर्नामभिः षड़ध्याया व्याख्याता भविष्यन्ति। आचार्य्यस्याऽप्ययमेवाशयो यदुक्तमौपद्रविकाध्याये "शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः" इति। अत्र भागार्थस्य प्रतेः कर्म्मप्रवचनीयत्वेन द्वितीयाप्राप्तौ आर्षत्वात् सप्तमी। यद्वा प्रति प्रति एकैकं अध्याया इति सम्बन्धः। उभयथैव फलं समानम्। वातेत्यादि

चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः ।
पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैव च ॥
लेख्यभेद्यनिषेधौ च च्छेद्यानां वर्त्म-दृष्टिषु ।
क्रियाकल्पेऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम् ॥
घ्राणोत्थानाञ्च विज्ञानं तद्वत्प्रतिषेधनम् ।
प्रतिश्यायनिषेधश्च शिरोगदविरेचनम् ॥
चिकित्सा तद्गदानाञ्च शालाक्यं तन्त्रमुच्यते ॥
नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम् ।
अपस्मारशकुन्योश्च रेवत्याश्च पुनः पृथक् ॥
पूतनायास्तथान्धाया लण्डिका शीतपूतना ।
नैगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा ।
कौमारतन्त्रमित्येतच्छारीरेषु च कीर्त्तितम् ॥ ९ ॥
ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि ।
पाण्डूनां रक्तपित्तस्य मूर्च्छायाः पानजाश्च ये ॥
तृष्णायाश्छर्द्दिहिक्कानां निषेधः श्वासकासयोः ।
स्वरभेदचिकित्सा च ह्यभ्युदावर्त्तिनोः पृथक् ॥

---

वाताऽभिष्यन्दवारणो वाताऽभिष्यन्दप्रतिषेधः । एवमुत्तरत्रापि व्याख्येयम् । उपरिष्टात्तथैव निर्देशात् । पैत्तस्येति प्रत्यासत्त्या पैत्तस्याभिष्यन्दस्य वारण-इत्यर्थः । वर्त्म-दृष्टिष्विति वर्त्मसु निषेधः पक्ष्मकोपप्रतिषेधः । दृष्टिषु निषेधश्च दृष्टिगतरोगप्रतिषेधः । अभिघाते इति प्रकरणात् भीमो भीमसेन-

विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः ।
इति कायचिकित्सायाः शेषमत्र प्रकीर्त्तितम् ॥ १० ॥
अमानुषनिषेधश्च तथापस्मारिकोऽपरः ।
उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते ॥ ११ ॥
रसभेदाः स्वस्थवृत्तिर्युक्तयस्तान्त्रिकाश्च याः ।
दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः ॥ १२ ॥
श्रेष्ठत्वादुत्तरं ह्येतत् तन्त्रमाहुर्महर्षयः ।
बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरञ्चापि पश्चिमम् ॥ १३ ॥
शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या ।
भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते ॥

---

इतिवदेकदेशेन समुदायार्थावगमाद्वा नयनाभिघातप्रतिषेध इत्यवगन्तव्यम् । एवमुत्तरत्रापि तन्त्रोक्तान्यध्यायनामान्यभिसमीक्ष्यार्थयोजना कार्य्या ॥८-१२॥

श्रेष्ठत्वादित्यादि । अवधारणार्थोऽयं हिशब्दः । श्रेष्ठत्वादेव एतदन्तिमं तन्त्रमुत्तरमाहुः, श्रेष्ठापरपर्य्यायो ह्युत्तरशब्दः इति भावः । "उपर्य्युदीच्यश्रेष्ठेष्वप्युत्तरः" इत्यमरः । नन्वायुर्व्वेदवाक्यकुसुमग्रन्थनार्थत्वात् सर्व्वतः सारभूतत्वाच्च सूत्राणां सूत्रस्थानं नामादिमं तन्त्रमेव श्रेष्ठं पश्यामो नत्वेवान्तिममेतदित्याह बह्वित्यादि । बहूनां शालाक्यादीनां तन्त्राणामर्थसङ्ग्रहणाद्बह्वर्थसङ्ग्रहात्पश्चिममन्तिममप्येतदुत्तरं नाम तन्त्रं श्रेष्ठमेवेति चकारेणाविष्क्रियते "चान्वाचये ** अवधारणे" इति मेदिनी । श्रेष्ठत्वादन्तिमत्वाच्चोत्तरमेवं द्वेधा चेन्निरुच्यते तर्हि श्रेष्ठमित्यन्तं व्याख्याय पश्चिममन्तिममप्युत्तरमुत्तरशब्दवाच्यमनर्थान्तरादतो वा उत्तरमेतदेवं व्याकरणीयम् ॥१३॥

शालाक्येत्यादि । कायिकी चिकित्सा कायचिकित्साविधिः । चिकि-

वाजीकरं चिकित्सास्तु रसायनविधिस्तथा।
विषतन्त्रं पुनः कल्पाः शल्यज्ञानं समन्ततः॥
इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्।
विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि॥ १४॥

एतदवश्यमध्येयमधीत्य च कर्म्माण्यवश्यमुपासितव्यमुभयज्ञो हि भिषग्राजार्हो भवति॥ १५॥

भवन्ति चात्र।

यस्तु केवलशास्त्रज्ञः कर्म्मस्वपरिनिष्ठितः।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्॥ १६॥
यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रवहिष्कृतः।
स सत्सु पूजां नाप्नोति वधञ्चार्हति राजतः॥ १७॥
उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि।
अर्द्धवेदधरावेतावेकपचाविव द्विजौ॥ १८॥

---

स्तास्तु चिकित्सितस्थानेषु, पुनःशब्दोऽयमवधारणार्थः। विषतन्त्रमेव कल्पा-विषभेषजकल्पनार्थां अष्टावध्याया इत्यर्थः। समन्ततः सर्व्वतन्त्रेष्वित्यर्थः। इत्येत्यादि। इयमर्थोऽयमितिशब्दः। आदिदेवोऽत्र धन्वन्तरिः, "अहं हि धन्वन्तरिरादिदेवः" इत्यतिशास्त्रावेक्षणात्। विधिनेति पदं युञ्जाना इत्यनेनापि सम्बध्यते॥ १४। १५॥

यस्त्वित्यादि। धार्ष्ट्यात् केवलकार्म्मोपासनाजनितप्रागल्भ्यात् कर्म्मसु निष्णातः नियुक्तः। तावुभावज्ञवैद्यौ दृष्टान्तेन व्यक्तरोति उभावित्यादिना। अनिपुणौ अदक्षौ। एताविति आङ्पूर्व्वादिणः क्तौ सप्तम्येकवचने च रूपं परितो गतावित्यर्थः। यद्वा उभावेतावनिपुणा-वदक्षावुच्येते इति शेषः। यतः अर्द्धवेदधरावेतौ एकपक्षौ द्विजाविव

ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः।
भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्ज्जयेत्॥ १९॥
छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च कर्म्मसु।
स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः॥ २०॥

---

स्वकर्म्मण्यसमर्थौ भवत एवं योजना। अर्द्धवेदधराविति। वेदनं वेदो ज्ञानमित्यर्थः। स चाचाध्ययनकर्म्मदर्शनजन्यत्वेन द्वेधा भिद्यते समप्रविभागेनेत्युपलभ्यते। तयोरन्यतरस्मिन् निपुणस्याप्यविशेषेण कर्म्मस्वसामर्थ्यात्, तदिदमुच्यते अर्द्धवेदधराविति। अर्द्धशब्दोऽयं समप्रविभागे प्रवर्त्तते, तेन वेदस्यार्द्धम् अर्द्धवेदस्तस्य धराविति वाक्यार्थः। अमृतकल्पमप्यौषधम् अज्ञप्रयुक्तं सत् शस्त्राशनिविषोपमतया वर्ज्जनीयमित्युपदिशन्नाह ओषध्य इत्यादि। तुकारोऽप्यर्थे। शस्त्राशनिविषोपमा इति दृष्टान्तत्रयं प्रकृत्यादिभेदादनेकधा व्यापत्तिकरत्वप्रतिपादनार्थम्। तत्र शस्त्रोपमत्वेन सद्यःप्राणहरत्वादिकम् अशन्युपमत्वेनाकस्मिकमृत्युजनकत्वं विषोपमत्वेन च दर्व्वीकरादिविषवद्वेगविशेषेण दूषीविषवच्च वर्षगणानुबन्धिदोषसञ्जननेनानिष्टफलसम्पादकत्वमतिदिष्टमित्यनुसन्धातव्यम्। अज्ञैरिति शास्त्रकर्म्मोभयज्ञानवाह्यैः, उपहृताः प्रयुक्ताः॥ १६—१९॥

ननु दृश्यन्ते ह्यातुराः शास्त्रवाह्यैरप्युपक्रान्ताः सहसा समुत्तिष्ठमानास्तत् कथं कर्म्मज्ञस्यापि शास्त्रानभिज्ञतया वर्ज्जनं सङ्गच्छत इत्याह छेद्यादिष्वित्यादि। अनभिज्ञ इति तात्पर्य्यतः शास्त्राभिमतज्ञानानभिज्ञः। जनमिति जातावेकवचनं, तेन वहून् मानवान् निहन्तीत्यर्थः। चरकेऽप्युक्तं "यदृच्छया समापन्नमुत्तार्य्य नियतायुषम्। भिषङ्मानी निहन्त्याशु शतान्यनियतायुषाम्" इति। छेद्यादिषु शस्त्रचाराग्निकर्म्मसु, स्नेहादिषु स्नेहस्वेदादिषु। कश्चिदाह निरतिशयव्यापत्तिभयात्पुनरपि कर्म्मानभिज्ञमात्रनिन्दार्थमिदं वचनं, तन्न मनोरमम्, अर्द्धवेदधरावेताविल्यादिना तुल्यमेवोभयोर्निन्दाभिधानात्। कश्चित्तु शास्त्रज्ञानवतोऽपि छेद्यादिस्नेहाद्युभयविधकर्म्मणोरन्य-

यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने ।
आहवे कर्म्म निर्व्वोढुं द्विचक्रः स्यन्दनो यथा ॥ २१ ॥

अथ वत्स तदेतदध्येयं यथा तथोपधारय मया प्रोच्य-मानम् । अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थि-तायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं

---

तरानभिज्ञत्वे दोषाभिधानार्थं श्लोकोऽयमुपन्यस्त इत्याह, तदपि न समी-चीनं, चरकादेरपि च्छेद्याद्यनभिज्ञतया निन्दार्हत्वापत्तेः । नृपदोषत इति राज्ञोऽनवधानात्, उक्तं हि राज्ञानुज्ञातेन विशिखानुप्रवेष्टव्या इति ॥ २० ॥

यस्त्वित्यादि । उभयज्ञः . शास्त्रकर्म्माभिज्ञः कर्म्म निर्वोढुं कर्म्म सम्पा-दयितुम् । अतएव एतदवश्यमध्येयमधीत्य च कर्म्माऽप्यवश्यमुपासितव्यमिति भावः ॥ २१ ॥

एवमावश्यकत्वेनोपलब्धयोरध्ययनकर्म्मोपासनयोरध्ययनस्य कर्म्मज्ञानाभि-वर्द्धकत्वात् अधिगतशास्त्रार्थमपि शिष्यं योग्यां कारयेदित्यनागतावेक्षणाच्च प्रथमं तावदध्ययनक्रममुपदिशन्नाह अथेत्यादि । अथेत्ययमानन्तर्य्यार्थः "योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्" तथा "उत्थायावश्यकं कृत्वा कृतशौचः समाहितः" इत्यादि मनूक्तेः वेदाभ्यासान्नित्यकर्म्मणश्चानन्तर-मित्यर्थः । द्वितीयस्त्वथशब्दो विशेषार्थवचनः उपदिशेदित्यनेनान्वेति, "अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्" इत्याश्वलायनगृह्यसूत्रगार्ग्यनारा-यणीयवृत्तावप्युक्तम् "अथशब्दो विशेषप्रक्रियार्थः," अथ गृह्याख्युच्यन्त इति । कृतोत्तरासङ्गायेति उत्तरासङ्गः प्रावारः "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः । विहितोत्तरीयायेत्यर्थः । अध्ययनकाले "कृष्णेऽष्टमी तन्निधनेऽहनी द्वे" इत्यादिनोक्तानध्यायकालातिरिक्ते प्रातरादौ यथाशक्ति शिष्यशक्तिमनति-क्रम्य पदं पादं श्लोकं वा उपदिशेत् । एतेन यो यावद्ग्रहीतुं समर्थस्तस्मै तावदेवोपदेष्टव्यमित्युपलक्ष्यम् । तत्र पदं सुप्तिङन्तरूपं, पादः श्लोक-

श्लोकं वा । ते च पदपादश्लोका भूयः क्रमेणानुसन्धेयाः । एवमेकैकशो घटयेदात्मना चानुपठेत् । अद्रुतमविलम्बित मविशङ्कितमननुनासिकं व्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवौष्ठ-हस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेन्न चान्तरेण कश्चिद्व्रजेत् तयोरधीयानयोः ॥ २२ ॥

---

चतुर्थांशः, श्लोकस्तु मिलिताश्चत्वारः पादाः । एतत्तु मन्दमध्योत्तम-बुद्धिशिष्यग्राह्यशास्त्रांशमात्रोपलक्षणं तेन गद्येऽपि नास्य वचनस्याव्याप्तिर्नापि च हीनाधिकोपदेशे काचित्क्षतिः । ते च पदपादश्लोकाः भूयः पुनरपि क्रमेणानुसन्धेयाः गुरुणेति शेषः । तद्यथा "विवर्त्तते साध्ववगाहते च शल्यं निगृह्योद्धरते च यस्मात् । यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्व्वेष्व-विकारि चैव" इति शिष्यशक्तिमभिसमीक्ष्य पदतः पादतः समुदायतो वा उपदिशेत् । ततः पुनरपि साधु विवर्त्तते परिवर्त्तते साधु चावगाहते अन्तः प्रविशतीत्यादिक्रमेणानुसन्धेयाः । एवमेकैकशः पदपादश्लोकान् गद्यपद्योक्तान् पदससूहान् घटयेत् अर्थतो योजयेत् आत्मना चानुपठेत्, अनुशब्दो लक्षणार्थे कर्म्मप्रवचनीयः, तेन पठतः शिष्यान् लक्ष्यीकृत्य स्वयमाचार्य्यः पठेच्चेत्यर्थः । अनुक्रमे चेदनुस्तदा यथाक्रमं पठेच्चेत्येवं व्याख्येयम् । अद्रुतम् असन्निकृष्टपदम्, अविलम्बितं नातिविस्रस्तपदम्, अविशङ्कितम् उच्चारणमस-ङ्गतञ्चेत्तर्हि उपाध्यायः क्रुध्यतीत्येवं भयेन यो गद्गदत्वादिदोषस्तद्रहि-तम्, अननुनासिकं नासिकाननुगतं नानुनासिकमित्यर्थः, अपीडितवर्णं गीतवन्न मर्द्दितवर्णम्, अक्षिभ्रुवौष्ठहस्तैरनभिनीतम् अक्षिप्रभृतिभिरनभि-व्यक्तहृद्गतभावं, सुसंस्कृतम् उच्चारणमात्रार्थबोधकतया श्रुतिमधुरम् । ना-त्युच्चैर्नोदात्तैः नातिनीचैः वर्णोच्चारणस्थानेषु कण्ठादिषु नातिनीचोच्चारण-प्रयत्नविशेषकृतैः स्वरैः, एतेन स्वरितेन स्वरेण पठेदिति सूचितम् । न चान्त-रेणेत्यादि । अधीयानयोरिति सरूपाणामेकशेष इत्येकशेषे रूपं, तत्रैकोऽधी-यानशब्दः गुरुमुखोच्चारितशब्दग्रोहवचनः अपरश्चान्तर्भूतणिजर्थतया उपा-

भवतश्चात्र ।

शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्ज्जितः ।
पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥ २३ ॥
वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्म्मनैपुणे ।
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽध्ययनसम्प्रदानीयो नाम तृतीयोऽध्यायः ।

---

ध्यायमभिधत्ते । किं त्वध्ययनश्चाचरमात्रपाठ इति वैदिकोक्तेरात्मना चानुपठेदित्य नेनोपाध्यायस्याप्यधीयानत्वेनाभ्युपगमादन्तर्भूतगणिजर्यं विनैवात्रैकशेषः । अन्तरेणेत्यव्ययं मध्येऽर्थे ॥ २२ ॥

भवतश्चात्रेत्यादि । गुरुपरो गुरुकार्य्यनिरतः दक्षो निपुणः वाक्सौष्ठवे इति "सुष्ठु प्रशंसनेऽपि स्यात्"इति मेदिनी, ततः स्वार्थेऽणि सौष्ठवमिति रूपं तेनान्यूनत्वादिना वाक्यस्याननुयोज्यत्वरूपायां प्रशंसायामित्यर्थः । चरकेऽप्युक्तं "वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे अन्यूनमनधिकमर्थवदनपार्थकमधिगतपदार्थञ्चेति यत्तद्वाक्यमननुयोज्यमिति प्रशस्यते" इति । सुष्ठु भद्रं तस्य भावः सौष्ठवमिति चेत्तदा सुसंस्कृतत्वेन वाङ्माधुर्य्ये एवं व्याख्येयम् । प्रागल्भ्ये प्रत्युत्पन्नमतित्वे प्रतिभान्वितत्व इति यावत् । कर्म्मनैपुणे कर्म्मदर्शननैपुण्ये तदभ्यासे कर्म्माभ्यासे सिद्धौ मीमांसादिशास्त्रानुशीलनेन सम्पन्नतायां "सिद्धिः सम्पत्तिः" इति धरणिः । एवं सिद्धिर्भविष्यति नैवमेवंज्ञाननिष्पत्ताविति वार्थः ॥ २३ । २४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने अध्ययनसम्प्रदानीयो नाम तृतीयोऽध्यायः ।

# चतुर्थोऽध्यायः ।

अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

अधिगतमप्यध्ययनमप्रभाषितमर्थतः खरस्य चन्दनभार-इव केवलं परिश्रमकरं भवति ॥ २ ॥

भवति चात्र ।

यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।
एवं हि शास्त्राणि बहून्यधीत्य
चार्थेषु मूढाः खरवद्वहन्ति ॥ ३ ॥

तस्मात् सविंशमध्यायशतमनुपदमादश्लोकार्द्धश्लोकमनुवर्ण-

---

मह्यञ्जसा विधिनाधीतमपि शास्त्रं पुनरर्थाननुसन्धाय बहुशोऽध्ययनमन्तरेण यथोक्तैर्गुणैरुपयोजयत्वश्रीयानमित्यध्ययनसम्प्रदानीयादनन्तरं प्रभाषणीयमभिधत्तेऽथात इत्यादिना सर्व्वं प्राग्वत् । प्रकर्षार्थोऽयं प्रशब्दस्तात्पर्य्याद्भाषणस्य पौनःपुन्यमेव ख्यापयति । भाषणञ्चात्र अर्थानुसन्धानपूर्व्वकमेव बोध्यम् अनन्तरमप्रभाषितमर्थत इत्युक्तेः ॥ १ ॥

अधीत्यादि । अधिगतं गुरोरधीतम् अधीयते यत्तदध्ययनं शास्त्रमित्यर्थः । अर्थतः अर्थाननुसन्धायेति ल्यब्लोपे पञ्चम्यास्तसिल् अप्रभाषितं पौनःपुन्येनाकथितमपठितमिति यावत् ॥ २ । ३ ॥

तस्मादित्यादि । सविंशमध्यायशतमिति प्रथमाध्याये व्याख्यातम् । अनुपदेत्यादावनुर्वीप्सार्थे कर्म्मप्रवचनीयः,अनुवर्णयितव्यम्,अनुश्रोतव्यञ्चेत्यनुशब्दस्तु पश्चादर्थे । नन्वधीते शास्त्रे वाक्सौष्ठवादिषु यत्नं कुर्व्वता विदितवेदितव्यत्वेनानुवर्णनमनुश्रवणञ्चाकार्य्यं भवति अध्ययनं हि नाम सार्था-

यितव्यमनुश्रोतव्यञ्च। कस्मात्? सूक्ष्मा हि द्रव्य-रस-गुण-वीर्य्य-विपाक-दोष-धातु-मलाशय-मर्म्म-शिरा-स्नायु-सन्ध्यस्थि-गर्भ-सम्भवद्रव्यसमूहविभागास्तथा प्रनष्टशल्योद्धरण-व्रणविनिश्चय-भग्नविकल्पाः साध्य-याप्य-प्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुल-बुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः। तस्मादवश्य-मनुपदपादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च ॥ ४ ॥

---

चरग्रहणमित्याशयेन पृच्छति कस्मादिति। उत्तरयति सूक्ष्मा हीत्या-दिना। तत्र द्रव्य-रसगुणवीर्य्यविपाकानां सौक्ष्म्यं भूत-गुणतारतम्यात् दोषा-दिसौक्ष्म्यन्तु चयप्रकोपादिकृताद्विशेषादेदितव्यम्। गुणा अत्र रसवीर्य्यव्यति-रिक्ता एव बोध्याः पृथक्त्वेन रसवीर्य्याणामुपदेशात्। पृथगुपादानन्त्वेषां गुणेषु प्राधान्यात्, प्राधान्यन्तु प्राचुर्येण कर्म्मसाधनत्वादित्येवं बुद्धिमता द्रष्टव्यम्। धातवस्तु रसरक्तादयः, मलाः पुरीषादयः, आशया गर्भाशयाष्टमाः आमाशयादयः. गर्भः सम्भवत्येभ्यो द्रव्येभ्य इति गर्भसम्भवद्रव्याणि रमात्म-सत्त्वशुक्रशोणितानि, चरके "सर्व्वेभ्य एभ्यो भावेभ्यः समुदितेभ्योऽभि-र्निवर्त्तते गर्भः" इत्युक्तेः एभ्यो रमात्मसत्त्वमातापितृभ्यः। अत्र माता-पितृपदस्य शुक्रशोणितयोरेव तात्पर्य्यम्। एवमादयश्चान्ये विशेषाः देश-कालादिभेदाः। किं पुनरल्पबुद्धेरित्यनेनाल्पबुद्धेरनुवर्णनमनुश्रवणञ्च नितरा-मुचितमिति गम्यते, तदिदमुच्यते तस्मादित्यादि। अनुश्रोतव्यञ्चेति तद्विद्य-सम्भाषा विधिनेत्येवं व्याख्येयम्, यदाह चरकः—"भिषक् भिषजा सह सम्भाषेत तद्विद्यसम्भाषा हि ज्ञानाभियोगसंहर्षकरी भवति वैशारद्यमपि चाभिनिर्व्वर्त्तयति वचनशक्तिमपि चाधत्ते यशश्चादीपयति। पूर्व्वश्रुते च सन्देहवतः पुनश्च श्रवणात् संशयमपकर्षति श्रुते चासन्देहवतो भूयोऽध्यव-सायमभिनिर्व्वर्त्तयत्यश्रुतमपि किञ्चिदर्थं श्रोत्रविषयमापादयति" इत्यादि॥४॥

अन्यशास्त्रविषयोपपन्नानामर्थानामिहोपनिपतितानामर्थवशात् तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यम् । कस्मात् ? न ह्येकस्मिन् शास्त्रे शक्यः सर्व्वशास्त्राणामवरोधः कर्त्तुम् ॥ ५ ॥

भवन्ति चात्र ।

एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ६ ॥
शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥ ७ ॥
औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् ।
शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्द्दिशेत् ॥ ८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने प्रभाषणीयो नाम चतुर्थोऽध्यायः ।

---

पूर्व्वोक्तमेवार्थं विशदयति भवन्ति चात्रेत्यादिना । शास्त्रनिश्चयं शास्त्रार्थतत्त्वनिर्णयम् । शास्त्रमित्यादौ असकृदिति बारंबारम् उपास्य अर्थतः प्रभाषणेन तद्विद्यसम्भाषयाऽनुश्रवणे च संसेव्य अर्थतत्त्वनिश्चयेनाभ्यस्येति यावत् । सम्प्रति शास्त्रगूढार्थव्याकरणाय यानि तन्त्राण्युपास्यानि, व्याजेन तान्यभिधत्ते औपधेनवमित्यादिना ॥ ५—८ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने प्रभाषणीयो नाम चतुर्थोऽध्यायः ।

# पञ्चमोऽध्यायः ।

अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

त्रिविधं कर्म्म । पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति ।

---

प्रभाषणीये शास्त्रं गुरुमुखोद्गीर्णमित्यादिना शास्त्राभ्यासादनन्तरं कर्म्म कर्त्तव्यमिति व्याजेनोपदिष्टम् । नहि तदुपकरणानि विहाय कर्त्तुं शक्यते ; इतीदानीं कर्म्मसम्पादनोपायभूतान्युपकरणान्युपदेष्टुम् अग्रोपहरणीयं नामाध्यायमुपक्रमते अथात इत्यादिना । अग्रे कर्म्मणः पुरस्तात् उपहरणमिति तत्तत्कर्म्मसम्पादनार्थमासादनं येषां तानि तथोक्तानि उपकरणानीत्यर्थः, ततः पूर्व्ववच्छः ॥ १ ॥

उपकरणानि हि कर्म्मप्रकारभेदेन भिद्यन्ते इत्यत आह त्रिविधमित्यादि । पश्चात्कर्म्मेति पूर्व्वकृतप्रधानकर्म्मफलानुवृत्तिकरं पश्चिमं कर्म्म ; कर्म्मणः पूर्व्वपश्चिमत्वं हि प्रधानकर्म्मापेक्षं भवति ; तेनासाम् पूर्व्वादिसंज्ञानामनियमात् "लङ्घनादि विरेकान्तं पूर्व्वकर्म्म व्रणस्य तु । पाटनं रोपणं यच्च प्रधानं कर्म्म तत् स्मृतम् । बलवर्णाग्निकार्य्यन्तु पश्चात्कर्म्म समादिशेत्" इत्यनेन व्रणं प्रति यल्लङ्घनादिकं पूर्व्वकर्म्मत्वेनोक्तं तदेव व्रणशोथं प्रति दोषविनयनादिकर्त्तृतया प्रधानमिति यदुपदेक्ष्यते, तन्नानुपपन्नं, वक्ष्यति च "स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते । पश्चात् कर्म्मसु चादिष्टः स च विस्रावणादिषु" इति । स अभ्यङ्गः । इदमत्राव-धेयम् । प्रधानकर्म्मणः पूर्व्वं कर्त्तव्ये प्रधाने च कर्म्मणि यान्युपयोगं गच्छन्ति यानि च सम्यक् योगयुक्तं प्रति भोगाद्यर्थानि व्यापन्ने च व्यापदः परिसंख्याय प्रतीकारसुखानि तानि सर्व्वाण्येवोपकरणानि अग्रोपहरणसंज्ञकानि, नहि सन्निकृष्टे काले सुकरमाश्वाहरणमुपकरणानाम् । तत्त्रिविधं कर्म्म व्याधिविशेषेण भिद्यत इत्यतिवहुत्वात् नेह सुखेन वक्तुं शक्यम् ; न

तद्व्याधिं प्रति प्रत्युपदेक्ष्यामः। अस्मिन् शास्त्रे शस्त्रकर्म्म-प्राधान्याच्छस्त्र तस्यैव तावत् पूर्व्वमुपदेक्ष्यामस्तत्सम्भारांश्च ॥२॥

तच्च शस्त्रकर्म्माष्टविधम्। तद्यथा—छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति। अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि—तद्यथा यन्त्र-शस्त्र-क्षाराग्नि-शलाका-शृङ्ग-जलौकालाबु-जाम्ववोष्ठ-पिचु-प्लोत-सूत्र-पत्र-पट-मधु-घृत-वसा-पयस्तैल-तर्पण-कषायालेपन-

---

थोक्तमपि कथञ्चित् सुखमवबुध्यत इत्याह तद्व्याधिमित्यादि। मा भूदवा-विशेषादुभयोरेव शस्त्रभेषजव्यपाश्रययोः कर्म्मणोरशेषोपहरणार्थत्वेनास्योप-लब्धिरित्याह अस्मिन्नित्यादि। सम्भारान् तत्र तत्रोपयुक्तान् द्रव्यसमू-हान् ॥ २ ॥

तत् पुनः शस्त्रकर्म्म प्रतिपत्तिसुकरत्वायाष्टधा भिन्दन्नाह तच्चेत्यादि। अत्र च्छेद्यादिपदानां भावसाध्यत्वात् छेद्यं भगन्दरादीनां द्विधाकरणम्; भेद्यं विद्रध्यादीनां विदारणं; लेख्यम् उपजिह्विकादौ रेखाकरणं; वेध्यं शिरादौ छिद्रीकरणम्; एष्यं शलाकाभिर्नाडीव्रणादीनाम् अन्वेषणम्; आहार्य्यं शर्करादीनाम् आहरणम्; विस्राव्यं विद्रध्यादौ जलौकादिभिः शोणितादीनामास्रावणं; सीव्यं यथाविध्युत्कर्त्तिते पक्ष्मकोपादौ सीवन-मित्यर्थः। जाम्ववोष्ठो जम्बूफलाकृतिगुडकाननमुखो लोहमयो यन्त्र-विशेषः, स खलु दहनार्थमुपयुज्यते। पिचुः कार्पासतूलं, प्लोतं वस्त्रं, प्रोतं इति पाठेऽपि स एवार्थः। पटं कौषेयवस्त्रम्; तर्पणं तृप्तिकरमन्न-पानं, तच्चानेकविधं भवति, विस्तरतस्तु चरकसन्तर्पणीये द्रष्टव्यम्। कषायो न्यग्रोधनादिद्रव्यकृतः क्वाथः, आलिप्यन्ते एभिरित्यालेपनानि प्रलेपप्रदेहा-लेपाः, कल्कस्तु चतैषूपयोज्यो लेपः। एतच्च व्रणालेपनविध्यनुशासना-

कल्क--व्यजन--शीतोष्णोदक--कटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः ॥ ३ ॥

ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्न-पान-रत्नैरग्निं विप्रान् भिषजश्चार्च्चयित्वा कृतबलि-मङ्गल-स्वस्तिवाचनं लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मशिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्र-

---

ज्ञेयम्। आदिशब्दादुदकोष्ठोदकुम्भपिठरादीनां ग्रहणम्। परिकर्म्मिणः परिचारकाः; स्निग्धाः आतुरं प्रति स्नेहयुक्ताः; स्थिराः सततोपस्थिताः स्थिरमतयो वा; बलवन्त इति भूम्नि मतुप् अतिशयबलयुक्ताः, एतेन सर्व्वकर्म्मसमर्था इति प्रतिपत्तव्यम् ॥ ३ ॥

तत इत्यादि। तिथ्यादिप्राशस्त्यं ज्योतिःशास्त्राज्ज्ञेयम्। अक्षतानि यवाः, रत्नानि माणिक्यादीनि। कृतेत्यादि। बलिश्च देवानामुपहारः, मङ्गलं श्रेयःसाधनं विष्णुपूजादिकं कर्म्म, स्वस्तिवाचनम् ब्राह्मणादिभिः कर्त्तव्यस्य कर्म्मणः शुभतावाचनं, कृतान्येतानि येनेति बहुव्रीहिः। प्राङ्मुखत्वमातुरस्य प्रत्यङ्मुखत्वञ्च वैद्यस्य पूर्व्वाह्णविषयमित्याहुः, आलोकेन शस्त्रनिपातार्हस्थाननिरीक्षणसुकरत्वात्। तेनापराह्णे विपर्य्ययं विद्यात्। यन्त्रयित्वा यन्त्रेण नियम्य। अनुलोमं यथाक्रमं, क्रमस्त्वनानन्तरमुपदेष्टव्य-शास्त्रापेक्षो विचारापेक्षश्च, तेन यथायोगमिति तात्पर्य्यार्थः। सकृदेवेत्येवकारेण पौनःपुन्यमेकान्ततः प्रतिषेधितम्। आश्विति काकाक्षिगोलकन्यायेनोभयत्राऽपि सम्बध्यते; तेन सकृदेवाशु शस्त्रं निदध्यात् निपातयेत्, आशु च शस्त्रम् अपहरेदुत्तोलयेदित्यर्थः। अत्र मर्म्मादिपरिहारादेव तत्-सङ्कुले गम्भीरे च व्रणे मर्म्मादिच्छेदभयात् पूयदर्शनमनासाद्य मनाक् शस्त्रं निपात्य अङ्गुल्या शस्त्रहस्तेन वा पूयाश्रयं भित्त्वा पूयो निर्हर्त्तव्य इत्युप-

मासु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम् ॥ ४ ॥

तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः ॥५॥

भवतश्चात्र।

आयतश्च विशालश्च सुविभक्तो निराश्रयः।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते ॥ ६ ॥
शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू।
असम्मोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥ ७ ॥

---

दिशन्ति वृद्धाः। महत्स्वपीत्यादि महत्सु विस्तीर्णेषु। शस्त्रपदं शस्त्रावचारणस्थानम्। द्व्यङ्गुलं त्र्यङ्गुलमेवेति आयतत्वेन पाकप्रमाणापेक्षया विकल्पनीयं, न तु गाम्भीर्य्येण शस्त्रं निदध्यादापूयदर्शनादित्यनेनैव तदुपलब्धेः। आयतो हि व्रणः शीघ्रं न रोहतीति प्रमाणमेतन्निर्दिष्टं ; तेन यथा व्रणो दुरूढ़ो न भवति, यथा च दोषो न तिष्ठति, तथैव विसृश्य धात्वादिबलमभिसमीक्ष्य यथायोगं शस्त्रपदं कार्य्यमाहुर्भिषजो बुद्धिमन्तः ॥ ४ ॥

तत्रेत्यादि। आयतः यथायोगं दीर्घः ; विशालः पूयाश्रयं यावद्भिन्नतया विस्तीर्णः ; समः सम्यक्कृतया निम्नोन्नतत्ववर्ज्जितः ; सुविभक्तः निःशेषेण भिन्नतया सम्यक्पृथक्कृतः ; तथाविधो हि व्रणः सर्व्वावयवेन युगपदाश्वेव समतलो भवतीति प्रशस्यते। अत्रायतादिशब्दानां धर्म्मिपरत्वे व्रणगुणा इत्यनेन समन्वयासम्भवाद्धर्म्मपरत्वमङ्गीकर्त्तव्यम् ॥ ५ ॥

आयतश्चेत्यादि। निराश्रयः अङ्गुल्यावमर्द्दनेनोन्मूलिताशेषपूयाश्रयः। वक्ष्यति हि, "अङ्गुल्या व्रणमभिसृश्य" इति। प्राप्तकालकृत इति, "तत्रामच्छेदे"—इत्याद्यामपक्वैषणीयवचनस्मरणात् नात्तेनापि चोपेक्षितपाके कृतः। शौर्य्यं विक्रमशालित्वं, तेन दुःसाध्यमपि साधयितुमुत्सहते। आशुक्रियया शस्त्रतैक्ष्ण्येन च दारुणैरपि क्रियाविशेषैर्नात्यर्थं व्यथा जायन्ते,

एकेन वा व्रणेनाशुध्यमाने नान्तरा बुद्ध्यावेक्ष्यापरान् कुर्य्यात् ॥ ८ ॥

भवति चात्र।

यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च।
तत्र तत्र व्रणं कुर्य्याद्यथा दोषो न तिष्ठति ॥ ९ ॥

---

याभिर्मूर्च्छादयः सम्भवन्ति; तत्र परमार्थतः शस्त्रगुणोऽपि वैद्यायत्तत्वाद्वैद्यगुणत्वेनाध्यस्योक्तमित्यनुसन्धेयम्। खेदादिविरहे चामादिलक्षणं विचार्य्य यथाकालं यथायोगञ्च कर्म्म कर्त्तुं शक्नोतीति युक्तमुक्तं शस्यत इति। शस्यत इत्येकवचनस्य सर्व्वैतानन्वितत्वात् यथायोगं वचनविपर्य्यासः कार्य्यः ॥ ६। ७ ॥

एकेनेत्यादि। प्रकरणप्राप्तो व्रणशब्दोऽत्र प्रथमान्तत्वेनानन्विततया "अर्थवशाद्विभक्तेर्विपरिणामः" इति न्यायात् सप्तम्यन्तत्वेनानुकृष्य अशुध्यमान इत्यनेनान्वेयः। अशुध्यमाने इति शुन्ध शौचकर्म्मणीति चौरादिकस्य कर्म्मणि रूपम्। तदयमर्थः। एकेन वाशब्दादनेकेन वा व्रणेन व्रणमुखेन कर्तृभूतेन व्रणे अन्तर्गते क्षते अशुध्यमाने सति, नान्तरेति समीपे हि क्षतो व्रणोऽपार्थको भवतीति; मध्यार्थनिकटार्थयोर्निकटार्थस्यैवान्तराशब्दस्य नञर्थ-न-शब्देन समासान्मध्ये दूरे वेत्यर्थः। "अन्तरा तु विनार्थे स्यान्मध्यार्थनिकटार्थयोः" इति मेदिनी। बुद्ध्या अवेक्ष्य यथा दोषो न तिष्ठति तथा विचार्य्य अपरान् व्रणान् कुर्य्यादिति योजना। अत्रापरव्रणकरणस्यान्तर्व्रणशुद्ध्यर्थत्वाद्यावद्भिर्व्रणैः सोऽशेषं शुद्धिमेति तावन्त एव व्रणाः कार्य्या इत्याशयेनैव सर्व्वग्रहार्थं बहुवचनमुपात्तम्, न तु नियमेन बहुव्रणकरणार्थमेवं बुद्धिमता द्रष्टव्यम् ॥ ८ ॥

एतदेव विशदयति यत इत्यादिना। यतो यत इति सप्तम्यास्तसिल्। उत्सङ्गः पूयाधिष्ठिततया उन्नतप्रदेशः। दोषोऽत्र पूयः कार्य्यकारणयोरभेदोपचारात् ॥ ९ ॥

तत्र भ्रू-गण्ड-शङ्ख-ललाटाक्षिपुटौष्ठ-दन्तवेष्ट-कक्ष-कुक्षि-वङ्क्षणेषु तिर्य्यक्छेद उक्तः॥ १०॥

चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान्॥ ११॥

अन्यथा तु शिरास्नायुच्छेदनादतिमात्रं वेदना चिराद्-व्रणसंरोहो मांसकन्दीप्रादुर्भावश्चेति। मूढ़गर्भोदराऽश्मरी-मुखरोगेष्वभुक्तवतः कर्म्म कुर्व्वीत॥ १२॥

ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्याङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेण प्लोतेनो-

---

तत्रेत्यादि अक्षिपुटमक्षिवर्त्म, दन्तवेष्टो दन्तमूलमांसं, कक्षो बाहुमूलं, "बाहुमूले उभे कक्षौ" इत्यमरः। कुक्षिरुदरं, वङ्क्षणमूरुसन्धिः। एतेनान्यत्र ऋजुच्छेदो बोध्यः॥ १०॥

अन्यथेत्यादि। मांसकन्दीप्रादुर्भावश्चेति कन्द एव कन्दी मृणाल्यादौ पाठादल्पत्वादीप् "स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि" इत्यमरः। यथाहि गर्भाधानादनन्तरं गर्भाशयशैथिल्यात् छर्द्दिरुत्पद्यते,तथैव मूढ़गर्भा-श्मर्य्युदरेषु भुक्तवतः क्रियमाणे क्षते वा कर्म्मणि तत्तदाशय-शैथिल्यान्मुख-रोगेषु चाङ्गुल्यादिप्रतिमर्शात्, पूर्णकोष्ठतया सुखमुत्पन्नया छर्द्या मा भूत् कर्म्मोपघातश्चिरेण व्रणसंरोहो मरणं वेति सामान्येन भुक्तवतो यत्कर्म्मा-र्हत्वमुपदिष्टं तस्यापवादमाह मूढ़ेत्यादिना। केनचिदत्रार्शोभगन्दरा-वपि पठ्येते; तदयुक्तं चिकित्सिते तयोः शस्त्रकर्म्मणः प्राक् भोजन-विधानादेतदर्थानुवादिना वाग्भटेनाप्यपठितत्वाच्च। तेन हि "न मूर्च्छत्यन्न-संयोगान्मत्तः शस्त्रं न बुध्यते। अन्यत्र मूढ़गर्भाश्ममुखरोगोदरातुरात्" इत्युक्तम्॥ १२॥

तत इत्यादि। ततस्तत्र शस्त्रप्रयोगार्हे देशे शीताभिरद्भिराश्वास्येति

दकमादाय तिलकल्कमधुसर्पिःप्रगाढ़ामौषधयुक्तां नातिस्निग्धां नातिरूक्षां वर्त्तिं प्रणिदध्यात्। ततः कल्केनाच्छाद्य घनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपैर्धूपयेद्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत ॥ १३ ॥

---

प्राणरक्षार्थं समन्तात् परिपीड्येति सर्व्वतो दोषनिर्हरणार्थम्। अङ्गुल्या व्रणमुखमभिमृज्येति आसक्तदोषापहरणार्थम्। कषायेण क्षीरिवृक्षादिशोधनद्रव्यकृतक्वाथेन, प्लोतेन वस्त्रखण्डेन, उदकं व्रणान्तर्गतमनिःसृतं प्रक्षालनोदकम्। तिलकल्कमधुसर्पिःप्रगाढ़ां तिलकल्कादिबहुलां, "प्रगाढ़ं भृशकृच्छ्रयोः" इत्यमरः। औषधयुक्तां मिश्रकोक्त यथास्व-संशोधनौषधसंयुक्तां, वर्त्तिमिति तूलकृतत्वात् वर्त्ति-सदृशीं विकेशिकामिति यावत्। नातिस्निग्धां क्लेदभयात्, नातिरूक्षाञ्च छेदभयात्, वक्ष्यति च "अतिस्नेहात् क्लेदो रौक्ष्याच्छेदः" इति। प्रणिदध्यात् व्रणान्तः प्रवेशयेत्। तत इत्यादि। ततो वर्त्ति-प्रणिधानानन्तरं कल्केन द्विव्रणीयोक्तेन सघृतमधुकनिम्बपत्रादिकल्केनाच्छाद्य, घनां बन्धहेतुकवेदनानुत्पत्त्यर्थं विन्यस्त-कौशेयादिवस्त्ररचनाविशेषेण सान्द्रां; कवलिकामिति औषधद्रव्यं कवलयतीति कवलेः संज्ञायां ण्वुल्, कवलो हि ग्रासस्तेन तात्पर्य्यात् "गदी" इतिप्रसिद्धमाच्छादनमत्रार्थः, सा पुनः सुखस्पर्शार्थं व्रणानुगुणार्थञ्च निर्म्मलनवसूक्ष्मवस्त्रकृता मक्षिकाद्याबाधपरिहारार्थञ्च धूपिता एव कार्य्या; उक्तञ्च वाग्भटेन "शुचि सूक्ष्मा दृढ़ाः पट्टाः कवलाः सविकेशिकाः। धूपिता मृदवः श्लक्ष्णा निर्व्वलीका व्रणे हिताः" इति। दत्त्वेति "दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता" इत्यनागताबेक्षणात्। काञ्ची-कोमलकदल्यादिपत्रेण तदन्तरीकृत्य पातयित्वेत्यर्थः। केचित्तु नातिस्निग्धां नातिरूक्षां घनां कवलिकां दत्त्वेति पठ्यते, व्याख्यायते च क्लेदच्छेददोषपरिहारार्थं नातिस्निग्धां नातिरूक्षामित्युपात्तमिति, तत्तु चिन्त्यमेव कल्कोपरि विन्यस्तायाः कवलिकाया व्रणेनासाक्षात्सम्बन्धात्। बध्नीयात् व्रणालेपनबन्धविधौ वक्ष्यमाणं बन्धं योजयेदित्यर्थः। वेदनारक्षोघ्नैरित्यादि स्पष्टम् ॥ १३ ॥

ततो गुग्गुल्वगुरुसर्ज्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत्। आज्यशेषेण चास्य प्राणान् समालभेत। उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म्म कुर्य्यात् तद्वक्ष्यामः॥ १४॥

कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम्॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः॥
पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च।
सोमो व्यानमपानं ते पर्ज्जन्यः परिरक्षतु॥

---

पूर्व्वोक्तधूपनरक्षाकर्म्मविधी क्रमेण विवृण्वन्नाह तत इत्यादि। ततस्तत्र व्रणावच्छेदे गुग्गुल्वादिभिर्धूपयेदातुरमिति शेषः। आज्येत्यादि। आज्यशेषेण गुग्गुल्वादिधूपनद्रव्यपरिपठिताज्यावशिष्टांशेन। प्राणानिति प्राणाधिष्ठानत्वात् सर्व्वमर्म्माणीत्यर्थः। समालभेतेति समालभतिः स्पर्शार्थो विलेपनार्थो वा "अत ऊर्द्ध्वमसमालम्भनमा दशरात्रात्" इति गोभिलसूत्रम्। "समालम्भो विलेपनम्" इति त्रिकाण्डशेषश्च। उदकुम्भात् यथाविधिस्थापितात् शान्तिकुम्भात्। प्रोक्षयन्निति "कृत्यानामित्यादिना

उदानं विद्युतः पान्तु समानं स्तनयित्नवः।
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा॥
कामांस्ते पान्तु गन्धर्व्वाः सत्त्वमिन्द्रोऽभिरक्षतु।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम्॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा।
आकाशं खानि ते पातु देहं तव वसुन्धरा॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम्।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ॥
एता देहे विशेषेण तव नित्या हि देवताः।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्व्वताम्।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवा सहेन्द्रगाः।
पितामहकृता रक्षा स्वस्त्यायुर्वर्द्धतां तव॥
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः॥ इति स्वाहा।
एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि॥ १५॥

---

दीर्घमायुरवाप्नुहि" इत्यन्तेन वक्ष्यमाणेन मन्त्रेणेति शेषः। मन्त्रस्तु स्पष्टः॥ १४।१५॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत्। ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्दस्त्रपट्टेन न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत्॥ १६॥

द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति तीव्ररुजश्च भवति। अत ऊर्द्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात्। न चैनं त्वरमाणः सान्तर्दोषं रोपयेत् स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति॥ १७॥

भवन्ति चात्र।

तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद्व्रणम्।
रूढ़ेऽप्यजीर्णव्यायामव्यवायादीन् विवर्ज्जयेत्।
हर्षं क्रोधं भयञ्चापि यावत् स्थैर्य्योपसम्भवात्॥ १८॥

तत इत्यादि। अपरेद्युरित्यव्ययम्, अपरस्मिन् दिवसे इत्यर्थः॥ १६॥

द्वितीयेत्यादि। विग्रथितो ग्रन्थिभूतः। उपसंरोहति जाताङ्कुरो भवति। अत इत्यादि। अतस्तृतीयदिवसादित्यर्थः। दोषकालबलादीनिति। दोषाः वातादयः कालः शरदादिः बलमातुरस्यातुर्य्यस्य चेति बोध्यम्। आदिग्रहणात् प्रकृत्यादीनामादेशः। अत्राजहत्स्वार्थया लक्षणया कषायादिशब्देनैव धूपनादयोऽप्यभिधीयन्ते ते च द्विव्रणीये व्रणालेपनादौ च वक्ष्यन्ते। न चेत्यादि। नैवं रोपयेत् कुतः? हि यस्मात् स सान्तर्दोषं रोपितो व्रणः उत्सङ्गं पाकावदरणादिभिः क्रोड़वन्निम्नं कृत्वा। विकरोति विकृतत्वेन परिणमतीत्यर्थः॥ १७॥

इदानीमुक्तमर्थं द्रढ़यन् प्रसङ्गसङ्गत्याधिकमप्यर्थं वक्तुमभिप्रैति भवन्ति चात्रेत्यादिना। अन्तःशुद्धत्वं स्राववेदनाद्यभावेन, वहिःशुद्धत्वन्तु श्यावौष्ठत्वा-

हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् ।
त्र्यहाद्‌द्व्यहाच्छरद्‌ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥ १९ ॥
अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक् ।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात्प्रतिक्रियाः ॥ २० ॥
या वेदना शस्त्रनिपातजाता तीव्रा शरीरं प्रदुनोति जन्तोः ।
घृतेन सा शान्तिमुपैति सिक्ता कोष्णेन यष्टीमधुकान्वितेन ॥२१॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽग्रोपहरणीयो नाम पञ्चमोऽध्यायः ।

---

दिना विशेषम् । रूक्षेऽप्यजीर्णादिवर्ज्जनं पुनरावृत्तिभयात् । अतादिग्रह-णाद्दिवास्वप्नादीनां ग्रहणम् । हेमन्त इत्यादि । पूर्व्वमत ऊर्द्धमित्यादिना प्रथममोक्षणादनन्तरं प्रयोक्तव्यानां कषायालेपनबन्धादीनां दोषकालाद्य-पेक्षत्वेनाभिधानात् कालापेक्षोऽयं बन्धप्रतियोगी मोक्षणविधिर्द्वितीयादि-मोक्षणमेवाधिकरोति न लभ्यत् । त्र्यहादिति । ल्यब्लोपे पञ्चमी, त्र्यहं त्र्यहमतीत्येत्यर्थः । अत्र वीप्सामन्तरेणाऽपि वीप्सार्थस्य लाभो गमकत्वात्, भाष्ये सङ्ग्रामशब्दस्य वृत्तौ वीप्सार्थस्याभ्युपगमाद्वा । एवमुत्तरत्राऽपि द्रष्ट-व्यम् । हेमन्तादिषु त्रिषु शीतत्वेन पाकभयं नास्तीति त्र्यहादितरेषु च तद्विपरीतत्वेन द्व्यहान्मोक्षणाभिधानं युक्तमेव । एतदपि व्रणदोषविशेषा-पेक्षमेवेति बोद्धव्यम् । अतिपातिष्विति । पाकादिना अति अत्यर्थं पातयितुं शीलं येषां तेषु आत्ययिकेष्वित्यर्थः । येत्यादौ प्रदुनोति उपताप-यति, सुगममन्यत् ॥ १८।१९।२०।२१ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थानेऽग्रोपहरणीयो नाम पञ्चमोऽध्यायः ।

# षष्ठोऽध्यायः ।

अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः ॥ १ ॥

कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते । स

---

अग्नोपहरणीये हेमन्ते शिशिरे चैवेत्यादिना नाममात्रेणाभिहिता-ऋतवो न तु स्वरूपतस्तेन तत्स्वरूपज्ञापनार्थम् ऋतुचर्य्याध्यायम् आरभते अथात इति । ऋतुचर्य्यमिति गदमदचरेत्यादिना चरेर्यत्; ततश्चर्य्यमाचरणम्, ऋतूनां शिशिरादीनां वर्षादीनाञ्च रसबलोत्कर्षादिजनकत्वं दोषोपचयादिकारकत्वञ्च । ऋतुचर्य्या इति पाठे तु ऋतुषु चर्य्या नियमतः शरदादिषु निर्हरणं तद्विषयकोऽध्यायः ऋतुचर्य्याध्यायः, ऋतुचर्य्येति प्रसिद्धा वा संज्ञा अस्याध्यायस्य ॥ १ ॥

प्रतिज्ञातमर्थं व्याचिख्यासुः ऋतूनां कालविशेषत्वात् प्रथमं तावत् काललक्षणमाह काल इत्यादिना । कालो महाकालः, नाम प्राकाश्ये, काल इति प्रसिद्धः, भगवान् स्वयम्भूः स्वयम् भवति न केनाप्युत्पाद्यते । भवतेः सत्तामात्रमर्थो न तूत्पत्तिरिति भावः । कुत इत्याह अनादिमध्यनिधन इति । अनादिमध्यनिधनो नित्य इत्यर्थः । प्रसिद्धश्चायमर्थो न विशङ्कनीय इत्यवधारणार्थो हिशब्दः । तथाच विष्णुपुराणं "कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तते" इति । जगतामेव कालाधीनत्वे सत्यपि इहोपयोगितया रसव्यापदादेस्तदधीनत्वमाह अत्रेत्यादिना । अत्र काले, रसव्यापत्सम्पत्ती रसशब्देनात्र रसवद्द्रव्यमुच्यते तदाश्रयत्वात्; द्रव्याणि पुनर्गुर्व्वादिकं विहाय व्यापन्नानि सम्पन्नानि वा न भवितुमर्हन्तीति गुर्व्वादयोऽप्युच्यन्ते; यतो वक्ष्यति "ता एवौषधयः कालपरिणामात् परिणतवीर्य्याः" इत्यादि । रसानां व्यापद्व्यापत्तिः, सम्पत्तिस्तु यथास्वभावः । अत्र मनुष्याणामिति मनु-

सूक्ष्मामपि कलां लीयत इति कालः, सङ्कलयति काल-यति वा भूतानीति कालः ॥ २ ॥

तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षि-निमेष-काष्ठा-कला-मुहूर्त्ताहोरात्र-पक्ष-मासर्त्त्वयन-संवत्सर-युग-प्रविभागं करोति ॥ ३ ॥

---

याधिकारादेवोक्तमित्यनुमन्धेयम्, जननमरणधर्म्मिणां सर्व्वेषामेव तथात्वात्। कालस्य निर्वचनेन स्वरूपं दर्शयन्नाह स इत्यादि। सूक्ष्मामपि कलां कालांशविशेषं लीयते क्षिप्यति कालस्य सर्व्वमूर्त्तसंयोगित्वात्। कालशब्दस्य ककाराकारौ लीधातोश्च लकारमादाय कालशब्दनिष्पत्तिः। अत्र कलां लीयत इति दैवादिकस्याकर्म्मकस्य लीधातोः प्रयोगे अधिकरणे "कालाध्वभावदेशानाम्" इत्यादिना कर्म्मत्वं, तेन सूक्ष्मायामपि कलायां लीयत इत्यर्थः। कश्चित्तु न लीयत इति पठित्वा गतिमत्त्वात् सूक्ष्मामपि कलां न क्षिप्यतीत्याचष्टे ; तन्न समीचीनं विभुत्वात्, विभोर्हि गतिर्नोप-पद्यते। निर्वचनान्तराभ्यां सर्व्वभूतोत्पत्तिविनाशकर्त्तृत्वं प्रतिपादयति सङ्कलयतीत्यादिना। भूतानि सङ्कलयति उत्पादयति जन्यमात्रं प्रति कालस्य हेतुत्वात्। कालयति लीनानि करोति संहरतीति यावत् ॥ २ ॥

सम्प्रति चिकित्सोपयोगितया आदित्यगतिभेदभिन्नं महाकालमुदाहर्त्तु-माह तस्येत्यादि। निमेषादिरूपाणां कालावयवानां महाकालभेदकत्वे सत्यपि तेषां परस्परवैलक्षण्यात् संवत्सरस्य तु संवत्सरावृत्त्या पुनस्तादृश-संवत्सरप्रवृत्तेरवैलक्षण्यात् संवत्सरातिरिक्तकालस्याभावाच्चोक्तं संवत्सरात्मन-इति। संवत्सरः आत्मा स्वरूपं यस्य तस्य महाकालस्य संवत्सररूपेण व्यव-हारपथमारूढ़स्येत्यर्थः भगवानादित्यो गतिविशेषेण शीघ्रमन्दगतिभ्यां कर्कटादिषु मकरादिषु च राशिषु सञ्चरणेन निमेषादिप्रविभागं करोतीति योजना। एवं संवत्सरात्मकत्वन्तु सृष्टेः परस्ताज्ज्ञेयम्। तथाच बृहदार-ण्यकश्रुतिः—"न ह पुरा ततः संवत्सर आस"इत्यादि। अत्र शाङ्करभाष्यं—

तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठाः। त्रिंशत्काष्ठाः कला। विंशतिकलो मुहूर्त्तः कलादशभागश्च त्रिंशन्मुहूर्त्तमहोरात्रः। पञ्च-

"न ह पुरा पूर्व्वं ततस्तस्मात् संवत्सरकालनिर्म्मातुः प्रजापतेः संवत्सरः कालो नाम न आस न बभूव ह"। अस्यानन्दगिरिकृता व्याख्या "पूर्व्वमिति प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्च संवत्सरव्यवहारस्य आदित्यात् पूर्व्वं तद्व्यवहारो नासीदेव इत्यर्थः"। यद्यपि निमेषादयो लघ्वक्षरोच्चारणादिना मियन्ते तथाप्यादित्यस्यैव शीतोष्णादिप्रविभागकर्त्तृत्वेन मुख्यत्वात् सुष्ठूक्तं भगवानादित्य इति ॥ ३ ॥

लघ्वित्यादि लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेष इति, उच्चार्य्यते अस्मिन्नित्युच्चारणम् उच्चारणकालः, मात्रच्प्रत्ययोऽत्राविशेषे। यावति सूर्य्यगत्युपलक्षिते काले,लघुरकारादिवर्ण उच्चार्य्यते स निमेषमात्रः कालः, सूर्य्यगतिस्तु परोक्षा तदुपलक्षितः कालो लघ्वक्षरोच्चारणादिना लक्ष्यते। निमेषस्योपयोगस्तु "स्नेहं मात्रासहस्रन्तु धारयेत्तु प्रयोगतः" इत्यादौ; अत्र मात्राशब्दो निमेषार्थः। उक्तञ्च तन्त्रान्तरे "निमेषोन्मेषणं पुंसां स्फोटनं वा तथाङ्गुलेः। अक्षरस्य लघोर्वापि मात्रा तूच्चारणं भवेत्" इति। अत्रासत्यपि साक्षात्काष्ठाप्रयोजने कलोपदेशार्थमागमसिद्धत्वात् काष्ठोपदेशः। कलाप्रयोजनन्तु "त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कलाः एकैकस्मिन् धाताववतिष्ठते" इत्यादौ। विंशतिकलो मुहूर्त्तः। कलादशभागश्चेति कलाया दशभागैकभागः काष्ठात्रयमित्यर्थः। ततश्चायमर्थः—विंशतिकलः कालः काष्ठात्रयञ्च मिलित्वा मुहूर्त्तः। यत् पुनः "त्रिंशत्काष्ठाः कला विद्यात् मुहूर्त्तं विंशतिः कलाः," तथा "विंशतिकलो मुहूर्त्तस्तु विज्ञेयः कुशलैर्नरैः" इति भोजवालुकीतन्त्रयोर्वचने दृश्येते; ते अनार्षे ज्ञेये, पारिभाषिकत्वाद्वाऽविरोधः। अत्र कलादशभागश्चेत्युपादानात् शोणितवर्णनीये कलाभिरुपदेक्ष्यमाणं मासप्रमाणं नानुपपन्नं भविष्यति, तस्य काष्ठात्रयाधिकविंशतिकलात्मकमुहूर्त्तैस्त्रिंशता निष्पादितानाम् अहोरात्राणां त्रिंशदात्मकत्वात्।

दशाहोरात्राः पक्षः। स च द्विविधः शुक्लः कृष्णश्च। तौ मासः॥ ४॥

---

मुहूर्त्तप्रयोजनन्तु "अनायान्तं मुहूर्त्तात्तु निरूहं शोधनैर्हरेत्" इत्यादौ। "त्रिंशन्मुहूर्त्तमहोरात्र" इति "रात्राह्नाहाः पुंसि" इति पुंस्त्वम्। केचिदत्र "ज्ञेयं विमिश्रन्तु मनुष्यमानं मानैश्चतुर्भिर्व्यवहारवृत्तेः। वर्षायनर्त्तुयुगपूर्वकमत्र सौरान्मासास्तथाच तिथयस्तुहिनांशुमानात्। यत् कृच्छ्रसूतकचिकित्सितवासराद्यं तत् सावनाच्च घटिकादिकमार्क्षमानात्" इति भास्कराचार्य्याभिहितं सिद्धान्तशिरोमणिवचनमनुसृत्य पञ्चदशाहोरात्रपदेन पञ्चदशतिथीराहुः। तन्न मनोरमम्—अहोरात्राणां तिथिपरत्वे काल्पनागौरवात्, सावनपक्षस्याप्यत्रोपयोगाच्च। इदन्तु ब्रूमः अत्र पञ्चदशाहोरात्रा इति सावनपक्षस्य तदारम्भकत्रिंशद्दिनात्मकमासस्य च प्राय उपयोगितया निर्द्दिष्टम्। वस्तुतस्तु मासार्द्धं पक्षः, तेन सावनमासार्द्धं चान्द्रमासार्द्धं सौरमासार्द्धञ्च पक्षशब्देनोच्यते। तथाच विष्णुपुराणे—"त्रिंशन्मुहूर्त्तं कथितमहोरात्रन्तु यन्मया। तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते॥ मासः पक्षद्वयेनोक्तो द्वौ मासावर्कजावृतुः। ऋतुत्रयञ्चाप्ययनं द्वेऽयने वर्षसंज्ञिते" इति। द्वेऽयने इति सन्धिरार्षः।

संप्रति तेषु त्रिविधेषु पक्षेषु चान्द्रपक्षस्यैव शुक्लकृष्णात्मकत्वात्तेनैव विशेषयन्नाह स चेत्यादि। स चेति तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् त्रिविधेषु पक्षेषु चान्द्रमेव पक्षं परामृशति, अतश्चान्द्रः पक्षः शुक्लः कृष्णश्च द्विविधो ज्ञेयः। तत्र प्रतिपदादिपूर्णिमान्तः शुक्लः। प्रतिपदादिदर्शान्तश्च कृष्णः। सौरसावनौ तु शुक्लकृष्णाख्यामिश्रावपि भवतः। चान्द्रपक्षस्योपयोगस्तु "कृष्णपक्षक्षये चापि लता भवति केवला" इत्यादौ; सावनपक्षस्य च "पक्षादूर्द्ध्वं त्रिभिः पेयमेतत्" इत्यादौ; तत्र हि स्थापनदिनमारभ्य पञ्चदशाहोरात्रेभ्य ऊर्द्ध्वमित्यर्थः। सौरपक्षस्य पुनरिहासत्यपि साक्षादुपयोगे ऋत्वारम्भकसौरमाघादिमासोपदेशेनोपयोगो वक्तव्यः। तौ मास इति। मासस्योपयोगस्तु "मासादूर्द्ध्वं जातरसमासवं मधुगन्धिकम्" इत्यादौ॥ ४॥

तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षड़्-ऋतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचि-शुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्ज्जौ शरत्। सहःसहस्यौ हेमन्त इति ॥ ५ ॥

त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभाग-करत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं

---

इदानीं तेषु त्रिविधेषु मासेषु आदित्यस्यैवायनकर्त्तृत्वात् सौरमासेनाय-नावयवभूतान् ऋतूनभिधातुं सौरं पृथक्कुर्व्वन्नाह तत्रेत्यादि। तत्र त्रिविधेषु मासेषु मध्ये माघादयो द्वादशमासा इति संख्यया निर्द्देशस्तु पुनस्तदावृत्त्या तादृशमासप्रवृत्तिप्रतिपादनार्थं इत्यनुसन्धेयम्।

तपाः माघः, तपस्यः फाल्गुनः, मधुश्चैत्रः, माधवो वैशाखः, शुक्रो ज्यैष्ठः, शुचिराषाढ़ः, शुचेर्लघुस्वरत्वादिकारान्तत्वाद्वा पूर्व्वनिपातः, नभाः श्रावणः, नभस्यो भाद्रः, इषः आश्विनः, ऊर्ज्जः कार्त्तिकः, सहाः अग्रहायणः, सहस्यः पौषः। त एत इत्यादि। चन्द्रादित्ययोः कालविभागकरत्वात् क्लेदन-शोषणादिना चन्द्रादित्ययोः शीतोष्णादिप्रभेदकरत्वात्। शीतोष्णवर्ष-लक्षणाः अतिशीतोष्णवर्षलक्षणास्त्रयो मन्दशीतोष्णवर्षलक्षणाश्च त्रय इति षड़ृतवो दक्षिणमुत्तरञ्च द्वे अयने भवत इति योजना। न तु चन्द्रा-दित्ययोः कालविभागकरत्वादयने द्वे भवतश्चन्द्रस्यायनकर्त्तृत्वेनानभि-धानात्। तथाच सूर्य्यसिद्धान्तः “भानोर्मकरसंक्रान्तेः षण्मासा उत्तरा-यणम्। कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्” इति। एव-कारादन्यग्रहनिरासः। दक्षिणमयनं गमनं रवेरिति दक्षिणायनम्। एव-मुत्तरायणमपि बोध्यम्। इदमत्रावधेयं द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धं कर्कटादिधनुःपर्य्यन्तं राशिषट्कं क्रमेण दक्षिणावनतं, तत्र स्थित आदित्यो

तयोर्दक्षिणायनसौम्येषु भगवानाप्याय्यते सोमोऽम्ललवणमधुरांश्च

यदा खगत्या प्राचीं गच्छन्नपि किञ्चित्किञ्चित्तिर्य्यग्गत्या दक्षिणामेयति ; स कालो दक्षिणमयनम् ।

तथा मकरादिमिथुनपर्य्यन्तं राशिषट्कं क्रमेणोत्तरायनतं, तत्र स्थित-आदित्यो यदा प्राग्वदुत्तरामयति स काल उत्तरमयनम् । वस्तुतस्त्वयनद्वयमेद-मपि ज्योतिषे सौरैः षड्भिः षड्भिर्मासैः प्रसिद्धं यदयनं तदेवेहाधि-कृतमुपदेशसौकर्य्यात् । तयोर्दक्षिणं विसर्गः सौम्यः सोमस्याप्यायनात् ; उत्तरं पुनरादानमाग्नेयम् अर्कस्याप्यायनात्—एतत्तु चरकसंवादाज्ज्ञेयम् । माघादिक्रमेण प्रागुत्तरायणोपदेशस्यौचित्येऽपि दक्षिणायनस्य बलकरत्वेन श्रेष्ठत्वात्पूर्व्वोपदेशः । यत्पुनर्माघादिक्रमेण प्रागुत्तरायणनिर्देशः स च पूर्व्वाचार्य्यरीत्येवेत्यदोषः । तेषु भगवान् सोमः आप्याय्यते क्रमशः आदित्यस्य दक्षिणायनतकर्कटादिराशिसञ्चरणेन दूरवर्त्तित्वात् क्रमशः प्रबलो भवति ; नतु सोमः स्वभावेन, ज्योतिषे आदित्यविप्रकर्षसन्निकर्षाभ्यामेव शीतोष्णप्रवृत्त्यभिधानात् । तथाच सूर्य्यसिद्धान्तः "अत्यासन्नतया तेन ग्रीष्मे तीव्रकरा रवेः । देवभागेऽसुराणान्तु हेमन्ते मन्दता तथा" इति । देवभागे उदगयने । "तदेतदुदगयनं दिवसम्" इति श्रुतेः । यद्वा देवभागे जम्बुद्वीपे, ग्रीष्मेऽत्यासन्नतया असुराणान्तु भागे समुद्रादिदक्षिणप्रदेशे हेमन्तेऽत्यासन्न-तया रवेः किरणास्तीक्ष्णाः,तथा—देवभागे तु हेमन्तर्त्तौ, ग्रीष्मे च दैत्यभागे कराणां मन्दता शीताधिक्यञ्चेत्यर्थः । एवमादित्यविप्रकर्षसन्निकर्षयोः शीतोष्णकर्त्तृत्वेन वक्ष्यमाणर्त्तुलक्षणं मध्यदेशाभिप्रायेणैव बोद्धव्यम् । अतएव काश्यपीयेऽप्युक्तं "भूयो वर्षति पर्ज्जन्यो गङ्गाया दक्षिणे सदा । तेन वर्षाप्रावृडाख्यावृतू तेषां प्रकल्पितौ ॥ तस्या एवोत्तरे देशे हिम-वद्धिमसङ्कुले । भूयः शीतमतस्तेषां वसन्तशिशिरावृतू" इति ।

अम्ललवणमधुराश्चेति क्रमशोऽर्कद्रासात् सोमवृद्ध्या च यथाक्रमं वर्षादिषु

रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्याय्यतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते ॥ ६ ॥

---

त्रिषु स्निग्धा अम्लादयो रसा बलवन्तो भवन्ति, उत्तरोत्तरं वर्षाभ्योऽधिकं शरदि, ततश्चाधिकतरं हेमन्ते सर्व्वप्राणिनाम् अम्ललवणमधुररसदेहानां क्रमेणाम्ललवणमधुर-रसद्रव्योपसेविनामन्त:संज्ञ-वहि:संज्ञानां सर्व्वभूतानाञ्च बलमभिवर्द्धते, बलक्षयकराणां तिक्तकषायकटुकानां ह्रासाच्चेति बोद्धव्यम्। उत्तरायणे उत्तरावनतमकरादिराशिसञ्चरणेन सन्निकृष्टतया अर्कं आप्याय्यते अधिकबलो भवति; तिक्तकषायकटुकाश्च रसा यथाक्रमं बलवन्तो भवन्ति, रूक्षभावात् उत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते तिक्तकषायकटुकरसदेहत्वात् क्रमेण दृढतिक्तकषायकटुकरसद्रव्योपसेवनेन बलकराणामम्ललवणमधुराणां ह्रासाच्चेत्यनुसन्धेयम्। अत्र दक्षिणायनादौ वर्षासु सौम्यत्वेऽपि आदानप्रकर्षाहितोष्णतायाः क्षीयमाणाया अपि महत्त्वात् मध्यस्निग्धोष्णस्याम्लस्य, तथा शरदि सोमस्य मध्यबले सत्यपि प्रविरलमेघे वियत्यर्कतेजसोऽभिवृद्धेरत्युष्णावरस्निग्धगुरोर्लवणस्य, तथा हेमन्ते विसर्गप्रकर्षादेवातिस्निग्धशीतगुरोर्मधुरस्य बलवत्त्वं यथा युक्तियुक्तं भवति, न तथा शिशिरे विसर्गप्रकर्षाहितसौम्यतायाः क्षीयमाणाया अपि महत्त्वादतिलघ्ववररूक्षशीतस्य तिक्तस्य, तथा वसन्ते सोमसूर्य्ययोर्मध्यबलयोः सतोरतिरूक्षमध्यमशीतस्य कषायस्य बलवत्त्वं युक्तियुक्तमिति रसबलोत्पादाधिकारे कालप्रभावमेव कारणत्वेनाध्यवस्यन्ति कुशलाः। रसानां तैस्तैर्गुणैर्मध्यमावरोत्तमत्वन्तु चरकात्रेयभद्रकाप्यीयानुशासनाज्ज्ञातव्यम्। एतेन वर्षादिषु त्रिषु क्रमशो हीनं मध्यममुत्तमञ्च बलं तथा शिशिरादिषु बलापचयश्च। चरकेऽपि "आदावन्ते च दौर्ब्बल्यं विसर्गादानयोर्नृणाम्। मध्ये मध्यबलन्त्वन्ते श्रेष्ठमग्रे च निर्द्दिशेत्" इत्युक्तम् ॥ ५। ६ ॥

भवति चात्र।

शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि।
तावुभावपि संश्रित्य वायुः पालयति प्रजाः ॥ ७ ॥

अथ खल्वयने द्वे युगपत् संवत्सरो भवति ॥ ८ ॥

ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादियुगपर्य्यन्तः कालश्चक्रवत्परिवर्त्तमानः कालचक्रमुच्यते इत्येके ॥ ९ ॥

---

सम्प्रत्युक्तमेवार्थमुपसंहरन्नेतावाश्रित्य वायोः प्रजापालकत्वरूपमधिकार्थं श्लोकेन वक्तुमभिप्रैति शीतेत्यादिना। एतेन क्लेदनं शोषणं वा न प्रजापालकम् अपि तु वायुना मिलितं सत्प्रजापालकं भवति। चरकेऽपि "ताविवार्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्त्तुरसदोषनिर्वृत्तिप्रत्ययभूताः समुपलभ्यन्ते" इत्युक्तम् ॥ ७ ॥

क्रमप्राप्तं संवत्सरमभिधातुमाह अथेत्यादि। संवत्सरस्योपयोगः पुनः "शस्त्रसाध्यानि तान्याहुः परिसंवत्सराणि च" इत्यादौ ॥ ८ ॥

इत्थं स्वमतकालचक्रमभिधाय प्रसङ्गादिहानुपयुक्तमप्यन्येषां कालचक्रवादिनां मतानुवर्णनार्थं पूर्व्वोक्तं युगं क्रमप्राप्ततया व्याख्यातुमाह त इत्यादि। ते पञ्च संवत्सरा युगमिति संज्ञां लभन्ते। इयन्तु युगस्य पारिभाषिकी संज्ञा पञ्चवर्षात्मककालचक्रवादिभिरभिहिता। यदुक्तं काश्यपीये "कालचक्रन्तु वर्षाणां पञ्चानां सम्प्रवर्त्तते। युगसंज्ञा च देवर्षैस्तत्र समुदीरिता" इति।

स एष इत्यादि। चक्रवत्परिवर्त्तमानः बंभ्रम्यमाणं चक्रं यथा पुनः पुनरेकविधमेव परिवर्त्तते, तद्वत्परिवर्त्तमानो निमेषादियुगपर्य्यन्तः कालः। एके कालचक्रवादिनः, एक इत्यनेन स्वमतार्थं कालचक्रवादिनो व्यवच्छिद्यन्ते ॥

इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड्ऋतवो भवन्ति दोषोपचयप्रकोपोपशमननिमित्तम् । ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः । तद्यथा—भाद्रपदाश्वयुजौ वर्षाः । कार्त्तिकमार्गशीर्षौ शरत् । पौषमाघौ हेमन्तः । फाल्गुनचैत्रौ वसन्तः । वैशाखज्यैष्ठौ ग्रीष्मः । आषाढ़श्रावणौ प्रावृडिति ॥ १० ॥

तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जल-

---

भाद्रादिकेषु चतुर्षु चतुर्षु मासेषु द्वौ द्वावेकैकेषां पित्तश्लेष्मवातानां यथाक्रमं सञ्चयप्रकोपहेतू भवतः, प्रत्येकशः प्रशमे चैषां पौषमाघवैशाखज्यैष्ठकार्त्तिकाग्रहायणेषु द्वौ द्वाविति दोषोपचयादिक्रमोपदेशार्थं वर्षादीन् ऋतून् परिकल्पयन्नाह इहेत्यादि । तुकारो भिन्नक्रमे, वर्षादयः षडृतवो दोषोपचयादिनिमित्तं भवन्तीति वचनभेदेऽपि वेदाः प्रमाणमितिवदुद्देश्यविधेयभावेनान्वयः । निमित्तं कारणमित्यनर्थान्तरं, तत्र दोषाणामुपचयो व्रणप्रश्ने वक्ष्यमाणः स्तब्धपूर्णकोष्ठतादिलक्षणः, प्रकोपस्तु कोष्ठतोदसञ्चरणादिरूपः ॥ १० ॥

सम्प्रति रसमूलकेषु चयादिषु वर्षादिकानामृतूनां यथा हेतुत्वं भवति, तदेवोपदिशन्नाह वर्षास्वित्यादि । ओषधयोऽत्र पूर्व्वमनाहृता वनस्पत्यादयं एव तरुण्योऽभिनवाः अजातसारा इति यावत् । न त्वन्तःप्रवेशिवातानुगतसूक्ष्मजलसम्पर्कात् पूर्व्वमाहृता गोधूमादयोऽपि, तेषां प्रावृड्हितत्वेनोपदेक्ष्यमाणत्वादेव वर्षाहितत्वेनाप्यभ्युपगमात्, वर्षा हि प्रायेण प्रावृड़िव प्रतिभान्ति । आपश्चाप्रसन्ना इति कीटादिदुष्टतया; वक्ष्यति च "कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्" इत्युपक्रम्य "योऽवगाहेत वर्षासु" इत्यादि । क्षितिमलप्राया इति मलशब्देनात्र मलिनीकरणात्कुथितत्वादिदोषदुष्टा

प्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टब्धाग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति। स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति ॥ ११ ॥

ता एवौषधयः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्व्यस्ता उपयुज्यमाना मन्दकिरणत्वात् भानोः सतुषारपवनोपस्तम्भित-

---

वनस्पत्यादयो मलमूत्रादयश्च। क्लिन्नदेहानामार्द्रदेहानाम्। हेतुरत्रातपाभावोऽम्लीभूतजलप्रक्लिन्ना भूमिस्तज्जलोपयोगश्च। अम्लीभूतं हि जलं कफोत्क्लेदीति स्वयमेव निवेदयिष्यते। शीतवातविष्टब्धाग्नीनामिति वातस्य शैत्यमत्र तोयानुगतत्वादेव ज्ञेयम्। उक्तञ्च "तोयानुगतमारुतोपहतेषु" इति। तादृशेन वातेन विष्टब्धोऽग्निर्येषामिति वाक्यार्थः। विष्टब्धत्वञ्च तथाविधवाताहततया अकर्म्मण्यत्वं मन्दत्वमिति यावत्। न तु शीतगुणेन वातेन विष्टब्धः पिण्डीकृतोऽग्निर्यस्येति व्याख्यानं युक्तं, तथाविधस्याग्नेर्हेमन्तर्तुविषयत्वात् वर्षासु मन्दस्यैवाग्नेर्नियतत्वेनोपदेशाच्च।

विदह्यन्ते अम्लं पच्यन्ते। स सञ्चय इत्यादि। पैत्तिकान् व्याधीन् अम्लीकापिपासापरिदाहादीन् जनयति, अम्ललवणरसदेहानाम् अम्ललवणरसद्रव्योपसेविनां प्राणिनामिति शेषः ॥ ११ ॥

ता एवेत्यादि। ओषधीनामपाञ्च स्निग्धत्वं गुरुत्वं मधुररसस्य बलवत्वादेव। मधुरो हि रसः इतरेभ्यो रसेभ्यः स्निग्धत्वेन गुरुत्वेन च प्रधानं, तथाहि चरकः "स्निग्धानां मधुरः परः। मध्योऽम्लः कटुकस्त्वन्त्यो रसः स्नेहान्निरुच्यते।" तथा "स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः" इति। तेनात्यर्थमिति पदं काकाक्षिगोलकन्यायेनोभयत्रापि सम्बध्यत इति

देहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति ॥ १२ ॥

ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्योऽभवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । एवमेव दोषाणां सञ्चयप्रकोपहेतुरुक्तः ॥ १३ ॥

---

वक्तव्यमेव । सतुषारपवनोपस्तम्भितदेहानां हिमार्द्रवातेन स्तब्धीभूतदेहानाम्, अविदग्धाः मधुरपाकमागताः । अर्करश्मिप्रविलापितः सूर्य्यकिरणैर्द्रवीकृतः श्लैष्मिकान् व्याधीन् अन्नद्वेषहृदयोत्क्लेशादीन् ॥ १२ ॥

ता एवेत्यादि । निःसारा अत्युष्णातपोपशोषिततया जलीयांशरहिताः । "सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले" इति मेदिनी । रूक्षाः रूक्षबहुलवातातपक्षयितस्नेहभागाः । अतिमात्रमित्यनेन वातोपचये अव्याहतसामर्थ्यं दर्शितम् । रौक्ष्याल्लघुत्वाद्वैशद्याच्चेति हेतुत्रयोपन्यासेन वातविरुद्धस्यैकस्य निदाघोष्णस्यावजितत्वं सूचितं भवति "विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते" इति न्यायात् । स सञ्चय इत्यादि । वातिकान् व्याधीन् कोष्ठतोदादीन् । मा भूत्कुपितानां वक्ष्यमाणक्रमेण प्रसरादिकल्पिति निर्हरणं विधित्सुः क्रमप्राप्तोपशमव्याख्यानात्प्रागेवोक्तमर्थमुपसंहरन्नाह एवमित्यादि ॥ १३ ॥

तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम् ॥ १४ ॥

---

संशोधनकालमुपदिशन्नाह, तत्रेत्यादि। अत्र सञ्चितानामिति विशेषणं सत्यपि सञ्चये प्रकोपावस्थायामेव निर्हरणार्थं, सञ्चये निर्हृता हि दोषाः पुनः सञ्चीयन्ते कालप्रकर्षेण। यत्तु "सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गतीः" इति वक्ष्यति, तत्पुनर्हेत्वन्तरकुपितदोषविषयमिति नानुपपत्तिः। उत्तरा गतीः प्रकोपलक्षणा गतीः। अतएव चरकेणापि वमनविरेचनव्यापत्सिद्धौ स्वस्थवृत्तमभिप्रेत्य एतमेव निर्हरणं विहितम्। निर्हरणस्यास्य स्वस्थवृत्ताभिप्रायिकत्वम् ऋतुस्वभावसञ्चितप्रकुपितदोषाधिकृतत्वादेव बोध्यम्। स्वस्थवृत्तं हि नाम प्राधान्यादार्त्तवदोषानुवर्त्तनमिति स्वस्थवृत्तवचनाद्गस्यते। अत्र विशेषयति चरकः—"माधवप्रथमे मासि नभस्यप्रथमे तथा। सहस्यप्रथमे चैव हारयेद्दोषसञ्चयम्" इति। माधवो वैशाखस्तस्य प्रथमश्चैत्रः; नभस्यो भाद्रपदस्तस्य प्रथमः श्रावणः; सहस्यः पौषस्तस्य प्रथमोऽग्रहायणः; तस्मिंस्तस्मिन् दोषसञ्चयं हारयेदिति तदर्थः। आचार्य्येण तु प्रकुपितानामिति प्रशब्दद्वारा त एव त्रयो मासा निर्हरणाय सूचिताः, क्रमशः कोपाभिवृद्ध्या तत्रैव प्रकर्षेण कुपितत्वात्। प्रकुपितानां निर्हरणन्तु दोषाणामनवबद्धतया क्रियासौकर्य्यार्थं निःशेषतो दोषापनयनेन एकान्ततः पुनरावृत्तिशङ्कानिरासार्थं साधारणत्वेन व्यापद्भयनिरासार्थञ्चेति बोध्यं, "साधारणेषु वमनादीनां प्रवृत्तिर्विधीयते निवृत्तिः पुनरितरेषु" इति चरकानुशासनात्। तस्य पुनर्निर्हरणस्य कर्त्तव्याकर्त्तव्यत्वे ऋतूक्ताहाराचारादितारतम्येन दोषबलाबलं शरीरबलमित्यमीक्ष्यैव निर्णेये, यदुक्तं "प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः। बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः" इत्युपक्रम्य "अतएव यथोद्दिष्टा येषामल्पबला गदाः। पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत्" इति ॥ १४ ॥

तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते श्लैष्मिकाणां निदाघे वातिकानां घनात्यये स्वभावत एव त एते सञ्चय-प्रकोपोपशमा व्याख्याताः ॥ १५ ॥

तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्युषसि हैमन्त-मुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ॥ १६ ॥

---

सम्प्रति क्रमप्राप्तं कालतो दोषोपशमं निर्द्दिदिक्षुः कार्य्यकारणयोरभेदात् तांस्तान् व्याधीनेवाश्रित्याभिधत्ते तत्रेत्यादिना। तत्र प्रागुक्तेषु पैत्तिकादिषु व्याधिषु मध्ये इत्यर्थः। पैत्तिकानां व्याधीनाम् अम्लीकापिपासादीनाम्। एवमुत्तरत्रापि व्रणप्रश्नमभिसमीक्ष्य व्याख्येयम्। अत्र वर्षाप्रावृषोस्तुल्यरूक्ष-शीतगुणतया सम्यक् वातकोपस्तिष्ठतीत्युक्तं घनात्यये इति। घनात्यये शरदीत्यर्थः ॥ १५ ॥

इदानीमहोरात्रस्यापि दोषोपचयादिभिः संवत्सरसाम्यं विजिज्ञाप-यिषुः शीतोष्णादेर्दोषोपचयादीन् प्रति हेतुत्वादहोरात्रमपि शीतोष्णवर्ष-लक्षणत्वेनातिदिशति तत्रेत्यादिना। अत्र रजनीमुखनिशीथप्रभाता-परपर्य्याया अपि प्रदोषार्द्धरात्रप्रत्युषःशब्दास्त्रिधा विभक्ताया रात्रेर्यथा-क्रमं प्रथममध्यमापरानेवांशान् लक्षयन्ति पूर्व्वाह्णादिसाहचर्य्यादित्यनु-सन्धेयम्। तथाच पूर्व्वाह्णे वसन्तस्य लिङ्गं कफप्रकोपः, तथा मध्याह्ने ग्रीष्मस्य लिङ्गं कफोपशमो वातचयश्च, अपराह्णे पुनः प्रावृषो लिङ्गं वातकोपः, प्रदोषे तु वार्षिकं लिङ्गं पित्तचयो वातकोपानुवृत्तिश्च। येन प्रदोषेऽपि वातशूलादयो वर्द्धन्ते। उक्तञ्चान्यत्र वातशूले "जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम्" इति। एवमर्द्धरात्रे शारदं लिङ्गं पित्तप्रकोपः, तथा प्रत्युषसि हैमन्तं लिङ्गं पित्तोपशमः

तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां पुनर्व्यापदोऽदृष्टकारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः॥ १७॥

---

कफसञ्चयश्चेत्यर्थः। एवमनेन प्रकारेण दोषोपचयप्रकोपोपशमैर्जानीयान्न तु स्वरूपत इति भावः। अत्राप्रयोजकतया मध्याह्नप्रदोषप्रत्युषःसु यथाक्रमं पित्तकफवातप्रकोपा अनुपदिष्टा अप्युपदेष्टव्या एव तन्त्रान्तरीयवचनात्। तथाच वाग्भटः "ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्धसंश्रयाः। वयोऽहोरात्रभुक्तानामन्तमध्यादिगाः क्रमात्" इति। ते वातादय इत्यर्थः॥ १६॥

इदानीं पूर्व्वोक्तौ दोषचयप्रकोपौ यथा न भवतः संक्षेपेण तद्व्याचिख्यासुराह तत्रेत्यादि। ओषधयोऽत्र चतुर्व्विधाहारद्रव्याणि उपयुज्यमानाः स्वस्थवृत्तानागताबाधयोरुपदेक्ष्यमाणेन विधिनेति शेषः। प्राणा इन्द्रियादयः, आयुर्जीवितकालः, बलं कर्म्मशक्तिः, वीर्य्यमुत्साहहेतुर्मानसबलम्, ओजः सर्व्वधातूनां परं तेजः। अत्र ओषधीनामपाञ्च प्राणादिकर्त्तृकत्वेन दोषचयादिप्रबाधकत्वं सूचितं भवति। नन्वेषां व्यापदः कुतः ? इत्याह तेषामित्यादि। तेषामृतूनामदृष्टकारिताः ऐहिकप्राग्भवीयाधर्म्मकारिताः। अत्र विशदमुक्तमात्रेयेण तथाहि "सर्व्वेषामप्यग्निवेश वाय्वादीनां वैगुण्यमुत्पद्यते यत्तस्य मूलमधर्म्मस्तन्मूलञ्चासत्कर्म्म पूर्व्वकृतम्" इत्युपक्रम्य "तेषां तथान्तर्हितधर्म्मणाम् अधर्म्मप्रधानानामपक्रान्तदेवतानाम् ऋतवो व्यापद्यन्ते" इति। ऋतूनां व्यापदः पुनः शीतादीनामयोगातियोगमिथ्यायोगरूपा इति परमतो व्यक्तीभविष्यति॥ १७॥

कदाचिदव्यापन्नेष्वपि ऋतुषु कृत्याभिशापरक्षःक्रोधाधर्म्मै-रुपध्वस्यन्ते जनपदाः। विषौषधीपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहन-मणिरत्नोपकरण-गर्हितलक्षण-निमित्तप्रादुर्भावैर्वा ॥ १८ ॥

तत्र स्थानपरित्यागशान्तिकर्म्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कार-तपोनियम-दयादानदीक्षाभ्युपगम-

---

प्रसङ्गादपरमपि मरककारणमाह कदाचिदित्यादिना। कृत्याऽभिचारः। "तानि कृत्याहतानीव विनश्यन्ति समन्ततः" इति मनुः। कृत्याहतानि अभिचारहतानीति तदर्थः। विषौषधीपुष्पगन्धेनेति। विषौषध्यः कल्पोक्ता वेत्रादयस्तासां पुष्पगन्धेन। दोषप्रकृत्यविशेषेण वातादिप्रकृत्यभेदेन वातादिप्रकृतयः सर्व्व एवेत्यर्थः। ग्रहाणामादित्यादीनां नक्षत्राणामश्विन्यादीनां चरितैः सञ्चारविशेषैः। उक्तञ्च भीष्मपर्व्वणि "श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति। अभावं हि विशेषेण कुरूणां तत्र पश्यति" इत्यादि। गृहादीनां गर्हितलक्षणानि निन्दितलक्षणानि अकस्मात् भ्रष्टादिखलक्षणानीति यावत्। निमित्तमिहानिष्टसूचकं चिह्नम् अभीक्ष्णं भूमिकम्पादि, श्वशृगालादीनां विजातीयसन्तानोत्पादित्वादि च। उक्तं हि महाभारते "गोवत्सं वडवा सूते श्वा शृगालं महीपते! कुक्कुरान् करभाश्चैव शुकाश्चाशुभवादिनः" इत्यादि ॥ १८ ॥

एवमुद्देशे चिकित्सामाह तत्रेत्यादिना। उपहारो बलिः दीक्षा सोमयागादौ सङ्कल्प्य नियमधारणं, "दीयते विमलं ज्ञानं क्षीयते कर्म्मवासना। तेन दीक्षेति सा प्रोक्ता" इत्युक्तलक्षणमन्त्रग्रहणञ्च। अभ्युपगमः मणिरत्नादीनां स्वीकारो धारणमिति यावत्, गुरुसमीपगमनं वा ॥ १९ ॥

देवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति ॥ १९ ॥

ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः ॥ २० ॥

वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः ।
छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥
दर्पिता ध्वाङ्क्षखड्गाह्व-महिषोरभ्रकुञ्जराः ।
रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥ २१ ॥
शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः ।
शेषं हैमन्तवत् सर्व्वं विज्ञेयं लक्षणं बुधैः ॥ २२ ॥
सिद्धविद्याधरवधूचरणालक्तकाङ्किते ।
मलये चन्दनलतापरिषङ्गाधिवासिते ॥
वाति कामिजनानन्दजननोऽनङ्गदीपनः ।
दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः ॥
दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः ॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ।
दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः ॥ २३ ॥
ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः ।
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव ॥

---

ननु कथमव्यापन्ना व्यापन्नाश्च ऋतवो विज्ञास्यन्ते एवं विवक्षूणामवसरं गुणन्नाह ऋतूनामित्यादि । कोकिलेति "अजाद्यतष्टाप्" इति जातौ स्त्रियां

भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ।
ध्वस्तवीरुत्तृणलता विपर्णीकृतपादपाः ॥ २४ ॥
प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ।
अम्बुदैर्विद्युदुद्द्योतप्रस्रुतैस्तुमुलस्वनैः ॥
कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्जकेतकिभूषिता ॥ २५ ॥
तत्र वर्षासु नद्योऽम्भश्छन्नोत्खाततटद्रुमाः ।
वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः ॥
भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ।
नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ २६ ॥
बभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः ।
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥

---

टाप्। ननूत्तरायणान्तिमे आषाढ़े अत्यासन्नतया तीक्ष्णतमो रविर्दक्षिणायनाद्ये श्रावणेऽपि प्रायस्तथैवानुवर्त्तते ; तत्कथं तदुभयात्मिकायां प्रावृषि साधारणत्वेन निर्हरणं वर्षासमत्वेन च वातकोपानुवृत्तिः सङ्गच्छत इत्याशङ्क्य स्वाभाविकवर्षानुबन्धेन तस्याः साधारणत्वं वर्षासमत्वञ्चोपदिशन्नाह प्रावृषीत्यादि। स्पष्टम्। चरकेऽप्युक्तं "प्रावृडिति प्रथमः प्रवृष्टेः कालः तस्यानुबन्धो वर्षा" इति। अत्राह जल्पकल्पतरुः "नन्वत्र साधारणत्वं किमित्याह तस्येत्यादि" इति। तत्रेत्यादि। मा भूत् प्रावृडानन्तर्य्यात् वर्षाद्यर्त्तुपठितवर्षालक्षणमिदमिति प्रतीतिरित्युक्तं तत्रेति। अत्र वुद्धया समाकृष्टतया प्रस्तुतानां शिशिरादीनामेवर्त्तूनां तदा परामर्शः। बभ्रुरग्निः स इवोष्णोऽर्कः, बभ्रुः पिङ्गलो वा। मुकुले बकुले विष्णौ बभ्रुर्ना

पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः ।
बाणासनाह्वबन्धूककाशासनविराजिता ॥ २७ ॥
स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ।
विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥ २८ ॥
हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ।
वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात् ॥ २९ ॥

इति सुश्रुतसंहितायामृतुचर्य्या नाम षष्ठोऽध्यायः ।

---

पिङ्गले त्रिषु" इति कोषान्तरात् । स्वगुणैरित्यादि । स्वगुणैः शीतादिभिरतियुक्तेषु, विपरीतेषु हीनस्वलक्षणेष्वन्यर्त्तुलक्षणेषु अलक्षणेषु च, विषमेष्वनियतस्वलक्षणेष्वित्यर्थः । पूर्व्वोक्तं शिशिरादिक्रमं हित्वा हेमन्तादिक्रमेणेहाभिधानं शीतोष्णवर्षलक्षणत्वात् ऋतूनामित्यवधेयम् । सम्प्रति ऋतुस्वभावकुपितानां चैत्रश्रावणाग्रहायणेषु तथा मिथ्याहारविहारादिभिर्ऋतुव्यापदादिभिश्च कुपितानामनात्ययिकानां दोषाणां साधारणलक्षणेषु षट्स्वपि मासेषु व्यवस्थितमपि निर्हरणं व्याध्युत्पत्तेः प्रागेव कर्त्तव्यमित्येवोपदिशन्नाह हरेदित्यादि । वर्षास्विति वर्षन्ति मेघा अत्रेति व्युत्पत्त्या वर्षाशब्देन वर्षाप्रावृषोरभिधानेऽपि प्रावृडेवात्राभिधीयते, तस्यामेव निर्हरणविधानात् ॥ २०—२९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने ऋतुचर्य्या नाम षष्ठोऽध्यायः ।

# सप्तमोऽध्यायः ।

अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ । किं कारणम् ? यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्मणाम् ॥ २ ॥

तत्र मनःशरीराबाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि । तानि षट्प्रकाराणि । तद्यथा । स्वस्तिक-

---

अवबुद्धकालस्वभावास्तु खलु भिषजो नियमेन कर्म्माणि सम्यक् सम्पादयितुं प्रभवन्ति कालायत्तत्वात्कर्म्मसम्पत्तेरित्येवं मन्यमानो भगवान् ऋतुचर्य्याध्यायादनन्तरं प्राक् प्रकृते कर्म्मण्युपयोगित्वेन व्याचिख्यासितेषूद्दिष्टेष्वग्रोपहरणीयेषु मध्ये यन्त्राणामेव कार्य्यसाधनसुगमोपायत्वात् यन्त्रादिना कर्म्मणां प्रायेणाप्रवृत्तेश्च प्रथमं तावत् यन्त्रविधिमधिकरोति अथात इत्यादिना । यन्त्राणां विधिः संख्यानामाकारादिभिर्विधानं यत्र तं तथोक्तम् ॥ १ ॥

यन्त्रशब्दोऽयं स्वस्तिकादिवत् रज्ज्वादावपि प्रवर्त्तते पारिभाषिकत्वात्, यतो वक्ष्यति "तेषामाहरणोपायो यन्त्राणि" इति । तेनोपपन्नं भवति यन्त्रशतमेकोत्तरमिति । अत्र शल्यतन्त्रे, यन्त्राणां स्वस्तिकादीनां रज्ज्वादीनाञ्च मध्ये इत्यर्थः । हस्तमिति जातावेकवचनम् । नन्वनन्तरमुपयन्त्रेषु पठिष्यमाणो हस्तः कथं प्रधानतम इति पृच्छति किं कारणमिति । उत्तरयति यस्मादिति । यस्मात्, यन्त्रकर्म्मणां तदधीनत्वात् हस्ताधीनत्वात्, हस्तादृते हस्तमन्तरेण यन्त्राणामप्रवृत्तिरेव नियमेनानुपयोगस्तस्मात् यन्त्राणां मध्ये हस्तमेव प्रधानतममवगच्छ जानीहि इति समन्वयः ॥ २ ॥

यन्त्राणि। सन्दंशयन्त्राणि। तालयन्त्राणि। नाड़ीयन्त्राणि। शलाकायन्त्राणि। उपयन्त्राणि चेति॥ ३॥

तत्र चतुर्व्विंशतिः स्वस्तिकयन्त्राणि। द्वे सन्दंशयन्त्रे। द्वे एव तालयन्त्रे। विंशतिर्नाड्यः। अष्टाविंशतिः शलाकाः। पञ्चविंशतिरुपयन्त्राणि। तानि प्रायशो लौहानि भवन्ति तत्प्रतिरूपकाणि वा तदलाभे। तत्र नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि तस्मात् तत्सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद् युक्तितश्च कारयेत्॥ ४॥

---

तत्रेत्यादि। द्वे एव तालयन्त्रे इत्येवकारेणास्य द्वित्वायोगव्यवच्छेदात् तत्सन्निधावनियमेन द्वित्वेनोपदिष्टस्य सन्दंशयन्त्रस्य बहुत्वमप्युररीकुर्व्वन्ति। अतएव शास्त्रमिदमनुवदता वाग्भटेन "कीलबद्धविमुक्ताग्रौ" इत्यादिना चत्वारि सन्दंशयन्त्राण्युपदिष्टानि। एवञ्चोद्देशे सन्दंशयन्त्राणीति नानुपपन्नं तद्गतभेदेन बहुत्वात्, तालयन्त्राणीति बहुवचनन्तु नक्षत्रेषु फल्गुनीप्रोष्ठपदानामिवान्यतरस्यां भूम्नि विषयत्वादित्यवश्यं वक्तव्यम्। तानीत्यादि। लौहानि तैजसानि सुवर्णरजतादिकृतानीति यावत्। "सर्व्वं स्यात्तैजसं लौहम्" इत्यमरः। प्रायशः ग्रहणसूचितं लौहत्वव्यभिचारं दर्शयति तत्प्रतिरूपकाणि वेति। तत्प्रतिरूपकाणि तत्सदृशानि दान्तशार्ङ्गवार्क्षाणीति यावत्। तत्रेत्यादि। तत्र यन्त्रेषु मध्ये यन्त्राणां मुखानि नानाप्रकाराणां व्यालानां हिंस्राणां मृगपक्षिणां सिंहश्येनादीनां मुखैः प्रायशः सदृशानि, भवन्तीति शेषः। अत्र नानाप्रकाराणीति सामान्येनोक्तमप्याशुग्रहणाहरणसमर्थानामित्यनेन विशेषणीयम् औपयौगिकत्वात् सामान्यशब्दस्यापि क्वचिद्विशेषवृत्तित्वादित्याहुः। अत्र प्रायश इत्यनेन नाड़ीयन्त्रादीनि व्यवच्छिद्यन्ते।

समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च ।
सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥ ५ ॥

तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंह-व्याघ्र-वृक-तरक्ष्वृक्ष-द्वीपि-मार्ज्जार-शृगाल-मृगैर्व्वारुक-काक-कङ्क-कुरर-चाष-भास-शशघात्युलूक-चिल्लि-श्येन-गृध्र-क्रौञ्च-भृङ्गराजाञ्जलिकर्णावभञ्जन-नन्दिमुखमुखानि मसूराकृतिभिः कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्तवाराङ्गाण्यस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते ॥ ६ ॥

---

तत्साकल्यात् व्यालमुखसादृश्यात्, आगमात् "मसूराकृतिभिः कीलैरव-बद्धानि" इत्यादि शास्त्रात्, उपदेशात् विदितवेदितव्यानां भिषजामनु-शासनात् । शेषमतिरोहितार्थम् ॥ ३ । ४ ॥

पुनर्विशिनष्टि समाहितानीत्यादिना । समाहितानि सुनिविष्टावयवानि, सुग्रहाणि धार्य्यप्रदेशसौष्ठवादनायासग्राह्याणीत्यर्थः ॥ ५ ॥

प्रमाणादिभिर्यन्त्राणि वर्णयति तत्रेत्यादिना । अष्टादशाङ्गुलप्रमाणानि अष्टादशाङ्गुलदीर्घाणि । सिंहेत्यादौ वृकः कुकुराकारो हरिणघातको व्याघ्र-भेदः, तरक्षुः क्षुद्रव्याघ्रविशेषः, द्वीपी चित्रव्याघ्रः, एर्व्वारुर्हरिणसदृशो व्यालः, कङ्कः "कांक" इति विज्ञायते, कुररः उत्क्रोशः, चाषभासौ स्वनाम-ख्यातौ, शशघाती शशादः पीनः श्येन इति यावत्, श्येनस्तु ततो हीनः, तावुभौ भेदेन "बाज" इत्याख्यायेते, क्रौञ्चो वकभेदः, भृङ्गराजः "फिङ्गा" इत्यभिधीयते, अञ्जलिकर्णावभञ्जनौ जिज्ञासितव्यौ । नन्दिमुखः पत्राटी । सिंहादीनां नन्दिमुखान्तानां मुखानीव मुखानि येषां तानि तथोक्तानि । मसूरेत्यादौ कीलैः शङ्कुभिः अवबद्धानीति कण्ठदेश एव ; यदुक्तं "मसूरा-कारपर्य्यन्तैः कण्ठे बद्धानि कीलकैः" इति । मूलेऽङ्कुशवदावृत्तवाराङ्गा-णीति । वराङ्गं गुह्यं, "वराङ्गं मूर्द्धगुह्ययोः" इत्यमरः, ग्रहणावकाश इति

सनिग्रहोऽनिग्रहश्च सन्दंशौ षोडशाङ्गुलौ भवतस्त्वङ्मांस-शिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते ॥ ७ ॥

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालुवदेकतालद्वितालके कर्णनासानाडीशल्यानामाहरणार्थम् ॥ ८ ॥

नाडीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखा-न्युभयतोमुखानि च, तानि स्रोतोगतशल्योद्धरणार्थं रोग-दर्शनार्थमाचूषणार्थं क्रियासौकर्य्यार्थञ्चेति। तानि स्रोतो-

---

तात्पर्य्यं, वराङ्गमेव वाराङ्गं, मूलेऽङ्कुशवदावृत्तानि मुष्टिबन्धनार्थमानतानि वाराङ्गाणि येषां तानि तथोक्तानि ॥ ६ ॥

सेत्यादि। निगृह्यते हिंसनान्निवार्य्यतेऽनेनेति निग्रहोऽग्रवर्त्तिकीलः तेन सह वर्त्तमानः सनिग्रहः, अनिग्रहस्तु तद्विपरीतः ॥ ७ ॥

तालेत्यादि। मत्स्यतालुवदेकतालद्वितालके इति। तालः करतालो नाम वाद्ययन्त्रविशेषः। "तालः—वाद्यभाण्डे च कांस्यस्य" इति मेदिनी। स इवेति तालः एकस्तालो यत्र तथा द्वौ तालौ यत्र ते एकतालद्वितालके। अत्र मत्स्यतालुवदिति विशेषणेन तालमृदुत्वमेवाऽभिप्रेयते, तैजसत्वेऽपि तालानां मृदुत्वम् अतितनुत्वाल्लक्षणीयम् ॥ ८ ॥

नाड़ीत्यादि। नाड़ीवान्तःशुषिराणि यन्त्राणि नाड़ीयन्त्राणि। अनेक-प्रकाराणि नानाविधानि। कुतः? अनेकप्रयोजनानि वक्ष्यमाणानेक-कार्य्याणि। अनेकतोमुखत्वमलाब्वादीनाम् अनेकतोमुखत्वञ्चार्शो-यन्त्रादीनामित्युपरिष्टादुपपत्स्यते। किमर्थं तानि प्रयुज्यन्त इत्याह तानी-त्यादि। स्रोतोगतशल्योद्धरणार्थमिति स्रोतांस्यत्र कण्ठादीनि, वक्ष्यति हि "जातुषे कण्ठासक्ते कण्ठे नाड़ीं प्रवेश्य"इत्यादि। रोगदर्शनार्थं भगन्दरार्शः-प्रभृतिस्रोतोगतरोगदर्शननिमित्तम्। आचूषणार्थमिति "नाड़ीं दत्त्वा-ऽश्मनि भिषक् चूषयेत् पवनं बली" इत्याद्यनागतावेक्षणात् अस्थ्यादिगत-

द्वारपरिणाहानि यथायोगपरिणाहदीर्घाणि च। भगन्दरार्शोऽर्व्वुद-व्रण-वस्त्युत्तरवस्ति-मूत्रवृद्धि-दकोदर-धूमनिरुद्ध-प्रकाश-सन्निरुद्धगुद-यन्त्राण्यलावु-शृङ्ग-यन्त्राणि चोपरिष्टाद्वक्ष्यामः॥ ९॥

---

वाय्वादेराचूषणनिमित्तमित्यर्थः। क्रियासौकर्य्यार्थं सुखं शस्त्रचाराद्युपयोगार्थम्। उक्तमर्थं पुनर्विशदयति तानीत्यादिना। स्रोतोद्वारपरिणाहानि येषां स्रोतसां यावद्विस्ताराणि द्वाराणि, तत्र तावद्विस्ताराणि नाड़ीयन्त्राणीत्यर्थः। यथा निरुद्धप्रकशे द्वारवर्द्धनार्थं स्रोतःप्रमाणं नाड़ीयन्त्रमुपदेक्ष्यते; यथायोगपरिणाहदीर्घाणि चेति येषु स्रोतःसु यावत् परिणाहदीर्घाणि नाड़ीयन्त्राणि युज्यन्ते, तत्र तावत्प्रमाणानि चेत्यर्थः। यथा महत्यपि गुदस्रोतसि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहानि वस्तिनेत्राण्युपदेक्ष्यन्ते। एवं नाड़ीयन्त्राणि सामान्यत उपदिश्य प्राय उपयोगितया प्राक्सङ्ख्यातानि विंशतिर्नामतोऽभिधीयन्ते भगन्दरेत्यादिना। अर्व्वुदशब्दोऽयं कर्णनासार्व्वुद एव प्रवर्त्तते सामान्यशब्दस्यापि विशेषवृत्तित्वात्। अत्र भगन्दरार्व्वुद-व्रण मूत्रवृद्धि-सन्निरुद्धगुदयन्त्राणाम् अर्श आदियन्त्रातिदिष्टत्वादेवोपदेशो न तु पृथक्त्वात्। उपरिष्टाद्धि भगन्दरार्व्वुदयन्त्रे अर्शोयन्त्रवदितराणि च यथाक्रमं वस्तिदकोदरनिरुद्धप्रकशयन्त्राणीवेत्युपपत्स्यते। तथाच अर्शोयन्त्रे द्वे स्त्रीपुंसावधिकृत्य, वस्तियन्त्राणि प्राधान्येन चत्वारि षड़ष्ट-दश-द्वादशाङ्गुलप्रमाणभेदात्, उत्तरवस्तियन्त्राणि पुंसां द्वे मेढ्रायाम-चतुर्द्दशाङ्गुलत्वभेदात्, स्त्रीणां द्वे मूत्रापत्यमार्गोपयोगित्वभेदात्, कन्यानाञ्चैकमिति पञ्च; दकोदरयन्त्रमेकं; धूमयन्त्राणि पञ्च, तत्र त्रीणि प्रायोगिक-स्नैहिक-वैरेचनिकत्वभेदात्, एकं कासघ्नवामनीययोरविशेषात्, एकञ्च व्रणधूपनार्थं; निरुद्धप्रकशयन्त्रम् अलावुयन्त्रं शृङ्गयन्त्रञ्चैकैकमिति विंशतिर्नाड़ीयन्त्राणि। नन्वयमन्यायो यदिह "अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम्। द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम्॥" तथा "योनिव्रणेक्षणं मध्ये शुषिरं षोड़शाङ्गुलम्। मुद्रावद्धं चतुर्भित्तमम्भोज-

शलाकायन्त्राण्यपि नानाप्रकाराणि नानाप्रयोजनानि यथायोगपरिणाहदीर्घाणि च। तेषां गण्डूपद-शरपुङ्ख-सर्पफण-बडिशमुखे द्वे द्वे एषण-व्यूहन-चालनाहरणार्थमुपदिश्येते। मसूरदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थम्। षट् कार्पासकृतोष्णीषाणि प्रमार्जनक्रियासु। त्रीणि दर्व्याकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम्। त्रीण्यन्यानि जाम्बव-वदनानि त्रीण्यङ्कुश-वदनानि षडेवाग्निकर्मस्वभिप्रेतानि। नासार्बुदहरणार्थ-

---

सुकुलाननम्। चतुःशलाकसाक्रान्तं सूले तद्विकसेन्मुखे॥" एवंक्रमेण तन्त्रान्तरवदुपयोगीन्यपि यन्त्राणि नेहोपदिश्यन्ते, नैष दोषः; अनेकप्रकारत्वेनापरिसङ्ख्येयानां यन्त्राणां निःशेषतो व्याख्यानानुपपत्तेः, यतोऽभिहितम् "उपदेशात् युक्तितश्च कारयेत्" इति॥ ८॥

क्रमागतत्वात् शलाकायन्त्राणि व्याचिख्यासुराह शलाकेत्यादि। शरपुङ्खो बाणमूलम्। नानाप्रकारेष्वप्येतेषु प्रायेण गण्डूपदाद्याकाराभ्यां द्वाभ्यां द्वाभ्यामेव कर्म्माणि निष्पाद्यन्ते तदिदमुक्तं द्वे द्वे इति। एषणादिकर्म्मणां यथायोगमेव बोध्यं न तु यथासंख्यं; निपुणमतिना वाग्भटेन;— "शङ्कवः षड्भी तेषां षोड़श-द्वादशाङ्गुलौ। व्यूहनेऽहिफणावक्त्रौ द्वौ दश-द्वादशाङ्गुलौ। चालने शरपुङ्खास्यावाहार्य्ये बड़िशाकृती॥" इत्युक्तः। अत्र षोड़शाङ्गुलादिप्रमाणनिर्द्देशादिहाऽपि द्वे द्वे इति तत्तन्मानैरित्याहुः। वस्तुतस्तु प्रमाणसिद्धमत्वायतेऽपि व्याधावुपयोगायेति बुद्धिमता द्रष्टव्यं, तेन किञ्चिद्धीनेष्वपि विशिष्टा नानुपपत्तिः। एषणं नाड़ीव्रणादीनामन्वेषणं; व्यूहनन्तु चूर्णिताऽस्थ्यादीनां सङ्ग्रहणम्। कार्पासकृतोष्णीषाणि तूलवेष्टिताग्राणि। खल्लमुखानि खल्लमौषधमर्द्दनपात्रमिव मुखं येषां तानि तथोक्तानि। एवमुत्तरत्रापि व्याख्येयम्। जाम्बवं जम्बूफलम्। नासे-

मेकं कोलास्थिदलमात्रमुखं खल्लतीक्ष्णोष्ठम्, अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकुलाग्रं, मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥ १० ॥

उपयन्त्राण्यपि रज्जुवेणिका-पट्ट-चर्म्मान्तर्वल्कल-लता-वस्त्राष्ठीलाश्म-मुद्गर-पाणि-पाद-तलाङ्गुलि--जिह्वा-दन्त--नख-वालाश्व-कटक--शाखा-ष्ठीवन-प्रवाहण--हर्षायस्कान्तमयानि क्षाराग्नि-भेषजानि चेति ॥ ११ ॥

एतानि देहे सर्व्वस्मिन्देहस्यावयवे तथा।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत् ॥ १२ ॥

---

त्यादिनोक्तमप्यग्निकर्म्मस्वभिप्रेयते, यदुक्तं "कोलास्थिदलतुल्यास्या नासार्शोऽर्व्वुददाहकृत्" इति। खल्लं खल्लवन्मुखं तीक्ष्णश्चौष्ठोऽस्येति खल्लतीक्ष्णोष्ठम्। अञ्जनार्थन्त्वष्टाङ्गुलं वक्ष्यति। मुकुलमीषद्विकाशितकलिकेवाग्रमस्येति मुकुलाग्रम् ॥ १० ॥

उपयन्त्राणीत्यादि। उपमितानि यन्त्रैरित्युपयन्त्राणि तानि च रज्जुवेणिकादीनि पञ्चविंशतिः, अत्र वेणिका रचनाविशेषरचिता केशावलीवेति वेणिका रज्जुकृता वेणिका रज्जुवेणिका, अन्तर्वल्कलस्येत्यन्तर्वल्कलं भग्नवन्धनार्थं वक्ष्यमाणमौडुम्बरादिवल्कलमिति यावत्। वस्त्रं कार्पासवसनम्। अष्ठीलाश्म वर्त्तुलपाषाणविशेषः, अश्वकटकोऽश्वमुखाकर्षणं यन्त्रम्। अयस्कान्तो लौहाकर्षकः पाषाणभेदः, "चुम्बक" इति विज्ञायते। भेषजमत्र व्रणोपयोगिशणवीजाद्येवेति शल्यापनयनीयमभिसमीक्ष्य निर्णेयम्। एषु पट्टवस्त्रयोस्तथा पाणिपादतलाङ्गुलिदन्तनखानाञ्च वस्त्रत्वपाण्यादित्वसामान्यात् पञ्चविंशतिरुपयन्त्राणीति नानुपपन्नम्। यन्त्रत्वन्त्वेषां शल्यापनयनीयादिकमभिसमीक्ष्य निपुणं विभाव्य चाध्यवसम्। एतानीत्यादि स्पष्टम् ॥ ११।१२ ॥

यन्त्रकर्म्माणि तु निर्घातन-पूरण-बन्धन-व्यूहन-वर्त्तन-चालन-विवर्त्तन-विवरण-पीड़न-मार्गविशोधन-विकर्षणाहरणाञ्छनोन्नमन-विनमन--भञ्जनोन्मथनाचूषणैषण--दारणर्जूकरण-प्रक्षालन-प्रधमन-प्रमार्ज्जनानि चतुर्व्विंशतिः ॥ १३ ॥

स्वबुद्ध्या चापि विभजेद्यन्त्रकर्म्माणि बुद्धिमान् ।
असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥ १४ ॥

---

यन्त्रकर्म्माणीत्यादि । निर्घातनं मुद्गराद्यभिघातेनेतस्ततश्चालनम् । पूरणं वस्तिनेत्रादिभिर्गुदादौ स्नेहाद्युपयोगः । बन्धनं रज्जुवेणिकादिभिः संयमनम् । वर्त्तनं भग्नास्थ्यादीनां यथायथं स्थापनम् । चालनं गलादाववबद्धास्थिशल्यादीनामपनयनम् । विवर्त्तनं पराङ्मुखीभूतस्यास्थ्यादेरपवर्त्तनम् । विवरणम् अङ्गुल्यावपीड़नादिना शल्यानां प्रकाशनम् । पीड़नं पूयनिर्हरणाद्यर्थमङ्गुल्यादिभिरवमर्द्दनम् । मार्गविशोधनं मूत्रसङ्गादावुत्तरवस्त्याद्युपयोगेन मूत्रादिनिर्हरणम् । विकर्षणं विश्लिष्टाकर्षणम् । आहरणम् अन्तःस्थितस्य शल्यस्य बहिरानयनम् । आञ्छनमतिच्छिन्नस्यास्थ्नः कुञ्चितस्य वाङ्गुल्यादेरायमनम् । उन्नमनम् अधोगतस्योपर्य्यानयनम् । विनमनम् उन्नतस्याधोनयनम् । भञ्जनं शल्यकर्णादेरापोथनम् खण्डनं वा । उन्मथनं प्रणष्टशल्यविज्ञानार्थं विलोड़नम् । आचूषणं मुखेन शृङ्गादिना च दुष्टशोणितादेश्चूषणम् । व्यूहनमेषणञ्च प्राग्व्याहृतम् । दारणं विषमसंहितानामस्थ्नां द्विधाकरणम् । ऋजूकरणं कुञ्चितस्य गात्रस्य बन्धनादिना सरलीकरणम् । प्रक्षालनं वस्तिनेत्रादिना क्वाथाद्यवसेचनेन पूयाद्यपनयनम् । प्रधमनं नाड़ीयन्त्रेण नासिकायां चूर्णादिप्रयोगः । प्रमार्ज्जनं तूलवेष्टिताग्रया शलाकया वस्त्रादिभिर्वा कर्णादीनां निर्म्मलीकरणम् । इति चतुर्व्विंशतिर्यन्त्रकर्म्माणि व्याख्यातानि भवन्ति ॥ १३।१४ ॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं मृदुमुखं मृदुपाशमिति द्वादश यन्त्रदोषाः ॥ १५ ॥

एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम् ।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्म्मसु योजयेत् ॥ १६ ॥
दृश्यं सिंहमुखाद्यैस्तु गूढ़ं कङ्कमुखादिभिः ।
निर्हरेत्तु शनैः शल्यं शस्त्रयुक्तिव्यपेक्षया ॥ १७ ॥

विवर्त्तते साध्ववगाहते च
शल्यं निगृह्योद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्व्वेष्वधिकारि चैव ॥ १८ ॥

इति सुश्रुतसंहितायां यन्त्रविधिर्नाम
सप्तमोऽध्यायः ।

---

यन्त्राणां दोषमाह तत्रेत्यादिना । असारं कालेन जीर्णं दुरुपादानञ्च । विषमग्राहि एकदेशग्राहि । वक्रम् अयथाऽवनतम् । शिथिलं शिथिलकीलं पीड़नाक्षमं वा ॥ १५ ॥

प्रशस्तलक्षणान्याचष्टे एतैरित्यादिना । अष्टादशाङ्गुलमिति स्वस्तिक-यन्त्रविषयमनुक्तप्रमाणविषयं वा ॥ १६—१८ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने यन्त्रविधिर्नाम सप्तमोऽध्यायः ।

---

# अष्टमोऽध्यायः ।

अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

विंशतिः शस्त्राणि । तद्यथा—मण्डलाग्र-करपत्र-वृद्धिपत्र-नखशस्त्र-मुद्रिकोत्पलपत्रकार्द्धधार-सूची-कुशपत्राटीमुख-शरारिमुखान्तर्मुख-त्रिकूर्च्चक-कुठारिका-व्रीहिमुखारा-वेतसपत्रक-वडिश दन्तशङ्कवषण्य इति ॥ २ ॥

तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च । वृद्धि-

---

प्रायेण हि शल्यं निर्जिहीर्षुणा यन्त्रणादनन्तरं शस्त्रमवचार्य्यं भवतीति यन्त्रविधेरनन्तरं शस्त्रावचारणीयमधिकरोति अथात इत्यादिना । अवचारणमुपयोगः । न ह्यलमनभिज्ञः खलु शस्त्राणां प्रभवति तान्यवचारयितुमितिज्ञात्वा प्रथमं तावत् शब्दद्रुपयोगिलिनैकान्ततो जिज्ञासितव्यानि शस्त्राणि व्याचिख्यासुराह विंशतिरित्यादि ॥ १।२ ॥

तानि पुनः कर्म्मतो विशिनष्टि तत्रेत्यादिना । तत्र मण्डलाग्रादिषु मध्ये इत्यर्थः । मण्डलमग्रे यस्येति व्युत्पत्त्या मण्डलाग्रं, तत् द्विविधं भवति "द्वे मण्डलाग्रे ये प्रोक्ते एकं वृत्तमुखं तयोः । तीक्ष्णधारं दृढं कार्य्यमेकं तच्च क्षुराकृति ॥" इति भोजानुशासनात् । करण्टकैराचितत्वात् करात् पततीति करपत्रम् । अत्र विशेषयति भोजः "द्वादशाङ्गुलदीर्घं स्यात्तनु चाचितकण्टकम् । करपत्रं विजानीयात् भिषगाकृतिनामतः ॥" इति । अनयोश्छेदने लेखने च यथासम्भवमुपयोगो बोद्धव्यः । तेन छेदने लेखने च मण्डलाग्रमस्थिच्छेदन एव करपत्रमवचार्य्यम् ; उक्तञ्च "मण्डलाग्रं फले तेषां तर्ज्जन्यन्तर्नखाकृति । लेखने च्छेदने योज्यं पोथकीशुण्डिकादिषु । भेदेऽस्थ्नां करपत्रन्तु खरधारम्" इत्यादि । इहोक्तं स्यातामिति पदं यथायोगमुत्तरत्र वचनव्यत्यासेनान्वेयम् । एवमेषां कर्म्मभेदेनोपदिश्य उपयोगसुखार्थे-

मत्व-नखशस्त्र-मुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च ।
सूची-कुशपत्राटीमुख-शरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रा-

---

व्याद्य:, तेन विहितानामलाभे यदेव यत्रोपयोगं गच्छति तदेव तत्रावचार्य्यमित्युपदेशः। वृद्धिपत्रमिति वृद्धिः आयतत्वेन सम्वृद्धिः पत्रे पत्राकारे फले यस्य तत्तथोक्तम्। तदपि द्वेधा ऋजुकुटिलाग्रत्वभेदात्। यदुक्तं "वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने। ऋज्वग्रमुन्नते शोफे गम्भीरे तु तदन्यथा ॥" इति। नखच्छेदनार्थं शस्त्रमिवेति नखशस्त्रम्। तदपि द्वेधा भिद्यते, यदाह "अष्टाङ्गुलं वक्रधारमृजुधारं नवाङ्गुलम्। सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥ नखशस्त्रम्" इति। यत्त्वस्याष्टाङ्गुलत्वमात्रं वक्ष्यति तदीषद्भेदस्याविवक्षितत्वादित्यदोषः। मुद्रिका च "द्व्यङ्गुलं मुद्रिकाशस्त्रं क्षुरसंस्थानमेव च" इत्युक्तलक्षणा। उत्पलपत्रमिव पत्रमस्येत्युत्पलपत्रकं नाम "तुल्यमुत्पलपत्रेण तीक्ष्णधारं समाहितम्। षड्ङ्गुलम्" इत्याद्युक्तलक्षणम्। अर्द्धे धारा यस्येत्यर्द्धधारं चक्रधारमित्यभिधीयते। अत्रानुशास्ति भोजः— "अर्द्धधारन्तु कर्त्तव्यं शस्त्रमष्टाङ्गुलायतम्। उरस्यङ्गुलविस्तारं फलं तत् द्व्यङ्गुलं भवेत् ॥" इति। उरसि क्रोड़े इत्यर्थः। सूचीत्यादि। सूच्योऽग्रे वक्ष्यन्ते। कुशपत्रमिवेति कुशपत्रम् नाम "तीक्ष्णाग्रं कुशपत्रार्द्धमङ्गुलं दैर्घ्यतः फलम्। वृन्तं स्यात्त्र्यङ्गुलं यस्य कुशपत्रं तदुच्यते ॥" इत्युक्तलक्षणम्। आटी जलवर्द्धनी नाम पक्षी तन्मुखमिव मुखं यस्य तदाटीमुखं नाम "वृन्तं सप्ताङ्गुलं विद्यात्तस्याग्रे फलमुच्यते। आटीमुखप्रकारं हि फलमङ्गुष्ठमायतम् ॥" इत्युक्तलक्षणम्। शरारिर्नाम पक्षी "सरल" इति विज्ञायते। तन्मुखमिव मुखमस्येति शरारिमुखम्। शरारिमुखसादृश्यन्स्यात् ऋजुत्वे तात्पर्य्यम् न त्वायामे,"शेषाणि षड्ङ्गुलानि" इत्यनन्तरोक्तेः। अन्तर्मध्ये मुखमस्येत्यन्तर्मुखम् तच्च "सप्ताङ्गुलप्रमाणेन जिह्मधारेण वा युतम्। शस्त्रमन्तर्मुखं नाम चन्द्रार्द्धमिव चोन्नतम् ॥" इत्युक्तलक्षणम्। त्रयः कूर्चाः क्षुद्रक्षुरिका यत्र तत्त्रिकूर्चकम्, अत्र स्फुटयति तन्त्रान्तरं— "त्र्यङ्गुलानि तथाष्टौ च शस्त्रं कार्य्यं त्रिकूर्चकम्। फलैरन्तर्मुखाकारैरङ्गुलै-

ग्रणे। कुठारिका-व्रीहिमुखारा-वेतसपत्रकाणि व्यधने सूची च। वडिशं दन्तशङ्कुश्चाहरणे। एषण्य एषणे आनुलोम्ये च। सूच्यः सेवने। इत्यष्टविधे कर्म्मण्युपयोगः शस्त्राणां व्याख्यातः॥ ३॥

तेषामथ यथायोगग्रहणसमासोपायः कर्म्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाद्भेदनान्येवं सर्व्वाणि। वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानेन पाणिना

---

न्वितं त्रिभिः॥ एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितम्। वृन्तं पञ्चाङ्गुलायामं कार्य्यं रुचकभूषितम्॥" इति। कुठारिका स्वनामप्रसिद्धा। अत्राह तन्त्रान्तरं—"कुठारिकाया वृन्तं स्यात्सार्द्धसप्ताङ्गुलायतम्। फलमर्द्धाङ्गुलायामं गोदन्तसदृशं समम्॥" इति। व्रीहिविस्तारं मुखमस्येति व्रीहिमुखम्। अत्र विशदमुक्तं भोजेन—"शस्त्रं व्रीहिमुखं कार्य्यमङ्गुलानि षडायतम्। द्व्यङ्गुलं तस्य वृन्तं स्यात् फलन्तु चतुरङ्गुलम्। तन्मुखं व्रीहिविस्तारम्" इत्यादि। आरा चर्म्मभेदकास्त्रमिवेत्यारा, सापि द्वेधा यदुक्तम्—"आरा त्वष्टाङ्गुलायामा कर्त्तव्या तु विशाम्पते। तिलप्रमाणन्तु मुखं तस्याः कार्य्यं समाहितम्। दूर्व्वाङ्कुरपरीणाहं वृन्तं गोपुच्छसन्निभम्॥" तथा—"आराऽर्द्धाङ्गुलवृत्ता स्यात् तत्प्रवेशा तथोर्द्ध्वतः। चतुरस्रा तया विध्येच्छोफं पक्वापक्वसंशये॥" इति। वेतसपत्रमिवेति वेतसपत्रम्। अत्र विशदयति भोजः—"तीक्ष्णमङ्गुलविस्तारं चतुरङ्गुलमायतम्। अङ्गुलानि च चत्वारि वृन्तं कार्य्यं विजानता॥" इति। सूचीवडिशदन्तशङ्कुप्रभृतयः परमतो व्याख्यास्यन्ते स्वलक्षणेन। एषणी भगन्दरादीनां गत्यन्वेषणे। आनुलोम्ये तेषामिव च्छेदानुक्रमे। त एव ह्येषण्यनुसारिणा शस्त्रेण यथाक्रममामूलं छिद्यन्ते। वक्ष्यति च "एषणीं दत्त्वा शस्त्रं पातयेत्" इति॥ ३॥

तेषामित्यादि। अथानन्तरं, कर्म्मसु छेदनादिषु, तेषां शस्त्राणां यथायोगग्रहणसमासोपायो वक्ष्यत इति प्रतिजानीते। वृन्तफलसाधारणे वृन्त-

लेखने बहुशोऽवचार्य्यम्। दन्ताश्चे विस्रावणानि। विशेषेण बाल-वृद्ध-सुकुमार-भीरु-नारीणां राज्ञां राजपुत्त्राणाञ्च त्रिकूर्च्चकेन विस्रावयेत्। तत्प्रच्छादितवृन्तसङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम्। कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्याङ्गुष्ठविष्टब्धयाभिहन्यात्। आरा-करपत्रैषण्यो मूले। शेषाणि तु यथायोगं गृह्णीयात्॥ ४॥

तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले, प्रदेशिन्यग्रपर्व्वप्रमाणा मुद्रिका सूच्यो वक्ष्यन्ते। शेषाणि तु षड़ङ्गुलानि॥ ५॥

तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत्॥ ६॥

तत्र धारा भेदनानां मासूरी, लेखनानामर्द्धमासूरी, व्यधनानां विस्रावणानाञ्च कैशिकी, छेदनानामर्द्धकैशिकीति।

---

फलसामान्ये इत्यर्थः। बहुश इति सकृदेवापहरेदित्यस्यापवादः। विशेषेणेत्यादि। बालादीनां पञ्चानामविश्राव्यत्वेऽपीह तदुपदेशो विषोपसर्गादिष्वात्ययिकेषु विस्राव्यत्वादित्यनुसन्धेयम्। शेषमतिरोहितार्थम्॥ ४॥

तेषामित्यादि। अत्र सूच्यादीनामाकृतिव्यवच्छेदार्थं प्रायेणेत्युपात्तम्' शेषाणि एतद्व्यतिरिक्तानि मण्डलाग्रादीनीत्यर्थः। स्वयं कृतिनो हि भिषजः शस्त्रप्रमाणं प्रति भिन्नरुचयो भवन्तीति तन्त्रान्तरविरोधो नाशङ्कनीयः॥ ५॥

तानीत्यादि। सुग्रहाणीति गृह्यतेऽस्मिन्निति ग्रहो ग्रहणावकाशः। सुधाराणीति विशेषणमिदम् एषण्या गण्डूपदाकारमुखत्वेऽपि नानुपपन्नं बाहुल्येन व्यपदेशात्। सुसमाहितमुखाग्राणि सुनिष्पन्नमुखाग्राणि, अकरालानि अदन्तुराणि, सुधाराणीत्यनेनैवाकरालत्वे लब्धे पुनर्विशेषणमिदं

वडिशं दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे एषणी गण्डूपदाकारमुखी। दशाङ्गुला शरारिमुखी स्यात् कर्त्तरीति कथ्यते ॥ ७ ॥

तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः। अतो विपरीतगुणमाददीतान्यत्र करपत्रात् तद्धि खरधारमस्थिच्छेदनार्थम् ॥ ८ ॥

तेषां पायना त्रिविधा क्षारोदकतैलेषु। तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु। तैलपायितं शिराव्यधनस्नायुच्छेदनेषु। तेषां

---

करालानां सर्व्वथा परिहार्य्यत्वमाख्यातुम्। वडिशं दन्तशङ्कुश्चेति। शङ्कुः कीलक इवेति शङ्कुः दन्तशोधनः शङ्कुर्दन्तशङ्कुरिति शाकपार्थिवादित्वाद्रूपसिद्धिः। आनताग्रञ्च वडिशमानताग्रश्च दन्तशङ्कुरित्यानताग्रे "नपुंसकमनपुंसकेन—" इति क्लीवशेषः। ते पुनस्तीक्ष्णकण्टकप्रथमयवपत्रमुखे इत्यन्वयः। तथाच तीक्ष्णकण्टकमुखं वडिशं प्रथमयवपत्रमुखश्च दन्तशङ्कुरित्यर्थः। गण्डूपदाकारमुखीति गण्डूपदमुखाकारं मुखमस्या इत्यर्थः। गण्डूपदः किञ्चुलुको महीलतेत्यनर्थान्तरम्। एवं वडिशदन्तशङ्क्वेषण्यो व्याख्याता भवन्ति। अत्र गण्डूपदाकारमुखत्वेन शस्त्रत्वाभावेऽप्येषण्याः शस्त्रत्वेन व्यपदेशः प्रणिधानदोषात् शस्त्रवत्कार्य्यकरी भवतीत्याख्यातुम्, अतोऽवहितेनैषा प्रणिधेयेति भिषजो भाषन्ते। प्रस्तुतानि शस्त्राणि व्याख्याय अनन्तरमुपयोगित्वेनानुपेक्ष्यत्वात् शरारिमुखावान्तरभेदभिन्नं शस्त्रान्तरमुपदिशति दशेत्यादिना। कर्त्तरी रोमादिच्छेदार्थः शस्त्रविशेषः "कातारी" इत्याख्यायते ॥ ६।७ ॥

तत्रेत्यादि। शस्त्रसम्पदुपदेशेनैव शस्त्रदोषाणामर्थापन्नत्वेऽपि पुनरभिधानं स्पष्टार्थं सर्व्वथा परिहारार्थं वा। निर्वृत्तानां शस्त्राणां तत्क्षणात्

निशाणार्थं श्लक्ष्णशिला माषवर्णा, धारासंस्थापनार्थं शाल्मलीफलकमिति ॥ ९ ॥

भवति चात्र।

यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्।
सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्॥ १० ॥

अनुशस्त्राणि तु त्वक्सार-स्फटिक-काच-कुरुविन्द-जलौकाग्नि-क्षार-नख-गोजी-शेफालिका-शाकपत्र-करीर-बालाङ्गुलय इति ॥ ११ ॥

शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्।
त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्॥
आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत्।
विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्॥

---

द्रवद्रव्येषु निर्व्वापणं पायना, सा च तत्तद्रवप्रभवात् कर्म्मविशेषोत्कर्षकरी भवति तदिदमुच्यते तेषामित्यादि ॥ ८।९।१० ॥

सम्प्रति शस्त्रानर्हाणां बालादीनां शस्त्रालाभे चोपयोक्तुमनुशस्त्राण्युपदिशति अन्वित्यादिना। अनुशस्त्राणीति सादृश्येऽव्ययीभावः ततोऽर्श-आद्यच्, शस्त्रसदृशानीत्यर्थः। त्वक्सारो वंशस्तस्य त्वक् ग्राह्या, कुरुविन्दो लोहिताश्मरत्नभेदः, करीरो मरुभूमिजः कण्टकिवृक्षविशेषः तस्य कण्टकमत्र ग्राह्यम्। अत्राग्निक्षारयोरनुशस्त्रत्वं छेद्यभेद्यादिकरणात् प्रागुक्तमुपयन्त्रत्वञ्च तत्तज्जातुषादिशल्याहरणोपायत्वादित्येकेनापरं नोपहन्यते, भिन्नविषयत्वादित्यवधेयम्। शिशूनामित्यादि। त्वक्सारादिचतुर्व्वर्गमिति त्वक्सारादिभिश्चतुर्भिः कृतो वर्गस्तम् "वृन्दभेदाः समैर्वर्गः" इत्यमरः। ततश्च

ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ।
गोजी-शेफालिका-शाकपत्रैर्विस्रावयेत्तु तान् ।
एष्येष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः ॥ १२ ॥
शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु ।
कारयेत्करणप्राप्तं कर्म्मारं कर्म्मकोविदम् ॥ १३ ॥
प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ।
तस्मात्परिचयः कार्य्यः शस्त्राणां ग्रहणे सदा ॥ १४ ॥

इति सुश्रुतसंहितायां शस्त्रावचारणीयो
नामाष्टमोऽध्यायः ।

---

छेद्ये भेद्ये त्वक्षारादीनि चत्वार्यनुशस्त्राणि योजयेदित्यर्थः । गोजी दार्व्वी शाखोटको वा वृद्धास्तु गोजीति कर्कशपत्राणामुपलक्षणमित्याहुः । शस्त्राणीत्यादि । शुद्धशैक्यायसानीति गद्योक्तानुवादः । शुद्धं निर्म्मलं शक्यं समर्थं,करणानि यन्त्रशस्त्राणि, कर्म्मारं लौहकारम्, प्रयोगेत्यादि । परिचयः सामान्येन ज्ञातस्यापि पौनःपुन्येन ज्ञानम् ॥ ११—१४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः ।

---

# नवमोऽध्यायः ।

अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥ १ ॥

अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्यां कारयेत् । छेद्यादिषु स्नेहादिषु च कर्म्मपथमुपदिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो भवति ॥ २ ॥

तत्र पुष्पफलालाबू-कालिन्दक-त्रपुषैर्व्वारुक-कर्कारुक-प्रभृतिषु छेद्यविशेषान् दर्शयेदुत्कर्त्तन-परिकर्त्तनानि चोपदिशेत् । दृति-वस्ति-प्रसेवकप्रभृतिषूदक-पङ्कपूर्णेषु भेद्ययोग्याम् । सरोमणि चर्म्मण्याततेः लेख्यस्य । मृतपशुशिरासूत्पलनालेषु च वेध्यस्य । घुणोपहतकाष्ठ-वेणु-नल-नालीशुष्का-

---

पूर्व्वाध्याये शस्त्राणां ग्रहणे परिचयः कार्य्य इत्यनुशासनात् सङ्क्षेपेण तदुपायमुपदिदिक्षुर्योग्यासूत्रीयमधिकरोति अथात इत्यादिना । योग्या कर्म्माभ्यास इत्यनर्थान्तरम् । तस्याः सूत्रं स्वल्पाक्षरमसन्दिग्धमित्याद्युक्तलक्षणं शास्त्रं तदधिकृत्येति समानं पूर्व्वेण ॥ १ ॥

अधीत्यादि । अपिशब्देन योग्याया अवश्यकर्त्तव्यत्वं प्रतिपादितम् । छेद्यादिष्वित्यादि । कर्म्मपथं कर्म्मक्रममित्यर्थः । स तथोपदिष्टो योग्यां कुर्य्यादिति भावः । कुतः ? सुबहुश्रुत इत्यादि, कर्म्मस्वयोग्यः कर्म्मस्वनिपुणः ॥२॥

तत्रेत्यादि । तत्र छेद्यादिषु मध्ये इत्यर्थः । पुष्पफलस्य कपित्थस्य फलं पुष्पफलम् । "फले लुक्" इति तद्धितलुक् । एवमेव कालिन्दकादावपि व्याख्येयम् । अलाब्विति "अप्राणिजातेश्चारज्ज्वादीनाम्" इत्यूङ् । अलाबूफलमित्यर्थः । कालिन्दकं कुष्माण्डविशेषः, त्रपुषादीनि कर्कटीभेदाः, कर्कारु कुष्माण्डम्, दृतिः चर्म्मनिर्म्मितोदकपात्रम्, प्रसेवकः चर्म्मभाण्डम् । सरोमणीत्यनेन लेख्यस्यानुलोमकर्त्तव्यतां सूचयति ; प्रतिलोमे हि लेख्ये रुजा-

लाबुमुखेष्वेष्यस्य। पनसबिम्बीबिल्वफलमज्जस्रुतपशुदन्तेष्वा-
हार्य्यस्य। मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य।
सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य। पुस्तमय-
पुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम्। मृदुमांसदेशेषूत्पल-
नालेषु च कर्णसन्धिबन्धयोग्याम्। मृदुषु मांसखण्डेष्वग्नि-
क्षारयोग्याम्। उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च
नेत्रप्रणिधानवस्तिव्रणवस्तिपीड़नयोग्यामिति॥ ३॥

भवतश्चात्र।

एवमादिषु मेधावी योग्यार्हेषु यथाविधि।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु॥ ४॥
तस्मात्कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्म्मसु।
यस्य यत्रेह साधर्म्म्यं तत्र योग्यां समाचरेत्॥ ५॥

इति सुश्रुतसंहितायां योग्यासूत्रीयो
नाम नवमोऽध्यायः।

---

प्रादुर्भावो रक्तातिप्रवृत्तिश्च। पुस्तमयपुरुषो मृदादिकृतः पुरुषः; तथाच
"मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्म्मणा। लौहरत्नैः कृतं वापि
पुस्तमित्यभिधीयते॥" इति॥ ३॥

योग्यार्हद्रव्याणामपरिसंख्येयतया नातिसङ्क्षेपविस्तरेणाल्पबुद्धीनां व्यव-
हाराय यान्यभिहितानि, तान्येव सुविमलविपुलबुद्धीनामनुक्तज्ञानाय
दृष्टान्तत्वेनोपन्यस्यन्ते एवमित्यादिना। मेधावी विपुलमतिः॥ ४—५॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने योग्यासूत्रीयो नाम नवमोऽध्यायः।

# दशमोऽध्यायः ।

अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्म्मणा कृतयोग्येन शास्त्रार्थं निगदता राजानुज्ञातेन नीचनखरोमणा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखानुप्रवेष्टव्या ॥ २ ॥

---

योग्यानिष्पत्तेरनन्तरं कर्म्माणि चिकीर्षता भिषजा विशिखा प्रवेष्टव्येति योग्यासूत्रीयादनन्तरं विशिखानुप्रवेशनीयमधिकरोति अथात इत्यादिना । प्रशस्तवर्त्मापरपर्य्यायोऽपि विशिखाशब्दोऽत्रातुरावासवर्त्ममात्रे प्रवर्त्तते गमकत्वात् ॥ १ ॥

केन विशिखानुप्रवेष्टव्येत्याह अधीत्यादि। अधिगततन्त्रेण प्रागुक्तेन विधिना अधीततन्त्रेण, उपासिततन्त्रार्थेन प्रभापणीयोक्तविधानेनानुवर्णितानुश्रुततन्त्रार्थेन,कृतयोग्येन योग्यासूत्रीयविधानेनाभ्यस्तकर्म्मणेत्यर्थः। अत्राधिगतसर्व्वशास्त्रार्थस्यैव योग्यायां विहितायामप्यधिगततन्त्रेणेति विशेषणमवदातश्रुतत्वमाख्यातुम् अत उच्यते शास्त्रार्थं निगदतेति; नह्यनवदातश्रुतोऽर्हति शास्त्रार्थं निगदितुम्। राज्ञानुज्ञातेन छेद्यादिषु स्नेहादिषु शास्त्रेषु च परीक्ष्यानुमतेनेत्यर्थः। यतोऽभिहितं "छेद्यादिष्वनभिज्ञो यः"—इत्यादि। नीचनखरोमणा कृत्तनखरोमणा विशेषणमिदमङ्गुल्युपयोगेऽनाबाधार्थं सम्प्रसादार्थञ्चेति बोध्यम्। शुचिना शुद्धाचारेण। अनुद्धतवेशेन विनीतवेशेन, उद्धतो हि वेशः सतामुद्वेजनाय; सुमनसा कारुण्यादिगुणयोगादुदारचेतसा अव्याकुलचित्तेन वा "दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते" इत्यनुशासनात्। कल्याणाभिव्याहारेण हितमित-

ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभि-गम्योपविश्यातुरमभिपश्येत् स्पृशेत् पृच्छेच्च। त्रिभिरेतै-र्विज्ञानोपाय रोगाः प्रायशो वेदितव्या इत्येके। तत्तु न सम्यक् षड्विधो हि रोगाणां विज्ञानोपायः। तद्यथा पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति॥ ३॥

---

मधुराभिभाषिणा। चकुहकेनावञ्चकेन, उक्तलक्षणो हि भिषक् सहसा सुविमलादिगुणदुर्धि परिदृष्टकर्म्माणमवदातश्रुतं स्वकर्मकुशलमन्यं सुलभे-भिषग्गुणैरन्वितमपि भिषजमनायासेन महता यशसा तिरस्करोतीति युक्त-मुक्तं शुचिनेत्यादि॥ २॥

तत इत्यादि। ततो विशिखातः दूतनिमित्तशकुनमङ्गलानुलोम्येन आनुलोम्यमनुक्रमः। "आनुलोम्येन सम्भूता" इति मनुः। दूतादीनां क्रमागतमङ्गलेनोपलक्षितो भिषगित्यर्थः। दूतो वार्त्तावहः, निमित्तं शुभा-शुभसूचकं चिह्नं,शकुनः पक्षिमात्रं,एषां मङ्गलामङ्गललक्षणानि तूपरिष्टान्नि-वेदयिष्यते। वस्तुतो दूतशकुनयोर्निमित्तत्वे सत्यपीह पृथगुपादानं प्रपञ्चा-र्थम्। आतुरकुलप्रवेशमधिकृत्य विशेषयति चरकः—"न चातुरकुलप्रवृत्तयो वहिर्निश्चारयितव्याः। ह्रसितश्चायुषः प्रमाणमातुरस्य न वर्णयितव्यं जानता-ऽपि च तत्र यत्नोच्यमानमातुरस्यान्यस्य वाऽप्युपघाताय सम्पद्यते। ज्ञान-वताऽपि च नात्यर्थमात्मनो ज्ञानेन विकत्थितव्यम्। आप्तादपि हि विकत्थनादत्यर्थमुद्विजन्त्येके" इति। त्रिभिरित्यादि। चक्षुरिन्द्रियजन्यज्ञा-नाधीनत्वादनुमानस्याऽप्युपदेशो ज्ञेयस्तस्याऽपि विज्ञानोपायत्वात्। वक्ष्यति हि "स्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां त्वचि शल्योष्मणाशु विस-रति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्यं विजानीयात्" इति। न ह्यनुपदिष्टं पूर्व्वं कश्चित् प्रत्यक्षादिभिर्विज्ञातुमुत्सहते इत्यागमस्यापि विज्ञानोपायत्वे सत्यपि यत्पुनः षड्विध इत्युक्तं तत्पूर्व्वमागमेनोप-लब्धानां रोगाणां पुनः प्रतीकारकाले प्रत्यक्षानुमानाभ्यां प्रश्नेन च तत्त्वतो

तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः । स्पर्शनेन्द्रियविज्ञेयाः शीतोष्ण-श्लक्ष्ण-कर्कश-मृदु-कठिनत्वादयः स्पर्शविशेषा ज्वर-शोषादिषु । चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षण-बल-वर्ण-विकारादयः । रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः । घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः । प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलं दीप्ताग्नितां वातमूत्रपुरीषाणां प्रवृत्तप्रवृत्ती कालप्रकर्षादींश्च विशेषान् ।

विज्ञानार्थमित्यनुसन्धेयम् । चरकेऽपि "त्रिविधे त्वस्मिन् ज्ञानसमुदाये पूर्व्वमाप्तोपदेशाज्ज्ञानं ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते" इत्युपक्रम्य "तस्माद्द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च त्रिविधा वा सहोपदेशेन" इत्युक्तम् । पृष्ट्वा हि श्रोत्रेन्द्रियेणार्थो विज्ञायन्त इति प्रश्नस्य प्रत्यक्षेऽन्तर्भावान्नेह पृथगभिधानमित्यविरोधः ॥ ३ ॥

सुखप्रतिपत्तये तांस्तान् विज्ञानोपायानुदाहरति तत्रेत्यादिना । तत्र वेदितव्येषु रोगेषु मध्ये इत्यर्थः । सफेनमित्यादावेवमादय इत्यनेन सशब्दवातवाहिनश्च शिरःकण्ठस्था इत्यादयो लक्ष्यन्ते । व्रणास्रावविज्ञानीयादिष्विति व्रणास्रावविज्ञानीय आदिर्येषां तेषु तथोक्तेषु शल्याशल्यादिष्वित्यर्थः ।

प्रश्नेनेत्यादि । देशो भूमिः, कालः प्रातरादिः, जातिः रोगाणां सम्प्राप्तिर्ब्राह्मणत्वादिर्वा, सात्म्यम् "यो रसः कल्पते यस्य सुखायैव निषेवितः । व्यायामजातमन्यद्वा तत्सात्म्यम्" इत्युक्तलक्षणम्, आतङ्कः समुत्पद्यतेऽस्मादिति व्युत्पत्त्या आतङ्कसमुत्पत्तिर्निदानम्, वेदनासमुच्छ्रायो व्याधेः

आत्मासदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात् ॥ ४ ॥

भवति चात्र ।

मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च ।
तथा दुःपरिसृष्टाश्च मोहयेयुश्चिकित्सकम् ॥ ५ ॥

एवमभिसमीक्ष्य साध्यान् साधयेद्याप्यान् यापयेदसाध्यान् नोपक्रमेत् । परिसंवत्सरोत्थितांश्च विकारान प्रायशो वर्ज्जयेत् ॥ ६ ॥

---

रत्युन्नतिः, बलं व्यायामशक्त्यनुमेयं, कालप्रकर्षो व्याधेः कालसन्ततिः यावन्तं कालं व्याधिरुत्पन्न इति यावत्, आदिना निद्रादीनामवरोधः । एतानि प्रश्नेन कस्मिन्नयं जातः संवृत्तो व्याधितो वेत्येवं पृच्छया जानीयादित्यर्थः । नन्वात्मनो हीनेन्द्रियत्वे का गतिरित्याह आत्मेत्यादि । उचितापरपर्य्यायोऽयं सदृशशब्दः । "सदृशं समे उचिते" इति मेदिनी । ततश्चात्मासदृशेषु आत्मनोऽनुचितेष्वयुक्तेषु हीनेष्विति यावत् विज्ञानाभ्युपायेषु विज्ञानोपायेष्विन्द्रियेषु सत्स्वित्यर्थः—"तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः" इति काव्यप्रकाशः । कोऽभ्युपायः क उपायः इति तदर्थः । तत्स्थानीयैः आतुरावासस्थैः पुरुषैर्जानीयात् तांस्तानिन्द्रियविज्ञेयान् विषयान् ; भिषगिति शेषः । आत्मसदृशेष्विति प्रामादिकः पाठः ॥ ४ ॥

अवहितेन भिषजा रोगा विज्ञेयाः नाऽपि चातुरेण ह्रीमत्त्वादन्यस्माद्वा कारणात् कश्चिद्वाह्यो वाभ्यन्तरो वा भावो गोप्य इत्येव व्याजेन व्याचिख्यासुराह मिथ्येत्यादि । दृशिरत्र प्रत्यक्षपरः पञ्चेन्द्रियविज्ञानाधिकारात् । तदयमर्थः मिथ्यादृष्टा याथातथ्येनाविज्ञाताः, दुराख्याताः सम्यङ्नाख्याताः दुःपरिसृष्टाः दुष्पृष्टाः । पूर्व्वेणैवोपलब्धे पुनर्दुःपरिसृष्टेति विशेषणं क्रियाजुगुप्सया वा अल्पीयसोऽप्यवयवस्य परिमृश्यत्वेऽपरिहार्य्यत्वमाविष्कर्त्तुमित्याशः "सिद्धे सत्यारम्भो नियमाय" इति न्यायात् । एवमित्यादि । अत्र प्रायश इति रक्तगुल्मादीनां दुर्बलव्याधीनाञ्च व्यावृत्त्यर्थम् ॥ ५ । ६ ॥

तत्र साध्या अपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा भवन्ति । तद्यथा—श्रोत्रिय-नृपति-स्त्री-बाल-वृद्ध-भीरु-राजसेवक-कितव-दुर्ब्बल-वैद्यविदग्ध-व्याधिगोपक-दरिद्र-कृपण-क्रोध-व्रतामनात्मवतामनाथानाञ्चैवं निरूप्य चिकित्सां कुर्व्वन् धर्म्मार्थकामयशांसि प्राप्नोति ॥ ७ ॥

भवति चात्र ।

स्त्रीभिः सहास्यां संवासं परिहासञ्च वर्ज्जयेत् ।
दत्तञ्च ताभ्यो नादेयमन्नादन्यद्भिषग्वरैः ॥ ८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ।

---

तत्रेत्यादि । श्रोत्रियादीनां व्रताध्ययनादिभिस्तैस्तैर्हेतुभिर्दोषप्रकोपात् सर्व्वक्रियानर्हत्वादितरे व्याधयोऽसाध्या भवन्ति तद्विपरीतत्वे च साध्यतामुपयान्तीत्युच्यते प्रायेणेति । कितवस्त्वत्र द्यूतकारः, वैद्यविदग्धो वैद्यम्मन्यः । शेषमतिरोहितार्थम् ॥ ७ ॥

परीवादभयात्परिहर्त्तव्यान्याह स्त्रीभिरित्यादिना । सहास्या सहासनं, अन्नमोदनं, यत्तु चरके "न कदाचित् स्त्रीदत्तमामिषमादातव्यमननुज्ञातञ्च भर्त्राऽथवाध्यक्षेण" इत्युक्तं तदन्नेतरभोग्यवस्तुविषयमित्यविरोधः । "आमिषं भोग्यवस्तुनि" इति रभसः ॥ ८ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ।

---

# एकादशोऽध्यायः ।

अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमश्छेद्य-भेद्य-लेख्य-करणात् त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च ॥ २ ॥

तत्र क्षरणात् क्षणनाद्वा क्षारः । नानौषधिसमवायात्

पूर्व्वाध्यायोक्तेन विधिना परीक्षणादनन्तरं भेषजान्युपयुज्यन्त इतीदानीं व्याचिख्यासितेषु भेषजेषु मध्ये प्रथमं तावत् "विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्" इत्यतिक्रान्तावेक्षणात् पाकोपयोगक्रमतः क्षारमेवाधिकरोति अथात इत्यादिना । क्षारपाकविधिमिति । पाकः पाकक्रमः विधिश्चोपयोगक्रमः । क्षारस्य पाकविधी यत्र तं तथोक्तम् ॥ १ ॥

वैद्यातुरप्रवृत्त्यर्थं सहेतुकं क्षारं स्तौति शस्त्रानुशस्त्रेत्यादिना । शस्त्राणि मण्डलाग्रादीनि अनुशस्त्राणि चेह क्षारेतराणि त्वक्सारादीनि, शस्त्रानुशस्त्रेभ्यः इति "पञ्चमी विभक्ते" इति निर्द्धारणे पञ्चमी । छेद्यभेद्यलेख्यकरणादिति नाड़ीव्रणादीनां छेदनात्, मर्म्मान्तव्रणशोथादीनां भेदनात्, कठिनोत्सन्नमांसादीनाञ्च व्रणानां लेखनादित्यर्थः । विशेषक्रियावचारणादिति त्रिदोषघ्नत्वे सौम्यत्वे च सत्यपि दहनादिकर्म्मकरणात्, तथैवाग्नेयौषधिभूयिष्ठतया पित्तरक्तदूषकत्वे सत्यपि पित्तरक्तार्शसः प्रत्यनीकत्वादित्यर्थः । वक्ष्यति हि "क्षारेणैव मृदुना पित्तरक्तनिमित्तानि" इति । एवं प्रभावतोऽनेकविधकर्म्मकरणाच्छस्त्रानुशस्त्रेभ्यः प्रधानतमः क्षारो न तु च्छेद्याद्यष्टविधकर्म्मकरणादाशुक्रियाकरणादित्यनुशस्त्रेषु पठ्यते, अनुशस्त्रं हि नाम गौणं शस्त्रमित्यवोचाम ॥ २ ॥

सम्प्रति छेद्यादिकर्म्मार्हत्वं प्रतिपादयन् निर्व्वक्ति क्षरणादित्यादिना । क्षरणाद्दुष्टमांसादीनां शातनात् क्षणनात् त्वङ्मांसादीनां हिंसनात् । क्षणोः

त्रिदोषघ्नः, शुक्लत्वात् सौम्यस्तस्य सौम्यस्यापि सतो दहन-पचन-दारणादिशक्तिरविरुद्धा, स खल्वाग्नेयौषधिगणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्याम-कफ-कुष्ठ-विष-मेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः ॥ ३ ॥

---

क्षारः । पृषोदरादिः । नानौषधिसमवायात् वातपित्तकफहरौषधिसमुदायात्मकत्वादित्यर्थः । न च दग्धतया गुणान्तराधानेन नानौषधिसमवायत्वेऽपि त्रिदोषघ्नत्वं नोपपद्यते इति वाच्यं, दग्धस्यापि प्रकृतिगुणदर्शनात् । वक्ष्यति हि रक्तपित्तं प्रतीकर्त्तुं "सक्षौद्रमिन्दीवरभस्मवारि" इति । नन्वाग्नेयौषधिभूयिष्ठत्वादेकान्ततः पित्तकरस्यास्य त्रिदोषघ्नत्वं कुतः ? इत्याशङ्क्याह शुक्लत्वात् सौम्य इति । शुक्लत्वं हि कफधर्म्मः, उक्तं हि "श्लेष्मा श्वेतो गुरुः स्निग्धः" तथा "ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्" इत्यादि तस्मात्सौम्यत्वेन पित्तहरतया युक्तमेव त्रिदोषघ्नत्वमिति भावः । तत्पुनस्त्रिदोषघ्नत्वमनुबन्धभूतपित्तहरणादेव द्रष्टव्यं; रक्तपित्त-पित्तप्रकृतिप्रभृतिष्वहितत्वेनोपदेशात् । नन्वत्र कथं सौम्यतया दहनादिशक्तिर्दहनादिशक्त्या वा सौम्यत्वं नोपहन्यते, "विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते" इति न्यायादित्याह तस्येत्यादि । अविरुद्धा अप्रतिहता, चित्रकसमाया अपि दन्त्यां विरेचकत्ववत् स्वभावसंसिद्धत्वादिति भावः । अस्तु तावत्कथं पुनर्वातपित्तकफहरौषधिसमुदायात्मकस्य तस्याग्नेयी दहनादिशक्तिः कटुकादयो गुणाश्चोत्पद्यन्ते, इत्युच्यते स खल्वित्यादि । पाचनो व्रणशोथस्याजीर्णस्य च, विलयनो गुल्मादेः, शोधनो दुष्टव्रणादेः, रोपण इति परम्परासम्बन्धेन, रोपणार्थं हि क्षारो न प्रयुज्यते, अपि तु शोधनादेव रोपयति । शोषणो व्रणक्लेदस्य, स्तम्भनः शिराच्छेदादतिप्रवृत्तस्य शोणितस्य, क्षारो हि च्छिन्नं शिरामुखं पाचयित्वा शोणितगतिं निरुणद्धि । लेखनः कठिनोत्सन्नमांसानां व्रणानां, पाचनत्वादयो गुणाः यथायोगं

स द्विविधः प्रतिसारणीयः पानीयश्च । तत्र प्रतिसारणीयः कुष्ठ-किटिभ-दद्रु-किलास-मण्डल-भगन्दरार्व्वुद-दुष्टव्रण--नाड़ी--चर्म्मकील-तिलकालक-न्यच्छ-व्यङ्ग-मशक-वाह्य-विद्रधि-क्रिमि-विषादिषु उपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुश-दन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम् । पानीयस्तु गर-गुल्मोदराग्निसङ्गाजीर्णारोचकानाह--शर्कराश्मर्य्याभ्यन्तरविद्रधि--क्रिमि-विषार्शःसूपयुज्यते ॥ ४ ॥

अहितस्तु रक्तपित्त-ज्वरित-पित्तप्रकृति-बाल-वृद्ध-दुर्व्वल-

---

पानीयस्य प्रतिसारणीयस्य च ज्ञेयाः । अतिसेवित इति गुल्मादौ सातत्येनातिमात्रया वोपयुक्तः पानीयः चारः ॥ ३ ॥

स द्विविध इत्यादि । अत्र कुष्ठत्वेन किटिभादीनां लाभे पृथगुपादानं विशेषतः चारसाध्यताप्रतिपादनार्थम् । आदिना जतुमणिप्रभृतीनामादेशः । उपजिह्वादिषु चतुर्षु तिसृषु रोहिणीष्विति सप्तसु च मुखरोगेषु प्रतिसारणीय उपदिश्यत इत्यन्वयः । अत्र रोहिणीनां त्रित्वं शोणितसन्निपातजयोरसाध्यत्वादसाध्यत्वेऽपि शोणितजायाः पित्तजरोहिणीचिकित्सितेऽन्तर्भावाद्वा वच्यति हि "पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्" इति । अत्र सप्तस्विति सङ्ख्यया निर्द्देशो विशेषोपयोगितयेति बोध्यं संशोधनार्हेषु सर्व्वेष्वेवोपयोगात् । चारो हि शोणितेन सह सम्भूय तानि तानि कर्म्माणि करोतीत्याह एतेष्वित्यादि । एतेषु कुष्ठादिषु चकारात्कठिनाश्मत्वेन तादृशेषु कठिनोत्सन्नव्रणमांसादिषु चैवानुशस्त्रप्रणिधानं यथायोगं शस्त्रानुशस्त्रप्रयोगानन्तरं चारप्रणिधानमुक्तं पूर्व्वाचार्य्यैरिति शेषः । एवकारेणोत्सन्नमृदुमांसव्रणादयो व्यवच्छिद्यन्ते । पानीय इत्यादि गरं संयोगजं विषम्, अग्निः सज्यते अनेनेत्यग्निसङ्गः ग्रहण्यादयः । पानीयचार-

भ्रम-मद-मूर्च्छा-तिमिर-परीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः। तच्चेतरक्षारवद्दग्ध्वा परिस्रावयेत्। तस्य विस्तारोऽन्यत्र ॥ ५ ॥

अथेतरो मृदुर्मध्यस्तीक्ष्णश्च। तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वा खण्डशः प्रकल्प्यावपाव्य निवाते देशे निचितं कृत्वा

---

विधिमाह तंच पानीयक्षारम् इतरक्षारवदह्यमाणप्रतिसारणीयक्षारवद्दग्ध्वा परिस्रावयेदित्यनेनोभयत्र दाहस्रावयोस्तुल्यत्वमुक्तम्। विस्तारोऽन्यत्रेति शल्यादावित्यर्थः ॥ ४ । ५ ॥

अथेत्यादि। कार्त्स्न्यापरपर्य्यायोऽयमथशब्दः, "अथ—कार्त्स्न्यारम्भसमुच्चये" इति मेदिनी। तदयमर्थः, इतरः प्रतिसारणीयः क्षारो मुष्ककादीनां तारतम्येन यावान् भवितुमर्हति तावानेव मृद्वादिभेदेन त्रिविध इति। यथा च त्रैविध्यमुपपद्यते तच्च परमतो व्यक्तीभविष्यति। गिरिसानुजं पर्व्वतस्यसमभूमिजम्, अत्र सानुजमिति सिद्धे गिरिशब्दो गोबलीवर्द्दन्यायात् झटितिबोधार्थः। विशेषणमिदमग्निगुणभूयस्त्वादुपात्तमिति गम्यते तेन तथाविधजाङ्गलदेशजातमप्यादेयं भवत्यविशेषात्। शुचिरुपोष्येति अशुचेर्भुक्तवतश्चाधिवासानधिकारान्नानुपपन्नम्। अह्नः प्राशस्त्यमत्र शुभकरणादिकत्वेन मेघप्रवातादिविरहितत्वेन च कल्पनीयम्। प्रशस्तदेशजातमिति देशो भूमिस्तत्प्राशस्त्यन्तु भूमिप्रविभागीये वक्ष्यमाणमभिसमीक्ष्याध्यवस्यम्। अनुपहतं क्रिमिविषादिसम्बाधमार्गैरप्रनष्टवीर्य्यम्। मध्यमवयसमित्यस्य परिपूर्णवीर्य्यत्वे तात्पर्य्यम्। असितमुष्ककं "घण्टापारुलि" इति समाख्यातम्; अत्रासितत्वेन विशेषणं "मुष्ककः कालपुष्पस्तु वरः श्वेतादिपुष्पतः" इत्यनुशासनात्। अधिवास्येत्यधिवासनं भूतापसारणार्थम्; यदाह भोजः "प्राङ्मुखोपगत इत्युपक्रम्य—निवसन्तीह भूतानि यान्यस्मिन् कानिचित् द्रुमे। अपक्रामन्त्वतस्तेभ्यः परार्थे श्वो

सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेत्। अथोपशान्ते-ऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च ॥ ६ ॥

अथानेनैव विधानेन कुटज-पलाशाश्वकर्ण-पारिभद्रक-बिभीतकारग्वध--तिल्वकार्क--सुह्यपामार्ग-पाटला--नक्तमाल-वृष--कदली-चित्रक-पूतीकेन्द्रवृक्षास्फोताश्वमारक-सप्तच्छदा-ग्निमन्थ-गुञ्जाश्चतस्रश्च कोशातकीः समूल-फल-पत्र-शाखा दहेत्॥ ७ ॥

ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य, मूत्रैर्वा यथो-क्तैरेकविंशतिकृत्वो विस्राव्य, महति कटाहे शनैर्दर्व्याविघट्ट-यन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च

---

ऽयं द्रुमः" इति। निचितं कृत्वा राशीकृत्य, सुधा पाषाणभेदः "घुटीम्" इति विज्ञायते। शर्करा क्षुद्रतरपाषाणविशेषः। तिलनालैरादीपनं वीर्योत्कर्षार्थम्। भस्मशर्करा भस्मीभूताः शर्कराः चकारात् भस्मीभूताः सुधाश्चेत्यर्थः। अन्ये तु "शुष्ककाष्ठाद्दह्यमानात्तु रसः प्रच्यवते यदा। भस्मना सह संयुक्तः काठिन्यमुपगच्छति। तां भस्मशर्करामाहुः" इत्युक्तभस्मशर्करा एवेह शब्देनोदिता इत्याहुः ॥ ६ ॥

अथेत्यादि। अथ तद्भस्मभस्मशर्कराग्रहणानन्तरम्, अनेनैव पूर्वोक्तेना-धिवासपूर्वकेणैवेत्यर्थः। अश्वकर्णः शालभेदः इन्द्रवृक्षो वृहत्फलः कुटजः, कुटजस्तु क्षुद्रफल इत्यनयोर्विशेषः। कोषातकी नाम "घोषा" इति विज्ञायते। सा च फलपुष्पभेदाच्चतुर्धा भिद्यत इत्युच्यते चतस्रश्चेति ॥ ७ ॥

तत इत्यादि। क्षारद्रोणमिति, अत्राविशेषेऽपि समुदितकुटजादिक्षार-समं मुष्ककक्षारमुपदिशन्ति भिषजो मुष्ककस्य पृथग्दाहात् "मुष्ककोत्तर-मादाय" इति वाग्भटसंवादाच्च। मूत्रैर्वा यथोक्तैरिति भाविनि भूतवदुप-चारादुक्तं वक्ष्यमाणैर्मूत्रैरित्यर्थः। एकविंशतिकृत्व एकविंशतिवारान्।

तमादाय महति वस्त्रे परिस्राव्येतरं विभज्य च पुनरग्नावधि-श्रयेत् । तत एव च क्षारोदकात् कुड़वमध्यर्द्धं वापनयेत् ॥८॥

ततः कटशर्करा-भस्मशर्करा-क्षीरपाक-शङ्खनाभीरग्निवर्णाः कृत्वायसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसम्मितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सततमप्रमत्तश्चैनमवघट्टयन् विपचेत् । स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत । अथैनमागतपाकमवतार्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः । एष एवाप्रतीवापः पक्वः संव्यूहिमो मृदुः ॥ ९ ॥

प्रतीवापे यथालाभं दन्ती-द्रवन्ती-चित्रक-लाङ्गलकी-पूतिक-

---

स पच्यमानः क्षारः, अच्छो निर्मलः, तीक्ष्णः उग्रगन्धः, इतरं भस्मांशम् । अधिकमर्द्धं यत्रेत्यध्यर्द्धम् । अत्र कुड़वेऽपि द्वैगुण्यमिच्छन्ति कटशर्करादीनां निर्वेकानुपपत्तिभयात् । तथाच द्वादशपलान्यपनयेदिति निष्कर्षः ॥ ८ ॥

तत इत्यादि । कटशर्करानामौषधिः "नटा" इत्याख्यायते, तदभावे तु खटिका देयेति क्षारविदो भाषन्ते । भस्मशर्करा शाग्व्याहृता, क्षीरपाकः शुक्तिका, शङ्खनाभिः शङ्खग्रन्थिः, न तु तदाख्यो मत्स्यभेद इति प्राञ्चः । तस्मिन्निति पूर्व्वोद्धृतेऽध्यर्द्धकुड़वे इत्यर्थः । तेनैव निर्व्वापणार्थेन क्षारोदकेनैव पिष्ट्वा द्विद्रोणे द्विद्रोणावशेषे क्षारोदके, शङ्खनाभिरादिः क्षारगुणोत्पादने प्रथमो येषां ते शङ्खनाभ्यादयः तेषां शङ्खनाभ्यादीनां प्राक् पिष्टानां कटशर्कराप्रभृतीनामित्यर्थः । अत्र गुणोत्कर्षार्थमनुक्तान्यपि दक्षशक्तादीन्याचार्य्यान्याहुः ; "अस्थ्नां शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् । चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च" इति प्रक्षेपाधिकारे तन्त्रान्तरानुशासनात् ॥९॥

:मध्यमस्यैव क्षारस्य प्रतीवापे द्रव्यान्तराणि संयोज्य तीक्ष्णत्वमुपदिशति

प्रवाल--तालपत्री-विड़--सुवर्च्चिका-कनकचौरी--हिङ्गु--वचा-विषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः प्रतीवापः । स एव सप्रतीवापः पक्कः पाक्यस्तीक्ष्णस्तेषां यथाव्याधिबलमुपयोगः। क्षीणबले तु क्षारोदकमावपेद्‌बलकरणार्थम् ॥ १० ॥

भवतश्चात्र ।

नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः ।
अभिष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः
अतिमार्द्दवशैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिताः ।
सान्द्रताऽपक्वता हीनद्रव्यता दोष उच्यते ॥ ११ ॥

---

प्रतीवाप इत्यादिना । प्रतीवापे काटशर्करादौ, समाः समांशाः श्लक्ष्णचूर्णाः श्लक्ष्णश्चिक्कणश्चूर्णो येषां ते तथोक्ताः, शुक्तिप्रमाणाः अर्द्धपलमिताः यथालाभं दत्त्वादयश्चेत् प्रतीवापस्तर्हि पक्कः स एव सप्रतीवापो मध्यमक्षारः पाक्य-स्तीक्ष्णश्चेति संज्ञां लभत इत्यर्थः । सप्रतीवापं पक्क इति पाठे तु सुगमम् । पाक्यसंव्यूहिमसंज्ञयोश्चिरहोपदेशः प्रसिद्धत्वादित्यवधेयम् । पूतिकप्रवालाः पूतिकरञ्जपल्लवाः, तालपत्री तालमूली, विड़ं लवणभेदः, कनकचौरी मालवदेशे प्रसिद्धा, व्यवहारस्तु कङ्कुष्ठेनैव, विषा अतिविषा । एवं प्रतिसार-णीयस्य प्रागुक्तं त्रैविध्यं व्याख्यातं भवति । क्षीणेत्यादि । क्षीणबलत्वमत्र द्रवक्षयादेव लक्षणीयम् अन्यत्राऽप्युक्तं "बलार्थं क्षीणपानीये क्षाराम्बु पुन-रावपेत्" इति ॥ १० ॥

नैवेत्यादि । क्षारस्यातितीक्ष्णत्वं वाक्शतात् प्रागेरण्डनालदाहात् मृदुत्वञ्चार्व्वागप्यदाहाल्लक्षणीयम्, यदुक्तम् "यथेरण्डजनालमेष दहति क्षारो वरो वाक्शतात्" इति । वाक्शतात् यदि दहति तर्हि वरः श्रेष्ठोऽन्यथा त्ववरोऽतितीक्ष्णत्वेन मृदुत्वेन चेति तात्पर्य्यम् । अविष्यन्दी अविसर्पी, शिवो

तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निर्वातातपे देशेऽसम्बाधेऽग्रोपहरणीयोक्तेन विधानेनोपसम्भृतसम्भारं ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा शलाकया क्षारं प्रतिसारयेत्। दत्त्वा वाक्शतमात्रमुपेक्षेत ॥ १२ ॥

तस्मिन् निपतिते व्याधौ कृष्णता दग्धलक्षणम्।
तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः॥
अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते।
इदमालेपनं तत्र समग्रमवचारयेत्॥
अम्लकाञ्जिकवीजानि तिलान्मधुकमेव च।
प्रपेष्य समभागानि तेनैवमनुलेपयेत्।
तिलकल्कः समधुको घृताक्तो व्रणरोपणः॥ १३ ॥
रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः।
आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति॥ १४ ॥
एवं चेन्मन्यसे वत्स प्रोच्यमानं निबोध मे।
अम्लवर्ज्यान्रसान्क्षारे सर्व्वानेव विभावयेत्॥

---

निरुपद्रवत्वेनेष्टसाधन इत्यर्थः। हि यस्मात् क्षार उक्तलक्षणो भवति प्रशस्येनेति शेषः अतोऽष्टगुणोऽष्टावुत्कर्षहेतवोऽस्येत्यर्थः॥ ११॥

तत्रेत्यादि। तमवकाशं देशं निरीक्ष्य व्याधेराकारादिविज्ञानार्थम् निपुणं लक्षयित्वा अवघृष्यावलिख्य प्रच्छयित्वेति यथाक्रमं पित्तवातकफदुष्टिभेदेनेत्याहुः। दत्त्वा प्रतिसार्य्येत्यर्थः। वाक्शतमात्रं लघूच्चरशतोपलक्षितकालमात्रम् उपेक्षेत उदासीनस्तिष्ठेदित्यर्थः॥ १२॥

तस्मिन्नित्यादि। अम्लवर्गो रसविशेषविज्ञानीये वक्ष्यमाणः। मधुको

कटुकस्तत्र भूयिष्ठो लवणोऽनुरसस्तथा।
अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः॥
माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति।
माधुर्य्याच्छमम्आप्नोति वह्निरद्भिरिवाप्लुतः॥ १५॥

तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च। हीन-दग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च। अतिदग्धे दाहपाक-रागस्रावाङ्गमर्द्द-क्लम-पिपासा-मूर्च्छाः स्युर्मरणं वा। क्षार-दग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत्॥ १६॥

अथ नैते क्षारकृत्याः। तद्यथा दुर्ब्बल-बाल-स्थविर-भीरु-सर्व्वाङ्गशूनोदरि-रक्तपित्ति-गर्भिण्यृतुमती-प्रवृद्धज्वरि-प्र-मेहिरःक्षत-क्षीण-तृष्णा-मूर्च्छोपद्रुत-क्लीबापवृत्तोद्वृत्त-फल-योनयः॥ १७॥

तथा मर्म्म-शिरा-स्नायु-सन्धि-तरुणास्थि-सेवनी-धमनी-गल-नाभि-नखान्तर-शेफः-स्रोतः-स्वल्पमांसेषु च प्रदेशेष्व-क्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात्॥ १८॥

---

यष्टीमधुकः। तत्रेत्यादि। जाड्यमत्रालघुता। नैत इत्यादि। अप-वृत्तोद्वृत्तौ यथासम्भवमध ऊर्द्ध्वगतावण्डयोनी येषां ते अपवृत्तोद्वृत्तफल-योनयः। केचित्तु फलशब्देनेहान्त्रं ग्राहयन्त्युपचारात् गङ्गायां घोष इति-वत्॥ १३—१७॥

तथेत्यादि। मर्म्माणि मर्म्मनिर्द्देशशारीरोक्तानि पञ्चविधानि, तरुणा-स्थीनि घ्राणकर्णग्रीवाक्षिकोषस्थितानि कोमलान्यस्थीनि, सेवन्यः शिरसि पञ्च, जिह्वाशेफसोरेकैक इति सप्त, धमन्यश्चतुर्व्विंशतिर्नाभिप्रभवाः। केचिच्च

तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्न-द्वेषिणं हृदयसन्धिपीड़ोपद्रुतं क्षारो न साधयति ॥ १९ ॥

भवति चात्र ।

विषाग्निशस्त्राशनिमृत्युकल्पः
क्षारो भवत्यल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो
रोगान् निहन्यादचिरेण घोरान् ॥ २० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने क्षारपाकविधि-र्नामैकादशोऽध्यायः ।

---

तरुणास्थिसम्बन्धित्वात् घ्राणार्व्वुदादिष्वपि क्षारं नेच्छन्त्येकान्तेन ; तत्तु न समीचीनं युक्त्याऽल्पशो व्यवहारदर्शनात् । तन्त्रान्तरेऽप्युक्तम् । "पद्मपत्र-तनुक्षारलेपो घ्राणार्व्वुदेषु च । प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ॥ मात्रा विधार्य्यः पञ्चाशत्तद्वदर्शसि कर्णजे । क्षारं प्रमार्ज्जनेनानुपरिमृज्याव-गम्य च ॥ सुदग्धं घृतमध्वक्तं तत्परो मस्तुकाञ्जिकैः । निर्व्वापयेत्ततः साज्यैः" स्वादुशीतैः प्रदेहयेत् ॥ इति ॥ १८ । १९ । २० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ।

# द्वादशोऽध्यायः ।

अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

क्षारादग्निर्गरीयान् क्रियासु व्याख्यातः । तद्दग्धानां रोगाणामपुनर्भावाद्भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ॥ २ ॥

अथेमानि दहनोपकरणानि । तद्यथा—पिप्पल्यजाशकृद्-गोदन्त-शर-शलाका-जाम्बवौष्ठेतरलौहाः क्षौद्र-गुड़-स्नेहाश्च ।

---

सम्प्रति "विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्" इति प्रागुक्त-क्रमागतत्वात् क्षारविधेरनन्तरमग्निकर्मविधिमधिकरोति अथात इत्यादिना ॥ १ ॥

मा भून्नृशंसत्वेनाऽत्राप्रवृत्तिरित्यग्निं स्तौति क्षारादित्यादिना । न चानेन क्षारादग्निरित्यादिना प्रागुक्तं क्षारप्राधान्यं बाध्यते विरोधाभावात्, विरोधे हि बलीयसा दुर्ब्बलं बाध्यते । न चानयोरस्ति कश्चिद्विरोधो भिन्न-विषयत्वात् । तथाहि क्षारादग्निरित्यादिनाऽग्नेर्भेषजाद्यसाध्यसाधकत्वं तत्साधितानामपुनर्भावश्च ज्ञाप्यते न तु छेद्यादिकर्तृकत्वादीन्यपि तत्र च क्षारस्य छेद्यादिकरणात् त्रिदोषघ्नत्वादिगुणयोगाच्च प्रधानतमत्वमुक्तम् न त्वग्न्यसाध्यानां साधनात् तत्साध्यानामपुनर्भावाद्वा तथात्वे च वाक्यभेदप्रस-ङ्गात् न चानयोरस्ति कश्चिद्विरोधः ॥ २ ॥

अथेत्यादि । जाम्बवौष्ठः प्राग्व्याख्यातः, इतरलौहा इति, लौहशब्दो हि मुख्यया वृत्त्याऽयसि प्रवर्त्तते सुवर्णादौ तु भक्त्येति लोकोपचारादपि गम्यते इत्यतः सुवर्णशलाकादीनि ग्राहयितुमिदमुच्यते इतरेति । इतरे निकृष्टा लौहाः सुवर्णादिविकारा इतरलौहाः, सुवर्णशलाकादय इति

तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानाम् । जाम्बवौष्ठेतरलौहानि मांसगतानाम् । क्षौद्रगुड़स्नेहाश्च शिरा-स्नायुसन्ध्यस्थिगतानाम् ॥ ३ ॥

तत्राग्निकर्म्म सर्व्वर्त्तुषु कुर्य्यादन्यत्र शरद्ग्रीष्माभ्यां, तत्राप्यात्ययिकेऽग्निकर्म्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा ॥४॥

सर्व्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः कर्म्म कुर्व्वीत, अश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः ॥ ५ ॥

तत्र द्विविधमग्निकर्म्माहुरेके त्वग्दग्धं मांसदग्धञ्च । इह तु शिरा-स्नायु-सन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ॥ ६ ॥

तत्र शब्दप्रादुर्भावो दुर्गन्धता त्वक्सङ्कोचश्च त्वग्दग्धे । कपोतवर्णताल्पश्वयथु-वेदना शुष्क-सङ्कुचितव्रणता च मांस-

---

यावत् । "निष्ठीनोपसदो जाल्मः क्षुल्लकश्चेतरश्च सः" इत्यमरः । उपयोगश्चैषां ग्रन्थिवीसर्पादौ, यदुक्तमात्रेयेण "अथास्य दाहः क्षारेण शरैर्हेम्नाऽथवा हितः" इति ॥ ३ ॥

तत्रेत्यादि । आत्ययिके आशुपकारिणि, तत्प्रत्यनीकं शरद्ग्रीष्मविपरीतं पित्तप्रतिकूलमिति निष्कर्षः । वक्ष्यति च "उष्णे चोष्मनिवारणं कृत्वा कुर्य्यात् क्रियां प्राप्ताम्" इति ॥ ४ ॥

सर्व्वेत्यादि । अत्र पिच्छिलान्नभोजनमग्निजनितवातकोपप्रतिषेधार्थम् अश्मर्य्यादावभोजनन्तु कर्म्मफलप्रतिबन्धिमलमूत्रच्छर्दिवेगनिरासार्थम् । मूढ़-गर्भाश्मरीत्येवमादिस्वनाकरः पाठोऽविवक्षिताग्निकर्म्मकालान्मूढ़गर्भस्येत्यवधेयम् ॥ ५ ॥

तत्रेत्यादि । एके काश्यपादयः ; यदुक्तं "न सिरास्नायुसन्ध्यस्थिमर्म्म-

दग्धे। उष्णोन्नतव्रणता स्रावसन्निरोधश्च शिरास्नायुदग्धे। रुक्षारुणता कर्कश-स्थिरव्रणता च सन्ध्यस्थिदग्धे॥ ७॥

तत्र शिरोरोगाधिमन्थयोर्भ्रू-ललाट-शङ्खप्रदेशेषु दहेत्। वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् दहेत्। त्वङ्मांस-शिरा-स्नायु-सन्ध्यस्थिस्थितेऽत्युग्ररुजे वाया-वुच्छ्रित-कठिन-सुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुद-भगन्दरापची-श्लीपद-चर्म्मकील-तिलकालकान्त्रवृद्धि-सन्धि-शिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म्म कुर्य्यात्॥ ८॥

तत्र वलय-बिन्दु-विलेखा-प्रतिसारणानीति दहनविशेषाः॥९

भवति चात्र।

रोगस्य संस्थानमवेक्ष्य सम्यङ्-
नरस्य मर्म्माणि बलाबलञ्च।
व्याधिं तथर्त्तुञ्च समीक्ष्य सम्यक्
ततो व्यवस्येद्भिषगग्निकर्म्म॥ १०॥

तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्गः। अथेमानग्निना परिहरेत् पित्तप्रकृतिमन्तःशोणितं भिन्नकोष्ठमनुद्धृतशल्यं दुर्ब्बलं बालं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति॥ ११॥

---

स्वपि कथञ्चन। दंशस्योत्कर्त्तनं कार्य्यं दाहो वा भिषजाग्निना" इति। इहाऽस्मिन् शास्त्रे, तु-शब्दः परमततो विशेषणार्थः॥ ६—८॥

तत्रेत्यादि। वलयो गोलः,विलेखा नानाकारा रेखा, प्रतिसारणमिह लगुडरणार्थमवघर्षणम्; इत्येतानि दहनविशेषाः दहनस्य विशेषकाः॥९-११

अत ऊर्द्ध्वमितरथादग्धलक्षणं वक्ष्यामः। तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहः सूक्ष्मशिरानुसारित्वात् त्वगादीननुप्रविश्याशु दहति। तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति॥ १२॥

तच्च प्लुष्टं दुर्द्दग्धं सम्यग्दग्धमतिदग्धञ्चेति चतुर्विधमग्निदग्धम्। तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोष-दाह-राग-पाक-वेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्द्दग्धम्। सम्यग्दग्धमनवगाढं तालफलवर्णं सुसंस्थितं पूर्व्वलक्षणयुक्तञ्च। अतिदग्धे मांसावलम्बनं गात्रविश्लेषः शिरा-स्नायु-सन्ध्यस्थिव्यापादनमतिमात्रं ज्वर-दाह-पिपासा-मूर्च्छाश्चोपद्रवा भवन्ति, व्रणश्चास्य चिरेण रोहति,

---

अत इत्यादि। इतरथा वैद्यप्रयत्ननिरपेक्षतया भिन्नप्रकारेण दग्धमितरथादग्धमाकस्मिकदग्धमिति निष्कर्षः। तस्य लक्षणमितरथादग्धलक्षणम्। तत्रेति बुद्ध्या समाकृष्टतया उपसर्ज्जनस्यापि तदा परामर्शः। इतरथादग्धे इत्यर्थः। अत्राग्निर्दहतीति स्वतन्त्रत्वेनोपदेशो वैद्यनिरपेक्षत्वेनाकस्मिकत्वमाविष्कर्त्तुम्। उभयथैव स्नेहदग्धे सूक्ष्मशिरानुसारित्वेनापाततो रूक्षाम्येऽनुभूतेऽपि दग्धमिदमधिकत्वाधिका रुज इत्यभिधानं दाह्यावकाशस्यादुष्टत्वेन रुग्विशेषकरतरत्वादित्यध्यवसम्॥ १२॥

तत्रेत्यादि। तत्राग्निकर्म्मविधावित्यर्थः। अग्निदग्धम् प्रकरणादितरथादग्धमित्यर्थः। प्लुष्यते दह्यते, तालफलवर्णञ्चेति लक्ष्मात्रविषयं पूर्व्वलक्षणयुक्तञ्चेति विशेषणात्। पूर्व्वं हि मांसादिदग्धे वर्णान्यता व्याख्याता। विशेषणस्यास्य स्निग्धरूक्षत्वे तात्पर्य्यम्। व्यापदात्मकेऽप्यस्मिन् दग्धे सम्यग्दग्धत्वं नानुपपन्नं घुणाक्षरन्यायेन कदाचित्त्वगादीनां यथावद्दाहात्।

रूढ़श्च विवर्णो भवति। तदेतच्चतुर्विधसम्यग्दग्धलक्षणमात्म-कार्य्यप्रसाधकं भवति ॥ १३ ॥

भवन्ति चात्र।

अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति।
ततस्तेनैव वेगेन पित्तमस्याप्युदीर्य्यते ॥
तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा।
तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते।
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते ॥ १४ ॥

---

तत्तल्लक्षणं विदित्वा हि विमुक्तसन्देहा भिषजो वक्ष्यमाणमग्निप्रतपनादिकं कर्त्तुमर्हन्ति तदिदमुच्यते आत्मकार्य्यप्रसाधकमिति, आत्मकार्य्यप्रतीकारः ॥१३॥

ननु कथं दग्धेष्वपल्पीयसोः प्लुष्टदुर्दग्धयोस्तीव्रार्चोषादयो वेदनाविशेषाः प्रादुर्भवन्तीत्याह अग्निनेत्यादि। अग्निना कोपितं "कुप द्युतौ" इति धात्वर्थस्मरणात् दीप्तं विदग्धमिति तात्पर्य्यं रक्तं भृशमत्यर्थं प्रकुप्यति विगुणं भवति ततः प्रकोपानन्तरं तेन प्रकुपितेनैव रक्तेनेत्यर्थः, वेगेन जवेनास्या-तुरस्य पित्तमुदीर्य्यते उद्रिक्ततामापाद्यते ; कुतः ? आह तुल्येत्यादि। हि यस्मात् एते उभे पित्ताग्निकोपितरक्ते तुल्यवीर्य्ये उष्णवीर्य्यतया वीर्य्यतस्तुल्ये तथा रसतः कटुकरसतया द्रव्यतश्चाग्नेयत्वेन तुल्ये ; रसतस्तथा द्रव्यतश्च तुल्यवीर्य्ये तुल्यप्रभावे इति वार्थः, "वीर्य्यं बले प्रभावे च" इत्यमरानुशास-नात्। तेनोभयोस्तुल्यत्वेनास्य प्लुष्टदुर्दग्धार्त्तस्य प्रकृत्या तीव्रा वेदनास्तोदा-दयः प्रादुर्भवन्ति, विदह्यते चोषादिभिर्विशेषेण दह्यते चायं ; न त्वतिदग्धे सम्यग्दग्धे च शोणितस्य भस्मीभावादिति भावः। अनुष्णशीतत्वेन वक्ष्य-माणस्याऽपि शोणितस्योष्णवीर्य्यत्वादयो भावा अग्निसम्बन्धाल्लक्षणीया दग्ध-मौक्तिकवत् ॥ १४ ॥

दग्धस्योपशमार्थाय चिकित्सां सम्प्रवक्ष्यते ।
प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम् ॥
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ।
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यति शोणितम् ।
तस्मात् सुखयति ह्युष्णं न तु शीतं कथञ्चन ॥ १५ ॥
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्याद्भिषक् पुनः ।
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत् ॥ १६ ॥
सम्यग्दग्धे तुगाक्षीरी-प्लक्ष-चन्दन-गैरिकैः ।
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक् ॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत् ।
पित्तविद्रधिवच्चैनं सन्ततोष्माणमाचरेत् ॥ १७ ॥
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम् ।
क्रियां कुर्य्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥

---

उक्तमर्थमन्वयव्यतिरेकाभ्यामुपपादयति शरीर इत्यादिना । अतिस्कन्दयति भृशं स्त्यानीकरोति । स्कन्नेन हि शोणितेन निरुद्धे वायुतेजसी शूलशोफरागादीनापादयतस्तदिदमुच्यते तस्मादित्यादि । सुखयति सुखं सम्पादयति ॥ १५ ॥

शीतामित्यादि अत्राविशेषेणोक्तेऽप्यादावुष्णां पश्चाच्छीतामित्याहुः॥१६॥

तुगाक्षीरी वंशलोचना, प्लक्षोऽश्वत्थः, चन्दनं रक्तचन्दनम्, अमृता गुडूची । सन्ततोष्माणमविच्छिन्नोष्माणम् ॥ १७ ॥

अतीत्यादि । का नाम सा क्रियेत्याह शालीत्यादि । शालितण्डुलकण्डनैः शालितण्डुलानां मुषलादिना निर्म्मलीकरणेन निर्गतैः "कुँड़ा" इति

तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् ।
व्रणं गुडूचीपत्रैर्वा छादयेदथवौदकैः ।
क्रियाञ्च निखिलां कुर्य्याद्भिषक् पित्तविसर्पवत् ॥ १८ ॥
मधूच्छिष्टं समधुकं लोध्रं सर्ज्जरसं तथा ।
मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्विपाचयेत् ।
सर्व्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥ १९ ॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत् ॥ २० ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् ।
श्वसिति क्षौति चात्यर्थमत्याध्मति कासते ॥
चक्षुषोः परिदाहश्च रागश्चैवोपजायते ।
सधूमकं निश्वसिति घ्रेयमन्यन्न वेत्ति च ।
तथैव च रसान् सर्व्वान् श्रुतिश्चाप्युपहन्यते ॥

---

लौकिकनामधेयैर्गुड़ञ्चैरित्यर्थः । तिन्दुकीत्वक्कषायैरिति तिन्दुकी नामौषधिः "गाव" इत्यभिधीयते, तस्यास्त्वचा कषायैर्वटादिभिश्चेत्यर्थः । घृतमिश्रैरिति सर्व्वत्रान्वीयते । औदकैरुदकोद्भवैः पत्रैः पद्मादिकोमलपत्रैरिति यावत् ॥१८॥

मधिवत्यादि । अत्र मधूच्छिष्टादीनां पादिकः कल्को घृतस्य प्रस्थो जलं चतुर्गुणम् ॥ १९ । २० ॥

प्रसङ्गतः प्रतिकर्त्तव्यत्वेन व्याचिख्यासितेष्वर्थेषु मध्येऽग्निसम्बन्धित्वात् प्रथमं तावत् धूमोपहतं लक्षणतो व्याकर्त्तुं प्रतिजानीते अत इत्यादिना । धूमेनोपहतो मुखनासानुसरणात् प्रपीड़ितो धूमोपहतः । क्षौति हिक्कतीत्यर्थः । क्षौतेर्हिक्कनार्थो नानुपपन्नः "क्षौति यश्चातिमात्रम्" इति तदर्थप्रयोगदर्शनात् । धूमस्य हिक्काजनकत्वं परमतोऽपि निवेदयिष्यते । अत्याध-

तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति ।
धूमोपहत इत्येवं शृणु तस्य चिकित्सितम् ॥ २१ ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥
वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति ।
विधिनानेन शाम्यन्ति सदनक्षवथुज्वराः ॥
दाहमूर्च्छातृड़ाध्मान-श्वासकासाश्च दारुणाः ।
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥
सम्यग्गृह्णातीन्द्रियार्थान्मनश्चास्य प्रसीदति ।
शिरोविरेचनं तस्मै दद्याद्योगेन शास्त्रवित् ॥
दृष्टिर्विशुध्यते चास्य शिरोग्रीवञ्च देहिनः ।
अविदाहि लघु स्निग्धमाहारञ्चास्य कल्पयेत् ॥ २२ ॥
उष्णवातातपैर्दग्धे शीतः कार्यो विधिः सदा ।
शीतवर्षानिलहते उष्णं स्निग्धञ्च शस्यते ।
तथातितेजसा दग्धे सिद्धिर्नास्ति कथञ्चन ॥ २३ ॥

---

अति भृशमाध्मातो भवति एवकारोऽत्रात्यन्तायोगव्यवच्छेदार्थः परिदाहो रागश्चोपजायत एवेत्यन्वयः ॥ २१ ॥

सर्पिरित्यादि। एषु त्रिषु योगेष्वनुक्तमपि मदनफलं ग्राहयन्ति कुशला वमनायेति विशेषणात्। क्षवथुशब्दस्येह हिक्कायामेव तात्पर्यं चीतीति आशुक्तिः ॥ २२ ॥

उष्णेत्यादि। दग्धे दग्धवत् प्रतिभाते इत्यर्थः। शीतवर्षानिलहते

इन्द्रवज्राग्निदग्धे तु जीवति प्रतिकारयेत् ।
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽग्निकर्म्मविधि-
र्नाम द्वादशोऽध्यायः ।

---

शीतवृष्टिवातार्त्ते । अतितेजसा इन्द्रवज्रेणेत्यर्थः । इन्द्रवज्राग्निदग्धे इत्य-ग्निशब्देनेह साक्षात्सम्बन्धं निरुणद्धि, तेन हि म्रियत एव । अतिरि..हेतार्थ-सन्यत् ॥ २३ । २४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थानेऽग्निकर्म्मविधिर्नाम द्वादशोऽध्यायः ।

---

# त्रयोदशोऽध्यायः ।

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

नृपाढ्य-बाल-स्थविर-भीरु-दुर्ब्बल-नारी-सुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः ॥ २ ॥

त[illegible] वातपित्तकफदुष्टशोणितं यथासङ्ख्यं शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्व्वाणि सर्व्वैर्वा ॥३॥

---

व्याकर्त्तव्यत्वेनाभ्युपगतेषु क्षारादिविधिषु मध्ये जलौकाविधिरेवावशिष्यते तदिदानीं जलौकावचारणीयमधिकरोति अथात इत्यादिना । अवचार्य्यते-ऽनेनेत्यवचारण[illegible] [illegible]रणमधिकृत्य कृतोऽध्यायो जलौकावचारणीयोऽध्यायः ॥ १ ॥

नृपेत्यादि । सुकुमारा अतिकोमला मृदुप्रकृतय इति यावत् । जलमोको वसतिरस्त्यस्येति मत्वर्थीयोऽच् जलौकसः, बहुवचनञ्चोद्देश्यविधेयभावेनात्रयो वेदाः प्रमाणमितिवत् ॥ २ ॥

नन्वेषां किं वातादिदुष्टिभेदात्त्रिविधमेव शोणितमनेनावसेचयेदित्याह तत्रेत्यादि । तत्रेति सप्तम्यन्तेन तदा नृपादीनां प्रत्यवमर्शः क्रियते न च तेनार्थो भिद्यते "यद्यस्मिन् तत्तस्यैव" इति न्यायात् । सर्व्वाणि सर्व्वैर्वेति । विधिरयमत्रासादितयथोक्तोपायविषय इति गम्यते अनन्तरं तत्र तत्र शृङ्गादीनां प्रशस्तत्वेनाऽभिधानात् । सर्व्वाणि वातादिदुष्टिभेदेन त्रिविधमेवेत्यर्थः, "सर्व्वं वाक्यं सावधारणम्" इति न्यायात् । सर्व्वैरित्यनियमेन शृङ्गादिभिरित्यर्थः ॥ ३ ॥

भवन्ति चात्र ।

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् ।
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ ४ ॥
शीताधिवासा मधुरा जलौका वारिसम्भवा ।
तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥ ५ ॥
अलावु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् ।
तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ ६ ॥

तत्र प्रच्छिते तनुवस्त्रपटलसनावनद्धेन शृङ्गेण शोणित-मवसेचयेदाचूषणात् । सान्तर्दीपयाऽलाव्वा ॥ ७ ॥

---

उक्तमर्थं समर्थयति उष्णमित्यादिना । शीतं शीतगुणं जलमधिवसतीति, शीताधिवासा मधुरेति मधुरार्थकारित्वात् । जलमोकः स्थानमस्यास्तीति जलौका पृषोदरादिः । अलाव्विति वाय्वावरोधसामर्थ्यादुक्तमित्याशुस्तेन काचघटीप्रभृतयोऽपि नानुपपन्नास्तदभावे ॥ ४—६ ॥

तत्रेत्यादि । उपयोगविधावत्र क्रमं हित्वा शृङ्गालाब्वोरुपदेशः सूचीकटाहन्यायादित्यनुसन्धेयम् । अत्र तनुवस्त्रेत्यादिविशेषणं वातप्रचारावरोधार्थम् । कथमपि प्रचरिते हि वाते शोणितं नायाति सुखमाचूषक-शृङ्गेनानाकृष्टत्वादित्यतस्तिस्रश्चतुर्व्वाऽऽनद्धुं खण्डशो वस्त्राणि ग्राहयति पटलशब्देन, पटलं समूहः । अलाव्वा इति "अप्राणिजातेश्चारज्ज्वादीनाम्" इति स्त्रियामूङ् । अलावूफलेनेत्यर्थः । अत्र यत्किञ्चिदाग्नेयं सद्यसारं वाऽन्तान्तः प्रणिधायाग्निं प्रज्वाल्य प्रच्छिते समे देशे सान्तर्दीपामेव तामलावूमधोमुखीकृत्य समसाद्य निदध्याच्छोणितावसेचनार्थमित्युपदेश्यं सान्तर्दीपयेति विशेषणात् ॥ ७ ॥

जलमासामायुरिति जलायुका जलमासामोक इति जलौकसः। ता द्वादश, तासां सविषाः षट् तावत्य एव निर्व्विषाः ॥ ८ ॥

तत्र सविषाः—कृष्णा कर्व्वुरा अलगर्द्दी इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा। वर्म्मिमत्स्यवदायता च्छिन्नोन्नतकुक्षिः कर्व्वुरा। रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दी। इन्द्रायुधवदूर्द्ध्व-राजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्र-पुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधा-भूताकृतिरणुमुखी गोचन्दनेति ॥ ९ ॥

ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महा-गदः पानालेपननस्यकर्म्मादिषूपयोज्यः। इन्द्रायुधादष्टम-साध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः ॥ १० ॥

पारिशेष्यात् प्रकृतार्थमनुसरन् प्रथमं तावत् त्यज्यजलौकापरिहारार्थं जलौकापर्य्यायौ निर्वक्ति जलमित्यादिना। जलमासामायुरित्यायुःपर्य्याय आयुशब्दः "मा वधिष्ठा जटायुं माम्" इति भट्टिः। स चेह गौणः आयुर्घृतमितिवत्। सविषाणां प्रागिहोपन्यासो नितरामनिष्टतमत्वेनैकान्ततः परिहार्य्यत्वं, दैवात्ताभिर्दष्टे सद्यः प्रतिकार्य्यत्वञ्चाख्यातुम् ॥ ८ ॥

तत्रेत्यादि।* वर्म्मिमत्स्यो नाम "वाइम" इति दिक्षायते। कुचि-च्छिन्न इव छिन्नः सूक्ष्मतरः क्वचिच्चोन्नतः कुक्षिरस्येति छिन्नोन्नतकुक्षिः। महागदः सर्पदष्टकल्पे वक्ष्यमाणः ॥ ९। १० ॥

अथ निर्व्विषाः—कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिता-श्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चि-द्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला। यकृद्वर्णा शीघ्र-पायिणी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिकाकृतिवर्णा-ऽनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका, सा च पश्वर्थे। इत्येता अविषा व्याख्याताः ॥११॥

तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि। ता महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्व्विषाश्च विशेषेण भवन्ति ॥ १२ ॥

तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषे-ष्वम्भःसु च सविषाः। पद्मोत्पल-नलिन-कुमुद-सौगन्धिक-कुवलय-पुण्डरीक-शैवालकोथजाता विमलेष्वम्भःसु च नि-र्व्विषाः ॥ १३ ॥

भवति चात्र।

क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥ १४ ॥

---

अथेत्यादि। पिङ्गा पिङ्गलवर्णा। मूषिकाकृतिवर्णा मूषिकलाङ्गूला-कृतिवर्णा इति तात्पर्य्यम्। पश्वर्थाया अपि सावरिकाया इहोपदेशो निर्व्विषाप्रसङ्गेनेति बोध्यम्। तासामित्यादि। सह्यो नर्म्मदासमीपवर्त्ती

तासां ग्रहणमार्द्रचर्म्मणान्यैर्वा प्रयोगैर्गृह्णीयात्। अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्। भक्ष्यार्थे चासामुपहरेच्छैवालं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं तृणमौदकानि च पत्राणि त्र्यहात् त्र्यहाच्चान्यज्जलं भक्ष्यञ्च दद्यात्। सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत्॥ १५॥

भवति चात्र।

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः।
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः॥ १६॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजं स्यात्। गृहीताश्च ताः सर्षप-रजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभीरोगं ग्राहयेत्। श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमासां(?)-दृणुयात्, अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत। यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत्॥ १७॥

---

पर्व्वतविशेषः, इतरे तु देशभेदाः। वल्लूरं शुष्कमांसम्। अथेत्यादि। संवेश्य शाययित्वेत्यर्थः। यद्यरुजं स्यात्तर्हि मृद्गोमयचूर्णैर्व्विरूक्ष्य निःस्नेहीकृत्येत्यर्थः। सरुजश्च पिचुप्रभृतिनेति तात्पर्य्यम्॥ ११—१७॥

यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति, गृह्णतीञ्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च। दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति, शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् ॥ १८ ॥

अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलीभ्यां शनैः शनैरनुलोममनुमार्ज्जयेदामुखाद्वामयेत् तावद्यावत् सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्व्वान्ता तां पुनः सम्यग्वामयेत्। दुर्व्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्व्ववत् सन्निदध्यात् ॥ १९ ॥

शोणितस्य च योगायोगानवेक्ष्य, जलौकोव्रणान् मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद्बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति ॥ २० ॥

---

यदेत्यादि। सेचयेदिति सेचनं मुखादध एव बोध्यं, मुञ्चेद्धि मुखस्थिता प्रायेण। शुद्धमादत्त इति दुष्टशोणिताभावादेव, उक्तं हि "संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम्। आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव" इति ॥ १८। १९ ॥

शोणितस्येत्यादि। इहातियोगायोगमिथ्यायोगा नामाऽप्रशस्ताः सर्व्व एव योगा अयोगा उच्यन्ते इति गम्यते, मधुनेत्याद्यनन्तरोक्तैः। अवघट्टनेन

भवति चात्र।

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम्।
जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान्॥ २१॥

इति सुश्रुतसंहितायां सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः।

---

चालनेन हि सम्यग्योगे मिथ्यायोगे च शोणितं प्रवर्त्तयत्यौष्ण्यात्, इतराणि चातियोगे निरुन्धन्ति स्कन्दनादिस्वभावात्। अत्राविशेषेऽपि कर्म्म चैतत् बलाद्यपेक्ष्यैव कर्त्तव्यम्। यदाह चरकः "बलदोषप्रमाणाद्वा विशुद्धा रुधिरस्य वा। रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा" इति॥ २०। २१॥

इति श्रीडल्हणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः।

# चतुर्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

तत्र पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते ॥ २ ॥

---

न ह्यनवबुद्धशुद्धदुष्टशोणितस्वलक्षणा भिषजः समीक्ष्य शुद्धं पालयितुं दुष्टं वा विस्रावयितुं प्रभवन्ति पूर्व्वोक्तेन विधिनेति स्वलिङ्गतो विलिङ्गतश्च शोणितं व्याचिकीर्षुरिदानीं शोणितवर्णनीयमधिकरोति अथात इत्यादिना । समानं पूर्व्वेण ॥ १ ॥

रस एव हि रञ्जकसमाख्येन पित्तेन मिश्रीभूय शोणितसंज्ञां लभत इति व्याचिख्यासया प्रथमं तावद्रसोऽधिक्रियते तत्रेत्यादिना । अत्र बुद्धा समाकृष्टतया विप्रकृष्टस्याऽपि पुरुषस्य तदा परामर्शः । आहारशब्दस्याजहत्स्वार्थया लक्षणया सुवर्णरजतादिष्वपि प्रवर्त्तते पाञ्चभौतिकस्येति विशेषणात्, षड्रसस्येति विशेषणाच्च "सर्व्वरसाभ्यासो बलकराणां श्रेष्ठ इत्यनुशासनादेवोपात्तं न तु तन्मात्रं ग्राहयितुं ततो हीनानामप्युपयोगादित्यवश्यं वक्तव्यम् । तदयमर्थः । तत्र प्रागुक्ते पुरुषे पाञ्चभौतिकस्य पञ्चभूताभिनिर्वृत्तस्य स्थावरजङ्गमपार्थिवात्मकस्येति यावत्, चतुर्विधस्य भक्ष्यभोज्यलेह्यपेयेतिचतुर्धा भिन्नस्य, षड्रसस्य षड्रससमन्वितस्य तदसम्पत्तावेकादिरसस्य च, द्विविधवीर्य्यस्याग्नीषोमीयत्वाज्जगतः शीतोष्णवीर्य्यस्य, अष्टविधवीर्य्यस्य "केचिदष्टविधमाहुः" इत्याद्यनागतावेक्षणात् शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णवीर्य्यस्य वा, अनेकगुणस्य यथासम्भवं सान्द्रस्थूलादिगुणानुगतस्य, उपयुक्तस्य प्रकृत्यनुगुणतया न्याय्यस्य यथाविध्यभ्यवहृतस्य वा,

तस्य च हृदयं स्थानं स हृदयाच्चतुर्व्विंशतिं धमनीरनुप्रविश्योर्द्ध्वगा दश दश चाधोगामिन्यश्चतस्रश्च तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा ॥ ३ ॥

तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षय-

---

सम्यक् परिणतस्य परिपक्वस्याहारस्य तेजो घृतं शुक्रमिव वा भूतः प्रसादांशेनोत्पन्नस्तेजोभूतः, परमसूक्ष्मोऽणीयान् यन्त्रादिना दुर्निरीक्ष्य इति तात्पर्य्यम्, यः सारो निर्म्मलत्वेन श्रेष्ठोऽंशः स रस इत्युच्यते ॥ २ ॥

स च रसः पित्ताशयमभिप्रपन्नाभिस्ताभिस्ताभिः सूक्ष्माभिर्धमनीभिः पूर्व्वोक्तादाहाराद्विविक्तो यथायोगं शरीरं तर्पयन् पृष्ठवंशमनु नाभिसमप्रदेशस्थितं हृन्नामिरसवहस्रोतोमूलसंश्लिष्टं रसाशयं पूरयन् तत्स्रोतःप्रसृताभिर्धमनीभिः शरीरतर्पणादिकं करोतीति यदाविष्कृतं भविष्यति तदेव समासतः प्रसङ्गादिहोपदिशन्निदमुच्यते तस्येत्यादि । नेह हृदयशब्दो हृदि प्रवर्त्तते रससरूपेणानभिसम्बन्धात्, हृदयं गच्छन्नेव हि रसः स्वस्रोतोऽनुविद्धां हृदयसंश्रयिणीं धमनीमवाप्य श्यामलत्वमापद्यते हृदये च रक्तत्वं, किन्तर्हि ह्रयमिति व्युत्पत्त्या गौण्या वृत्त्या वा परम्पराद्धृदयसंश्लिष्टे रसाशये प्रवर्त्तते तस्य च स्थानत्वेनोपदेशादितरत्र शश्वदेव रसो गतिमान् भवतीत्यपि सूचितं भवति तिष्ठतेर्गतिनिवृत्त्यर्थत्वात् । तथाच "अहरहर्गच्छतीति रसः" इत्यनन्तरोक्तमविरुद्धम् । चतुर्व्विंशतिर्धमन्यस्तु नाभिप्रभवा वक्ष्यन्ते । यथा च ता अनुप्रविश्य रसः शरीरतर्पणादौ प्रभवति तच्च धमनीव्याकरणे विशदं व्याकरिष्यामः । अचेतनस्यापि सतस्तस्यैवं कर्म्माऽभिनिष्पत्तौ किञ्चित्कारणं नोपलभ्यत इत्युक्तमदृष्टेत्यादि ॥ ३ ॥

ननु कथं त्वगावृतत्वेन यन्त्रप्रयोगानर्हे जीववति शरीरे परमसूक्ष्मत्वेनोपदिष्टस्य रसस्य गतिमुपलभ्य विमुक्तसन्देहाः सर्व्वमेतत् श्रद्दधामहे एवं-

ट्ट्विवेक्षतै: । तस्मिन् सर्व्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति । अत्रोच्यते स खलु द्रवानुसारी स्नेहन-जीवन-तर्पण-धारणादिभिर्विशेषै: सौम्य इत्यवगम्यते ॥ ४ ॥

स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति ॥ ५ ॥

भवतश्चात्र ।

रञ्जितास्तेजसा त्वाप: शरीरस्थेन देहिनाम् ।
अव्यापन्ना: प्रसन्नेन रक्तमित्यभिधीयते ॥ ६ ॥

---

वादिनामवसरं सुचयन्नाह तस्येत्यादि । चयहृद्विवेक्षतै: अनाहारादित: शरीरक्षयादिभिस्तस्य रसस्य गतिरुपलक्षयितव्या, यदि हि रसगतिर्नाभविष्यत्तर्ह्याहारदोषादित: शरीरक्षयादयोऽपि नाभविष्यन्नित्ययमाशय: । उपलक्षयितव्या बाहुल्येन लक्षणीया । अल्पशस्तु सुखादौ यत्नप्रयोगिनेति भाव: । "उपोऽधिके च" इति पाणिनिसूत्रम् । न हि कश्चित् प्रकृतितो रसमजानन् गतिमत्त्वादेव क्षीणे वृद्धे वा समानासमानद्रव्याण्युपयोक्तुमुत्सहेत-इत्याशङ्कते तस्मिन्नित्यादि । द्रवत्वयोगात् द्रवं जलादिकं जलं वाऽनुसर्त्तुं सदृशीकर्त्तुं शीलमस्येति द्रवानुसारी, विशेषैर्विशिष्टै: सोमगुणकृत्यैरित्यर्थ: । शेषमतिरोहितार्थम् ॥ ४ ॥

स इत्यादि । रागोऽत्र परमलौहित्यमेव, रसो हि रक्तं बुभूषु: स्थानाद्रुतो हृदयमधिष्ठाय लोहितीभूय एकेनांशेनितस्तत: सञ्चरत्यपरेण च यकृत्प्लीहानावाप्नोति । नन्वेवं हृदयस्थस्याऽपि पित्तस्य रागकारित्वेऽभ्युपगते यकृत्प्लीहस्थस्यैव वक्ष्यमाणं रञ्जकत्वमनुपपन्नं स्यात्, नैष दोष: ; तत्राऽपि रञ्जेर्विशिष्टलौहित्यापादानार्थपरत्वात् ॥ ५ ॥

उक्तमर्थं विशदीकरोति रञ्जिता इत्यादिना । शरीरस्थेन शरीरैकदेशस्थेन यकृत्प्लीहहृदयस्थेनेति यावत् तेजसा पित्तेनेत्यर्थ: । आपोऽत्र

रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते ।
तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥
आर्त्तवं शोणितन्त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः ॥ ८ ॥

---

रसरूपाः । रसादित्यादि । रज आर्त्तवं संज्ञाऽस्येति रजःसंज्ञं, विशेषणमिदं धातुशोणितव्यवच्छेदार्थं तेन बालानां वृद्धानां वा तद्वत्प्रवृत्तं शोणितमभिसमीक्ष्य विज्ञातं धातुशोणितमेवाध्यवस्यन्ति कुशलाः । रसादेवेत्येवकारावष्टम्भेनास्य शुक्रवन्मज्जरूपेण परिणताद्रसात् प्रवृत्तिं निरुणद्धि । आर्त्तवं हि मासेनाविर्भूय शुक्रं सदृशीकरोतीति शुक्रवन्मज्जत्वेन परिणताद्रसात् प्रवृत्तिरागच्छति । द्वादशानां पूरणो द्वादशस्तं प्राप्येति द्वादशात्, एवमेव पञ्चाशत इत्यपि व्याख्येयम् । रजःप्रवृत्तिनिवृत्त्योः कालनियमोऽयं नात्युष्णशीतदेशाऽभिप्रायेणेति बोध्यम् । दृश्यते हि रजः शीतबहुले देशेऽर्व्वागुष्णबहुले च प्राक् प्रवर्त्तते निवर्त्तते चेति ॥ ६ । ७ ॥

आर्त्तवमित्यादि । पूर्व्वोक्तं धातुशोणितं त्वनुष्णाशीतमिति वक्ष्यतीति ततो विशेषणार्थोऽयं तुशब्दः । आर्त्तवं रजः । गर्भस्याग्नीषोमीयत्वन्तु "सौम्यं शुक्रमार्त्तवमाग्नेयम्" इत्यादिशास्त्रात् आग्नेयानां तेषां. तेषां भावानां सत्त्वाच्च लक्षणीयम् । नन्वार्त्तवं शोणितं नास्य गर्भस्य कारणं किन्तर्हि गर्भधारणयोग्यावस्थाप्रत्ययकरं, तद्धि बीजे उपचिते धमनीमुखात् प्रवर्त्तते, सर्व्वमेतदुपरिष्टादुपपादयिष्यामस्तत्कथमुपपन्नं भवति आर्त्तवमित्यादीति चेन्न आग्नेयबीजसम्बन्धित्वेनास्याप्याग्नेयत्वेनाभ्युपगमात् । तथाचाग्नीषोमीये गर्भे यदाग्नेयं बीजं तत्सम्बन्धित्वादेतच्छोणितमप्याग्नेयमित्ययमाशयः । सौम्याग्नेयाद्रसपित्तादुत्पन्नस्यार्त्तवस्याग्नेयत्वं द्रवाद्रक्तादुत्पन्नस्य मांसस्य स्थिरत्वमिव नानुपपन्नं परिणामशक्तेरचिन्त्यत्वात् । रञ्जिता इत्यादिनाऽग्न्यबगुणबहुलत्वेन व्याख्यातं धातुशोणितं प्रति मतान्तरं दर्शयन्नाह पाञ्चेत्यादि । जीवयतीति जीवं जीवमूलं रक्तं जीवरक्तम् ॥ ८ ॥

विस्रता द्रवता रागः स्पन्दनं लघुता तथा ।
भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ ९ ॥
रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥ १० ॥

तत्रैषां सर्व्वधातूनामन्नपानरसः प्रीणयिता । तत्र रस गतौ धातुरहरहर्गच्छतीत्यतो रसः ॥ ११ ॥

स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला

---

पाञ्चभौतिकत्वमसृक्लक्षणाभ्याह विस्रतेत्यादिना । विस्रता आमगन्धिता, द्रवता विस्राविता, रागो लोहितवर्णता, स्पन्दनं चलता सर्व्वशरीरानुसारितेति तात्पर्य्यम् । न च स्पन्देश्चलनार्थोऽप्रसिद्धः स्पन्दति चलतीति व्युत्पत्त्या रथार्थे स्पन्दनशब्ददर्शनात् । लघुता चेह द्रवद्रव्यापेक्षयैव कल्पनीया "शोणितं गुरु विस्रं स्यात्" इत्यनागताविक्षणात् । रसादित्यादि । अत्र विशेषयति चरकः—"तेजो रसानाम्" इत्युपक्रम्य "वाय्वम्बुतेजसा रक्तमूष्मणा चाभिसंयुतम् । स्थिरतां प्राप्य मांसं स्यात् स्वोष्मणा पक्वमेव तत्" इत्यादि । अत्र मांसादीनामुपदेशः प्रासङ्गिक इत्यवधेयम् ॥ ९ । १० ॥

रसादित्यादिना रसस्य रक्तादिधातुपोषकत्वमभिहितं न तु रसपोषकत्वमित्याह तत्रेत्यादि । तत्र धातुषु मध्ये अन्नपानादुत्पन्नो रसोऽन्नपानरसः । सर्व्वधातूनां रसादीनां, चरकेऽप्युक्तम्—"पुष्यन्ति त्वाहाररसाद्रस-रुधिर-मांस-मेदोऽस्थि-मज्ज-शुक्रौजांसि" इत्यादि । रसं निर्वक्ति गतिमस्त्वमाख्यातुं तत्रेति ॥ ११ ॥

ननु रसस्तथा तथा परिणमन् कियन्तं कालमेकैकस्मिन् रक्तादाववतिष्ठत इत्याह स इत्यादि । त्रीणि त्रीणीति वीप्सा सुखावबोधार्था । त्रीणि कलासहस्राणि पञ्चदश च कला मिलित्वा पञ्चदशाहोरात्रा भवन्त्य-

एककस्मिन् धातावतिष्ठते। एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवमिति॥ १२॥

अष्टादश सहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये।
कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः॥ १३॥

स शब्दार्च्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं

---

होरात्रस्य काष्ठात्रयाधिकविंशतिकलात्मकमुहूर्त्तानां त्रिंशन्मितत्वेनाऽभ्युपगमात् तदिदमुच्यते एवमित्यादि। न चानेन "षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्त्तनम्। सन्तत्या भोज्यधातूनां परिवृत्तिस्तु चक्रवत्" इति तन्त्रान्तरीयं विरुद्धं भवति, पञ्च पञ्च दिनानि पच्यमानस्य रसादेः षष्ठे षष्ठे परिवर्त्तनमभिप्रेत्योक्तेः। भोज्यधातूनां भोज्यानां धातूनाञ्च सन्तत्या सातत्येनेति तदर्थः। स्त्रीणामित्यादि। अत्राविशेषेऽपि धात्वन्तरत्वेनापरिणतो रसो मासेनार्त्तवं चकारान्मज्जरूपेण परिणम्य चाल्पं शुक्रमित्येव व्याख्येयम्, "रसादेव स्त्रिया रक्तं" तथा "एवं मासेन रसः शुक्रीभवति" इत्यनुशासनात् "शुक्राल्पत्वात् बलं स्त्रीणामल्पम्" इति शास्त्रान्तराच्च। इतिशब्दो धातूत्पत्तिक्रमव्याख्यापरिसमाप्त्यर्थः॥ १२॥

मासेनेत्यादिनोक्तमर्थं कलापरिसंख्यानेन स्फुटीकरोति अष्टेत्यादिना। हि यस्मात् अस्मिन् मासाख्ये समुच्चये कलासमूहे कलानाम् अष्टादशसहस्राणि नवतिश्च संख्याः स्वतन्त्रपरतन्त्रयोः प्रोक्ताः "त्रिंशत्काष्ठाः कला" इत्यादिना "तौ मासः" इत्यन्तेन एवंविधेन च ग्रन्थेन व्याख्याताः, अतस्त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातावतिष्ठमानो रसो रक्तादिरूपेण परिणम्य शुक्रीभवन् मासं पूरयतीत्युक्तं मासेनेत्यादीत्ययमाशयः॥ १३॥

स इत्यादि। शब्दार्च्चिर्जलसन्तानवदिति अर्च्चिर्दीप्तिर्मयूख इति यावत्। "ज्वालाभासोर्नपुंस्यर्च्चिः" इत्यमरः। सन्तानस्तु विस्तृतिः। दृष्टान्तत्रितयमेतद्रसगतेस्तारतम्यप्रदर्शनार्थमिति गम्यते। अर्च्चिःसन्तानो

केवलम् । वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद्विरेचन-वदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥ १४ ॥

यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीत्यथ वास्ति, सतां भावानामभिव्यक्तिरितिज्ञात्वा

---

हि शब्दसन्तानादाशुतरो जलसन्तानाच्चाशुतमः। एवंशब्दश्चावधारणार्थः, "स्युरेवन्तु पुनर्वै वेत्यवधारणवाचकाः" इत्यमरः। तदयमर्थः। स रसः शोणितादिरूपेण परिणमन् वातपित्तकफप्रकृतिभेदात् शब्दादिसन्तानवत् अणुना विशेषेण गतेराश्वाशुतरमन्दत्वरूपेण भेदलेशेनैव केवलं कृत्स्नं शरीर-मनु लक्ष्यीकृत्य धावति गच्छतीति। अत्र चोणि चीणीत्यादिनोक्ता गतिरेव मन्देति बुद्धिमता द्रष्टव्यं पञ्चाहोरात्रेभ्योऽधिके हि काले क्वचिदपि रस-परिणामं नोपदिश्यते। अत आश्वाशुतरयोर्गत्योस्तदपेक्षत्वेनोपलम्भात् "शोणितत्वं तृतीयेऽह्नि चतुर्थे मांसतामियात्" इत्यादिवचनान्यप्यविरु-द्धानि भवन्ति। उक्तापवादमाह वाजीत्यादिना। तुकारो विशेषणार्थः। रसः स्वशक्त्या मासेन गतिविशेषात्ततोऽवरेण वा केनचित्कालेन शुक्री-भवति। वाजीकरण्यः शुक्रवर्द्धिन्य ओषधयस्तु उपयुक्ताः प्रयुक्ताः सत्यः स्वबलम् आत्मबलं प्रभाव इति यावत् गुणाश्च वीर्य्याद्यास्तेषामुत्कर्षात् स्वबलगुणोत्कर्षात् वक्ष्यति च "तद्द्रव्यमात्मना किञ्चित्किञ्चित् वीर्य्येण" इत्यादि। विरेचनवत् विरिच्यते एभिरिति विरेचनानि तद्वत्, विरेचनानि यथा शीघ्रं मलं विरेचयन्ति तथा शुक्रं शीघ्रं विरेचयन्ति आहाररसान्निः-सारयन्तीत्यर्थः ॥ १४ ॥

नन्वेतच्चेत्तर्हि तत्कथमाहारं कुर्व्वतामपि बालानां शुक्रमार्त्तवञ्च न प्रादुर्भवत इत्याशङ्क्याह यथेत्यादि। हिशब्दो निश्चयार्थः। मुकुलं कलिका। "मुकुलं कलिका कली" इति माधवः। अस्तीति वक्तुं न शक्यम् अनुपलब्धेरिति भावः। "नाभाव उपलब्धेः" इति वेदान्त-सूत्रम्। पक्षान्तरमाह नैवेति। अथेत्ययं समुच्चयार्थः। नास्ती-

केवलं सौक्ष्म्यान्नाभिव्यज्यते, स एव गन्धो विवृतपत्रकेशरैः कालान्तरेणाभिव्यक्तिं गच्छति ; एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयोऽथार्त्तवादयश्च विशेषाः, नारीणां रजसि चोपचीयमाने शनैः शनैः स्तन-गर्भाशययोन्यभिवृद्धिर्भवति ॥ १५ ॥

स एवान्नरसो वृद्धानां जरापक्वशरीरत्वादप्रीणनो भवति । तएते शरीरधारणाद्धातवइत्युच्यन्ते ॥ १६ ॥

---

त्यपि वक्तुं नैव कथञ्चिदपि न शक्यमित्यर्थः । अवश्यम्भाविनो ह्यर्थाः सन्त एव भवन्ति नासदुत्पत्तेरिति भावः । किन्तर्हि वास्तीति । एवार्थोऽयं वाशब्दः । तदयमर्थः । सतां विद्यमानानां भावानां पदार्थानाम् अभिव्यक्तिः प्रत्यक्षयोग्यता भवति नासतामिति तात्पर्य्यम् ; "आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा" इति न्यायात् । इतिकृत्वा इतिहेतोः पुष्पमुकुलस्थो गन्धोऽस्त्येवेति वक्तुं शक्यं न तु नास्तीत्यनन्तरमभिव्यक्तेरिति भावः । अतोऽनुपलब्धिः सौक्ष्म्यादेव न स्वभावादिति व्यक्तमुपदेष्टुमाह केवलमित्यादि । सौक्ष्म्यात् केवलं नाऽभिव्यज्यते वस्तुतः पुष्पमुकुलस्थो गन्धोऽस्त्येवेति निष्कर्षः । यथा स एव पुष्पमुकुलस्थः सौक्ष्म्यादनभिव्यक्त एव नान्य इत्येवकारार्थः, विवृतपत्रकेशरैः यथासम्भवं विस्तृतदलकिञ्जल्कैः कारणैः कालान्तरेणाऽभिव्यक्तिं गच्छति, एवं बालानामपि वयःपरिणामात् वयोऽभिवृद्ध्या शुक्रवहस्रोतोमुखविस्फुटनादित्यर्थः । शुक्रप्रादुर्भावोऽनभिव्यक्तस्य शुक्रस्य व्यक्तीभावो भवति न त्वसत उत्पत्तिरिति भावः । रोमराज्यादय आर्त्तवादय इत्यादिग्रहणेन पुंसां नारीणाञ्च ते ते आकृतिविशेषा आदिश्यन्ते । अत्र शुक्रार्त्तवेतरेषामादेशः प्रासङ्गिकः ॥ १५ ॥

नन्वहरहस्तर्पयतीति तर्पणोऽयं रसः कथं वृद्धान् न तर्पयतीत्याह स इत्यादि । जरया पक्वं विनाशोन्मुखं शरीरमेषामिति जरापक्वशरीरास्तेषां

तेषां क्षयवृद्धी शोणितनिमित्ते, तस्मात् तदधिकृत्य वक्ष्यामः। तत्र फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टम्। नीलं पीतं हरितं श्यावं विस्रमनिष्टं

---

भावस्तस्मात्। "स्यादिनाशोन्मुखं पक्वम्" इत्यमरः। अप्रीणनो मनाक् तर्पण इत्यर्थः "वृद्धो याप्यानां श्रेष्ठतम" इत्युक्तेः। शास्त्रे व्यवहारार्थं रसादीनां सामान्या संज्ञा क्रियते तइत्यादिना। तइति बुद्ध्या समाकृष्टानाम् एतइति पुरोवर्त्तित्वेन परामर्शो झटितिसंशयमवबोधार्थः। तएते रसादयः शुक्रान्ता भावा इत्यर्थः। एतेनैवौजोऽप्यादिष्टं भवत्यनन्यभावात्। वक्ष्यति हि "धातूनां यत्परं तेजस्तत्खल्वोजः" इति। नेह धातुशब्दः पङ्कजादिवत् योगरूढ़त्वेन प्रवर्त्तते किन्तर्हि पाचकादिवत् यौगिकत्वेन दोषेष्वपि धातुशब्ददर्शनात्। नन्वेवं सिरादिष्वपि धातुशब्दः प्रसज्येत शरीरधारकत्वसामान्यात्, नैष दोषः ; इह हि गत्या शरीरपोषकत्वे सति शरीरधारणात् धातुत्वमभिप्रेयते ; सिरादयस्तु न तथेति धातुत्वाप्रसक्तिः। अतएवोक्तञ्च "सिरास्नायुवसास्तन्यत्वचो गतिविवर्ज्जिताः। धातुभ्यश्चोपजायन्ते तस्मात्ता उपधातवः" इति। उपमिता धातुभिरित्युपधातवः। इतिशब्दो धातुसप्तकसामान्यव्याख्यापरिसमाप्त्यर्थः॥ १६॥

सम्प्रति प्रस्तुतं शोणितमधिकुर्व्वन्नस्य रसान्तरजत्वेऽपि रसादिसर्व्वधातुक्षयवृद्धिनिमित्तत्वं लक्षणीयमित्येव विजिज्ञापयिषया आह तेषामित्यादि। तेषां धातूनां क्षयवृद्धी शोणितनिमित्ते इति शोणितस्येह निमित्तत्वं रसक्षयवृद्धिहेतुत्वाल्लक्षणीयम्। यथाकथञ्चित्क्षीणे हि शोणितेऽग्निमान्द्यं वातकोपश्चोत्पद्येते वक्ष्यति च "धातुक्षयात् स्रुते रक्ते" इत्यादि। अतस्तदात्वे आहारस्यासम्यक्परिणामात् यथावद्रसो नोपचीयते धात्वन्तराण्यभिवर्द्धयितुमिति धातवः क्षीयन्ते। स एव पुनारसः सति प्रमाणवति शोणिते वाय्वग्न्योरनुगुणत्वेनाहारस्य सम्यक्परिणामात् तथोपचीयते प्रभवति यथा धात्वन्तराण्यभिवर्द्धयितुमनायासेनेति धातवो वर्द्धन्ते इति। फेनिलमित्यादि। परुषं रूक्षम् अस्कन्दि कदाचिदपि न संहतं भवति।

पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम् । गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च । सर्व्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टं पित्तवद्रक्तेनातिकृष्णञ्च । द्विदोषलिङ्गं संसृष्टं जीवशोणितमन्यच्च वक्ष्यामः ॥ १७ ॥

इन्द्रगोपप्रतीकाशमसंहतमविवर्णञ्च प्रकृतिस्थं जानीयात् ॥ १८ ॥

विस्राव्याण्यन्यच्च वक्ष्यामः । अथाविस्राव्याः—सर्व्वाङ्गशोफः क्षीणस्य चाम्लभोजननिमित्तः, पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनाञ्च श्वयथवः ॥ १९ ॥

---

अनुद्भूतरूपस्याऽपि वायोररुणादिवर्णकर्त्तृत्वमचिन्त्यम् । ननु जीवशोणितगमकलक्षणानि पित्तदुष्टे पीते शोणितेऽपि वर्त्तन्ते तत्कथमनयोर्भेदं जानीम-इत्याह जीवेत्यादि । अन्यच्चेति वमनादिव्यापच्चिकित्सिते जीवशोणितं जीवशोणितविशिष्टलिङ्गमित्यर्थः ॥ १७ ॥

**शुद्धशोणितलक्षणमाह इन्द्रेत्यादिना ।** इन्द्रगोपो नाम लोहितकीटभेदः । अविवर्णमविकृतवर्णं तपनीयादिवर्णमिति यावत्, "तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम् । गुञ्जाफलसवर्णञ्च विशुद्धं विद्धि शोणितम्" इति चरकीकवाक्यत्वात् । एवं वर्णभेदस्तु प्रकृतिभेदाल्लक्षणीयः ॥ १८ ॥

विस्राव्याणीत्यादि । अन्यच्चेत्यष्टविधशस्त्रकर्म्मीये । अथेत्यादौ क्षीणस्याम्लभोजननिमित्तश्च सर्व्वाङ्गशोफ इति समन्वयः । शोफस्यास्य क्षीणविषयत्वेनैव वक्ष्यमाणत्वेऽपि क्षीणस्येति विशेषणं क्षीणावस्थायामेवाविस्राव्यत्वमाख्यातुमिति पृथगुपादानं नापार्थकम् । न च क्षीणस्य नित्याविस्राव्यशोणितत्वादपार्थकमिति वाच्यं व्यवसायाऽभिवृद्धये पौनःपुन्येना-

तत्र शस्त्रविस्रावणं द्विविधं प्रच्छानं शिराव्यधनञ्च । तत्र ऋज्वसङ्कीर्णं सूक्ष्मं सममनवगाढ़मनुत्तानमाशु च शस्त्रं पातयेन्मर्म्मशिरास्नायुसन्धीनाञ्चानुपघाति ॥ २० ॥

तत्र दुर्द्दिने दुर्व्विद्धे शीतवातयोरस्विन्नेऽभुक्तवतः स्कन्दत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति ॥ २१ ॥

मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम् ।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते ॥ २२ ॥

तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डू-शोफ-राग-दाह-पाक-वेदना जनयेत् । अत्युष्णातिस्विन्नातिविद्धेष्वज्ञैर्विस्रावितमतिप्रवर्त्तते । तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं

---

त्वयिकार्थस्याऽभिधानदर्शनात् । पाण्डुरोग्यादीनां स्रवयवोऽसर्व्वाङ्गगता अपीति तात्पर्य्यम् ॥ १९ ॥

तत्रेत्यादि । तत्रेति बुद्ध्या समारूढतया शस्त्रानुशस्त्रविस्रावणयोर्मध्ये इत्यर्थः । शस्त्रविस्रावणमिति पारिशेष्यादधिकृतं वेदितव्यम्, अनुशस्त्रविस्रावणं हि प्रागुपदिष्टं जलौकाध्याये । ऋजु सरलम्, असङ्कीर्णं नात्यासन्नम्, उत्तानमगम्भीरम्, उद्देशमात्रमेतावत् विस्तरशस्तूपरिष्टान्निवेदयिष्यते ॥ २० ॥

तत्रेत्यादि । दुर्व्विद्धे सिराव्यधविधौ व्याहर्त्तव्येऽनास्रावहेतौ सूक्ष्मशस्त्रविद्धादावित्यर्थः । स्कन्दत्वात् दुर्दिनादिदोषेण स्त्यानीभावादित्यर्थः । शिरोऽभितापं शिरोरोगम् । आन्ध्यमनाकस्मिकं तैमिर्य्यम्, तिमिरप्रादुर्भावस्तु क्रमश इत्यनयोर्भेदः, अधिमन्थः सर्व्वगतनेत्ररोगविशेषः । आक्षेपकादयस्त्रयो वातव्याधिषु द्रष्टव्याः ॥ २१—२३ ॥

तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणञ्चापादयति ॥ २३ ॥

तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते ।
यवागूप्रतिपीतस्य शोणितं मोचयेद्भिषक् ॥ २४ ॥
सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते ।
शुद्धं तदा विजानीयात्सम्यग्विस्रावितञ्च तत् ॥ २५ ॥
लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः ।
सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥ २६ ॥
त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये ।
रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥ २७ ॥

अथ खल्वप्रवर्त्तमाने रक्ते एला-शीतशिव-कुष्ठ-तगर-पाठा--भद्रदारु-विडङ्ग-चित्रक-त्रिकटुकागारधूम--हरिद्रार्का-ङ्कुर-नक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैर्लवणतैलप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते ॥२८॥

---

तस्मादित्यादि । यवागूप्रतिपीतस्येति । किञ्चित् यवागूरिति यवागूप्रति "सुप्प्रतिना मात्रार्थे" इत्यव्ययीभावः । यवागूप्रति पीतं येन तस्य तथोक्तस्य । "वाऽऽहिताग्न्यादिषु" इति परनिपातः । यवागूलेशं पीतस्येत्यर्थः । यवागूं प्रतीतिपाठे तु प्रतिर्भागे अर्थे कर्मप्रवचनीयः । पीतस्येति चाकारो मत्वर्थीयः, यवागूपादं पीतवत इत्यर्थः । तथाच "लघु-भुक्तवन्तम्" इति प्रागुक्तं समन्वेति ॥ २४—२७ ॥

अथेत्यादि । शीतशिवं सैन्धवम् । यथालाभमित्यनेनैव त्रिचतुःप्रयोगे लब्धेऽपि पुनरुपादानं सति तत्सम्भवे द्व्येकप्रयोगपरिहारार्थम् ॥ २८ ॥

अथातिप्रवृत्ते लोध्र-मधुक-प्रियङ्गु-पत्तङ्ग-गैरिक-सर्ज्ज-रस-रसाञ्जन-शाल्मलीपुष्प--शङ्ख-शुक्ति-माष-यव-गोधूमचूर्णैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत् । शाल-सर्ज्जार्ज्जुनारिमेद-मेषशृङ्ग-धन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात् । शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत् । क्षारेणाग्निना वा दहेत् । यथोक्तव्यधनादनन्तरं वा तामेवातिप्रवृत्तां शिरां विध्येत् ॥ २९ ॥

काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत् । एण-हरिणोरभ्र-शश-महिष-वराहाणां वा रुधिरं क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत् ॥ ३० ॥

धातुक्षयात्स्रुते रक्ते मन्दः सञ्जायतेऽनलः ।
पवनश्च परं कोपं याति तस्मात्प्रयत्नतः ॥

अथेत्यादि । पत्तङ्गं रक्तचन्दनं, मेषशृङ्गी नामौषधिः "गारोलशिङ्गा" इत्याख्यायते, धन्वनः स्वनामप्रसिद्धः । ध्मापितेन दाहितेन । लाक्षाचूर्णैर्व्वेत्यन्तं व्रणमुखमवचूर्ण्येत्यनेनान्वेयम् । यथोक्तैरिति भूतवदुपचारादुक्तम् । व्रणालेपबन्धविधौ वक्ष्यमाणैरित्यर्थः । तच्च बन्धनं सिरागतशोणितातिप्रवृत्तौ सिराबन्धनपुरस्सरमेव कार्य्यम् "रक्तं स्रवन्तीमाक्रम्य सन्दंशेन सिरां भिषक् । बद्ध्वा स्नाय्वादिभिर्गाढं व्रणं वस्त्रेण वेष्टयेत्" इत्यनुशासनान्तरात् । यथोक्तेत्यादि । पूर्व्वव्यधाददूर एव हि पुनर्व्यधेन शोणितवेगक्षयात् सङ्कोचमुपगते शस्त्रपदे निरुध्यते शोणितमेकान्तेनेत्युच्यते अनन्तरमिति । अन्तरं व्यवधानं तद्विपरीतमनन्तरमदूरमित्येतत् । एणादयोऽग्रे वक्ष्यन्ते ॥ २९।३० ॥

धात्वित्यादि । आहारस्य नातिशीतत्वादिभिः शोणिताद्यनुगुणता

तं नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः ।
ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥ ३१ ॥
चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम् ।
सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा ॥ ३२ ॥
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम् ।
तथा सम्पाचयेद्भस्म दाहः सङ्कोचयेच्छिराः ॥ ३३ ॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत् ।
सन्धाने भश्यमाने तु पाचनैः समुपाचरेत् ॥
कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ।
असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥ ३४ ॥
सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते ।
सावशेषे ततः स्थेयं न तु कुर्य्यादतिक्रमम् ॥ ३५ ॥
देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते ।
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥ ३६ ॥

---

व्याचिख्यासितेति गम्यते, तेन नातिशीतैर्नातिशीतोष्णैरिति तात्पर्य्यम् शोणितस्य तथात्वात् । उक्तं हि "नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम्" इति । कषायः सन्धत्ते इति कषायशब्दोऽयमजहत्स्वार्थया लक्षणया प्रागुक्तवन्धनव्यधनयोरपि प्रवर्त्तते इत्यवश्यं वक्तव्यम् तयोरपि सन्धानकरत्वेनोपलम्भात् । कल्पैर्विधिभिः । नातिवर्त्तते नातिक्रामति संशमनेनोपशमादिति भावः । अतिक्रमं निर्दोषत्वायातियोगम् । कुतः ? आह देहस्येत्यादि । मूलं मूलकारणं मातृशोणितेन व्यक्तीभावादिति

स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले ।
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥ ३७ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने शोणितवर्णनीयो
नाम चतुर्द्दशोऽध्यायः ।

---

भावः । धार्य्यते रसादीनामभिवर्द्धकत्वादिति भावः । जीवयती ) जीवकः ।
शेषमतिरोहितार्थम् ॥ २९—३७ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने शोणितवर्णनीयो नाम चतुर्द्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः ।

अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

दोषधातुमलमूलं हि शरीरं, तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥ २ ॥

तत्र प्रस्पन्दनोद्वहन-पूरण-विवेक-धारण-लक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति ॥ ३ ॥

---

पूर्व्वाध्याये "तेषां क्षयवृद्धिशोणितनिमित्ते" इति नाममात्रेणाऽभिहिते धातूनां क्षयवृद्धी प्रतिपित्सोः किमपि प्रतिपत्तये न प्रभवतो नाऽपि चानयोर्विज्ञानादेव दोषादीनां सर्व्वे ते क्षयवृद्धिविशेषा विज्ञाता भवन्ति ये चापेक्ष्यन्ते विस्रावणादिषु तेषु तेषु कर्म्मस्वेकान्तेनेतीदानीं दोषादिक्षयवृद्धिविज्ञानीयमधिकरोति अथात इत्यादिना । दोषा वातादयः, धातवो रसादयः, मलाश्च पुरीषादयः । समानमन्यत् पूर्व्वेण ॥ १ ॥

ते पुनर्दोषादीनां क्षयवृद्धी असंशयं शरीरमुपतापयतो न चानवबुद्धप्रकृतिकेन प्रतीकर्त्तुमपि शक्येते, विकारौ हि ते इत्येवं मन्वान आह दोषेत्यादि । मूलमिव मूलं, दोषधातुमला मूलमस्येति दोषधातुमलमूलम् । वृक्षादीनां मूलं यथा विकृताविकृतं तेषां क्षयोपचयहेतुस्तद्वदेव दोषादयोऽपि शरीरस्येत्युच्यते तस्मादित्यादि । उपधारय एकाग्रमना बुद्धौ स्थापयेत्यर्थः । नोपधारिते हि लक्षणे विकृतत्वेनैषां क्षयवृद्धिभ्यां व्याधावुपगते निर्णेतुमसामर्थ्यान्नार्हस्येकान्तेन किञ्चन कर्त्तुमित्ययमाशयः ॥ २ ॥

तच्च लक्षणं द्वेधा स्वरूपं तटस्थञ्चेति । तयोराद्यं व्रणप्रश्नादावुपदेक्ष्यते । इह तु कर्म्मानुमेयत्वात् क्षयवृद्ध्योः कर्म्मात्मकमेवेतरत् यथा स्थूलमुपदिशन्नाह तत्रेत्यादि । तत्र दोषादिषु मध्ये इत्यर्थः । पञ्चधा वक्ष्यमाण-

रागपक्तिनेजोमेधोष्मक्कत् पित्तं पञ्चधा प्रविभक्तमग्नि-कर्म्मणानुग्रहं करोति ॥ ४.॥

सन्धिसंश्लेषण-स्नेहन-रोपण-पूरण-बृंहण-तर्पण-बलस्थैर्य्य-क्कत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति ॥ ५ ॥

रसः प्रीणयति रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढ़त्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्जः

---

प्राणादिपञ्चप्रकारेणेत्यर्थः। प्रकर्षेण स्पन्दनं प्रस्पन्दनमाक्षेपादि, ऊर्द्धमुद्वहनं भाषितादि, पूरणमित्याहारेणोदरपरिपूरणं, विवेको रसमूत्रादीनां विभजनं,धारणञ्चावेगकाले शक्रदादीनां यथास्थानमवष्टम्भनम्,एतानि यथाक्रमं व्यानोदानप्राणसमानापानानां कर्म्माणीति व्यक्तीभविष्यति ॥ ३ ॥

रागेत्यादि। पञ्चधा वक्ष्यमाणरञ्जकादिपञ्चप्रकारेणेत्यर्थः। अत्र रागो रञ्जनं, पक्तिः पाकः, तेजो दर्शनमुपचारात् "तेजो दृष्टिरितिख्यातम्" इति कोषान्तराद्वा, उष्मा च शरीरतापः, एतानि हि यथाक्रमं रञ्जकपाचकालोचकभ्राजकानां कर्म्माणीति व्यक्तं व्याहरिष्यत्यतः पारिशेष्यात् मेधा नाम धारणावती बुद्धिरभिप्रार्थितमनोरथसाधनक्षमत्वेन वक्ष्यमाणस्याऽपि साधकस्यैव कर्म्मेति गम्यते। नेह रागपक्त्योजस्तेजोमेधोष्मक्कदिति पाठो न्याय्य ओजसोऽनाग्नेयत्वात्। वक्ष्यति हि "ओजः सोमात्मकम्" इति ॥ ४ ॥

सन्धीत्यादि। पञ्चधेति वक्ष्यमाणामाशयोरःकण्ठशिरःसन्धिस्थत्वभेदेन। अत्र सन्धिसंश्लेषणं सन्धिस्थस्य श्लेषणः कर्म्म, इतराणि त्वविशेषात् सर्व्वेषामेव। तत्र पूरणं शून्यानामवकाशानां परिपूरणं, बलं व्यायामशक्तिः, स्थैर्य्यं स्थिरत्वं, येन सर्व्वकर्म्माणि परिगणय्य चिरात् करोति ॥ ५ ॥

रस इत्यादि। प्रीणयति तर्पयति, जीवयति प्राणान् धारयति, मेद-

पुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यच्यवनं प्रीतिं देहबलं हर्षं वीजार्थञ्च ॥ ६ ॥

पुरीषमुपष्टम्भं वाय्वग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत् ॥ ७ ॥

रक्तलक्षणमार्त्तवं गर्भत्वञ्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्वजननं जीवनञ्चेति। तेषां विधिवत् परिरक्षणं कुर्व्वीत ॥ ८ ॥

---

सच पुष्टिमिति शेषः। कामित्वेन पुरुषात् धैर्य्यस्य च्युतिर्धैर्य्यच्यवनं रिरंसेति यावत्। प्रीतिः प्रमदास्वामोदः, हर्षो दुःखेष्वपि तास्वानन्दः, वीजं वीर्य्यमर्थः कारणमस्येति वीजार्थो गर्भ इत्यर्थः। "अर्थः * * * धनकारणवस्तुषु" इति विश्वः ॥ ६ ॥

पुरीषमित्यादि। उपष्टम्भः स्थिरीकरणं वलहेतुत्वात्, यदुक्तं "सर्व्वधातुक्षयार्त्तस्य वलं भवति विड्वलम्" इति। वाय्वग्निधारणं वाय्वग्न्योः साम्येन परिपालनमित्यर्थः। क्लेदस्य निग्रहो विक्लेदः, क्लेदेनार्द्रतया त्वचामतिकोमलत्वं क्लेदत्वक्सौकुमार्य्यम् ॥ ७ ॥

प्रसङ्गादार्त्तवादीनां लक्षणमनुसन्धत्ते रक्तेत्यादिना। रक्तस्य लक्षणमिव लक्षणमस्येति रक्तलक्षणम्। गर्भलक्षणं स्तनयोः कृष्णमुखतेत्यादिना वक्ष्यमाणं, करोतीत्यूह्यम्, जीवनं जीवनहेतुर्बालानामेव। तेषामिति वातादिप्रत्यवमर्शकम्। विधिमर्हतीति विधिवत्, "तदर्हम्" इति वतिः। विध्यनुसारेणेत्यर्थः। विधिस्त्वनागताबाधादी वक्ष्यमाणः। अगुनाऽर्थ्यशेनारक्षिता. ह्येते दुःखहेतवो भवन्ति तदिदमुच्यते. परीत्यादि। परि सर्व्वतोभावेन रक्षणं परिरक्षणम् ॥ ८ ॥

अत ऊर्द्धमेषां क्षीणलक्षणं वक्ष्यामः । क्षयः पुनरेषामतिसंशोधनातिसंशमन--वेगविधारणाऽसात्म्यान्न--मनस्तापव्यायामानशनातिमैथुनैर्भवति । तत्र वातक्षये मन्दचेष्टताऽल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च । पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च । श्लेष्मक्षये रूक्षताऽन्तर्दाह आमाशयेतराशयानां शून्यता सन्धिशैथिल्यं तृष्णा दौर्ब्बल्यं प्रजागरणञ्च । तत्र स्वयोनिवर्द्धनद्रव्याणि प्रतीकारः ॥ ६ ॥

---

सम्प्रति प्रस्तुतमर्थमुपदिदिक्षन्नाह अत इत्यादि । निदानेन हि रोगा विज्ञायन्ते प्रतिक्रियन्ते च तत्सेवापरीहारेणेति प्रसङ्गादिदमुच्यते क्षय इत्यादि । मन्दचेष्टतेति चेष्टा कायकृतव्यापारस्तदल्पतेत्यर्थः । मूढसंज्ञता असम्यग्ज्ञानता । आमाशयेतराशयानामिति इतराशया अपि श्लेष्मण एव ते चोरःकण्ठशिरःसन्धयः । आमाशयो हि नाम श्लेष्मणः प्रभव इत्युपदेक्ष्यतेऽतो विकृतत्वेन तत्रानुत्पन्ने क्षीणे वा श्लेष्मणि सर्व्वे श्लेष्माशयाः क्रमशः शून्या भवन्तीति प्राधान्यात् पृथक्त्वेनायमुपदिश्यते । इहाऽनुक्ताऽपि क्षये दोषाणां स्वकर्म्महानिर्विरोधिकर्म्मणाञ्चाभिवृद्धिरूह्यैव, "कर्म्मणः प्राकृताद्धानिर्वृद्धिर्वाऽपि विरोधिनाम्" इति चरकानुशासनात् । विरोधिनां वातादिकर्म्मप्रतियोगिनां तत्रोक्तानामनुत्साहादीनामिति तदर्थः । न तु वातादिविरोधिनां श्लेष्मादीनां बहुवचनासमन्वयात् युगपत् त्रयाणां क्षयानुपपत्तेश्च । अन्यथा श्लेष्मवृद्धिः पित्तक्षयलिङ्गं पित्तवृद्धिश्च श्लेष्मक्षयलिङ्गं स्यात्तन्नेष्यते पित्तश्लेष्मणोः क्षये वायोर्वृद्धिर्न्दूरीकुर्व्वन्त्येव "वायोर्धातुक्षयात् कोपः" इत्युक्तेः । स्वेषां वातादीनां योनीन् वातमग्निमपश्च वर्द्धयन्ति यानि द्रव्याणि तानि स्वयोनिवर्द्धनद्रव्याणि · स्वगुणवर्द्धनानि द्रव्याणीति तात्पर्य्यम् । द्रव्यशब्दोऽत्र बाहुल्यानुशयादेवोपात्त इत्यवधेयं, तथाविधानां कर्म्मणामप्युपयोगात् । नातो द्रव्याण्येवेति पाठो

रसक्षये हृत्पीड़ा कम्पः शून्यता तृष्णा च । शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना शिराशैथिल्यञ्च । मांसक्षये स्फिग्गण्डौष्ठोपस्थोरु-वक्षः-कक्षापिण्डिकोदर-ग्रीवा-शुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यञ्च। मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च । अस्थिक्षयेऽस्थितोदो दन्तनखभङ्गो रौक्ष्यञ्च । मज्जक्षयेऽल्पशुक्रता पर्व्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च । शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनञ्च । तत्रापि स्वयोनिवर्द्धनद्रव्योपयोगः प्रतीकारः ॥ १० ॥

पुरीषक्षये हृदयपार्श्वपीड़ा सशब्दस्य च वायोरूर्द्ध्वंगमनं कुक्षौ सञ्चरणञ्च । मूत्रक्षये वस्तितोदोऽल्पमूत्रता च ।

---

न्याय्योऽनन्तरं तत्राऽपि स्वयोनीत्यादावेवकाराद्योगाच्च । प्रतीकारः प्रतीकारहेतुः ॥ ८ ॥

रसेत्यादि । चकारः स्वकर्म्महानिं परपरधात्वपचयञ्चाचष्टे । एवमुत्तरत्रापि व्याख्येयम् । शोणितक्षये मेदःक्षये चाम्लशीतयोर्मेदुरमांसस्य च यथाक्रमं प्रार्थना स्वयोनिवर्द्धनत्वादिति गम्यते, वक्ष्यति हि "दोषधातुमलक्षीणः * * * स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति" इति । अत्राम्लशीतयोरग्नीषोमीयत्वेन मेदुरमांसस्य चातिस्निग्धत्वेन स्वयोनिवर्द्धकत्वं लक्षणीयम् । मेदुरोऽतिस्निग्धः । "सान्द्रस्निग्धस्तु मेदुरः" इत्यमरः । कटिमांसपिण्डापरपर्यायोऽयं स्फिक्शब्दः, पिण्डिका च जानुजङ्घयोरन्तरालमांसपिण्डः । मज्जक्षयेऽल्पशुक्रतेति मज्ज्ञः शुक्रहेतुत्वात् । प्रसेकः शुक्रच्युतिः ।

अत्रापि स्वयोनिवर्द्धनद्रव्याणि प्रतीकारः। स्वेदक्षये स्तब्ध-रोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च। तत्राभ्यङ्गः स्वेदोपयोगश्च ॥ ११ ॥

आर्त्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च। तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां विधिवदुपयोगः। स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा। तत्र श्लेष्मवर्द्धनद्रव्योपयोगः। गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च। तत्र प्राप्तवस्तिकालायाः क्षीरवस्तिप्रयोगो मेध्यान्नोप-योगश्चेति ॥ १२ ॥

अत ऊर्द्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः। वृद्धिः पुनरेषां स्वयोनिवर्द्धनात्युपसेवनाद्भवति। तत्र वात-वृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढवर्च्चस्त्वञ्च। पित्तवृद्धौ पीताव-भासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानि-रिन्द्रियदौर्ब्बल्यं पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्य्यं गौरवमवसादस्तन्द्रा निद्रा सन्धिविश्लेषश्च ॥ १३ ॥

रसोऽतिवृद्धो हृदयोत्क्लेदं प्रसेकञ्चापादयति। रक्तं

---

रक्ताभं रक्तमिश्रं वा शुक्रं रक्तशुक्रम्। आग्नेयानां सुराशुक्तादीनाम्। प्राप्त-वस्तिकालायाः अवाप्ताष्टममासाया इत्यर्थः। अष्टमो हि मासो गर्भिण्या वस्तिकाल इति निवेदयिष्यते। मेधाय यज्ञाय हितं मेध्यं तदेवान्नं मेध्यान्नं क्षीरसर्पिश्छागादिकमित्येतत्। शेषमतिरोहितार्थम् ॥ १०—१३ ॥

रक्ताङ्गाचतां शिरापूर्णत्वञ्च। मांसं स्फिग्गण्डौष्ठोपस्थोरु-बाहुजङ्घासु वृद्धिं गुरुगात्रताञ्च। मेदः स्निग्धाङ्गतामुदर-पार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यञ्च। अस्थि अध्यस्थीन्य-धिदन्तांश्च। मज्जा सर्व्वाङ्गनेत्रगौरवम्। शुक्रं शुक्रा-श्मरीमतिप्रादुर्भावञ्च ॥ १४ ॥

पुरीषमाटोपं कुक्षौ शूलञ्च। मूत्रं मूत्रवृद्धिं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानञ्च। स्वेदस्त्वचो दौर्गन्ध्यं कण्डूञ्च ॥ १५ ॥

आर्त्तवमङ्गमर्द्दमतिप्रवृत्तिं दौर्गन्ध्यञ्च। स्तन्यं स्तनयो-रापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदञ्च। गर्भो जठराभिवृद्धिं शोथञ्च। तेषां यथास्वं संशोधनं क्षपणञ्च क्षयादविरुद्धैः क्रियाविशेषैः प्रतिकुर्व्वीत ॥ १६ ॥

---

रस इत्यादि। हृदयोत्क्लेदो हृल्लासः, प्रसेको मुखस्रावः, मेदसो-दरादिवृद्धिः प्रायेण तदाश्रयत्वान्मेदसः। अधिकान्यस्थीनि अध्यस्थीनि, एव-मधिदन्तानित्यपि व्याख्येयम्। सर्व्वाङ्गनेत्रगौरवमिति नेत्रयोः पृथगुपादानं विशेषेण तद्गौरवमाख्यातुम्। अतिप्रादुर्भावमतिप्रवृत्तिं शुक्रस्येत्यर्थः ॥ १४ ॥

पुरीषमित्यादि। आटोपं सशब्दमाध्मानम्। आपीनत्वं स्थौल्यं सर्व्वत्र आपादयतीत्यनुकर्षणीयम्। तेषामित्यादि। क्षयादविरुद्धैः क्षयमपेक्ष्य नाधिकैर्नाऽपि च न्यूनैरित्यर्थः। न्यूनो ह्यकिञ्चित्कारो भवत्यधिकश्चात्यर्थं वर्द्धयित्वाऽऽतुर्य्यमापादयतीति युक्तमुक्तं क्षयादित्यादि। तत्र संशोधनं बल-वति बहुदोषे, क्षपणं संशमनञ्च दुर्व्बले स्वल्पदोषे च, मात्रां कालञ्चावेक्ष्येति बोध्यम् ॥ १५ । १६ ॥

पूर्व्वः पूर्व्वोऽतिदृष्टत्वाद्वर्द्धयेद्धि परं परम् ।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥ १७ ॥

बललक्षणं बलक्षयलक्षणमत ऊर्द्ध्वं वक्ष्यामः । तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत्खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात् ॥ १८ ॥

तत्र बलेन स्थिरोपचितमांसता सर्व्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो वाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति ॥ १९ ॥

---

पूर्व्व इत्यादि । एतेनैव क्षीणानां वर्द्धनमप्यवश्यं कार्य्यमित्यपि व्याजेन व्याख्यातं भवति । स्वास्थ्यजनकत्वसाम्यात् ॥ १७ ॥

बलेत्यादि । बलक्षयलक्षणमिति । क्षयो नामापचयः स च त्रेधेति व्यक्तीभविष्यत्येकवचनन्तु तल्लक्षणत्वसामान्यात् । किन्नाम बलमित्याह तत्रेत्यादि । तत्र दोषादिषु मध्ये रसादीनां शुक्रान्तानां यत् परमत्यर्थं तेजः सारात् सारतमत्वेनातिदीप्तोऽंशस्तदोजस्तदेव बलं कारणेन कार्य्यस्यानन्यत्वादिति भावः, न त्वन्यदित्येवकारावष्टम्भेनाविष्क्रियते । खल्विति निपातो वाक्यालङ्कारार्थः । कथं नु खल्वेवमुच्यते, सन्ति चेतरेषामपि बलहेतुत्वमाख्यापयन्ति शास्त्राणीत्याह स्वेत्यादि । स्वशास्त्रसिद्धान्तात् स्वस्मिन् शास्त्रे प्रमाणाद्युपन्यासेन निरूपितत्वात् क्षीणे ह्योजसि यथा बलक्षयलक्षणमुपदिश्यते न तथा इतरेष्वित्योजस एव बलं नेदिष्ठं कार्य्यंति मीमांसितत्वादिति यावत् ॥ १८ ॥

जरीकृतमोजसो लक्षणमनुसन्धत्ते तत्रेत्यादि । तत्र रसादिषु बलान्तेषु मध्ये इत्यर्थः । अप्रतिघातोऽप्रतिहतत्वं,वाह्यानां पाय्वादीनाम्,आभ्यन्तराणां चक्षुरादीनाम्, आत्मकार्य्येषु विसर्गादिषु रूपग्रहणादिषु चेत्यर्थः । प्रतिपत्तिः प्रवृत्तिः, "प्रतिपत्तिः प्रवृत्तौ च" इति मेदिनी ॥ १९ ॥

ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्।
विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्॥ २०॥
देहः सावयवस्तेन व्याप्तो भवति देहिनाम्।
तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्॥ २१॥
अभिघातात्क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात्क्षुधः।

---

पुनरभेदादोजः शब्देन विशिनष्टि ओज इत्यादि। सोमात्मकं सौम्यम्। शुक्लमिति सामान्येनोक्तमपि हृदयस्थं सदीषद्रक्तपीतं भवति शोणितसम्बन्धादित्युक्तं करोति "हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् ओजः" इति चरकोक्तेः। स्थिरं सुखदुःखयोरचञ्चलं करोतीति स्थिरं णिचि पचाद्यच्। सरति सर्व्वं शरीरं गच्छतीति सरम्। विविक्तं पूतं निर्म्मलमिति यावत्। "विविक्तं त्रिष्वसम्पृक्ते रहःपूतविवेकिषु" इति मेदिनी। मृत्स्नं पिच्छिलं, प्राणानां वक्ष्यमाणानामग्नीषोमादीनामायतनमाश्रयः प्राणायतनम्॥२०॥

सरत्वं प्राणायतनत्वञ्च स्फुटीकरोति देह इत्यादिना। अत्र तेनेति तदा सामान्येन प्रत्यवमृष्टमप्योजो हृदयस्थत्वेन विशेषणीयं "हृदि तिष्ठति" इति चरकोक्तेः। अतएव वाग्भटोऽपि "ओजः * * * हृदयस्थमपि व्यापि" इत्याह। न च "प्राणायतनस्यौजसोऽष्टौ विन्दवो हृदयस्थिताः" इति तन्त्रान्तरीयेऽष्टबिन्दुमात्रत्वेनाऽभिधानादोजसोऽल्पीयस्त्वेन व्यापित्वमनुपपन्नमिति वाच्यं, कर्षापरपर्य्यायत्वाद्बिन्दुशब्दस्य। वचनमिदमविशेषेणोक्तमपि यूनामेवौजोऽधिकरोति प्रायस्तदधिकारादतः "तावदेव श्लेष्मणश्चौजसः" इति चरकवचनं स्वेनाञ्जलिमानेनौजसोऽर्द्धाञ्जलिप्रमाणमुपदिश्याऽप्यविरुद्धं भवति यूनामर्द्धाञ्जलेरष्टकर्षात्मकत्वात्। चकारोऽवधारणार्थः। शीर्य्यन्ते हिंस्यन्ते विनाशमापद्यन्त एवेत्यर्थः, "तन्नाशान्ना विनश्यति" इति चरकैकवाक्यत्वात्॥ २१॥

कुतः खल्विदं क्षीयते येन शरीराणि शीर्य्यन्त इत्याह अभीत्यादि। क्षयादतिरमणादिना धात्वपचयात्। नन्वेतच्चेत्तत्त्वं कथन्तर्ह्यभिहेतुभि-

ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ।
तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ २२ ॥

तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति । सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे । स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने । मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये ॥ २३ ॥

---

क्षपतया: सर्व्वक्रियास्वसमर्था अप्यातुराः सद्यो न म्रियन्त इत्याशङ्क्याह ह्येत्यादि । सर्व्वं वाक्यं सावधारणमिति न्यायात् । एभ्योऽभिघातादिभ्य एवेत्यर्थः । हि यस्मात् तेजः सर्व्वधातूनां दीप्तोऽंशः ओज इति निष्कर्षः, समीरितं वायुना चालितं सत् धातुग्रहणनिःसृतं धातवो गृह्यन्ते एभिरिति व्युत्पत्त्या धातुग्रहणानि वक्ष्यमाणानि स्रोतांसि तेभ्यो निःसृतं निर्गतं भवति तस्मात् देहिनो विस्रंसयति सर्व्वेभ्य एव कर्म्मभ्यो बहिष्करोति न तु सद्यो मारयतीति तात्पर्य्यम् । धातुग्रहणशब्देन "ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः" इति चरकानुशासनात् हृद्गता दशसिराश्चेद्गृह्यन्ते तर्हि च्छन्दोऽनुरोधादीकारलोपो वक्तव्यः । एतेन ओजसः क्षये म्रियते मूलस्थानात् प्रच्याविते तु सर्व्वकर्म्मणामतिपतितो भवतीत्युक्तं भवति । वक्ष्यति च "क्रियासन्निरोधश्च विस्रंसे" इति ॥ २२ ॥

न हि कश्चित्तस्वतः क्षीणं विस्रस्तं विहतं वौजोऽनिर्णीय प्रत्याख्यातुं प्रतिकर्त्तुं वोत्सहत इति व्यांचिख्यासितत्वेनाभ्युपगतानि क्षयलक्षणान्यभिधत्ते तस्येत्यादिना । विस्रंसो व्यापच्च क्षयभेदौ दोषदुष्टतया गुणापचयेनोत्पत्तेरित्यप्रस्तुतप्रस्तावापत्तिर्नाशङ्कनीया, क्षयो हि नाम यथाकथञ्चिदपचय इत्यवोचाम । दोषाणां वातादीनां स्वस्थानादपगमो दोषच्यवनं, क्रिया वाङ्मनःशरीरचेष्टा, तासामसम्यक् नाशः क्रियाऽसन्निरोधः ।

त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥ २४ ॥
विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ।
अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम् ॥ २५ ॥
गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्वर्णस्य भेदनम् ।
तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥ २६ ॥
मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च ।
पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये ॥ २७ ॥

तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत् । इतरन्तु मूढसंज्ञं वर्ज्जयेत् ॥ २८ ॥

दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ।
स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥ २९ ॥
यद्यदाहारजातं हि क्षीणः प्रार्थयते नरः ।
तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥ ३० ॥
यस्य धातुक्षयाद्वायुः संज्ञां कर्म्म च नाशयेत् ।
प्रक्षीणञ्च बलं यस्य नासौ शक्यश्चिकित्सितुम् ॥ ३१ ॥

---

न निरोधो न चोत्पत्तिः" इत्यादौ नाशार्थे निरोधप्रयोगदर्शनात् । वक्ष्यति च "अप्राचुर्य्यं क्रियाणाञ्च" इति । त्रय इत्यादि । गद्योक्तानुवादोऽयं प्राग्वत् दृढप्रतिपत्त्यर्थः । दोषविस्रंसनं दोषप्रच्यवनम् । पूर्व्वोक्तानि व्यापद्विस्रंसोक्तानीत्यर्थः । तत्रेत्यादि । अविरुद्धैरोजोऽनुकूलैः । इतरं क्षीणौजस्कम् । अत्र मूढसंज्ञमिति विशेषणं तदवस्थायामेव वर्ज्जनार्थम् । दोषेत्यादि । बलक्षीणः ओजःक्षीणः ॥ २३—३१ ॥

रसनिमित्तमेव स्थौल्यं कार्श्यञ्च। तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चामएवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति, तमतिस्थूलं क्षुद्रश्वास-पिपासा-क्षुत्-स्वप्न-स्वेद-गात्रदौर्गन्ध्य-क्रथन-गात्रसाद-गद्गदत्वानि क्षिप्रमेवाविशन्ति; सौकुमार्य्यान्मेदसः सर्व्वक्रियास्वसमर्थः कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवति, आवृतमार्गत्वादेव शेषा धातवो नाप्याय्यन्ते, अत्यर्थमतोऽल्पप्राणो भवति; प्रमेहपीड़का-ज्वर-भगन्दर-विद्रधि-वातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति। सर्व्व एव चास्य रोगा बलवन्तो भवन्त्यावृतमार्गत्वात् स्रोतसाम्। अतस्तस्योत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु शिलाजतु-गुग्गुलु-गोमूत्र-त्रिफला-लोहरजोरसाञ्जन-मधु-यव-मुद्ग-कोरदूषक-श्यामाकोद्दालकादीनां विरूक्षण-

---

स्यादेतत् कथं नु पुनर्दोषधातुमलमूलत्वेन समान्यपि शरीराणि स्थौल्यकार्श्याभ्यां भिद्यन्त इत्याह रसेत्यादि। तत्रेति प्रकृतस्थान्नरसानां मध्ये इत्यर्थः। अधिकमशनम् अध्यशनम् आम एवेति इवार्थोऽयमेवशब्दः रक्तादिरूपेणापरिणततयाऽपक्व इवेत्यर्थः। मधुरतरश्च मधुरतर एवेत्यर्थः। चकारोऽवधारणार्थः अन्नरस इति सम्बन्धः। शरीरमनुक्रामन्नित्यनुर्भागेऽर्थे कर्म्मप्रवचनीयः शरीरस्य तं तं भागविशेषं गच्छन्नित्यर्थः। क्रथनमवाक्याच्छ्वासावरोधः तथाच "श्वासरोधो हि योऽकस्मात् स क्राथः क्रथनश्च सः" इति। गद्गदत्वमव्यक्तापरिस्फुटवाक्यत्वम्। निरुद्धमार्गत्वात् शुक्रमार्गावरोधादित्यर्थः। अल्पप्राणोऽल्पबलः। पञ्चत्वमिति पञ्चभूताव-

च्छेदनीयानाञ्च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनवस्त्युपयोगश्चेति ॥ ३२ ॥

तत्र पुनर्वातलाहारसेविनोऽतिव्यायाम-व्यवायाध्ययन-भय-शोक-ध्यान-रात्रिजागरण-पिपासा-क्षुत्कषायाल्पाशन-प्रभृतिभिरुपशोषितो रसधातुः शरीरमनुक्रामन्नल्पत्वान्न प्रीणाति, तस्मादतिकार्श्यञ्च भवति। सोऽतिकृशः क्षुत्पिपासा-शीतोष्ण-वात-वर्ष-भारादानेष्वसहिष्णुः वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति; श्वास-कास-शोष-प्लीहोदराग्निसाद-गुल्म-रक्तपित्तानामन्यतमं प्राप्य मरणमुपयाति। सर्व्व एवास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्। अतस्तस्योत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु पयस्याश्वगन्धा-विदारी-विदारिगन्धा-शतावरी-बलातिबला-नागबलानां मधुराणामन्यासाञ्चौषधीनामुपयोगः क्षीर-दधि-घृत-मांस-शालि-षष्टिक-यव-गोधूमानाञ्च दिवास्वप्न-ब्रह्मचर्य्याव्यायाम-बृंहण-वस्त्युपयोगश्चेति ॥ ३३ ॥

---

शोषत्वात् मरणमित्येतत्। कोरदूषकः कोद्रवः "कोदा" इत्याख्यायते। उद्दालको वनकोद्रवः। लेखनवस्तिर्निरूहोपक्रमचिकित्सिते वक्ष्यमाणः। निदर्शनमात्रमेतावदित्यतश्चरकादिकमप्यवेक्ष्यम् ॥ ३२ ॥

तत्रेत्यादि। अत्रोभयोरेव स्थूलकृशयोरविशेषेण रोगाणां बलवत्ता व्याख्याताऽप्यतितरां स्थूलस्यैव लक्षणीया "स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हितौ। यद्युभौ व्याधिरागच्छेत् स्थूलमेवातिपीड़येत्" इति चरकोक्तेः। पयस्या क्षीरकाकोली, विदारिगन्धा शालपर्णी, नागबला

यः पुनरुभयसाधारणान्युपसेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति ; समधातुत्वान्मध्यशरीरो भवति ; सर्वक्रियासु समर्थः, क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवांश्च । स सततमनुपालयितव्य इति ॥ ३४ ॥

अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ ।
श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात् तु पूजितः ॥ ३५ ॥

दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा ।
इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ३६ ॥

---

गोरक्षतण्डुला,अन्यासामिति रसविशेषविज्ञानीयोक्तानां काकोल्यादीनाम् ; बृंहणवस्तिरपि पूर्व्ववद्वक्ष्यमाणः ॥ ३३ ॥

स्थौल्यकार्श्ययोर्न्यक्कारेणैव मध्यस्य प्रशस्तत्वेऽर्थापपन्नेऽपि सुखावबोधार्थमिदमुच्यते य इत्यादि । उभयसाधारणानि नातिस्निग्धरूक्षादीनि । बलवानतिबलः । भूम्नि वतुप् । अनुपालयितव्यः स्वस्थवृत्त्यनुवृत्त्येति शेषः ॥ ३४ । ३५ ॥

कुतः खल्वयमनुपालयितव्य इत्याह दोष इत्यादि । प्रकुपितः अननुपालनेन कोपं यातः । धातूनिति धारणपोषणहेतुत्वात् धातुमलोपधातूनित्यर्थः, प्राक् सर्व्वेषामेव तेषां क्षयोपदेशात् । आत्मतेजसा स्वप्रभावेन, शोषकत्वेन रोधकत्वेन चेति यावत् । रोधकत्वन्त्वत्र प्राधान्येन कफस्यैव विज्ञेयम्, यदुक्तं "कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु * * * क्षीयन्ते धातवः" इति । क्षपयति स्वमानादपचिनोति । सम्यङ्निश्चयार्थमर्थमिमं दृष्टान्तेनावगमयति इद्ध इत्यादिना । इद्धो दीप्तः, उखागतं स्थालीस्थं, "पिठरः स्थाल्युखा कुण्डम्" इत्यमरः । अतोऽवश्यमनुपालयितव्य इति भावः । कुपितो हि दोषो यथा प्रकोपविशेषेण धातून् क्षपयति तथैव दुष्टिं द्विविधा-

वैलक्षण्याच्छरीराणामस्थायित्वात् तथैव च।
दोषधातुमलानान्तु परिमाणं न विद्यते ॥ ३७ ॥
एषां समत्वं यच्चापि भिषग्भिरवधार्य्यते।
न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना ॥ ३८ ॥
दोषादीनान्त्वसमतामनुमानेन लक्षयेत्।
अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥
स्वस्थस्य रक्षणं कुर्य्यादस्वस्थस्य तु बुद्धिमान्।
क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक्।
तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥ ३९ ॥

---

व्यापादयति दोषस्वभावादित्यवगम्यतेऽनायासेनेति पृथक्तेन टुष्टिहद्वी नेह व्याख्याते इत्यनुसन्धेयम् ॥ ३६ ॥

नन्वेषां कस्य किं मानमुपदिश्यते यतः समत्वमसमत्वञ्चावधार्य्यानुपालयामः साम्यं वा निनीषाम इत्याह वैलक्षण्यादित्यादि। वैलक्षण्यात् स्थूलकृशत्वादिना विसदृशलक्षणत्वादित्यर्थः। अस्थायित्वादिति क्षणभङ्गमतमाश्रित्योपदिश्यते। अस्थायित्वात् प्रतिक्षणमवयवानां भङ्गेनानवस्थितस्वभावाच्चेत्यर्थः। परेण चेदेतत् सम्बध्यते तर्ह्यस्थायित्वात् मातरादितो वाल्यादितश्च दोषादीनां चयापचयतोऽनियतमानत्वादित्यर्थः। समत्वं साधुत्वमविकारित्वेनान्यूनाधिकत्वमिति यावत् "सर्व्वसाधुसमानेषु समम्" इति मेदिनी। एवं प्रमातुमशक्यत्वेऽपि यदात्रेयादिभिः "दशोदकस्याञ्जलयः स्वेनाञ्जलिप्रमाणेन" इत्येवमुपदिश्यते तत् प्रायो वृत्तित्वादित्यदोषः।

समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ४० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने दोषधातुमलक्षय-
वृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ।

---

क्षपयेदित्यधिकान् दोषादीन् ह्रासयेत् वर्द्धयेच्च क्षीणानित्यर्थः । अरोग-लक्षणमाह समेत्यादि । स्वस्थोऽरोगः । शेषमतिरोहितार्थम् ॥ ३७—४० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो
नाम पञ्चदशोऽध्यायः ।

# षोड़शोऽध्यायः।

अथातः कर्णव्यधवन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते। तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारमुपवेश्य बालक्रीड़-

पूर्व्वस्मिन्नध्याये स्वस्थस्य रक्षणं समुद्दिष्टमित्यधेदानीं समग्र एव तस्मिन् व्याचिख्यासितेऽपि शास्त्रस्यास्य शल्याङ्गप्राधान्यात् सुकुमारत्वेन दुष्टग्रहशङ्कितत्वेन च बालानामतितरां रक्षणीयतमत्वाद्वा कर्णव्यधवन्धसमाख्यातं शल्याङ्गसाध्यं बालविषयं स्वस्थरक्षणमेव विधिनोपदिदिक्षति अथात इत्यादिना। धत्राविशेषेऽपि वन्धानामसाक्षात् स्वस्थरक्षणत्वं ते हि स्वस्थानुवृत्त्यर्थं धात्रीणां स्तनानां धारणानुगुणत्वेनोपदिश्यन्ते न तु स्वस्थानुवृत्त्यर्थम्, कर्णव्यधस्तु नैवमित्यनन्तरं व्यक्तीभविष्यति ॥ १ ॥

रक्षेत्यादि। रक्षा वक्ष्यमाणस्कन्दादिग्रहेभ्यो रक्षणं, भूषणन्तु मणिमुक्तादिभिरलङ्करणं, तन्निमित्तं रक्षाभूषणनिमित्तम्। यदुक्तं "कर्णव्यधे कृते बालो न ग्रहैरभिभूयते। भूष्यते तु मुखं यस्मात्कार्य्यस्तत्कर्णयोर्व्यधः" इति। अत्र कर्णयोर्व्यधस्य रक्षार्थत्वेनोपदेशात् साक्षात् स्वस्थहितत्वमाविष्कृतं भवति। कर्णौ विध्येते इति सामान्येनोक्तमर्थं पुनर्विशदयति तावित्यादिना। तौ ऋतु विध्येदिति परेणान्वयः। षष्ठे मासि सप्तमे वेति जन्मतः। एतत्तु प्रशस्ततमत्वेनाधिकृतं वेदितव्यं "मासे षष्ठे सप्तमे वाऽप्यष्टमे मासि वत्सरे। कर्णवेधं प्रशंसन्ति" इति ज्योतिर्निवन्धादिष्टतगर्गादिवचनेनानेकधा कालस्य निरूपितत्वात्। कृतमङ्गलस्वस्तिवाचनमिति मङ्गलमभीष्टफलप्रदं शिवपूजादि, स्वस्तिवाचनञ्च ब्राह्मणद्वारा कर्म्मणः शुभतावाचनम्। कृते रक्षाद्यावाधपरिहारार्थमनुष्ठिते मङ्गलस्वस्तिवाचने

भक्तैः अश्लोथाभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेन ऋजु विध्येत्। प्रतनुकं सूच्या बहलमारया पूर्वं दक्षिणं कुमारस्य वामं कन्यायाः। ततः पिचुवर्त्तिं प्रवेशयेत् ॥ २ ॥

शोणितबहुत्वेन वेदनया वान्यदेशविद्धमिति जानीयात्। निरुपद्रवतया तद्देशविद्धमिति ॥ ३ ॥

तत्राज्ञेन यदृच्छया विद्धासु शिरासु कालिकामर्म्मरिका-लोहितिकासूपद्रवा भवन्ति। तत्र कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति। मर्म्मरिकायां वेदना ज्वरो ग्रन्थयश्च। लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्व्वीत। क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढ़तरवर्त्तित्वाद्दोषसमुदायादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्त्तिमुपहृत्याशु मधूकैरण्डमूल--मञ्जिष्ठा--यव--तिलकल्कैर्म्मधु--घृत--प्रगाढ़ै-

---

यस्मै तं तथोक्तम्। अभिसान्त्वयन् प्रियवाक्यादिना स्थिरीकुर्व्वन्। दैवकृते छिद्रे ईश्वराऽभिप्रेते छिद्रेऽन्तःशुषिरे सिरादिविरहितत्वेन प्रतनुके देशे इति यावत्। आदित्यकरावभासिते सूर्य्यालोकविकाशिते। सूचीहातिसूक्ष्मा, आरा च ततः किञ्चित् स्थूला। पिचुवर्त्तिरिह तूलसूत्ररूपैव प्रवेशनाहरणसौकर्य्यादित्याहुः ॥ २—३ ॥

तत्रेत्यादि। स्वमात्मीयं प्रतीकारमनतिक्रम्येति यथास्वम्। संरम्भो रागशोथवेदनाप्रादुर्भावः। आमतैलमिह सद्यस्कमभिनवं वाऽपक्वं तिल-

रालेपयेत् तावद्यावत् सुरूढ़ इति। सुरूढ़ञ्चैनं पुनर्विध्येत्, विधानन्तु पूर्व्वोक्तमेव ॥ ४ ॥

तत्र सम्यग्विद्धमामतैलेन परिषेचयेत्। त्र्यहात् त्र्यहाच्च वर्त्तिं स्थूलां स्थूलतरां दद्यात् परिषेकञ्च तमेव। अथ व्यपगतदोषोपद्रवे कर्णे वर्द्धनार्थं लघुवर्द्धनकं कुर्य्यात् ॥ ५ ॥

एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्।
दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु ॥ ६ ॥

तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः। तद्यथा नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण

---

तैलम्। वर्द्धनकं वृद्धिकारकं दोलाकारेण प्रणिहितं निम्बकाष्ठादिकमिति यावत्। सन्धानं शृणु पुनर्व्यधनार्थमिति शेषः। शेषमतिरोहितार्थम् ॥ ४—६ ॥

न हि बन्धनमन्तरेण कथमपि सन्धानं सम्भवतीति तद्विजिज्ञापयिषति तत्रेत्यादिना। तत्रेति सप्तमीयं निमित्ते "निमित्तमात्रात्सप्तमी मन्तव्या" इति दुर्गसिंहः। तच्छब्दश्च सन्धानप्रत्यवमर्शकः। सन्धाननिमित्तमित्यर्थः। बन्धनाकृतयो बन्धनाकारा बन्धनप्रकारा इति यावत्। समासेन संक्षेपेणापरिसङ्ख्येयत्वेन वक्ष्यमाणत्वात् यथास्थूलमिति तात्पर्य्यम्। तास्ता आकृतीर्बन्धनानामन्वर्थसंज्ञाभिरेवावगमयन्नाह तद्यथेति। नेमी रथचक्रस्यान्तो भागः तस्य सन्धानमिव सन्धानं येन स नेमिसन्धानको नाम बन्धविकल्पः। वक्ष्यति च "दशैते कर्णबन्धविकल्पाः" इति। एवमुत्तरत्रापि व्याख्येयम्। उत्पलेनोत्पलाकारेण मांसेन भेद्यः पूर्व्वस्मात् बन्धाद्विशेषणीयो यो बन्धः स उत्पलभेद्यकः। संज्ञायां कः। वल्लूरं शुष्कमांसमिव पालीं करोतीति णिचि अच् कस्येति वल्लूरकः। अभ्यन्तरदीर्घैकपालेरासङ्गेन संयोगेन निर्वृत्त आसङ्गिमः। बाह्यदीर्घैकपाल्या गण्डे संश्लिष्टः कर्णो गण्डकर्णः

आहार्य्यो निर्व्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाट-सन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौ-ष्ठक इति ॥ ७ ॥

तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः । वृत्तायत-समोभयपालिरुत्पलभेद्यकः । ह्रस्ववृत्तसमोभयपालिर्वल्लू-रकः । अभ्यन्तरदीर्घैकपालिरासङ्गिमः । बाह्यदीर्घैकपालि-र्गण्डकर्णः । अपालिरुभयतोऽप्याहार्य्यः । पीठोपमपालि-रुभयतः क्षीणपुत्रिकाश्रितो निर्व्वेधिमः । अणुस्थूलसम-

---

तं करोतीति पूर्व्ववदचि, गण्डं क्षणोति लिखत्यसौ इति "क्षण" इत्यादि-नौणादिके नवि वा गण्डकर्णः । पाल्योरल्पिष्ठत्वेनोभयतो मांसमाह्रियते अत्रेति बाहुलकात् खत् आहार्य्यः । उभयतः क्षीणपुत्रिकाश्रितायाः पीठोपमपालेर्निर्वेधेन व्यधेन निर्व्वृत्तो निर्वेधिमः । स्थूलाणुसमविषमत्वेन विविधानां पालीनामैकध्यं सम्यग्योगेन निर्व्वृत्तो व्यायोजिमः,पृषोदरादिः । कपाटसन्धिको अर्द्धकपाटसन्धिकश्च नेमिसन्धानकवत् व्याख्येयौ । शुष्क-शष्कुल्यादितः सङ्कुचितो बन्धः संक्षिप्तः । अनधिष्ठानपालिः क्षीणमांसश्च कर्णो हीनकर्णस्तत्सम्बन्धित्वाद्बन्धोऽपि हीनकर्ण उच्यते । वल्लीव वल्ली मांस-रज्जुस्तदुपलक्षितः कर्णो वल्लीकर्णः ततः पूर्व्ववत्खिचि अच् । एवमेव यष्टिकर्णः काकौष्ठकश्च व्याख्येयौ ॥ ७ ॥

नन्वेषां कतमः कतमस्मिन् कर्णे सन्धानार्थमुपदिश्यत इत्यतो विभिनष्टि तेष्वित्यादिना । पृथुला स्थूला आयता दीर्घा समा चोभयपालिः कर्णलता यत्र स पृथुलायतसमोभयपालिः कर्णो नेमिसन्धानकः नेमिसन्धानको नाम बन्धोऽस्यास्तीति अकारो मत्वर्थीयः नेमिसन्धानकबन्धेन बन्धनीय-इत्यर्थः । "पालिः कर्णलतायां स्यात्" इत्यजयः । एवमुत्तरत्रापि

विषमपालिश्चायोजिमः । अभ्यन्तरदीर्घैकपालिरितराल्प-पालिः कपाटसन्धिकः । वाह्यदीर्घैकपालिरितराल्पपालि-रर्द्धकपाटसन्धिकः । तत्र दशैते कर्णबन्धविकल्पाः साध्याः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ ८ ॥

संक्षिप्तादयः पञ्चासाध्याः । तत्र शुष्कशष्कुलिरुत्सन्न-पालिरितराल्पपालिः संक्षिप्तः । अनधिष्ठानपालिः पर्य्य-

---

व्याख्येयम् । तत्रेत्यादि । एतेऽर्द्धकपाटसन्धिकान्ता दश साध्याः साध-नीयाः पालयः सन्त्येषामिति पूर्ववदकारः साध्यवन्त इत्यर्थः । "साध्य-निर्देशः प्रतिज्ञा" इति न्यायसूत्रञ्च । अत्र "साध्यवत्तया पक्षनिर्देशः" इति दीधितिकारः । एषां पृथुलेत्यादिना विषयविशेषे व्यवस्थितत्वादेव साध्यत्वे अनुभूतेऽपि पुनः साध्या इति विशेषणं सुखसाध्यत्वमाख्यातुम् । सन्त्येते, कथन्नु खल्वेषामाकृतीर्जानीमो यथावदात्मकर्म्माऽभिनिष्पादयितु-मेवंवादिनो निरस्यन्नाह तेषामित्यादि । अत्र सन्निहितत्वादेषामिति वक्तव्ये प्रागुक्तान् पञ्चदशैव बन्धान् ग्राहयितुमिदमुच्यते तेषामिति, तच्छब्द-एव हि विप्रकृ...र्थं बुद्ध्या विषयीकरोति नत्वेतच्छब्दः । तथाच तेषां पञ्चदशानां बन्धानां नामभिर्नेमिसन्धानकादिभिर्नामधेयैरेवाकृतयः प्रायेण व्याख्याताः अन्वर्थमनुसन्धाय गोलाद्या आकाराः कथिता इत्यर्थः । नेह प्रायेणेति वाक्याल्पत्वादुपात्तं किन्तर्हि दर्शनापेक्षविज्ञानानामासा-माकृतीनां वाङ्मात्रेण सम्यग्व्याख्यातुमशक्यत्वादित्यतो वाक्यदोषो नाशङ्क-नीयः ॥ ८ ॥

सङ्क्षिप्तेत्यादि । बन्धा ह्येते यथावद्विहिता अप्यायतनदोषात् प्रायो न सिद्धिमायान्ति तदिदमुच्यते असाध्या इति । ईषत् साध्याः पालयो येषामित्यसाध्याः । न तु सर्व्वथा कर्त्तुमशक्या इति, शुष्कशष्कुलिरित्या-द्यनन्तरोक्तेः । तान् पुनर्विषयतो विशिनष्टि तत्रेत्यादिना । शुष्का शष्कुली कर्णरन्ध्रं यत्र स शुष्कशष्कुलिः कर्ण इत्यर्थः । "अवलम्बित-

न्वयोः क्षीणमांसो हीनकर्णः । तनुविषमाल्पपालिर्वल्लीकर्णः । ग्रथितमांसशिरासन्ततसूक्ष्मपालिर्यष्टिकर्णः । निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति । बन्धेष्वपि तु शोफदाहरागपाकपिड़कास्रावयुक्ता न सिद्धिमुपयान्ति ॥ ९ ॥

भवन्ति चात्र ।

यस्य पालिद्वयमपि कर्णस्य न भवेदिह ।
कर्णपीठं समे मध्ये तस्य विद्धा विवर्द्धयेत् ॥ १० ॥
बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् ।
आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः ॥ ११ ॥

---

कर्णशष्कुलि" इति नैषधम् । उत्सन्नपालिर्विनष्टपालिः । इतरा सङ्कुचितत्वादिना निहीना "इतरः कातरेऽपि च" इति कोषान्तरात् क्लिष्टा वा पालिर्यत्र स इतराल्पपालिः संक्षिप्त इति समानं पूर्व्वेण । एतेन शेषा अपि प्रायेण व्याख्याताः । इतिशब्दो बन्धविकल्पानां सविषयाकृतिव्याख्यापरिसमाप्त्यर्थः । अत्र काकौष्ठकपालिरित्यनाकरः पाठः प्रक्रमविरोधान्निरन्वयित्वाच्च । माभूत् शुष्कशष्कुल्यादेरितरत्र नियमेन बन्धाः सिध्यन्तीति प्रतीतिरित्याह बन्धेष्वित्यादि । अपितुेति निपातसमुदायः किन्त्वर्थः । बन्धेषु मध्ये शोफादियुक्ताः किन्तु न सिद्धिमुपयान्ति यान्ति चेतर इत्यर्थः ॥ ९ ॥

ईषत्पालेः सन्धानार्थं पुनर्व्यधनार्थं वा वर्द्धनोपायमुपदिदिक्षति यस्येत्यादिना । अपिरवधारणार्थो नञ् चैपदर्थः । इह चिकित्सितव्येषु मध्ये यस्यातुरस्य कर्णस्य पालिद्वयमेव न भवेदीषन्मात्रं भवेत् इह सन्धानार्थं पुनर्व्यधनार्थं वा तस्य कर्णेत्यादिना परेणान्वयः ॥ १० ॥

उक्तैर्हि बन्धैः सम्पादितः सन्धिराभ्यन्तरादिभेदेन चतुर्धैवावसीयते

एकैव तु भवेत्पालिः स्थूला पृथ्वी स्थिरा च या ।
तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् ॥१२॥
गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता ।
कर्णपालिमपालेस्तु कुर्य्यान्निर्लिख्य शास्त्रवित् ॥ १३ ॥

अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसम्भृत-सम्भारं विशेषतश्चाचोपहरेत्, सुरामण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति । ततोऽङ्गनां पुरुषं वा ग्रथित-केशान्तं लघुभुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुप-धार्य्य छेद्यभेद्यलेख्यव्यधनैरुपपाद्य कर्णं शोणितमवेक्षेत तद्दुष्ट-

---

तदिदमुच्यते बाह्यायामित्यादि । बाह्यायां गण्डादूरवर्त्तिन्यां पाल्यां दीर्घायाम् आभ्यन्तरो गण्डसन्निकृष्टो गण्डसंश्रयी वेत्यर्थः । एतेनैव शेषार्द्ध-मपि व्याख्यातप्रायम् । सानुबन्धेनावलम्बितेन जीवता जीववता सम्यक्स्पर्श-वतेति यावत् । स्पष्टमन्यत् ॥ ११—१३ ॥

अत इत्यादि । अतो नेमिसन्धानकादित इत्यर्थः । उपसम्भृतः संगृहीतः अग्रोपहरणीयोक्तोपसम्भृत इति स्नातानुलिप्तवत् कर्म्मधारयः स एव सम्भार उपकरणम् तमुपहरेत् समीपमानयेत् शस्त्रकर्म्मसामान्या-दित्यवगम्यते विशेषतश्चेत्यनन्तरोक्तेः । अत्र सर्व्वेषामेव हि सम्भाराणां सम्भारत्वमेकविधं भवतीत्येकवचनं नानुपपन्नम् । कपालो नवमृद्भाण्ड-खण्डम् । पुरुषग्रहणेनैवाङ्गनानामुपलम्भेऽपि पृथगुपादानमतितरां बन्ध-स्यौचित्यमाख्यातुम् । यदुक्तं कुण्डलाभ्यां विना नारीवदनं हि न शोभते । छिन्नयोः कर्णयोस्तासां कार्य्यं तद्बन्धनं ध्रुवम्" इति । ग्रथितकेशान्तमिति शस्त्रे केशसम्बन्धपरिहारार्थम् । बन्धमुपधार्य्य अयं बन्धोऽत्र न्याय्य इति सम्प्रधार्य्य । उपपन्नैर्युक्तैः, छेद्यं छेदनमेवं सर्व्वत्र । उपपाद्य संयुज्य यथा-

सदुष्टञ्चेति। तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात्। ततो मधुघृतेनाभ्यज्य पिचुप्रोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेत् द्विव्रणीयोक्तेन च विधानेनोपचरेत्॥ १४॥

भवतश्चात्र।

विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम्।
व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्ज्जयेत्॥ १५॥
आमतैलपरीषेकं त्रिरात्रमवचारयेत्।
ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम्॥ १६॥

नचासंशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा सन्दध्यात्। स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्। पित्तदुष्टे दाहपाकरागवेदनावान्। श्लेष्मदुष्टे स्तब्धः कण्डूमान्। अतिप्रवृत्तरक्तो श्यावशोफवान्। क्षीणोऽल्पमांसो न वृद्धिमुपैति। स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैः शनैरभिवर्द्धयेत्॥ १७॥

---

योगं छेदादिकं कृत्वेत्यर्थः। सन्निवेश्य सुस्थितं स्थापयित्वा। स्थितरक्तं निवृत्तरक्तं सन्दध्यात् सूचीसूत्रेण बद्धेति शेषः। प्रोतौ मृदुवस्त्रखण्डम्। शेषमतिरोहितार्थम्॥ १४—१७॥

अतोऽन्यथा संरम्भ-दाह-पाक-राग-वेदनावान् पुनश्छिद्यते वा। अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः। तद्यथा गोधा-प्रतुद-विष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौर-सर्षपजञ्च यथालाभं सम्भृत्यार्कालर्क-बलातिबलानन्तापा-मार्गाश्वगन्धा-विदारिगन्धा-क्षीरशुक्ला--जलशूक--मधुरवर्ग-पयस्याप्रतीवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् ॥१८॥

स्वेदितोन्मर्द्दितं कर्णं स्नेहेनानेन योजयेत् ।
अथानुपद्रवः सम्यग्बलवांश्च विवर्द्धते ॥
यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् ।
शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः ।
तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्द्धनम् ॥ १९ ॥

---

अत इत्यादि। गोधाप्रभृतयोऽन्नपानाध्याये वक्ष्यन्ते। गौरसर्षपजं श्वेतसर्षपजं तैलं, सर्पिश्चानवमेव प्रशंसन्ति कुशलाः। अत्र "द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्" तथा "कल्कस्तु स्नेहपादिकः" इति स्मर्त्तव्यम्। अलर्कः श्वेतार्कः, विदारिगन्धा शालपर्णी, क्षीरशुक्ला क्षीरविदारी, जलशूकः शैवालं, मधुरवर्गो रसविशेषविज्ञानीये वक्ष्यमाणः, पयस्या क्षीरकाकोली, मधुरवर्गत्वेनैव पयस्याभागद्वयलाभे पृथगुपादानं भागत्रयग्रहणार्थम्। तैलं वेति तिलतैलमप्येवमित्यर्थः ॥ १८ ॥

स्वेदितेत्यादि। अनेनोक्तेन वक्ष्यमाणेन चेत्यर्थः। जीवनं जीवकं नामौषधिः। इहाऽपि क्षीरं चतुर्गुणमेव ॥ १९ ॥

ये तु कर्णौ न वर्द्धन्ते विधिनानेन योजिताः ।
तेषामपाङ्गदेशे तु कुर्य्यात् प्रच्छानमेव तु ।
बाह्यच्छेदं न कुर्व्वीत व्यापदस्तु ततो ध्रुवाः ॥ २० ॥
वर्द्धमानन्तु यः कर्णं सहसैवाभिवर्द्धयेत् ।
आमकोशीसमाध्मातः क्षिप्रमेव विमुच्यते ॥ २१ ॥
जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः ।
सुरूढ़ोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः ॥ २२ ॥

---

ये त्वित्यादि। तेषां कर्णानां बन्धनार्थमिति शेषः। अपाङ्गदेशे नेत्रपुच्छान्ते, प्रच्छानं त्वङ्मात्रावकर्त्तनमेव कुर्य्यान्न त्वधिकमित्येवकारेणाक्षिप्तमर्थं पुनः स्फुटीकृत्यावगमयति बाह्येत्यादिना। बाह्यशब्देनेह प्रायस्त्वङ्मात्रान्तरितत्वेन नातिगम्भीरमपाङ्गाख्यं मर्म्मैवाऽभिप्रेयत इति गम्यते व्यापदस्तु ततो ध्रुवा इत्युक्तेः, तत्र हि तदन्तरेण किञ्चन व्यापत्तिकरं नोपलभामहे। तथाच बाह्यच्छेदं त्वचमतीत्य नातिदूरमवस्थितस्यापाङ्गसमाख्यस्य मर्म्मणश्छेदं न कुर्व्वीत, यस्मात् ततो बाह्यच्छेदात् व्यापद आन्ध्यादयो ध्रुवा निश्चिता इत्यर्थः। वक्ष्यति हि "भ्रूपुच्छयोरधोऽक्ष्णोर्वाह्यतोऽपाङ्गौ नाम तत्रान्ध्यं दृष्ट्युपघातो वा" इति। अपाङ्गौ नाम द्वे सिरामर्म्मणी, तत्र शस्त्रोपयोगे आन्ध्यं दृष्ट्युपघातो हीनदृष्टितेति तदर्थः ॥ २० ॥

वर्द्धेत्यादि। कोश इव कोशोऽन्तरवयवविशेषः, आम आर्द्रः कोशोऽस्यास्तीत्यामकोशी। अत्रामकोश इति वक्तव्ये मत्वर्थीय आमकोशस्यातिशयमाख्यातुम्। पदस्यास्य तथाविधे सङ्गाखे तात्पर्य्यम् तदिदमुच्यते समाध्मात इति, समाध्मातो दग्ध आमकोशीव क्षिप्रं विमुच्यते विश्लिष्टतामापद्यते विदीर्य्यत इति यावत्। स्यादेतत्कथं न खलु च्छेदप्रकृतीनां नानात्मकत्वेनापरिसङ्ख्यया बन्ध्याः कर्णाः परिसङ्ख्यातैस्तैर्बन्धैर्यथावद्बध्यन्त-

अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह ।
यो यथा सुनिविष्टः स्यात् तं तथा विनियोजयेत् ॥२३॥
कर्णपाल्यामयान् नृणां पुनर्वक्ष्यामि सुश्रुत ! ।
कर्णपाल्यां प्रकुपिता वात-पित्त-कफास्त्रयः ॥
द्विधा वाप्यथ संसृष्टाः कुर्व्वन्ति विविधा रुजः ।
विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके ॥
दाह-विस्फोटजननं शोफः पाकश्च पैत्तिके ।
कण्डूः सश्वयथुस्तम्भो गुरुत्वञ्च कफात्मके ॥ २४ ॥
यथादोषञ्च संशोध्य कुर्य्यात् तेषां चिकित्सितम् ।
स्वेदाभ्यङ्ग-परीषेकैः प्रलेपासृग्विमोक्षणैः ॥
मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ।
य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति ॥ २५ ॥
अत ऊर्द्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ।
उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥
अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ।
स्रावी च दाहवांश्चैव श्रृणु षां क्रमशः क्रियाम् ॥ २६ ॥

---

इत्यत आह अमिता इत्यादि । कुशलैर्दक्षैर्युक्तिज्ञैरिति यावत्, बन्धा-अमिता विज्ञेयाः । अकुशलैस्तु प्रागुक्ताः पञ्चदशैवेति भावः, अत उच्यते यो यथेत्यादि । २१—२५ ॥

अत इत्यादि । नामभिराख्यातानि लिङ्गानि नामलिङ्गानि । प्रस्तुत-

अपामार्गः सर्ज्जरसः पाटला-लकुचत्वचौ ।
उत्पाटके प्रलेपः स्यात् तैलमेभिश्च पाचयेत् ॥
अम्बाष्ठ-शिग्रु-पूतीक-गोधामेदोऽथ तद्वसा ।
वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥
लेपमुत्पुटके दद्यात् तैलमेभिश्च साधितम् ।
गौरीं सुगन्धां श्यामामनन्तां तण्डुलीयकम् ॥
श्यावे प्रलेपनं दद्यात् तैलमेभिश्च साधितम् ।
पाठां रसाञ्जनं चौद्रं तथा स्यादुष्णकाञ्जिकम् ॥
दद्यात्प्रलेपं सकण्डूके तैलमेभिश्च साधितम् ।
ग्रन्थिमतश्च देयं स्यादिदं तैलं विजानता ॥
मधुकं क्षीरकाकोली जीवकाद्यैर्विपाचितम् ।
गोधावराहसर्पाणां वसाः स्युः क्षतदंष्ट्रणे ॥

---

सर्षपिकामभिधाय नामत उपद्रवानभिधत्ते उत्पाटक इत्यादिना । अत्र उत्पाटयति पाकेन पालीमुन्मूलयतीत्युत्पाटकः, उत्पुटं मांसाऽभिवृद्ध्योन्नतसन्धिं करोतीत्युत्पुटकः, श्यावो रक्तदुष्ट्या श्याववर्णः, भृशं कण्डूयुतः कण्डूमान्, ग्रावमग्नाति दण्डेनेवेत्यवमन्थकः, कण्ड्वा सह वर्त्तमानोऽवमन्थः सकण्डूकः, ग्रन्थिरस्यास्तीति ठन् ग्रन्थिकः । एवमेव जम्बुलः, स्रावी, दाहवांश्चेत्यपि नितयं व्याख्येयमित्युक्तं नामलिङ्गैरिति ॥ २६ ॥

अपेत्यादि । लकुची नामौषधिः डेहुया इत्यभिधीयते । तद्वसेति । अत्रोपसर्ज्जनस्याऽपि तदा परामर्शो बुद्ध्या समाकृष्टत्वात्, तेन गोधावसेत्यर्थः । एवाः क्रमागमया इदमित्यैणेयम् । गौरी हरिद्रा, सुगन्धा रास्ना, श्यामा श्याममूला त्रिवृत्, उष्णवीर्य्यैः कुलत्थादिभिः कृतं काञ्जिकमुष्णकाञ्जिकम् ।

प्रलेपनमिदं दद्यादवसिच्यावमन्थके ।
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥
तैलमेभिश्च सम्पक्वं शृणु कण्डूमतः क्रियाम् ।
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ।
एतैरालेपनं दद्यात् तैलमेभिश्च साधितम् ॥
ग्रन्थिके गुटिकां पूर्व्वं स्रावयेदवपाट्य तु ।
ततः सैन्धवचूर्णन्तु घृष्ट्वा लेपं प्रदापयेत् ॥
लिखित्वा तत्स्रुतं घृष्ट्वा चूर्णैं रोध्रस्य जम्बुले ।
क्षीरेण प्रतिसार्य्यैनं शुद्धं संरोपयेत् ततः ॥

---

व्रणीत्यादि व्रणीभूतस्य सकण्डूकस्येत्यर्थः । इदमित्यनन्तरोक्तम् । जीवकाद्यैः काकोल्यादिगणपरिपठितैः कल्कीकृतैरेवेति प्रत्येतव्यम् । गोधेत्यादि, क्षतं शास्त्रे विहितं बृंहणं यस्मै तस्मिन् क्षतबृंहणे शुष्कपाल्यादिके कर्णे इति यावत् "क्षतं—विहिते हिंसिते त्रिषु" इति मेदिनी । गोधादिवसाः स्युरभ्यङ्गार्थमिति शेषः । वाग्भटेनाऽपि "पालिशोषे" इत्युपक्रम्य "ततः पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत्" इत्यभिहितम् । प्रलेपनमित्यादि । अवसिच्य प्रक्षाल्य । प्रपौण्डरीकं काष्ठविशेषः "पुण्डरिया" इति विज्ञायते । समङ्गा वराहक्रान्ता, धवः स्वनामप्रसिद्धो राढ़ीयो वृक्षः, सहदेवा शारिवा, विश्वदेवा नागवला । ग्रन्थिक इत्यादि । गुटिकां मांसगुड़कं सैन्धवचूर्णं घृष्ट्वा सैन्धवचूर्णेन विघृष्येत्यर्थः । लिखित्वेत्यादि । जम्बुले तदिति पूर्व्वोक्तग्रन्थिकविधिसाहचर्य्यात् बुद्धिस्थमुपसर्ज्जनीभूतं जम्बु जम्ब्वाकारं मांसपिण्डमिति यावत्, लिखित्वा स्रुतं स्रावितं सत् क्षीरेण सह लोध्रस्य चूर्णैर्घृष्ट्वा तैरेव प्रतिसार्य्य प्रलिप्य शुद्धं वेदनादिविरहितत्वेन निर्द्दोषमेनं जम्बुलं, तत इति तृतीयान्तात्तसिल् तेन मधुकेत्यादिना प्रागुक्तेन तैलेनेत्यर्थः संरोपयेदिति समन्वयः ।

मधुपर्णीं मधूकञ्च मधुकं मधुना सह ।
लेपं स्वाविणि दातव्यं तैलमेभिश्च साधितम् ॥
पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ।
जीवकाद्यैः ससर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥ २७ ॥

विश्लेषितायास्त्वथ नासिकाया-
वक्ष्यामि सन्धानविधिं यथावत् ।
नासाप्रमाणं पृथिवीरुहाणां
पत्रं गृहीत्वा त्ववलम्बि तस्य ॥
तेन प्रमाणेन हि गण्डपार्श्वा-
दुत्कृत्य बद्धन्त्वथ नासिकाग्रम् ।

---

मधिव्यादि । मधुपर्णी गुडूची,मधूकी नामौषधिः "मौया" इत्याख्यायते । अत्र जलेन पिष्टा मधुना सह लेप इति प्राञ्चः । पञ्चेत्यादि । पञ्चानां वटादीनां वल्कैः पञ्चवल्कैः । दह्यमानं नामतो दाहवन्तम् ॥ २७ ॥

प्रसङ्गादर्थान्तरमवतारयति विश्लेषिताया इत्यादिना । अथानन्तरं विश्लेषिताया यथाकथञ्चित् त्वङ्मांसेन वियोजिताया इत्यर्थः । तुकारः समुच्चयार्थः । नासाप्रमाणमिति नासाशब्देनेह विश्लेषितांश एवाभिप्रेयते तेनेत्याद्यनन्तरोक्तेः । तस्येति तदा, प्रकृतत्वाच्छिन्ननासिकत्वेन पुरुषस्य प्रत्यवमर्शः क्रियते । गण्डपार्श्वादिति गण्डशब्दस्याजहत्स्वार्थया लक्षणया ललाटेऽपि प्रवर्त्तत इति वक्तव्यमेव ततोऽपि क्वचिदुत्कर्त्तनोपपत्तेः । तदयमर्थः—नासाप्रमाणं नासाया वियोजितांशपरिमितं पृथिवीरुहाणां पत्रं गृहीत्वा तेन प्रमाणेन गण्डपार्श्वात् ललाटाद्वा अवलम्बि शोणितप्रचारार्थमेकांशेन शरीरसंश्रयि यथा स्यात्तथा उत्कृत्य विकर्त्य यथायोगं छित्त्वेत्यर्थः । तन्मांसमिति शेषः । बद्धं यन्त्रादिना संयतमेव । तुकारोऽवधारणार्थः ।

विलिख्य चाशु प्रतिसन्दधीत
तत् साधुबन्धैर्भिषगप्रमत्तः॥
सुसंहितं सम्यगथो यथाव-
न्नाडीद्वयेनाभिसमीक्ष्य बद्धा।
प्रोन्नम्य चैनामवचूर्णयेच्च
पत्तङ्गयष्टीमधुकाञ्जनैश्च॥
संछाद्य सम्यक् पिचुना सितेन
तैलेन सिञ्चेदसकृत्तिलानाम्।
घृतञ्च पाय्यः स नरः सुजीर्णे
स्निग्धो विरेच्यः स यथोपदेशम्॥

---

नासिकाग्रं नासिकायाः विश्लेषितांशोपरिभागं तद्गतत्वक्खात्वमिति यावत् तत्त्ववगाढ़भागमिति तात्पर्य्यम्, "अग्रं पुरस्तादुपरि" इति मेदिनी। अथ कार्त्स्न्येनाशु विलिख्य शस्त्रेण लिखित्वाऽप्रमत्तो भिषक् साधुबन्धैः सूच्यादिप्राशस्त्येनोपपन्नैर्बन्धनैस्तत्प्रागुत्कृत्तं त्वङ्मांसं प्रति अभिमुखीकृत्य युक्त्या वामतो दक्षिणतो वा आवर्त्त्यानीय लिखितावकाशे न्युब्जीकृत्य स्थापयित्वेति यावत्। "प्रति प्रतिनिधाविच्छम्भूताख्यानाभिमुख्ययोः" इति मेदिनी। सन्दधीत सन्दध्यात्। अथो अनन्तरं यथावदभिसमीक्ष्य विमृश्य नाड़ीद्वयेनेति श्वासप्रचारार्हेणेत्येव एनां नासिकां प्रोन्नम्य किञ्चिदुन्नतां कृत्वा सम्यक् सुसंहितं सुमिलितं यथा स्यात्तथा बद्धा नाड्यग्रपार्श्वप्रणिहितया पिचुवर्त्त्या संयम्य पत्तङ्गादिभिरवचूर्णयेत्। पत्तङ्गं रक्तचन्दनम् अञ्जनञ्च रसाञ्जनम्। सितेन शुभ्रेण निर्म्मलेनेति यावत्। पिचुना कार्पासतूलकेन।

रूढञ्च सन्धानमुपागतः स्यात्
तदर्द्धशेषन्तु पुनर्निछिन्देत् ।
हीनां पुनर्वर्द्धयितुं यतेत
समाञ्च कुर्य्यादतिवृद्धमांसाम् ॥ २८ ॥
नाड़ीयोगं विनौष्ठस्य नासासन्धानवद्विधिम् ।
य एवमेवं जानीयात् स राज्ञः कर्त्तुमर्हति ॥ २९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने कर्णव्यधबन्धविधि-
र्नाम षोड़शोऽध्यायः ।

---

पाय्यः पाययितव्यः। विरेचनविधौ वक्ष्यमाणमुपदेशमनतिक्रम्येति यथोपदेशम्। शेषमतिरोहितार्थम् ॥ २८ । २९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने कर्णव्यधबन्धविधिर्नाम षोड़शोऽध्यायः ।

# सप्तदशोऽध्यायः ।

अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिधास्यन्ते अनेकाकृतयस्तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसङ्घातः शरीरैक-देशोत्थितः शोफ इत्युच्यते । स षड्विधो वात-पित्त-कफ-शोणित-सन्निपातागन्तुनिमित्तः ॥ २ ॥

---

पूर्व्वाध्याये पाकयुक्ता बन्धा न सिद्धिमुपयान्तीत्युपदेशेनार्थाच्चित्तं भवतीतरे सिध्यन्तीत्यवोचाम तदिदानीं व्याचिख्यासितान्यामादिलक्षणानि व्याचिख्यासुरामपक्वैषणीयमधिकरोति अथात इत्यादिना । आमपक्व-मध्यस्थमपि हि पच्यमानं भावमभिसमीक्ष्यामान्वयादाह आम इति । नैसर्गिकोऽयं लोकव्यवहारस्तदिहामशब्देनैव पच्यमानस्याऽपि व्यपदेशः क्रियते, गौणागौणयोर्द्वयोरामशब्दयोरेकशेषाद्वा, गौणो ह्यामशब्दः साट्श्यात्मकमर्थमनुसन्धाय पच्यमानमभिधत्ते इत्यनन्तरं लक्षणतस्तदुपदेशो नानुपपन्नः । इष गतौ धातोरेषणेति रूपं विज्ञानञ्चार्थः, "सर्व्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्च" इति न्यायात् । आमपच्यमानपक्वानामेषणा आमपक्वैषणा । प्रत्ययस्तु समानः ॥ १ ॥

नन्वपरिसङ्ख्येयेषु रोगेषु कतमं खल्वामादिलक्षणैर्जानीमो येनायमारभ्यत इत्याह शोफेत्यादि । समुत्तिष्ठन्त्यनेनेति समुत्थान आकारः, शोफः समुत्थान एषामिति शोफसमुत्थानाः, अनेकाकृतय इति कोलामलकादि-साट्श्येन बह्वाकृतयः प्रायेणाऽभिधास्यन्ते अल्पशस्तु ग्रन्थिकादयोऽभिहिता इति तात्पर्य्यम् । तैरनेकाकृतिभिर्ग्रन्थ्यादिभिर्विविधं लक्षणमस्येति विलक्षणो दोषसङ्घातः शोफो व्रणशोफ इत्युच्यते तस्येत्यादिना लक्षणमुपधारय इत्यन्तेन परेणान्वयः । अस्य विशेषणं पृथुरित्यादि स्पष्टम् ॥ २ ॥

तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति। पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी ओषादयश्चात्र वेदनाविशेषा भवन्ति। श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्व्ववर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च॥ ३॥

स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्य्ययाद्बहुत्वाद्वा दोषाणां, तदा पाकाभिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय॥ ४॥

तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताल्पशोफता चामलक्षणमुद्दिष्टम्॥ ५॥

सूचिभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिस्ताभिश्च संसृप्यत इव, विच्छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्ट्यत इव चाङ्गुल्या, दह्यते पच्यत इव चाग्निक्षाराभ्यामोषचोषपरिदाहाश्च भवन्ति; वृश्चिकविद्ध इव च स्थानासनशयनेषु

---

तस्येत्यादि। रूपं चक्षुरिन्द्रियग्राह्यं कृष्णत्वादि। व्यञ्जनं तोदादि। दोषकृतानि रूपव्यञ्जनानि दोषरूपव्यञ्जनानि। रूपाणामपि व्यञ्जनत्वे

न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गम् ॥ ६ ॥

वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपोटनं निम्नदर्शनमङ्गुल्यावपीड़िते प्रत्युन्नमनं,वस्ताविवोदकसञ्चरणं पूयस्य, प्रपीड़यत्येकमन्तमन्ते वावपीड़िते मुहुर्मुहुस्तोदः कण्डूरनुन्नतता व्याधेः उपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् ॥ ७ ॥

कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषग्मोहमुपैति। यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजताश्मवद्घनता च न तत्र मोहमुपेयादिति ॥ ८ ॥

---

सत्यपीह पृथगुपादानं प्रपञ्चार्थम्। सम्भावितो योग्यतामागतः। त्वक्परिपोटनं त्वगवदारणं, "पुट चूर्णने" इति धात्वर्थस्मरणात् वस्तावुदकसञ्चरणमिव पूयस्य सञ्चरणमिति योजना, अन्ते एकस्मिन् पार्श्वेऽवपीड़िते एकमन्तमपरपार्श्वं प्रपीड़यत्याक्रामति वेगेन पूरयति पूय इत्यर्थः॥ ३—७ ॥

कफजेष्वित्यादि। गम्भीरानुसारिणो हि रोगाः प्रायेणाविस्तरां स्वं स्वं लिङ्गमन्तरेव दर्शयन्ति तदिदमुच्यते गम्भीरगतित्वादिति। एतच्चूभयत्र प्रत्यासत्त्यान्वीयते। पक्वापक्वसंशयं निरुणद्धि यत्रेत्यादिना। विशेषवचनोऽयं हि शब्दः पूर्व्वपक्षव्यावृत्त्यर्थः। यत्र तु कफजेष्वभिघातजेषु वा रोगेषु गम्भीरगतित्वात् प्रपाकप्रतियोगीन्येतानि लिङ्गानि दृश्यन्ते न तत्र मोहमुपेयात् शेषलक्षणेनैव पक्वं विजानीयादित्यर्थः ॥ ८ ॥

भवन्ति चात्र ।

आमं विपच्यमानञ्च सम्यक्पक्वञ्च यो भिषक् ।
जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ ९ ॥

वातादृते नास्ति रुजा न पाकः
पित्तादृते नास्ति कफाच्च पूयः ।
तस्मात् समस्ताः परिपाककाले
पचन्ति शोफांस्त्रय एव दोषाः ॥ १० ॥

कालान्तरेणाभ्युदितन्तु पित्तं
कृत्वा वशे वातकफौ प्रसह्य ।
पचत्यतः शोणितमेष पाको
मतोऽपरेषां विदुषां द्वितीयः ॥ ११ ॥

तत्रामच्छेदे मांस-शिरा-स्नाय्वस्थि-सन्धिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदना-प्रादुर्भावोऽवदरणमनेकोपद्रव-दर्शनं क्षतविद्रधिर्वा भवति । स यदा भयमोहाभ्यां पक्वमप्यपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदीर्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति ॥ १२ ॥

---

आममित्यादि । तस्करस्य चौरस्य वृत्तिरिव वृत्तिरेषामिति तस्करवृत्तयः । तस्करो यथा वञ्चित्वा हत्वा वा वृत्तिं कुर्व्वन्ति तद्वदेवैते इत्यर्थः ।

भवन्ति चात्र ।

यश्छिनत्त्यामम‌ज्ञानाद्यश्च पक्वमुपेक्षते ।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ १३ ॥
प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदातुरं भिषक् ।
मद्यपं पाययेन्मद्यं तीक्ष्णं यो वेदनासहः ॥ १४ ॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ।
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्म्मणि ॥ १५ ॥
प्राणो ह्याभ्यन्तरो नृणां वाह्यप्राणगुणान्वितः ।
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥ १६ ॥

---

अभ्युदितं प्रवृद्धम् । अत इति षष्ठ्यन्तात्तसिल् । एषां शोफानामित्यर्थः । शोणितं पचतीति समन्वयः । क्षतजो विद्रधिः क्षतविद्रधिः ॥ ८—१२ ॥

य इत्यादि । एतौ प्रत्यातुरं विमुखीकर्त्तुं दृष्टान्तेन न्यक्करोति श्वपचाविवेति । श्वानं पचति भोजनायेति श्वपचश्चण्डालो यथा प्राणिजातं हत्वाऽमेध्येन शुना वा जिजीविषति तथैवैतावप्यातुरं हत्वाऽन्यायोपार्ज्जिततयाऽमेध्येन धनेन वेति भावः । प्रागित्यादि । शस्त्रकर्म्मणः प्राग्भोजनं विहितमपि युक्त्या समन्वेतुं पुनरिहोक्तमिति न पौनरुक्त्यम् । मद्यमपिबन्नपीह पुरुषो मद्यपानयोग्यतया मद्यप उच्यते न्यायपरिप्राप्तत्वादित्याहुः, तेन मद्यसहत्वेन प्रतीतान् सर्व्वानेव मद्यं पाययेदिति निष्कर्षः । कुतो नान्नसंयोगान्मूर्च्छतीत्याह प्राण इत्यादि । आभ्यन्तरः प्राणः शक्तिर्व्वलमित्यनर्थान्तरम् "शक्तिः पराक्रमः प्राणः" इत्यमरः । वाह्यप्राणस्त्वन्नमुच्यते "आयुर्वै घृतम्" इतिवत् । तस्य गुणैरन्वितः संयुक्तत्वेन दृढतर इत्यर्थः । अविरोधेन पाञ्चभौतिकत्वसाम्येनेत्यर्थः । विरोध एव हि वलीयसा दुर्व्वलं वाध्यते साम्ये त्वाप्याय्यते तदिदमुच्यते शरीरं धारयतीत्येवं प्राग्भोजनं सम-

अल्पो महान् वा क्रियया विना यः
समुच्छ्रितः पाकमुपैति शोफः।
विशालमूलो विषमो विदग्धः
स कच्छतां यात्यवगाढदोषः॥ १७॥
आलेपविस्रावणशोधनैश्च
सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्।
पच्येत शीघ्रं सममल्पमूलः
स पिण्डितश्चोपरि चोन्नतः स्यात्॥ १८
कक्षं समासाद्य यथैव वह्नि-
र्वाय्वीरितः सन्दहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि
मांसं शिरास्नायु च खादतीह॥ १९॥
आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम्॥

न्वितं भवति। पिण्डितः संहतः "संघातग्रासयोः पिण्ड" इति धरण्यनुशासनात्। कक्षं तृणवीरुन्निचयं शुष्कवनं वा "पुंसि कक्षस्तु दोर्मूले शुष्ककाननपापयोः" इति कोषान्तरात्॥ १३—१९॥

आदावित्यादि। आदावाद्यवस्थायाम् अपतर्पणावस्थामधिकृत्यासञ्जातपच्यमानावस्थां यावदन्तरान्तरेत्यर्थः। नातः "आलेप आद्य उपक्रमः" तथा "अपतर्पणन्त्वाद्य उपक्रमः" इति वक्ष्यमाणे द्वे वचने अणुमात्रेणाऽपि विरोधेनाशङ्कितव्ये अवाप्तावसरत्वादित्यनुसन्धेयम्। विम्लापनमङ्गुल्याद्यवमर्द्दनेन विलायनम्, एतत्तु ग्रन्थादावेवोपदिश्यत्येकान्तेन। अवसेचनं

पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम्॥ २०॥

इति सुश्रुतसंहितायां सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः।

---

शोणितावसेकः, उपनाहस्त्वालेपः "उपनाहो व्रणालेपपिण्डे" इति मेदिनी-दर्शनात्। शोधनं रोपणञ्चेति वक्ष्यमाणं कषादिकमेव लक्षयति। रोपणन्त्वत्र "रुह बीजजन्मप्रादुर्भावे च" इति धात्वर्थस्मरणात् मांससञ्जननमित्येतत्। व्रणस्येति व्रणशब्देनेह व्रणशोफ एवाऽभिप्रेयते भीमो भीमसेन इतिवदेकदेशेनाऽपि समुदायार्थावगमात् प्रकृतत्वाच्च। अत्र वक्ष्यमाणानां षष्ट्युपक्रमाणां मध्ये सप्तानामेवसुपदेशोऽतितरामुपयोगित्वादिति गम्यते प्रधानतमा हि भावाः प्रायेण व्यवसायाऽभिवृद्धये पौनःपुन्येनाऽभिधीयन्ते। शेषमतिरोहितार्थम्॥ २०॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः।

---

# अष्टादशोऽध्यायः।

अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

आलेप आद्य उपक्रम एष सर्व्वशोफानां सामान्यः प्रधानतमश्च तञ्च प्रतिरोगं वक्ष्यामः। ततो बन्धः प्रधानं तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्य्यञ्च, तत्र प्रतिलोम-

नन्वितः पूर्व्वं समुद्दिष्टयोः परमतश्च बहुधा व्याकरिष्यमाणयोः शोधन-रोपणयोः कतमत् कतमत् प्राधान्येनोपदिशन्त्याचार्य्याः, यदुपयोगमन्तरेण भिषजां सर्व्वे प्रयासा अपार्थका भवन्तीत्येवमाशंसूनपाकर्त्तुमिदानीं व्रणा-लेपनबन्धविधिमधिकरोति अथात इत्यादिना। इहाऽपि व्रणशब्दः शोफ-मेव लक्षयति प्रक्रान्तत्वात्, आलेपबन्धयोर्द्वन्द्वे आलेपशब्दस्य पूर्व्वनिपातश्च "उलूखलमुषले" इतिवत् ॥ १ ॥

अधिकारो हि प्रायः प्रधानमाश्रयते इत्यत आलेपबन्धविधेः परिग्रहे-ऽपि तदपेक्षिता इतरे अप्यर्था अधिकृता भवन्ति, प्रधानपरिग्रहे तदपेक्षि-तानामर्थाक्षिप्तत्वात्। यथाऽन्नं भुङ्क्ते इत्युक्ते सोपकरणस्यान्नस्य भोजनमुक्तं भवति तद्वदिति मन्वानो भगवान् शिष्याणां तामाशंसां विनिवारयितुं प्रथमं तावत्सूचीकटाहन्यायेन विधिं हित्वाऽऽलेपबन्धयोः प्राधान्यमेवोप-दिदिक्षति आलेप इत्यादिना। अत्राद्य इत्याद्यत्वं द्रव्यात्मकभेषजान्तरा-पेक्षयैव कल्पनीयम्। "आदौ विम्लापनं कार्य्यम्" इत्युक्तेः "अपतर्पणन्त्वाद्य उपक्रमः" इत्यनागतावेक्षणाच्च। सामान्यः सामान्यवान्। प्रधानतम इति सर्व्वावस्थास्तूपयोगित्वात्। स चालेपो व्यासत इहोपदिष्टोऽपि दुरधि-गमो भवति रुग्विशेषेण विशेषात्तदिदमुच्यते तच्चेत्यादि। तत इत्या-लेपात् बन्धः प्रधानमिति, प्राधान्यन्तु शोधनत्वेन रोपणत्वेन चोभयोस्तुल्यत्वे-ऽप्यस्थिसन्धि-स्थैर्य्यकरत्वादि-साद्गुण्यविशेषादित्यनुसन्धेयम्। आलेपविधि-

मालिम्पेन्नानुलोमम्; प्रतिलोमे हि सम्यगौषधमवतिष्ठते-ऽनुप्रविशति रोमकूपान् स्वेदवाहिभिः शिरामुखैश्च वीर्य्यं प्राप्नोति। न च शुष्यमाणमुपेक्षेतान्यत्र पीड़यितव्यात्। शुष्को ह्यपार्थकोऽरुष्करश्च॥ २॥

स त्रिविधः प्रलेपः प्रदेह आलेपश्च; तेषामन्तरं,—प्रलेपः शीतस्तनुरविशोषी विशोषी च; प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च; मध्यमोऽत्रालेपः॥ ३॥

---

मनुसन्धत्ते तन्नेत्यादिना। लोम प्रतीति प्रतिलोमम् "लक्षणेनाऽभिप्रती आभिमुख्ये" इत्यव्ययीभावस्ततः समासान्तोऽच्। लोमाभिमुखमित्यर्थः। नानुलोममिति नित्यानुवादो दृढ़प्रतिपत्त्यर्थः। न पुनर्लोमानुक्रमेणेत्यर्थः। शुष्यमाणं पुनरालेपं पीड़नीये शोफे परिहरन् शुष्कं सर्व्वथा परिहरति न चेत्यादिना। पीड़यितव्यात् शोफादन्यत्र संशोधनीये रोपणीये च शोफे शुष्यमाणं नैवोपेक्षेतेत्यर्थः। चकारोऽवधारणार्थः। कुतः? हि यस्मात् अपार्थकः नीरसतया एकान्ततोऽन्तरनुप्रवेष्टुमसामर्थ्यान्निरर्थकः, अरुष्करः कर्कशतया रोमकूपानुशायिव्रणकरश्च शुष्क एवेत्यर्थः, "सर्व्वं वाक्यं सावधारणम्" इति न्यायात्। न तु शुष्यमाणो रसाल्पत्वेन दोषं द्रवीकृत्य पीड़यितुं नाऽलमप्यन्तः प्रविश्य शोधयितुं रोपयितुञ्च पर्य्याप्तत्वादिति भावः॥ २॥

उपदेशसौष्ठवाय तं पुनस्त्रेधा विभजते स इत्यादिना। आलेपश्चेत्यालेप आलेपभेदः। किंस्विदेषां भेदाः इत्यपेक्षायां विवृणोति तेषामिति। अन्तरं भेदः। विशोषी कक्षादिक्षतत्वेन क्लेदोपशोषणः, अविशोषी तद्विपरीतः, तनुः सूक्ष्मोऽबहल इति यावत्, शीतश्च प्रलेप उच्यते इति शेषः। अबहुर्बहलो नातिबहलः आलेपात् किञ्चित् बहल इत्येतत् तात्पर्य्यम्। शेषं समानम्। मध्यमो व्यामिश्रलक्षणः॥ ३॥

तत्र रक्तपित्तप्रसादकृदालेपः। प्रदेहो वातश्लेष्मप्रशमनः सन्धानः शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु। यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञस्तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति ॥ ४ ॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत्।
यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥ ५ ॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम्।
दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम् ॥ ६ ॥
मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम्।
संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक् ॥ ७ ॥
षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके।
अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत् ॥ ८ ॥

---

इदानुपयोगितया प्रलेपं हित्वा शिष्टाविव विशिनष्टि तत्रेत्यादिना। निरुद्धमिति बाहुलकात् करणे क्तः, तत्करोतीति णिचि अच् वा। तदयमर्थः। स्रावसन्निरोधात् निरुद्धालेपनं संज्ञाऽस्येति निरुद्धालेपनसंज्ञो यः प्रदेहः क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते। यतो वक्ष्यति "कल्कः संरोपणः कार्य्यस्तिलजः" इत्यादि। तेन कल्काख्येन प्रदेहेनेत्यर्थः। मृदुतेति दारुणानां व्रणानामेव। व्रणशुद्धिश्चेति चकारात् व्रणरोपणञ्चेत्यर्थः ॥ ४ ॥

अविदग्धेष्वित्यादि। ये रोगा इति रोगशब्दः शोफानेव लक्षयति प्रक्रान्तत्वात्। ते चावाप्तविदग्धाद्यवस्था एव बोध्या अविदग्धेष्विति प्रागुक्तेः।

तस्य प्रमाणमार्द्रमाहिषचर्म्मोत्सेधमुपदिशन्ति । न च लेपं रात्रौ प्रयुञ्जीत मा भूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकार-प्रवृत्तिरिति ॥ ६ ॥

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ।
पित्तरक्ताऽभिघातोत्थे सविषे च विशेषतः ॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत् ।
उपर्य्युपरि लेपन्तु न कदाचित्प्रदापयेत् ॥
उष्माणं वेदनां दाहं घनत्वाज्जनयेत्स हि ।

---

गुह्येषु गुद-भगादिष्वप्रकाशेषु देशेषु, अपिशब्दादितर-देशजानामादेशः । तथेति समुच्चयार्थः ॥ ५—८ ॥

तस्येत्यादि । मध्यमत्वेनोपदिष्टो ह्यालेपो रात्रौ सौम्यगुणाऽभिवृद्धरोमाणां पिदधद्विकरोति तदिदमुच्यते न चेत्यादि । शैत्यपिहितोष्मणः शैत्याच्छादितोष्मणः शोफस्येत्यर्थः । तदनिर्गमादुष्मानिर्गमादित्यर्थः । अत्रोपसर्ज्जनस्यापि तदा परामर्शो बुद्ध्या समाकृष्टत्वात् । मा भूत् मा भवतु विकारप्रवृत्तिरित्यतो रात्रावालेपं नैव युञ्जीतेत्यर्थः । चकारोऽवधारणार्थः । प्रयुञ्जीत च प्रदेहं वातश्लेष्मप्रत्यनीकत्वेनातितरामुष्णवीर्य्यत्वेनाभ्युपगमादिति भावः । नन्वेवं शैत्येनोष्मणोऽपिधानभयात् विदाहपरिहारार्थं शतधौतघृताद्यालेपा अपि रात्रौ नोपपद्यन्ते ये चोपयुज्यन्ते सद्यः प्रतीकाराय, नैष दोषः, उष्मा हि तदात्वे स्वगुणबलोत्कर्षाद्रोमकूपान् प्रसार्य्यापाकरोति तामाशङ्कामेकान्तेन ॥ ६ ॥

यथा रात्रावालेपसाध्ये उष्णतरत्वेन प्रदेहो विहितस्तथैव दिवादौ प्रदेहसाध्ये नात्युष्णत्वेनालेपमुपदिदिक्षति प्रदेह इत्यादिना । न चेत्यादि ।

न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ।

शुष्कभावात् स निर्वीर्य्यो युक्तोऽपि स्यादपार्थकः ॥ १० ॥

अत ऊर्द्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः । तद्यथा,—क्षौम-कार्पासाविक-दुकूल-कौषेय-पत्त्रोर्ण-चीनपट्ट-चर्म्मान्त-र्वल्कलालाबु-शकल-लता-विदल-रज्जु-तूलफल-सन्तानिका-लौहानीति, तेषां व्याधिं कालञ्चावेक्ष्योपयोगः, प्रकरणत-श्चैषामादेशः ॥ ११ ॥

---

लेपप्रदेहशब्दावत्र प्रलेपादीन् त्रीनेव लक्षयत इति गम्यते पर्य्युषितत्वादौ फलं प्रत्यविशेषात् । शेषमतिरोहितार्थम् ॥ १० ॥

प्रकृतानुयायित्वात् व्रणबन्धनद्रव्याणि व्याकर्त्तुं प्रतिजानीते अत इत्यादिना । क्षौममतसीसूत्रैः शणसूत्रैर्वा व्यूतं वस्त्रम्, कार्पासं कार्पासवस्त्रम्, आविकं मेषलोमजम्, दुकूलं सूक्ष्मवस्त्रभेदः, कौषेयं कोषकारकीटकृततन्तु-मयम् "रेशमी" इत्याख्यायते । पत्त्रोर्णं धौतकौषेयम्, चीनपट्टं चीनदेश-प्रसिद्धो वस्त्रभेदः, अन्तर्वल्कलमित्यन्तर्वल्कलं भूर्ज्जोडुम्बरादित्वङ्मध्य-मित्येतत् । विदलं वंशादिखण्डम्, तूलफलस्य कार्पासस्य फलं तूलफलं कार्पासतूलमित्येतत्, "फले लुक्" इति तद्धितलुक् । सन्तानिका क्षीरसरः, लौहानि च भग्नास्थिसंयमनार्थानि । इतिशब्दो व्रणबन्धनद्रव्यव्याख्या-परिसमाप्त्यर्थः । नन्विह तूलफलादिवद्बन्धनानुगुणत्वेऽपि वक्ष्यमाणान्येरण्ड-पत्रादीनि कथं नोपदिश्यन्त इत्याह तेषामित्यादि । व्याधिं वातादिकं तत्कृतभेदभिन्नं रोगं वा, कालं नित्यगमावस्थिकञ्चावेक्ष्य तेषां पत्त्रादीना-मुपयोगः प्रयोगः क्रियते "स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् । पत्त्रदानं भवेत्कार्य्यं यथा दोषं यथर्त्तु च" इत्यादिनेति शेषः । एषां क्षौमा-दीनाञ्च प्रकरणतो व्याधिं कालं वानवेक्ष्य बन्धनाधिकारमात्रमाश्रित्यादेशः क्रियते "सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता" इत्यादिना शास्त्रेणेति बन्धसामान्याऽविषयत्वेन भेदात्तेषां नेहोपदेशः क्रियते इति भावः ॥ ११ ॥

तत्र कोश--दाम--स्वस्तिकानुवेल्लित--प्रतोली--मण्डल-स्थगिका-यमक-खट्टा-चीन-विबन्ध-वितान-गोफणाः पञ्चाङ्गी

ननु किमाकाराः कति नाम वा बन्धविशेषा भवन्ति यत्रैतान्युपयोगं यान्तीत्याह तत्रेत्यादि। तत्र व्रणेष्वित्यर्थः। अत्र बुद्धा समासस्थतया उपसर्ज्जनस्यापि तदा परामर्शः। कोशोऽत्र बहिर्निर्गन्तुमिच्छुना कोशकारेण दृष्टैकोपान्तो यः "कोया" इति समाख्यातः क्रिमिकोशस्तदाकारो बन्धः कोश इति व्यपदिश्यते आवर्त्तसाम्याद्रोमसंस्थाने आवर्त्तव्यपदेशवत्। दाम मालेवेति दाम। स्वस्तिकः प्रायेण जिह्वामूलोयलक्षणः किञ्चिदानताग्रो जिनानां ध्वजचिह्नभेदः। तथाच "वृषो गजोऽश्वः प्लवगः क्रौञ्चोऽब्जं स्वस्तिकः शशी। * * * * फणी सिंहोऽर्हतां ध्वजाः" इति हेमचन्द्रः। तदाकारो बन्धः स्वस्तिकः। वेल्लितं वक्रमनुगतमित्यनुवेल्लितं तदस्यास्तीत्यनुवेल्लितः, अकारो मत्वर्थीयः, वक्रानुपूर्व्या कृतो बन्धः इत्यर्थः। "वेल्लितं वक्रमित्यपि" इत्यमरः। प्रतोली रथ्येवेति प्रतोली, यथा च सा विस्तृतत्वान्नरगजादीनां प्रचारसुखा तथैवायमपि बन्धः शैथिल्याद्वातमूत्रयोरिति तात्पर्य्यम्। अतएव वक्ष्यति च "ग्रीवामेढ्रयोः प्रतोलीम्" इति। गोलो बन्धो मण्डलः। स्थगिका ताम्बूलकरङ्कः "विड़िदानो" इति विज्ञायते तस्याश्चोपरिभाग एवेह क्रमावनतत्वेनौपयौगिकतयाऽभिप्रेयत इति प्रतीयते, वक्ष्यति हि "अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम्" इति। बन्धो ह्ययं कोशाख्याद्दीर्घत्वेन हीयते इति पृथक्त्वेनोपदिश्यत इत्यनुसन्धेयम्। द्वयोर्व्रणयोः संयमनो यमक इति निरुच्यते, "यमलव्रणयोर्यमकाम्" इत्यनन्तरोक्तेः। खट्टाकारश्चतुष्पादो बन्धः खट्टा। बहुभिश्चीनांशुकैः कृतो बन्धश्चीनः। ऊर्द्धाधस्तिर्य्यक्परिक्षिप्तत्वेन विविधाकारो बन्धो विबन्धः। शिरस्त्राकारेण विस्तारो बन्धो वितानः। "क्रतुविस्तारयोरस्त्री वितानम्" इत्यमरः। कौपीनबन्धो नाम गोफणेत्युच्यते. स्वशास्त्रसिद्धान्तादिति गम्यते गुदभ्रंशचिकित्सितादौ तदर्थे गोफणाशब्दप्रयोगदर्शनात्। पञ्चानामङ्गानां समाहारः पञ्चाङ्गी, तद्योगाद्बन्धोऽयं

चेति चतुर्द्दश बन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः॥ १२॥

तत्र कोशमङ्गुष्ठाङ्गुलिपर्व्वसु विदध्यात्। दाम सम्बाधेऽङ्गे। सन्धिकूर्च्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्। अनुवेल्लितन्तु शाखासु। ग्रीवामेढ्रयोः प्रतोलीम्। हस्तेऽङ्गे मण्डलम्। अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम्। यमलव्रणयोर्यमकम्। हनुशङ्खगण्डेषु खट्वाम्। अपाङ्गयोश्चीनम्। पृष्ठोदरोरःसु विबन्धम्। मूर्द्धनि वितानम्। चिवुकनासौष्ठांस-वस्तिषु गोफणाम्। जत्रुण ऊर्द्ध्वं पञ्चाङ्गीमिति। यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात्। यन्त्रणमत ऊर्द्ध्वमधस्तिर्य्यक् च॥ १३॥

तत्र घनां कवलिकां दत्त्वा वामहस्तपरिच्चेयल्वजुसना-

---

पञ्चाङ्गीत्युच्यते। एवमेषां नामव्याकरणेनैवाविस्तरामाकृतयोऽभिव्यज्यन्ते तदिदमुच्यते तेषामित्यादि। प्रायेणेति योग्यावगम्यानामेषां वाङ्मात्रेण व्याकर्त्तुमशक्यत्वादेवोपात्तमित्यपर्य्याप्तत्वेन व्याख्यानमिदं दोषेण नाशङ्कितव्यम्॥ १२॥

तत्रेत्यादि। सम्बाधे बन्धनान्तरानर्हे अचक्रादावित्यर्थः। कूर्च्चको मर्म्माध्याये वक्ष्यमाणः। शाखा हस्तपादम्। अपाङ्गो नेत्रप्रान्तः। अंसो भुजशिरः। जत्रुणोऽंशवक्षसोः सन्धेरूर्द्ध्वमित्यव्ययम् उपरीत्यर्थः। बन्धेष्वेषु नियमनं यथायोगमूर्द्ध्वादिभेदेन त्रेधा भवतीत्याह यन्त्रणमित्यादि। अत इति सप्तम्यन्तात् सार्व्वविभक्तिकस्तसिल्, एषु बन्धेष्वित्यर्थः॥ १३॥

बन्धनक्रममुपदिदिक्षति तत्रेत्यादिना। कवलयति प्रच्छादनेन व्रणान् ग्रसतीवेति कवलिका व्रणप्रच्छादनं निर्म्मलं सूक्ष्मवस्त्रमिति यावत्। अन्

विद्धमसङ्कुचितं सदृपट्टं निवेश्य बध्नीयात् । न च व्रणस्योपरि कुर्य्यात् ग्रन्थिमाबाधकरं वा । न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्व्वीत । यस्मादतिस्नेहात् क्लेदो रौक्ष्याच्छेदो दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति ॥ १४ ॥

तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति, गाढ़ः समः शिथिल इति ।

पीड़यन्न रुजो गाढ़ः सोच्छ्वासः शिथिलः स्मृतः ।
नैव गाढ़ो न शिथिलः समो बन्धः प्रकीर्त्तितः ॥

---

घनामिति विशेषणम् उपर्य्युपरि विन्यस्ततया दृढ़ामेव तां ग्राहयितुम् । "शुचिसूक्ष्मा दृढ़ाः पट्टाः कवला" इति तन्त्रान्तरञ्च । तथाविधां कवलिकां दत्त्वा वामहस्तेन परिक्षेप आवर्त्तनं यस्य तद्वामहस्तपरिक्षेपं वामहस्तावर्त्तितमित्येतत् । अनाविद्धमवक्रम् ऋजुरित्यनेनैवार्थस्यास्योपलम्भेऽपि विशेषणमिदमैकान्ततो वक्रं परिहर्त्तुमतएवायतनविशेषादक्रे कर्त्तव्ये दूरतआवर्त्त्यर्ज्जूकुर्व्वन्ति कुशलाः । असङ्कुचितं यथावत् प्रसारितत्वेन वलिविवर्ज्जितम् । बध्नीयाद्दक्षिणहस्तेनेति शेषः । अत्र वामहस्तेन पट्टावर्त्तनं दक्षिणेन बन्धनञ्च तथाज्ञतयोग्यानामेव भिषजां बाहुल्यादधिकृतं वेदितव्यम्, नातः "वामोऽथवाऽप्यवामस्य पट्टो व्रणहितः परः । बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः" इति चरकवचनं विरुद्धं भवति । विकेशिकाऽशोपहरणीये व्याहृता, औषधन्तु व्रणभेषजमात्रम्, अत्र विकेशिकायाः पृथगुपादानमतितरामुपयोगित्वादित्यनुसन्धेयम् । यदुक्तम् "सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् । व्रणं विशोधयेत् शीघ्रं स्थिता ह्यन्तर्विकेशिका" इति । दुर्न्यासाद्विषमं विन्यासात् ॥ १४ ॥

तत्रेत्यादि । उच्छ्वासो नामान्तर्मुखः श्वासस्तेन सह वर्त्तत इवेति

तत्र स्फिक्-कुक्षि-कक्षा-वङ्क्षणोरु-शिरःसु गाढ़ः। शाखा-वदन-कर्ण-कण्ठ-मेढ्र-मुष्क-पृष्ठ-पार्श्वोदरोरःसु समः। अक्ष्णोः सन्धिषु च शिथिल इति ॥ १५ ॥

तत्र पैत्तिकं गाढ़स्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिलस्थाने नैवं, शोणितदुष्टञ्च श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढं, गाढस्थाने गाढ़तरमेवं वातदुष्टञ्च। तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयाद्रक्तोपद्रुतमप्येवं, श्लैष्मिकं हेमन्तवसन्तयोस्त्र्यहाद्वातोपद्रुतमप्येवम्। एवमभ्युह्य बन्धविपर्य्ययञ्च कुर्व्वीत ॥ १६ ॥

तत्र समशिथिलस्थानेषु गाढ़बद्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च। गाढ़समस्थानेषु शिथिलबद्धे विकेशिकौषधपतनं पट्टसञ्चाराद्व्रणवर्त्मावघर्षणमिति। गाढ़-शिथिलस्थानेषु समबद्धे च गुणाभाव इति ॥ १७ ॥

---

सोच्छ्वासोऽसम्यक्प्रपीड़ितत्वेन सान्त्वर्तः श्लथ इति निष्कर्षः ॥ १५ ॥

मा भूद्बन्धविशेषेणोष्माऽभिवृद्धया पाकः शैत्यानवजयेन वाऽनुपरोह इत्यतो विशिनष्टि तत्रेत्यादिना। तत्र व्रणेषु मध्ये पैत्तिकं व्रणमित्यर्थः। समं बध्नीयादित्युष्मातिवृद्धिभयात्, शिथिलस्थाने सममिति चोष्मसाम-ञ्जस्यायेति बुद्धिमता द्रष्टव्यम्। एतेनैव शेषमपि व्याख्यातप्रायम्। नि-दर्शनार्थमेतावदुपदिश्यानुक्तमर्थं ग्राहयन्नाह एवमित्यादि अभ्युह्य पैत्तिकादे-रितरत्र शङ्कितस्तांस्तान् दोषान् वितर्क्य बन्धविपर्य्ययं बन्धव्यतिक्रमं गाढ़ा-दिस्थानेषु समादिकं नाम बन्धमिति यावत्। चकारात् मोचणकालवि-पर्य्ययञ्चेत्यर्थः ॥ १६ ॥

नन्वेवं विशिष्टविषयं हित्वा सामान्यतश्चेद्बन्धविपर्य्ययः क्रियते तर्हि का

अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्द्दवञ्च । अबध्यमानो दंश-मशक-तृण-काष्ठोपल-पांशु-शीत-वातातप-प्रभृतिभिर्विशेषैरभिहन्यते व्रणो विविधवेदनोपद्रुतश्च दुष्टतामुपैत्यालेपनादीनि चास्य विशोषमुपयान्ति ॥ १८ ॥

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम् ।
अस्थि-स्नायु-शिराच्छिन्नमाशु बन्धेन रोहति ॥ १९ ॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति ।
सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥ २० ॥

अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ताः, यदा चौषदाह-पाकरागवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुपिताः प्रविशीर्णमांसाश्च भवन्ति ॥ २१ ॥

कुष्ठिनामग्निदग्धानां पिड़का मधुमेहिनाम् ।
कर्णिकाश्चोन्दुरविषे विषजुष्टव्रणाश्च ये ।
मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥ २२ ॥
स्वबुद्ध्या चापि विभजेत् कृत्याकृत्यांश्च बुद्धिमान् ।

---

यस्तुचतिरित्याह तत्रेत्यादि । नैरर्थक्यमिति गाढ़बद्धत्वेनातिसङ्कुचिते सिरादावननुप्रवेशित्वादित्यनुसन्धेयम् । इत्थमर्थोऽयमाद्य इति शब्दः परेणाऽन्वीयते अन्यस्य बन्धविपर्य्ययदोषाख्यानपरिसमाप्त्यर्थः । न चैवं गते पित्तजव्रणादावप्येते दोषाः प्रसज्येरन्निति वाच्यम् दोषशक्तेरचिन्त्यत्वात् । येन ज्वरितानां केशसीमन्तप्रादुर्भावोऽपि नानुपपन्नः ॥ १७—२१ ॥

कुष्ठिनामित्यादि । अत्र कर्णिकाकारो दुष्टमांसाङ्कुरः कर्णिकेति व्यपदिश्यते, कर्णिका च पद्मवीजकोशीत्यभिधीयते । स्वबुद्धेरित्यादि । कृत्या-

देशं दोषञ्च विज्ञाय व्रणञ्च व्रणकोविदः ।
ऋतूंश्च परिसंख्याय ततो बन्धान् निवेशयेत् ॥ २३ ॥
ऊर्द्धं तिर्य्यगधस्ताञ्च यन्त्रणा त्रिविधा मता ।
यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ २४ ॥
घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम् ।
विकेशिकामौषधञ्च नातिस्निग्धं समाचरेत् ॥ २५ ॥
प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च ।
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ २६ ॥
विषमञ्च व्रणं कुर्य्यात् स्तम्भयेत् स्रावयेत्तथा ।
यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ २७ ॥
पित्तजे रक्तजे वापि सकृदेव परिक्षिपेत् ।
असकृत्कफजे वापि वातजे च विचक्षणः ॥ २८ ॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ।
सर्व्वांश्च बन्धान् गूढ़ांस्तान् सन्धींश्च विनिवेशयेत् ॥ २९ ॥
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ।
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥

---

ज्ञात्वान् कार्य्याकार्य्यान् बन्ध्याबन्ध्यानिति यावत् स्वबुद्ध्या विभजेत् दाह-पाकापाकादीनभिसमीक्ष्य निश्चिनुयादित्यर्थः ॥ २२।२३ ॥

ऊर्द्धमित्यादि । यन्त्रणा नियमनं पीड़नमित्येतत् । गद्योक्तमर्थं प्राग्वत् श्लोकेनोपदिदिक्षति यथेत्यादि । परिक्षिपेत् पट्टेन वेष्टयेदित्यर्थः । ओष्ठस्येत्यादि । अस्थिषु जानता अस्थ्यभिज्ञेन अभियुक्तेन निपुणेन भिषजा

उत्तिष्ठतो निषस्स्य शयनञ्चापि गच्छतः ।
गच्छतो विविधैर्यानैर्नोख दुष्यति स व्रणः ॥ ३० ॥
ये च सुमांससंस्था वै त्वग्गताश्च तथा व्रणाः ।
सन्ध्यस्थिकोष्ठप्राप्ताश्च शिरास्नायुगतास्तथा ॥
तथावगाढ़गम्भीराः सर्व्वतो विषमस्थिताः ।
नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि ॥ ३१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणालेपनबन्ध-
विधिर्नामाष्टादशोऽध्यायः ।

---

बुद्धा उत्प्रेक्ष्य विचार्य्य ओष्ठस्याऽपि सन्धाने यथोद्दिष्ट एष विधिर्बन्धक्रमः स्मृतो दृष्ट इत्यर्थः । शेषमतिरोहितार्थम् ॥ २४—३१ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने व्रणालेपनबन्धविधिर्नामाष्टादशोऽध्यायः ।

# एकोनत्रिंशोऽध्यायः ।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

व्रणितस्य प्रथममेवागारमन्विच्छेत्, तच्चागारं प्रशस्त-वास्त्वादिकं कार्य्यम् ॥ २ ॥

प्रशस्तवास्तुनि गृहे शुचावातपवर्ज्जिते ।
निवाते न च रोगाः स्युः शारीरागन्तुमानसाः ॥ ३ ॥

तस्मिन् शयनमसम्बाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं कुर्व्वीत ॥ ४ ॥

सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी ।
प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं नतं शिरः ॥ ५ ॥

तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्ट-मासीत ॥ ६ ॥

---

न खलु व्रणबन्ध-बन्धादनन्तरं हितोपचारमन्तरेण कथमप्यारोग्यमस्य सुष्ठिबन्धं बध्यते पथ्यापेक्षिणी हि कर्म्मणां सिद्धिरित्यवोचाम, तदिदानीं शुश्रूषाप्रकारमुपदिदिक्षुर्व्रणितोपासनीयमधिकरोति अथात इत्यादिना । व्रणो जातोऽस्येति व्रणितः शुश्रूषापरपर्य्यायश्चोपासनाशब्दः ॥ १ ॥

नह्यञ्जसा विगुणमागारमधितिष्ठतस्तस्यारोग्यार्था किमपि प्रवृत्तिरभी-प्सितमर्थं साधयत्यहरहर्दोषाभिवृद्धेरित्यतः प्रथमं तावदागारमेवावतार-यति व्रणितस्येत्यादिना । वास्तुप्राशस्त्यन्त्वत्र चरकोक्तकुटागारभूमिसम-साद्गुख्यात् वास्तुविद्यातश्च वेदितव्यं भवति । शयनं शय्या असम्बाधं

सुहृदो विचित्रपन्त्याशु कथाभिर्व्रणवेदना: ।
आश्वासयन्तो बहुशस्त्वनुकूला: प्रियंवदा: ॥ ७ ॥

न च दिवानिद्रावशग: स्यात् ॥ ८ ॥

दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ।
श्वयथुर्वेदना राग: स्रावश्चैव भृशं भवेत् ॥ ९ ॥

उत्थान-संवेशन-परिवर्त्तन-चंक्रमणोच्चैर्भाषणादिषु चात्म-चेष्टास्वप्रमत्तो व्रणं संरचेत् ॥ १० ॥

स्थानासनं चंक्रमणं दिवास्वप्नं तथैव च ।
व्रणितो न निषेवेत शक्तिमानपि मानव: ॥
उत्थानाद्यासनं स्थानं शय्याञ्चातिनिषेविता ।
प्राप्नुयान्मारुतादङ्गे रुजस्तस्माद्विवर्ज्जयेत् ॥ ११ ॥

गम्यानाञ्च स्त्रीणां सन्दर्शन-सम्भाषण-संस्पर्शनानि दूरत: परिहरेत् ॥ १२ ॥

स्त्रीदर्शनादिभि: शुक्रं कदाचिच्चलितं स्रवेत् ।
ग्राम्यधर्म्मकृतान्दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् ॥ १३ ॥

---

नतोन्नतत्वादिभिर्मत्कुणादिभिश्च सम्बाधमार्गैरसंसृष्टं स्वास्तीर्णं सम्यक् कम्बलादिभिराच्छादितम् ॥ २—८ ॥

उत्थानेत्यादि । संवेशनं निद्रा, परिवर्त्तनं पार्श्वापवर्त्तनं, स्थानं दण्डवदवस्थिति:, आसनमुपविश्यावस्थानम् । ग्राम्यधर्म्मकृता दोषास्तु परमतो-निवेदयिष्यन्ते व्रण इत्यादिना ॥ १०—१३ ॥

नवधान्य-माष-तिल-कलाय-कुलत्थ-निष्पाव-हरितक-शाकाम्ल-लवण-कटु-गुड़-पिष्ट-विकृतिवल्लूर-शुष्कशाकाजाविकानूपौदकमांस-वसा-शीतोदक-कृशरा-पायस-दधि-दुग्ध-तक्रप्रभृतीन् परिहरेत् ॥ १४ ॥

तक्रान्तो नवधान्यादिर्योऽयं वर्गः प्रकीर्त्तितः ।
दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः ॥ १५ ॥

मद्यपश्च मैरेयाऽरिष्टासव-सीधु-सुराविकारान् परिहरेत् ॥ १६ ॥

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णञ्च वीर्य्यतः ।
आशुकारि च तत्पीतं क्षिप्रं व्यापादयेद्व्रणम् ॥ १७ ॥

---

नवेत्यादि । अत्र धान्यग्रहणगृहीतानामपि माषादीनां पृथगुपादानं समानीतत्वेऽपि परिहार्य्यत्वमाख्यातुं शूकधान्यशमीधान्यत्वपुरस्कारेण भेदात् प्रपञ्चयितुं वा । कलायशब्देनेह "खेशारी" इति समाख्यातानां त्रिपुटानां ग्रहणात् हरेणुसतीनयोरप्रतिषेध इत्याहुः । हरितको नाम "कुठेर-शिग्रु-सुरस-सुमुखा-भूति-भूस्तृणाः । चुक्राकचुक्रिका चेति वुधा हरितकं विदुः" इत्युक्तो वर्गभेदः । प्रभृतिग्रहणात् क्लेदसंजननत्वेन गुर्व्वादीनामादेशः । दोषसञ्जननः प्रभावात् व्रणदोषाऽभिवर्द्धनो न तु वातादिवैगुण्यकरस्तथात्यनीकानामपीह परिगणितत्वादित्यनुसन्धेयम् ॥ १४।१५ ॥

मद्यप इत्यादि । मद्यपश्चेति चकारेणामद्यपस्य समुच्चयः क्रियते, तदयमर्थः, मद्यपोऽमद्यपश्च मैरेयादीन् परिहरेत् । मैरेयादयस्तु द्रवद्रव्यविधावुपदेक्ष्यन्ते । पूर्व्वं प्रभृतिशब्देनैवावष्टब्धानामप्येषां पृथक्त्वेनेहाऽभिधानं क्षिप्रकारित्वेनातितरां परिहार्य्यत्वमाविष्कर्त्तुमिति गम्यते वक्ष्यति हि मद्यमित्यादि ॥ १६।१७ ॥

वातातप-रजो-धूमावश्यायातिसेवनातिभोजनानिष्टश्रवण-दर्शनेर्ष्यामर्ष-भय-क्रोध-शोक-ध्यान-रात्रिजागरण-विषमा-सन-शयनोपवास-वाग्व्यायाम-स्थान-चंक्रमण-शीतवात-विरु-द्धाशनाजीर्ण-मक्षिकाद्याबाधाः परिहरेत् ॥ १८ ॥

व्रणिनः सम्प्रतप्तस्य कारणैरेवमादिभिः ।
क्षीणशोणितमांसस्य भुक्तं सम्यक् न जीर्य्यति ॥
अजीर्णात्पवनादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥ १९ ॥

सदा नीचनखरोमृणा शुचिना शुक्लवाससा शान्तिमङ्गल-देवताब्राह्मणगुरुपरेण भवितव्यमिति । तत् कस्य हेतोः ? हिंसाविहाराणि हि महावीर्य्याणि रक्षांसि पशुपतिकुवेर-कुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिन-मुपसर्पन्ति सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २० ॥

भवति चात्र ।

---

वातेत्यादि । वाचा श्रमो वाग्व्यायामः उच्चैर्भाषणादिकमित्येतत् । स्थानं सन्ततमस्पन्दित्वेनैवावस्थानं, विविधा गतिर्विभ्रमः "भ्रमु अनव-स्थाने" इति धात्वर्थस्मरणात् । हिंसार्थो विहारो भ्रमणं येषां तानि हिंसाविहाराणि । रक्षांसीति रक्षःशब्दोऽयमजहत्स्वार्थया लक्षणया हिंसाशीलत्वसाधर्म्यात् पिशाचादिष्वपि प्रवर्त्तत इत्यवश्यं वक्तव्यं प्राक्-तेभ्योऽपि रक्षाविधानात । नत्वत्वर्थं दुर्निवारवीर्य्यत्वेन जिघांसूनि चेदुप-

तेषां सत्कारकामाणां प्रयतेनान्तरात्मना ।
धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥ २१ ॥

ते तु सन्तर्पिता आत्मवन्तं न हिंस्युः । तस्मात् सततमतन्द्रितो जनपरिवृतो नित्यदीपोदक-शस्त्र-स्रग्दाम-पुष्प-लाजाद्यलङ्कृते वेश्मनि सम्यन्मङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत ॥ २२ ॥

सम्पदाद्यनुकूलाभिः कथाभिः प्रीतमानसः ।
आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् ॥२३॥

ऋग्यजुःसामाथर्व्ववेदाभिहितैरपरैश्चाशीर्व्विधानैरुपाध्याया भिषजश्च सन्ध्ययो रक्षां कुर्य्युः ॥ २४ ॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ।
द्विरह्नः कारयेद्धूपं दशरात्रमतन्द्रितः ॥ २५ ॥

छत्रातिच्छत्रे लाङ्गलीं जटिलां ब्रह्मचारिणीं लक्ष्मीं

---

सर्वेयुस्तर्हि का गतिरित्याह तेषामित्यादि। अन्तर्वर्त्ती आत्मा अन्तरात्मा मन इति यावत्। बलिः पूजोपहारः "ददतुस्तौ बलिञ्चैव निजगात्रासृगुक्षितम्" इति मार्कण्डेयपुराणम्। उपहारस्तूपायनम् "उपायनमुपग्राह्यमुपहारः" इत्यमरः। उपहारयेत् उपहारं कारयेत् निवेदयेदिति निष्कर्षः गन्धं जिघ्रतीतिवत् धात्वन्तर्भूतकर्म्मणोऽविवक्षितत्वात्। स्रक् पुष्पमाला, दाम रज्जुः, छत्रातिच्छत्रे द्रोणपुष्पीद्वयं, लाङ्गली नामौषधिः "ईषल्लाङ्गली" इति विज्ञायते, ब्रह्मचारिणी ब्रह्मयष्टिः, जटिला मांसी,

गुहामतिगुहां शतवीर्य्यां सहस्रवीर्य्यां सिद्धार्थांश्च शिरसा धारयेत् ॥ २६ ॥

व्यजेत बालव्यजनैर्व्रणं न च विघट्टयेत् ।
न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥ २७ ॥
अनेन विधिना युक्तमादावेव निशाचराः ।
वनं केशरिणाक्रान्तं वर्ज्जयन्ति मृगा इव ॥ २८ ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ २९ ॥
तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ।
बालमूलकवार्त्ताकपटोलैः कारवेल्लकैः ॥
सदाड़िमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ।
अन्यैरेवं गुणैर्वापि मुद्गादीनां रसेन वा ।
शक्तून् विलेपीं कुल्माषं जलञ्चापि शृतं पिबेत् ॥ ३० ॥

---

लक्ष्मीः लक्ष्मणा, गुहा शालपर्णी, अतिगुहा पृश्निपर्णी, शतवीर्य्या श्वेतदूर्व्वा, सहस्रवीर्य्या च दूर्व्वा ॥ १८—२६ ॥

व्यजेतेत्यादि। द्रवान्नं हि भुक्तं क्षिप्रं जरां गच्छति वातमनुलोमयत्यनुदीर्णञ्चाग्निमुदीरयति, वक्ष्यति हि "क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम्" इत्यादि तदिदमुक्तं द्रवोत्तरमिति। नेह द्रवोत्तरं द्रवप्रधानमिति वक्तुं युक्तम्, "व्रणोदरास्थापनपीड़ितानां प्रमेहिनां छर्द्यतिसारिणाञ्च। द्रवं न दद्यादथवाऽपि कोष्णमल्पं हितम्" इति भोजानुशासनात् ॥२७-२८॥

तण्डुलीयकेत्यादि। अत्र मुद्गादीनामित्यादिशब्देन प्रतिषिद्धेतरेषां वक्ष्यमाणानां वनमुद्गप्रभृतीनामुद्देशः। कुल्माषोऽर्द्धस्विन्नो गोधूमादिः।

व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वप्नात्ताश्च मृत्युश्च मैथुनात् ॥
दिवा न निद्रावशगो निवातगृहगोचरः ।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥ ३१ ॥
एवं वृत्तसमाचारो व्रणी सम्पद्यते सुखी ।
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥ ३२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणितोपासनीयो नामैकोनविंशोऽध्यायः ।

---

तथाच "अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । कुल्माषा इति कथ्यन्ते" इति । शेषमतिरोहितार्थम् ॥ ३०—३१ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने व्रणितोपासनीयो नाम एकोनविंशोऽध्यायः ।

# विंशोऽध्यायः ।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

यद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद्द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्य्या ब्रुवते। तत्तु न सम्यक्। इह खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति ॥ २ ॥

---

नन्वायुर्व्वेदवाक्येन लिलक्षयिषितं धातुसाम्यं न जातु क्षणिकत्वेनाऽपि बुद्धिविषयमधितिष्ठति हितोपचारतन्त्रत्वात्, इह हि परितो लक्षयन्तोऽपि न किञ्चित् द्रव्यं कर्म्म वैवं लक्षयामो यदेकान्तेन धातुसाम्यमनुवर्त्तयत्युपहन्ति वा तत् कृतमकिञ्चित्करेण त्वगितोपासनीयोपदेशेनेत्याशङ्कां परिजिहीर्षुरिदानीं हिताहितीयमधिकरोति अथात इत्यादिना। सर्व्वं समानम् ॥ १ ॥

अत्र व्याचिख्यासितमर्थं व्याकुर्व्वन्निदर्शनमात्रेण पूर्व्वपक्षमवतारयति यदित्यादिना। निदर्शनमात्रता चास्य केवलं वायुपित्तयोः पथ्यापथ्योपन्यासादेव लक्षणीयम्, दोषधातुमलनिचयविवेकपुरःसर एव हि पथ्यापथ्यविवेक इत्यायुर्व्वेदविदो मन्यन्ते। उत्तरयति तत्त्वित्यादिना। स्वभावः प्रकृतिरुच्यते। स पुनर्द्रव्याणां नैसर्गिको गुर्व्वादिगुणयोगः। संयोगस्तु द्वयोर्बहूनां वा संहतीभावः, स च विशेषमारभते यं पुनर्नैकैकद्रव्याण्यारभन्ते, तद्यथा मत्स्यपयसोः संयोगः स्वां स्वां प्रकृतिमुपहत्य विकारीभवति तच्च परमतो व्यक्तीकरिष्यति न ह्यञ्जसा व्यभिचरतीह प्रकृतिसमसंयोग इति चोद्यं तत्राऽपि बलवत्प्रकृतिकार्य्येणैव वैशिष्ट्योपलम्भात्। न-च

तत्रैकान्तहितानि जातिसात्म्यात् सलिल-घृत-दुग्धौदन-प्रभृतीनि। एकान्ताहितानि तु दहन-पचन-मारणादिषु प्रवृत्तान्यग्निक्षारविषादीनि। संयोगादपराणि विषतुल्यानि भवन्ति। हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति॥ ३॥

"देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते इत्युपक्रम्य * * संस्कारादपराणि देशकालमात्रादिभिश्चापराणि" इति चरकवचनाद्वचनमिदं न्यूनतया वाक्यदोषेणाऽप्यासज्यते संयोग एव संस्कारादीनामन्तर्भावात्। संस्कारस्तत्र तोयाग्निसन्निकर्षशौचमन्थनभावनादिभिर्गुणाधानमुच्यते देशः पुनर्भूमिरातुरशरीरञ्च भूमिस्तत्र द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यञ्चाचष्टे कालस्तु ऋतुसात्म्यापेक्षो विकारापेक्षश्चेत्यनुसन्धेयम्॥ २॥

उक्तमर्थमुदाहरणेन स्फुटीकरोति तत्रेत्यादिना। जातिसात्म्यात् जन्मत आत्मना शरीरेण सहैकीभावात् आजन्मनः स्वस्थहितत्वेन शरीरानुवर्त्तनादिति यावत्। सलिलप्रभृतीन्येकान्तहितानीति सम्बन्धः; प्रभृतिग्रहणात् यवगोधूमादीनामादेशः। ननु "अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति," तथा "पिपासार्त्तः सदाश्नी वा पयसा स सुखी भवेत्" इत्याद्यनागतविवक्षणात् दोषप्रशमनत्वेनोपयुज्यानि सलिलादीनि कथमेकान्तहितानि भवितुमर्हन्ति येन हि स्वस्थावस्थो यो धातुः समो भवति तेनावश्यं साम्यावस्थः स धातुर्ह्रसति क्षीणो येन च समः स्यात् समस्तेन विवर्द्धत इत्यपरे प्रत्यवतिष्ठन्ते, तत्तु न सम्यक् इह हि दोषधातुप्रकोपणप्रशमनानि सन्त्यपि यानि द्रव्याणि प्रभावप्रभावितात् जातिसात्म्यात् स्वस्थानुवर्त्तनाय प्रभवन्ति तान्येकान्तहितत्वेनाऽभिप्रेयन्ते, अतो दोषसञ्जननानामपि सलिलादीनामेकान्तहितत्वमुपपन्नं, न त्वेव त्रिदोषघ्नानामपि दशमूलादीनां तथात्वेनानभ्युपगमात्। एकान्ताहितानीत्यादि। वचनमिदं स्वस्थानेव विषयीकरोतीति अर्शआदावग्निक्षारादीनां हितत्वेनोपदेशो न विरुध्यते सुखानुसन्धित्वादित्यनुसन्धेयम्॥ ३॥

अतः सर्व्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते । तद्-यथा—रक्तशालि-षष्टिक-काङ्गुक-मुकुन्दक-पाण्डुक-पीतक-प्रमोदक-कालकाशनक-पुष्पक-कर्द्दमक-शकुनाहृत-सुगन्धक-कलम-नीवार-कोद्रवोद्दालक-श्यामाक-गोधूम-वेणवादयः । एण-हरिण-कुरङ्ग-मृगमातृकाश्वदंष्ट्रा-कराल-क्रकर-कपोत-लाव-तित्तिरि-कपिञ्जल-वर्त्तीर-वर्त्तिकादीनां मांसानि । मुद्ग-वनमुद्ग-मकुष्ठ-कलाय-मसूर-मङ्गल्य-चणक-हरेणवाढ़की-सतीनाः । चिल्ली-वास्तूक-सुनिषण्णक-जीवन्ती-तण्डुलीयक-मण्डूकपर्ण्यः । गव्यं घृतं सैन्धवदाड़िमामलकमित्येष वर्गः सर्व्वप्राणिनां सामान्यतः पथ्यतमः ॥ ४ ॥

तथा ब्रह्मचर्य्य-निवातशयनोष्णोदक-निशास्वप्न-व्यायामाश्चैकान्ततः पथ्यतमाः ॥ ५ ॥

एकान्तहितान्येकान्ताहितानि प्रागुपदिष्टानि । हिताहितानि तु, यद्वायोः पथ्यं तत्पित्तस्यापथ्यमिति ॥ ६ ॥

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति । तद्यथा—वल्लीफल-कवक-करीराम्लफल-लवण-कुलत्थ-पिण्याक-दधि-

---

नन्वेवं गते कतमेनाहारविहारेण वर्त्तितव्यमित्याह अत इत्यादि । रक्तशाल्यादीनि यथोपदेशमन्नपानविधौ व्याकरिष्यामः । प्रागुपदिष्टानीति सलिलेत्यादिना अग्नीत्यादिना च ग्रन्थसन्दर्भेणेति शेषः । हिताहितानि त्विति तुकारेण प्रागुपदिष्टानीति पदमाक्षिप्यते ॥ ४—६ ॥

संयोगत इत्यादि । वल्ली लता तज्जं फलं वल्लीफलं कुष्माण्डादि, कवकं

तैल--विरोढि--पिष्ट--शुष्कशाकाजाविकमांस--मद्य--जाम्बव-
चिलिचिममत्स्य-गोधा-वराहांश्च नैकध्यमश्नीयात् पयसा ॥७॥

रोगं सात्म्यञ्च देशञ्च कालं देहञ्च बुद्धिमान् ।
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तः प्रयोजयेत् ॥ ८ ॥
अवस्थान्तरवाहुल्याद्रोगादीनां व्यवस्थितम् ।
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥ ९ ॥
द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः ।
दुग्धस्यैकान्तहिततां विषस्यैकान्ततोऽहितम् ॥ १० ॥

---

छत्राकं, करीरो वंशाङ्कुरः, विरोढि जायमानाङ्कुरं मुद्गादि, चिलिचिमो नाम प्रायेण भूमिचरो रोहिताकारो मत्स्यभेदः। उक्तञ्चात्रेयेण "स पुनः शकली सर्व्वतो रोहितराजी रोहितप्रकारः प्रायो भूमौ चरति" इति। शकलं शल्कं मत्स्यत्वगित्यनर्थान्तरम्, तद्वान् शकली। अत्र मत्स्यग्रहणेनैवास्योपलम्भेऽपि पृथगुपादानं दोषातिशयमाख्यातुम्। पयसा ऐकध्यमेकाराशिं कृत्वेत्यर्थः ॥ ७ ॥

श्रुतमवधारितञ्चैतत् स्वस्थवृत्ताधिकारे, कतरन्नु खलु द्रव्यजातमातुरेभ्य एकान्तहितत्वेन प्रयच्छन्ति कुशलास्तदिदानीं विज्ञापयतु भगवन्नित्याह रोगमित्यादि। रोगाणां वृत्तिरत्रेति रोगवृत्तिस्तस्य रोगवृत्तेरातुरसमूहस्य रोगादिकमवेक्ष्य प्रयोजयेत् स्वस्थहितमहितं वा रोगप्रशमनाय प्रयच्छेत्, तान् प्रत्येकान्तहितत्वेन द्रव्यविशेषानुपदेशादिति भावः ॥ ८ ॥

ननु कथमेकान्तहितत्वेन व्यवस्थितं द्रव्यजातमेव नियमेनातुरेभ्यो न प्रयच्छन्ति कुशलाः हितत्वं हि प्रभावस्तच्च यावद्द्रव्यसत्तामनुवर्त्तत एवेत्याशङ्क्याह अवस्थेत्यादि। इच्छन्ति स्वस्थरक्षण इति वयोऽवस्थादिभेदेनावस्थान्तरवाहुल्ये सत्यपि जातिसात्म्यादिति शेषः ॥ ९ ॥

न खल्वेवं प्रत्यायितस्य माऽद्याऽपि समाऽस्मिन्नर्थे सम्यक् प्रत्ययो जातो

एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ।
एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा ॥ ११ ॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः । नवविरूढ़-धान्यैर्वसा-मधु-पयोगुड़-माषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत् । न पयोमधुभ्यां रोहिणीशाकं जातुशाकं

---

दुग्धेतरेषां सलिलादीनां जातिसात्म्यानुपलब्धेः । सात्म्यं हि नाम तत् यदात्मन्युपशेते, न च कस्यचिदप्याजन्मनः सलिलादीनि तान्युपशेरत इति श्रूयते जन्मत एवानुपयोगात्, तत्कथमुपपन्नं भवति जातिसात्म्यादित्यनुयुक्तः पुनर्विशदं प्रत्याययति द्वयोरित्यादिना । नेह द्वयोर्विषदुग्धयोरन्यतरादान इति समन्वयः, परार्द्धेनैकस्यादानेऽपरस्याऽपि हिततेनाहितत्वेन सोपदेशप्रसङ्गात्, तरप्प्रत्ययेनैवोक्तार्थत्वात् द्वयोरित्यसार्थकत्वापत्तेश्च । किन्तर्हि अन्यतरशब्देनेह प्रकृतत्वात् सन्निहितत्वाद्वा स्वस्थ एवाऽभिप्रेयत इति निर्णीयतेऽर्थान्तरासम्भवात् । तथाच द्वयोर्विषदुग्धयोः स्वस्थेनाभ्यवहारोऽन्यतरादानं तस्मिन् दुग्धस्यैकान्तहिततां विषस्यैकान्ततोऽहितं वदन्ति जातिसात्म्यादेकान्ताहितत्वाच्चेति शेषः । निर्द्धारणे चेत् षष्ठी तर्ह्यन्यतरादाने द्वयोर्विषदुग्धयोर्मध्ये दुग्धस्येत्यादिना परेणान्वयः । सलिलादीनामेकान्तहितत्वेन व्यपदेशस्तु तत्साम्यादित्युपदेष्टुमाह एवमित्यादि । एवं युक्तरसेषु दुग्धवत्प्रभावसंसिद्धस्वस्यागर्वत्तिरसयुक्तेषु नान्यथा नान्यत्र न तद्विपरीतेषु विषादिष्वित्यर्थः ॥ १०।११ ॥

प्रासङ्गिकमर्थमुपदिश्य पुनः प्रकृतत्वादप्याकारभेदभिन्नं संयोगविरुद्धमेवाऽनुसन्धत्ते अत इत्यादिना । अत इति सर्व्वनाम्ना वक्ष्यफलादीनि प्रत्यवमृश्यन्ते । ग्राम्या वक्ष्यमाणा अश्वादयः, आनूपाः कूलचरादयः, औदका मत्स्यादयः, अत्रानूपग्रहणेनैवौदकानां लाभे पृथगभिधानं प्रपञ्चयितुं दोषातिशयमाख्यातुं वा । रोहिणी कटुका, जातुशाकं वंशतिकाशाकं,पौष्करशाक-

वाश्नीयात्। बलाकां वारुणीकुल्माषाभ्याम्। काकमाचीं पिप्पलीमरिचाभ्यां नाड़ीभङ्गशाककुक्कुटदधीनि चैकध्यम्। मधु चोष्णोदकानुपानं पित्तेन वा मांसानि। सुराकृशरा-पायसांश्च नैकध्यम्। सौवीरकेण सह तिलशष्कुलीम्। मत्स्यैः सहेक्षुविकारान्, गुड़ेन काकमाचीं, मधुना मूलकम्, गुड़ेन वाराहं मधुना सह विरुद्धम्। क्षीरेण मूलकम्। आम्रजाम्बवश्वाविच्छूकरगोधाश्च सर्व्वांश्च मत्स्यान् विशेषण चिलिचिमं पयसा। कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा लकुचफलं पयसा दध्ना माषसूपेन वा प्राक् पयसः पयसोऽन्ते वा॥ १२॥

अतः कर्म्मविरुद्धान् वक्ष्यामः। कपोतान् सर्षपतैल-भृष्टान् नाद्यात्। कपिञ्जल-मयूर-लाव-तित्तिरि-गोधा-श्चैरण्डदार्व्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्। कांस्य-

मित्यपरे। बलाका नाम पक्षी "कानावकी" इति विज्ञायते। वारुणी मदिरा, कुल्माषोऽर्द्धस्विन्नो गोधूमादिः। नाड़ीभङ्गशाकं नाड़ीपल्लवशाकं, सौवीरकेण काञ्जिकेन। श्वावित्तु "शजारु" इत्याख्यायते। पूर्व्वमैकध्यं मत्स्यपयसोरभ्यवहारः प्रतिषिद्धः सम्प्रति च यथाकथञ्चित्संयोग एव प्रति-षेद्धुमिदमुच्यते सर्व्वांश्चेत्यादि। अत्र विशदमुक्तमात्रेयेण तद्यथा "न मत्स्यान् पयसा सहाऽभ्यवहरेदुभयं ह्येतन्मधुरं मधुरविपाकान्महाऽभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्य्यं विरुद्धवीर्य्यत्वाच्छोणितदूषणाय महाऽभिष्यन्दित्वा-न्मार्गोपरोधाय च" इति। लकुचो डहुः॥ १२॥

अत इत्यादि। कपिञ्जलो गौरतित्तिरिः, एरण्डदार्व्वेरण्डकाष्ठम्, उष्णैः

भाजने दशरात्रपर्य्युषितं सर्पिः। मधु चोष्णैरुष्णे वा। मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीम्। तिलकल्कसिद्धमुपोदिकाशाकम्। नारिकेलेन वराहवसापरिभृष्टां बलाकाम्। भासमङ्गारशूल्यं नाश्नीयादिति॥ १३॥

अतो मानविरुद्धान् वक्ष्यामः। मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्। स्नेहौ मधुस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ॥ १४॥

अत ऊर्द्ध्वं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि वक्ष्यामः। तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ मधुरलवणौ च मधुरकटुकौ च सर्व्वतः। मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ चाम्ललवणौ रसतः। अम्लकटुकौ रसविपाकाभ्यामम्लतिक्तावम्लकषायौ च सर्व्वतः। लवणकटुकौ रसविपाकाभ्यां लवणतिक्तौ लवणकषायौ च सर्वतः। कटुतिक्तौ रसवीर्य्याभ्यां कटुकषायौ तिक्तकषायौ च रसतः॥१५॥

---

उष्णैरुष्णवीर्य्यैर्द्रव्यैः सह उष्णार्त्तैः पुरुषैः सेवितं वा उष्णे उष्णर्त्तौ, आतपादौ स्थितं वा। "मधु चोष्णमुष्णार्त्तेन च" इत्यात्रेयः। वस्तुतस्तु मधु सर्व्वथोष्णविरोधीति वोध्यम् वक्ष्यति च "उष्णैर्विरुध्यते सर्व्वं विषान्वयतया मधु" इत्यादि। परिपच्यतेऽनेनेति परिपचनं स्थाली, भासस्य पक्षिविशेषस्य मांसं भासम्, अङ्गाराग्नौ शूलाकृतमङ्गारशूल्यम्॥ १३।१४॥

अत इत्यादि। मिथुनीकृता रसा रसद्वन्द्वानि संयोगतो मिलितानि रसयुग्मानीति यावत्॥ १५॥

तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णा-नतिशीतानित्येवमादीन् विवर्ज्जयेत्॥ १६ ॥

भवन्ति चात्र ।

विरुद्धान्येवमादीनि वीर्य्यतो यानि कानिचित् ।
तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम् ॥ १७ ॥
व्याधिमिन्द्रियदौर्ब्बल्यं मरणञ्चाधिगच्छति ।
विरुद्धरसवीर्य्याणि भुञ्जानोऽनात्मवान्नरः ॥ १८ ॥
यत्किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ।
रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥ १९ ॥

---

तरेत्यादि । तरतमयोगयुक्तान् न्यूनाधिकयोगयुक्तान् "तारतम्येन वर्त्तमानः" इति शारीरकभाष्यम् चकारात् समयोगयुक्तांश्च अतिरूक्षादिकान् भावान् पदार्थान् माचिकाभृष्टगवेधुकादीन् माहिषघृतचीरादींश्च वर्ज्जयेद्रौक्ष्यादिप्रकर्षभयादिति भावः । अत्रादिग्रहणाद्गुर्व्वादीनामादेशः स्निग्धादिसाहचर्य्याद्वीर्य्यप्राधान्याद्वेत्यनुसन्धेयम् ॥ १६ ॥

एकान्ताहितान्युपसंहरति विरुद्धेत्यादिना । वीर्य्यशब्देनेह रसविपाकप्रभावा अपि लक्ष्यन्ते "येन कुर्व्वन्ति तद्वीर्य्यम्" इति स्मरणात् प्राग्रसादिविरुद्धानामादेशाद्वा, नातोऽनन्तरं विरुद्धरसवीर्य्याणीति रसशब्दोपादानमनुपपन्नम् । अत्रादिना तन्त्रान्तरोक्तानां विरोधिनामवबोधः क्रियते, शेषमेकान्तहितैकान्ताहितादन्यदित्यर्थः ॥ १७ ॥

व्याधिमित्यादि । अत्र विरुद्धरसवीर्य्याणीत्यनेन मध्वम्बुप्रभृतीनामपि ग्रहणात् भुजिरयमभ्यवहारमात्रे प्रवर्त्तत इति गम्यते, तथाच भुञ्जानो लेहादिनोपयुञ्जान इत्यर्थः । आत्मा बुद्धिस्तद्रहितोऽनात्मवान् । अत्रानात्मेति वाच्ये मत्वर्थीयो निन्दितत्वमाविष्कर्त्तुम, तेन मूर्ख इति निष्कर्षः । अविरुद्धमपि हि विरुद्धवत् कर्म्माणि सम्पादयद्विरुद्धमिवावभातीति प्रसङ्गा-

विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।
वमनं शमनं वापि पूर्व्वं वा हितसेवनम् ॥ २० ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ।
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ २१ ॥

अथ वातगुणान् वक्ष्यामः ।

पूर्व्वः समधुरः स्निग्धो लवणश्चैव मारुतः ।
गुरुर्विदाहजननो रक्तपित्ताभिवर्द्धनः ॥
क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये ।
तेषामेव विशेषेण सदा रोगविवर्द्धनः ॥
वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् ।
तेषामेव विशेषेण व्रणक्लेदविवर्द्धनः ।
मधुरश्चाविदाही च कषायानुरसो लघुः ॥ २२ ॥
दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्द्धनः ।

---

दिदमुच्यते यदित्यादि । 'वाशब्दश्चार्थे । यत् किञ्चित् भुक्तमाहारजातं दोषमुत्क्लिश्य विक्षुभ्य कायतो न निर्हरति न बहिष्करोति, यच्च किञ्चित् भुक्तं रसादिषु रसरक्तादिनिमित्तमयथार्थमकारणम्, यद्वा रसवीर्य्यादिष्वर्थमभिधेयं रसं वीर्य्यं विपाकं प्रभावं वाऽतिक्रान्तम् उभयथैव विकृतरसवीर्य्यादिकमित्येतत्, तद्विकाराय कल्पत इति समन्वयः । अत्र रूढ्यर्थस्यासम्भवात् दृष्टोऽयमवयवार्थो यथार्थशब्दस्याऽन्नपानविधौ वक्ष्यमाणं तं तं वचनसन्दर्भविशेषमनुसन्धायेति नाशङ्कयः । हितसेवनं तत्तद्विरोधिप्रत्यनीकरसायनाद्युपसेवनम् ॥ १८—२१ ॥

हिताहितविशेषत्वेन प्रागेव व्याकार्य्यमपि चतुर्व्विधं वातमसङ्गतरूप-

रक्तपित्तप्रशमनो न च वातप्रकोपणः।
विशदो रूक्षपरुषः खरः स्नेहबलापहः॥ २३॥
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः।
सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम्॥ २४॥
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च।
कषायानुरसः शीतो दोषाणामप्रकोपणः॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्द्धनः।
क्षीणक्षयविषार्त्तानां विशेषेण तु पूजितः॥ २५॥

इति सुश्रुतसंहितायां सूत्रस्थाने हिताहितीयो
नाम विंशोऽध्यायः।

---

तया विजातीयत्वात् पृथक्त्वेन गुणतो व्याचिकीर्षुरवसरवशादिदानीमधिकरोति अथेत्यादिना। अथेत्ययमानन्तर्य्यार्थः। कफशोषिणामतितरां कफक्षीणानाम्॥ २२—२५॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने हिताहितीयो नाम विंशोऽध्यायः।

---

# एकविंशोऽध्यायः ।



अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः ॥ १ ॥

वातपित्तश्लेष्माण एव देहसम्भवहेतवः । तैरेव अव्याप-

---

न ह्यञ्जसा व्रणितोपासनीयं तत्प्रसङ्गेनोपदिष्टं हिताहितीयञ्च सम्यग्विविञ्चाना अणुमात्रेणाप्यवगच्छामः कथं नु खलु "व्रण गात्रविचूर्णने" इति धातुः तस्य व्रणयति शरीरमुपतापयतीति व्युत्पत्त्या रुग्मात्रे प्रवृत्तोऽयं व्रणशब्दोऽवदीर्णेषु विद्रध्यादिष्वेव प्रयुज्यत एवं विवक्षूनपाचिकीर्षुरिदानीं व्रणप्रश्नं नामाधिकरोति अथात इत्यादिना । व्रणेष्वाशंसितः प्रश्नो व्रणप्रश्नः, शाकपार्थिवादिषु द्रष्टव्यः । तमधिकृत्य कृतोऽध्यायो व्रणप्रश्नः । अधिकृत्य कृते ग्रन्थे इत्यण् । समानमन्यत् । व्रणं कुर्व्वन्तीति णिचि पचाद्यचा निष्पादितत्वेनाभ्युपगमात् कार्य्यकारणयोरभेदाद्वा व्रणशब्देनैवेह चेत्तत्कारणभूता वातादयो गृह्यन्ते तर्हि किंकर्म्मगुणप्रभावाः किमाश्रयाः किंप्रवृत्तयो वा दोषा व्रणानभिनिर्व्वर्त्तयन्तीत्यनुयोगनिरासार्थोऽयमारम्भ इति सम्प्रधार्य्य दोषेष्वाशंसितः प्रश्नो व्रणप्रश्न इत्येव व्याकरणीयम् । एवञ्चात्र प्रश्नमन्तरेणाऽपि व्रणप्रश्नेति संज्ञा नानुपपन्ना । शेषं प्राग्वत् ॥ १ ॥

यथाऽरुन्धतीं दिदर्शयिषुः प्रथममसुख्यां स्थूलां तारां ग्राहयित्वा तां प्रत्याख्यायाऽरुन्धतीं दर्शयति, तद्वत् शेषे "व्रणोति यस्मात्" इत्यादिना याथातथ्येन सिद्धान्तं चिकीर्षुरभिनिवेशार्थं प्रथमं तावत् स्वलिङ्गतो विलिङ्गतश्च तत्कारणभूतान् वातादीनेवानुसन्धत्ते वातेत्यादिना । अध्यायस्यास्य पक्षान्तरोपलब्धे दोषव्याकरणार्थत्वे चेष्टे, वचनमिदं प्रकृतत्वादधिकृतं वेदितव्यम्, व्रणोतीत्यादि शेषोक्तं वचनन्तु प्रासङ्गिकमित्युभयथैव नानुपपत्तिः । अत्र वातपित्तश्लेष्माण एवेत्येवकारः पार्थ एव धनुर्धर इतिवत् प्रवृत्तोऽन्येषां प्रशस्तदेहसम्भवहेतुत्वमात्रं निरुणद्धीति "त्रयो दोषा धातवश्च

न्तैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्य्यतेऽगारमिव स्थूणा-भिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्र-लयहेतवः; तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्य-विरहितं शरीरं भवति ॥ २ ॥

भवति चात्र ।

---

पुरीषं मूत्रमेव च । देहं सन्धारयन्त्येते" इत्यादयो नानुपपन्नाः । न चात्रा-विशेषाद्वातादीनां प्रशस्तहेतुत्वमश्रद्धेयमिति वाच्यम्, "शुक्रं सौम्यमार्त्तवमा-ग्नेयम्" इत्युपक्रम्य "तेजोऽनिलसन्निपातात् शुक्रं च्युतं योनिमुखमभिप्रति-पद्यते संसृज्यते चार्त्तवेन," तथा "द्वितीये शीतोष्मानिलैरभिपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते" इत्याद्यनागताविचाणात् । अत्र हि सौम्यत्वेनाग्नेयत्वेन च शुक्रशोणितयोर्विवरणं कफपित्तयोरुपदर्शनार्थं शीतो-ष्मतेजःशब्दाद्यासंशयं तदर्थबोधका इति निर्णीयते, परन्त्वेतद्विशदं व्याकरि-ष्यामः । एभिरेव परिपालिता हि धात्वादयः स्वं स्वं कर्म्म कुर्व्वन्तः शरीरं धारयन्त्युपघ्नन्ति चापालितास्तदिदमुच्यते तैरेवेत्यादि । अधआदिसन्नि-विष्टता चैषां परमतो व्यक्तीभविष्यति "वातः श्रोणीगुदसंश्रयः" इत्या-दिना ग्रन्थसन्दर्भेण । सामान्यतो गृहस्तम्भापरपर्य्यायस्यापि स्थूणाशब्द-स्येह भित्तौ प्रपतिष्यदगारावष्टम्भके विष्कम्भसमाख्ये कीलके वा तात्पर्य्यमि-त्यतः स्थूणात्रितयेनागारावष्टम्भनस्यासामञ्जस्यं नाशङ्कितव्यम् । अतश्चेति-चकारोऽवधारणार्थः । एक इति "ऊर्द्ध्वमूलमधःशाखं त्रिस्थूणं पञ्चदैवतम्" इत्येवंवादिनः । उक्तमर्थमुपसंहरति तदित्यादिना । न च शोणितमन्तरेण वातादयः किमपि कर्त्तुमुत्सहन्ते सिरानुसारिणो हि ते इति स्वयमेव निवे-दयिष्यते सिराधिकारे, सिराश्च नित्यशोणिताः शोणितञ्च देहमूलमित्य-वोचत्तदिदं दोषवदुपचारादुच्यते शोणितचतुर्थैरिति । तत् तस्मात् शोणित-चतुर्थैरेभिर्वातादिभिरविरहितं कारणतया अपरित्यक्तमित्यर्थः ॥ २ ॥

नर्त्ते देह: कफादस्ति न पित्तान्न च मारुतात्।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥ ३ ॥

तत्र वा गतिगन्धनयोरिति धातु:, तप सन्तापे, श्लिष आलिङ्गने। एतेषां कृद्विहितै: प्रत्ययैर्वात: पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥ ४ ॥

दोषस्थानान्यत ऊर्द्धं वक्ष्याम:। तत्र समासेन वात: श्रोणीगुदसंश्रय:। श्रोणीगुदयोरुपर्य्यधो नाभे: पक्वाशय:, पक्वामाशययोर्मध्यं पित्तस्य। आमाशय: श्लेष्मण: ॥ ५ ॥

---

प्राग्वदुक्तमर्थं विशदं श्लोकेनाऽभिधत्ते नेत्यादिना। कफादृते नास्ति नश्यतीत्यर्थं, तुकारादुत्पद्यते चेति लक्षणीयम् ॥ ३ ॥

येन येन कर्म्मणैते वातादयोऽत्र हेतवो भवन्ति व्याज्येन तत्तदुपदेष्टुं व्युत्पादयति तत्रेत्यादिना। अत्र वातादिषु मध्ये इत्यर्थ:। कृद्विहितै: 'त'-प्रभृतिभिरौणादिकै: प्रत्ययै: वात: पित्तं श्लेष्मेति रूपाणीति, वाति गच्छति विभागायेति वात:, तपति पचति संस्कारविशेषायेति पित्तं पृषोदरादि, श्लिष्यति संघातायेति श्लेष्मेत्येवं व्युत्पत्त्येति भाव:। अतएत वक्ष्यति च "तच्चेतनावस्थितं वायुर्विभजति" इत्यादि। दोषेत्यादि। श्रोणीगुदसंश्रय इति। श्रोणीशब्दोऽत्रोपचारात्तदधिष्ठिते पक्वाशय एव प्रवर्त्तत इति गम्यते "पक्वाधानगुदालय:" इति वक्ष्यमाणैकवाक्यत्वात्। सगुदश्च तं पुनर्वातस्थानेषु प्रधानतमं मन्यन्ते भिषजस्तद्योनित्वात्। तथाच श्रोणीगुदयोरिह्वोपदेशेनैवाविशेषात् सर्व्वे वातसंश्रया व्याख्याता भवन्ति प्रधानपरिग्रहे तदनुगतानामर्थापन्नत्वादिति मन्वान आह समासेनेति। समासेन संक्षेपेण प्राणाद्यविशेषेणेति यावत्। पित्तस्थानं निर्द्दिदिक्षुर्गमकत्वात् प्रथमं तावत् पक्वाशयमनुसन्धत्ते श्रोणीत्यादिना। पक्वाशयो हि श्रोण्या उपर्य्याधेयत्वेन गुदोपरि च तदूर्द्धमान्त्रप्रतिबद्धान्त्रिमांशत्वेनावतिष्ठत इत्युच्यते श्रोणीगुदयो-

अतः परं पञ्चधा विभज्यन्ते। तत्र वातस्य वातव्याधौ वक्ष्यामः। पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्व्वोक्तञ्च। श्लेष्मणस्तूरःशिरःकण्ठसन्धय इति पूर्व्वोक्तञ्च। एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥ ६ ॥

विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ ७ ॥

---

रुपरीति। अत्राधो नाभेरिति विशेषणं कारकङ्गणन्यायात् सुखप्रतिपत्त्यर्थम्। पक्वामाशययोर्मध्यमित्यनेन ग्रहण्येव निर्द्धार्यते, वक्ष्यति हि "षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता" इति। साक्षादामानां भुक्तद्रव्याणामाशय आमाशयः ॥ ४।५ ॥

मुख्यस्थानान्युपदिश्य चिकित्सोपयोगितया गौणान्युपदिशन्नाह अत-इत्यादि। विभज्यन्ते दोषस्थानानीत्यनुषज्यते। तत्र दोषस्थानेषु मध्ये वातस्य स्थानानीति शेषः। वातव्याधौ वातव्याधिनिदाने इत्यर्थः। पित्तस्येत्यादौ पूर्व्वोक्तञ्चेत्यनेन पित्तामाशययोरनुस्मरणं स्मृतिदार्ढ्यार्थम्। श्लेष्मणस्त्वित्यादौ तु स्थिरत्वचलत्वभेदेन सन्धेर्द्वैविध्यात् पञ्चधेति प्रागुक्तं मानुपपन्नम्। न च "स्वेदो रसो लसीका रुधिरमामाशयश्चेति पित्तस्थानानि" तथा "उरःशिरोग्रीवापर्व्वाण्यामाशयो मेदश्च श्लेष्मणः स्थानानि" इति चरकानुशासनाद्वचनमिदं न्यूनतया वाक्यदोषेणाशङ्कितव्यम्, प्राधान्येनोपदेशात्। अत्र एतानीत्यादिना "पक्वामाशयमध्यादीनामव्यापन्नदोषस्थानत्वेनोपदेशेनार्थात्क्षिप्तं भवति व्यापन्नानां स्थाननियमो नास्त्यव्यापन्ना अपीतरत्र गतागतैर्वर्त्तन्त इति तिष्ठतेर्गतिनिवृत्त्यर्थत्वान्नातः सर्व्वशरीरचरास्तु वातपित्तश्लेष्माणः कुपिताकुपिताः शुभाशुभानि कुर्व्वन्ति" इति चरकवचनं विरुद्धं भवति ॥ ६ ॥

स्यादेतत्, कथं नु खल्वन्तःशरीरेऽचेतना दोषाश्चेतनवत् प्रवृत्ताः शरीरं धारयन्तीत्येवमाशंसूनपाचिकीर्षुरर्थमिमं दृष्टान्तेनावगमयति विसर्गेत्या-

तत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः, आहो-स्वित् पित्तमेवाग्निः ? इति। अत्रोच्यते,—न खलु पित्त-व्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहन-पचनादिष्वभिवर्त्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति।

---

दिना। विसर्गोऽत्र रसस्य यथाप्रयोजनं मोचः, आदानं पुनः पक्वा तस्या-हरणं, विक्षेपस्तु यथायोगं तदीरणम्। सोमादयो यथा स्वप्रभावाद्रसवि-सर्गादिभिः कर्म्मभिर्जगद्धारयन्ति तथैव कफादयो देहमित्यर्थः॥ ७॥

नन्वायुर्वेदे इदमप्याम्नायते "एवं रसमलायान्नमाशयस्थमधःस्थितः। पचत्यग्निः" इति। तत् किं पित्तमुताहो अग्निरेव रसमादत्त इत्येकतरं निश्चित्योपदिशतु भगवानेवंवादिनामवसरं सुष्णन् संशयमवतारयति तत्रे-त्यादिना। तत्र रसादाने इत्यर्थः। पित्तव्यतिरेकादिति पित्तेभ्यो यकृदा-दिस्थेभ्यो वक्ष्यमाणेभ्यो रञ्जकादिभ्यो विशिष्टेनातिरेको मूलत्वेनाधिक्यं प्राधान्यं वा यस्य तत् पित्तव्यतिरेकं पक्वामाशयमध्यस्थं पाचकं नाम पित्त-मित्येतत्। तस्मादन्यः किमग्निरिति समन्वयः। आहोस्विदित्ययमथवार्थे। पित्तमेवेति, पित्तशब्दः साहचर्य्यात् पित्तव्यतिरेकं पित्तमेवाभिधत्त इति गम्यते। उत्तरयति अत्रेत्यादिना। खल्विति निपातो वाक्यालङ्कारार्थः। पित्तव्यतिरेकात् पाचकात् पित्तादन्योऽग्निर्नोपलभ्यते, प्रत्यक्षतो न ज्ञायते इत्यर्थः। किन्तर्हि द्रवत्वादधोगामिनि पित्ते ऊर्द्ध्वज्वलनमध्यवस्य अग्नि-त्वमङ्गीकार्य्यम् ? नेत्याह इति योजना। कथन्तर्ह्युच्यते "न खलु पित्त-व्यतिरेकादन्योऽग्निः" इत्याह आग्नेयत्वादिति। आग्नेयत्वात् अन्तर्गताग्नि-कत्वेनाग्निसम्बन्धित्वात्। दहनादिषु प्रवृत्ते पित्ते अन्तरग्निरित्यनया सं-ज्ञयाऽग्निवदुपचारो व्यवहारः क्रियते, यथाग्निनिमित्तमुदकादेर्दग्धृत्वमध्य-वस्यते, तद्वत्। वस्तुतस्तु पित्तं नाग्निरिति भावः। अत एवोक्तमात्रेयेण "अग्निरेव पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति" इति। ननु सन्त्यपि रूपाणि सौक्ष्म्यादावरणाच्च नोपलभ्यन्ते तत्कथमन्तःशरीरे नास्त्ये-

क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिप्रवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति ॥ ८ ॥

वाग्निः पृथक्नेत्यध्यवस्याम इत्येवं प्रत्यवस्थितानपाकर्त्तुमनुमानमाश्रयते क्षीणे इत्यादिना। अग्निगुणे दहनाद्यनुकूले उष्मणि क्षीणे, मन्दोष्मतादौ जाते तत्समानद्रव्योपयोगात् "सामान्यं वृद्धिकारणम्" इति स्मरणात् वृद्धिनिमित्तं पित्तसमानानां कट्वादीनामुपयोगादित्यर्थः। चकारः प्रत्यासत्त्या सर्व्वत्रान्वीयते, अतिवृद्धे च तस्मिन् शीतक्रियोपयोगादिति गुणिपरोऽयं शीतशब्दः पित्तप्रत्यनीकं शीतमधुरादिकं सर्व्वमेव द्रव्यमुपलक्षयतीति वक्ष्यमेव "ह्रासहेतुर्व्विशेषश्च" इति न्यायात् पश्याम इति परेणान्वयः। अयमाशयः यद्यन्तःशरीरे पित्तव्यतिरेकादन्योऽग्निरभविष्यत्, तर्हि तदुपशमार्थं विदितवेदितव्या महर्षयः "अथ्यात्तशैदकानूपपिशितानि घृतानि च"इत्यादिना उदकेतरेषामुपयोगोपदेशं नाकरिष्यन्, अग्निर्हि उदकं विना सर्व्वाण्येव दहति, तथाच मनुः "अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्। तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति" इति।

नन्वग्निगुणे क्षीणे वृद्धे च तत्समानासमानद्रव्योपयोगादेव पित्तव्यतिरेकान्नान्योऽग्निश्चेत्तर्हि पित्तप्रकोपणशमनैः प्रकुप्यत् प्रशाम्यच्च शोणितमपि पित्तान्नान्यदित्यपि वक्तुं प्रसज्येतेति नानुमानं कारणमेवं ये प्रत्यवतिष्ठन्ते तान् पुनस्तूष्णीञ्चिकीर्षति आगमाच्चेत्यनेन, आगमो ह्याप्तवचनमुच्यते, आप्तास्त्वप्रमाणं न भाषन्ते, तथाच "रजस्तमोभ्यां निर्म्मुक्ताः" इत्युपक्रम्य "आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्" इत्याद्यैयमनुशासनम्। तदयं स्रोतव्य इत्युक्तमागमाच्चेति अन्वयस्तु प्राग्वदेव। आगमस्तावत् "उष्मा तेजोमयं पित्तं पित्तोष्मा यः सपक्तिमान् स कायाग्निः" इति भोजीयः। "दर्शनं पक्तिरुष्मा च" इत्युपक्रम्य "पित्तकर्म्माविकारजम्" इति चरकीयः। वक्ष्यते च "कानकं राजतं ताम्रं" इत्युपक्रम्य "विलीयन्ते पित्ततेजःप्रतापनात्" इत्यादिः। नैव "तीक्ष्णः पित्तेनाग्निः" तथा

तच्चादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति विवेचयति च रस-दोष-मूत्र-पुरीषाणि तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणानुग्रहं करोति तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा ॥ ९ ॥

यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा ; स रसस्य रागकृदुक्तः ॥ १० ॥

---

"कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् । आप्लावयद्धन्त्यनलम्" इत्यादयोऽप्यनुपपन्नाः । आगमा ह्येते नाग्निपित्तयोर्भेदं वक्ष्याम इति प्रवृत्ताः । किन्तर्हि अग्नेर्वृद्धिह्रासहेतुं वक्ष्याम इति; तथाच प्रत्यासत्त्या तीक्ष्णेन पित्तेनोपलक्षितोऽग्निस्तीक्ष्णो बलीयानित्यर्थः । परिपुष्टेन तिलेनोपलक्षितं तैलं प्रवृद्धमितिवत् । तथा कट्वाद्यैरुल्बणं विदग्धत्वेनातितरां द्रवीभावमापन्नं पित्तं तदन्तर्गतमनलम् आप्लावयत् द्रवांशेन परिभवत् हन्ति । यथा विदग्धं शोणितमुदकमाढ्यवत् नात्यौष्ण्यशैत्येन समं स्वं माधुर्य्यम् उपहत्याम्लतामुपैति तद्वदित्येवं व्याख्येयम् ॥ ८ ॥

नन्वेतच्चेत्तत्त्वं कथन्तर्हि दग्धृत्वेनोपलब्धं पित्तं भस्माऽऽख्याऽन्नप्रसिद्धेन रसाहरणात्मकेन कर्म्मणा सूर्य्यमनुकरोति येनोक्तम् विसर्गेत्यादि, कथं वा पाचकेतरेषां यकृदादिस्थानां पित्तानां वक्ष्यमाणं तत् पक्तृत्वं समन्वितं भवतीत्याशङ्क्याह तच्चेत्यादि । चकारोऽवधारणार्थः । तत् पूर्व्वोक्तमेवेत्यर्थः । अदृष्टहेतुकेनालौकिकहेतुकेन विशेषेणाग्नितो भेदेन विवेचयति, रसमाजिहीर्षया अन्नपानात् पृथक्करोति, न जातु दहतीति भावः । आत्मशक्त्या स्वप्रभावेन, शेषाणां यकृदादीनां, शरीरस्य शरीरोपादानभूतस्य रसरक्तादेराग्निकर्म्मणाऽनुग्रहं किट्टप्रसादरूपेण परिणामरूपमानुकूल्यं करोतीत्यर्थः । तथाच चरकः "सप्तभिर्देहधातारो धातवो द्विविधं पुनः । यथास्व-

यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा; सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः ॥ ११ ॥

यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा; स रूपग्रहणेऽधिकृतः ॥ १२ ॥

यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा; सोऽभ्यङ्गपरिषेकावगाहावलेपनादीनां क्रियाद्रव्याणां पक्ता-च्छायानाञ्च प्रकाशकः ॥ १३ ॥

पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ।
उष्णं कटुरसञ्चैव विदग्धञ्चाम्लमेव च ॥ १४ ॥

श्लेष्मस्थानान्यत ऊर्द्ध्वं वक्ष्यामः। तत्रामाशयः पित्ताशय-स्योपरिष्टात् तत्प्रत्यनीकत्वादूर्द्ध्वगतित्वात् तेजसश्चन्द्र इवा-

---

सग्निभिः पाकं यान्ति किट्टप्रसादतः” इति। देहधातारो देहधारका रसादयो धातवो यथास्वं स्वैः सप्तभिरग्निभिः किट्टप्रसादतो द्विविधं पाकं यान्तीति तदर्थः। क्रियार्थानि द्रव्याणि क्रियाद्रव्याणि, अभ्यङ्गादयः शब्दा अत्र करणसाध्या, नातः सामानाधिकरण्यं प्रच्यवते। छाया कान्तिः चकारात् प्रभेत्यायुर्व्वेदविदो भाषन्ते। “आसन्ना लक्ष्यते छाया प्रभा दूरात्प्रकाशते। वर्णमाक्रामति छाया प्रभा वर्णविकाशिनी” इति पृथक्त्वेनाभ्युपगमात् ॥ ८—१४ ॥

न खल्वामाशयः श्लेष्मणः स्थानमिति प्रागुक्तेनायं सम्यङ्निश्चीयते, नापि च पित्ताशयोपरिष्ठादवस्थानमस्य सहसा समन्वितं भवति श्लेष्मान्वयात्, आर्य्यं हि तत्त्वं श्लेष्माणं पित्ताशयस्थोऽग्निरेवात्तेनोच्छेत्तुमुत्सहते यथा-ग्निरखागतं सलिलमित्याह तत्रेत्यादि। तत्र श्लेष्मस्थानेषु मध्ये आमाशय-श्लेष्मसः पित्ताशयस्य आग्नेरूर्द्ध्वगतित्वादूर्द्ध्वज्वलनस्वभावादेतोस्तत्प्रत्यनीक-

दित्यस्य; स चतुर्व्विधस्याहारस्याधार:। स च तत्रौदकैर्गुणै-राहार: प्रक्लिन्नो भिन्नसङ्घात: सुखजरश्च भवति ॥ १५ ॥

माधुर्य्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ।
आमाशये सम्भवति श्लेष्मा मधुरशीतल: ॥ १६ ॥

स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य

---

त्वात् ऊर्द्धगतिप्रतिबन्धित्वेन तेज:प्रतिकूलत्वात्, पित्ताशयस्योपरिष्टादस्तीति शेष:। अत्र दृष्टान्त: चन्द्र इवेति, चन्द्रो यथा आदित्यस्याऽग्नेयत्वेऽपि तदुपरिष्टादनुष्णसौम्यत्वेन वर्त्तते, तद्वदेवायमपि पित्ताशयस्योपरिष्टादनुपहतश्लेष्मत्वेनेति भाव:। न च "मन्दामरेज्य-भूपुत्र-सूर्य्य-शुक्रेन्दुजेन्दव:। परिभ्रमन्त्यधोऽध:स्था:" तथा "छादको भास्करस्येन्दुरध:स्थो घनवद्भवेत्" इति सूर्य्यसिद्धान्तविरोधात् दृष्टान्तोऽयमनुपपन्न इत्याशङ्कितव्यम्, "भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम्। लक्षाद्दिवाकरस्यापि मण्डलं शशिन: स्थितम्" इति विष्णुपुराणप्रसिद्धत्वात्। नन्वयं किमर्थं तैजस ऊर्द्धगतिं निरुध्य तथावतिष्ठत इत्याह स इत्यादि। स्यादयं चतुर्व्विधस्याहारस्याधार: किन्तेनेति स्फुटीकरोति स चेत्यादिना, चकारो हेतौ, यथोक्तं "शान्ता घोराश्च" इति कारिकाव्याख्यायां वाचस्पतिमिश्रै:। तदयमर्थ: यस्मात् स आहार: तत्रामाशये औदकैर्गुणै: प्रक्लेदित्वादिभि: प्रक्लिन्न: सम्यगार्द्र: सन् भिन्नसंघात: सुखजरश्च भवति, तात्पर्य्यात् प्रतिहतोर्द्ध्वगतिकेन तेजसा, तस्मात् तथा वर्त्तते इति भाव:। व्यक्तमुक्तञ्चात्रेयेण "एवं रसमलायान्नमाशयस्थमध:स्थित:। पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम्" इति। एवञ्च पित्ताशयस्थे अग्नौ क्षीणे आमाशयस्थान्याहारद्रव्याणि नैव तथा परिणमन्त इत्यवगन्तव्यम्। अग्निरेव हि तदात्वे आत्मशक्त्या मुहुर्मुहुरामाशयं सङ्कोच्य प्रसार्य्य च तद्गतान्याहारद्रव्याणि मण्डत्वेन परिणमयतीति ॥ १५—१६ ॥

स इत्यादि। स इति श्लेष्मेत्यवमर्शकम्। स्वशक्त्या स्वप्रभावेण।

चोदककर्म्मणानुग्रहं करोति। उरःस्थस्त्रिकसन्धारणमात्म-वीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति। जिह्वामूल-कण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरःस्थः स्नेहसन्तर्पणाधिष्ठितत्वादिन्द्रियाणामात्मवीर्य्येणानु-ग्रहं करोति। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्व-सन्ध्यनुग्रहं करोति॥ १७॥

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च।
मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः॥ १८॥

शोणितस्य स्थानं यकृत्प्लीहानौ, तच्च प्रागभिहितम्। तत्रस्थमेव शोणितस्थानानामनुग्रहं करोति॥ १९॥

---

उदककर्म्मणा आर्द्रीकरणादिना। त्रिकं पृष्ठवंशस्याधोभागः। आत्म-वीर्य्येण स्वप्रभावेण। हृदयसंचयं करोति, ओजःशोणितोत्पादनार्थमित्यु-पपन्नं भविष्यति। पित्तस्थानत्वेनोपदिष्टस्यापि हृदयस्य पुनः श्लेष्मस्थान-त्वेन व्यपदेशस्त्वोजसोऽधिष्ठानत्वादेवेति लक्षणीयम्, तद्धि श्लेष्मतो नाति-रिच्यत इत्यवोचाम। "तावद्धैव श्लेष्मणश्चौजसः" इति चरकस्मरणात्। न हि कश्चिदिन्द्रियसन्निकर्षमन्तरेण कमप्यर्थं विज्ञातुमुत्सहते इत्यनन्यतो-दर्शनन्यायात् प्राक् स्थूलतः श्लेष्मस्थानत्वेनोपदिष्टं कण्ठमिदानीं विशिनष्टि जिह्वामूलेति विशेषणेन। जिह्वाया मूलं यत्र तथाविधे कण्ठे तिष्ठतीति जिह्वामूलकण्ठस्थः, तद्गुणसंविज्ञानोऽयं बहुव्रीहिरित्यतो जिह्वामूलेऽपि श्लेष्मणो वृत्तिमत्त्वेनोपलम्भात् सुष्ठूपपन्नं भवति जिह्वेन्द्रियस्येति, यद्यदा-त्मकं हीन्द्रियं तत्तदात्मकमेवार्थमनुधावति स्वभावात्। तैलादिना सम्यक् शीणतेऽध्यक्षः स्नेहसन्तर्पणादिक्षतः "अध्यक्षाविक्षतौ समौ" इत्यमरः। शेषमतिरोहितार्थम्॥ १७। १८॥

क्रमागतत्वाच्छोणितस्य स्थानं निर्द्दिदिक्षति शोणितस्येत्यादिना। यकृ-

अनुष्णाशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः ।
शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत् ॥ २० ॥

एतानि खलु दोषस्थानानि, एषु सञ्चीयन्ते दोषाः प्राक् सञ्चयहेतुरुक्तः । तत्र सञ्चितानां दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणद्वेषश्चेति लिङ्गानि भवन्ति । तत्र प्रथमः क्रियाकालः ॥२१॥

अत ऊर्द्ध्वं प्रकोपणानि वक्ष्यामः । तत्र बलवद्विग्रहातिव्यायाम-व्यवायाध्ययन-प्रपतन-प्रधावन-प्रपीड़नाभिघात-लङ्घन-प्लवन-तरण-रात्रिजागरण-भारहरण-गज-तुरङ्ग-रथ-पदातिचर्य्या-कटु-कषाय-तिक्त-रूक्ष-लघु-शीतवीर्य्य-शुष्कशाक-वल्लूर-वरकोद्दालक-कोरदूष-श्यामाक-नीवार-मुद्ग-मसूराढ़की-हरेणु-कलाय-निष्पावानशन-विषमाशनाध्यशन-

---

गिति शोणितवर्णनीये । अनुष्णशीतत्वमस्य रसपित्तसम्भूतत्वाल्लक्षणीयम् । सञ्चयहेतुरुक्त इति वर्षास्वोषधय इत्यादिना ग्रन्थसन्दर्भेण । किन्नु खलु सञ्चितानामेषां लिङ्गानि भवन्ति यान्यभिसमीक्ष्य प्रतिकर्त्तुं प्रभविष्याम इत्याह तत्रेत्यादि । तत्र दोषेषु मध्ये इत्यर्थः । तत्र स्तब्धपूर्णकोष्ठता वातस्य, पीतावभासता पित्तस्य, शेषाणि त्रीणि कफस्य, चयकारणविद्वेषश्चेति सामान्यमिति केचित् । प्राचुर्य्यविशेषात् सर्व्वाणि सर्व्वेषामित्याहुः ॥ १९—२१ ॥

अत इत्यादि । बलवद्विग्रह इति । बलमर्हतीति बलवत्, "तदर्हम्" इति वतिः, बलेन विग्रह इत्यर्थः । आदिग्रहणात् मुष्टिघातादीनामादेशः । अतिशब्दो व्यायामादिभिस्त्रिभिरेव सम्बध्यते । अतिचर्य्याऽत्यटनमिति च गजादिभिश्चतुर्भिरेव, वल्लूरादीनि चान्नपानविधौ व्याकरिष्यामः । आदिना

व्यात-मल-पुरीष-शुक्र-च्छर्दि-क्षवथूद्गार--वाष्पवेग-विघातादि-भिर्विशेषैर्वायुः प्रकोपमापद्यते ॥ २२ ॥

स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः ।
प्रत्युषस्यपराह्णे तु जीर्णेऽन्ने च प्रकुप्यति ॥ २३ ॥

क्रोध-शोक-भयायासोपवास-विदग्धमैथुनोपगमन-कट्वम्ल-लवण-तीक्ष्णोष्ण-लघु-विदाहि-तिलतैल-पिण्याक-कुलत्थ-सर्षप-आतसी-हरितक-शाक-गोधा-मत्स्याजाविकमांस--दधि-तक्र-कूर्च्चिका-मस्तु--सौवीरक-सुराविकाराम्लफल--कट्वरप्रभृतिभिः पित्तं प्रकोपमापद्यते ॥ २४ ॥

तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः ।
मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति ॥ २५ ॥

दिवास्वप्नाव्यायामालस--मधुराम्ल--लवण--स्निग्ध--गुरु-पिच्छिलाभिष्यन्दि-हायनक-यवक-नैषधेत्कट-माष-महामाष-गोधूम-तिल-पिष्ट-विकृति-दधि-दुग्ध-कृशरा-पायसेक्षुविकारा-नूपौदकमांस-वसा-बिस-मृणाल-कशेरुक-शृङ्गाटक-मधुरवल्ली-फल-समशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥ २६ ॥

---

कामादयोऽवष्टभ्यन्ते । "कामशोकभयाद्वायुः" इति स्मरणात् । शीताद्युपलक्षिताः कालाः शीताभ्रप्रपाताः, घर्म्मान्तः प्रावृट् ॥ २२—२३ ॥

शोकभययोरत्र पुनरुपदेशात् वातपित्तप्रकोपित्वमनुसन्धेयम् । शेषाणि परमतो द्रवद्रव्यादिविधावर्थतो निवेदयिष्यामः । एतेनैवानन्तरोक्तानि हायनकादीन्यप्यादिष्टानि । अभिष्यन्दीनि प्रक्लेदीनि नवमद्यादीनीति

स शीतैः शीतकाले च वसन्ते च विशेषतः ।
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ २७ ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रव-स्निग्ध-गुरुभिश्चाहारै-र्दिवास्वप्न-क्रोधानलातप-श्रमाभिघाताजीर्ण-विरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते ॥ २८ ॥

यस्माद्रक्तं विना दोषैर्न कदाचित्प्रकुप्यति ।
तस्मात्तस्य यथादोषं कालं विद्यात्प्रकोपणे ॥ २९ ॥

तेषां प्रकोपात् कोष्ठतोद-सञ्चरणाम्लिका-पिपासा-परि-

---

यावत् । नैषधेत्कटौ जिज्ञासितव्यौ । समशनं हिताहितोपसंयुक्तमन्नम् । अध्यशनं अजीर्णे पुनर्भोजनम् ॥ २४—२६ ॥

स इत्यादि । शीतकालो दुर्दिनादिः, न तु हेमन्तस्तस्य चयहेतुत्वेन व्यपदेशात् ; वसन्तशब्दसाहचर्य्याद्धेमन्त एव चेदभिप्रेयते, तर्हि श्लेष्मप्रकृतेः प्रकृतिनिष्ठो हेमन्तरसञ्चितो वा श्लेष्मा प्रकोपणकर्त्तृत्वेन निरूपणीयः ॥२७॥

पित्तेत्यादि । प्रकोपणैरेवेत्येवकारः पार्थ एव धनुर्धर इतिवत् प्रवृत्तोऽन्येषां प्रकर्षेण पित्तप्रकोपित्वं निरुणद्धि । अभीक्ष्णमत्यर्थमुपयुक्तैरित्यूह्यम् । पित्तप्रकोपणत्वेनैव क्रोधादीनामुपलम्भेऽपि पृथगुपादानमाशुकारित्वमाख्यातुम् । यस्मादित्यादि । यस्य दोषस्य यः प्रकोपणकालस्तमनतिक्रम्येति यथादोषं कालमिति तु सामान्येनोक्तमपि शरद्व्यतिरिक्तत्वेन विशेषणीयम् । तत्र हि कालस्वभावाहितबलं शोणितं दुष्टत्वेनास्वतन्त्रतया यं कञ्चिद्दोषमाश्रित्य प्रकोपमापद्यते । आम्नायते च "शरत्कालस्वभावाच्च शोणितं संप्रकुप्यति" इति ॥ २८ । २९ ॥

तेषामित्यादि । अत्र कोष्ठतोदसञ्चरणं वातस्य, अम्लीका अम्लोद्गीरणं-

शाघ्रान्नद्वेष-हृदयोत्क्लेदाश्च जायन्ते। तत्र द्वितीयः क्रिया-कालः ॥ ३० ॥

अत ऊर्द्ध्वं प्रसरं वक्ष्यामः। तेषामेभिरातङ्कविशेषैः प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति, तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये; स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्व्वभावानाम् ॥ ३१ ॥

---

पिपासा परिदाहश्च पित्तस्य, शेषं कफस्येत्याहुः। द्वितीयः क्रियाकाल इति तु "सञ्चयेऽपहृता दोषाः" इत्याद्यनागतावेक्षणादपेक्षावुक्तितो व्याधिर्व्वलवत्तामभिसमीक्ष्य प्रथमक्रियाऽसाध्यत्वादेवोपदिश्यत इति गम्यते। नातः क्रियाकालजिहासामभिनन्दन्ति कुशलाः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ३० ॥

स्थानतो निर्द्दिष्टा अपि दोषा यथेतरत्रापि व्याधीनभिनिर्व्वर्त्तयितुं प्रभवन्ति तद्विजिज्ञापयिषति अत इत्यादिना। एभिः कोष्ठतोदादिभिरातङ्कविशेषैर्ज्ञनकालेनोपलक्षितानां पर्य्युषितकिण्वादिसमवाय इवोद्रिक्तानां कालप्रकर्षाच्चितात्मशक्त्या स्वप्रमाणमतिक्रान्तानां कुपितानां तेषां दोषाणां प्रसरो यथाकामं सञ्चारो भवत्यतः स्थानतो निर्द्दिष्टा अप्यलं यत्र तत्र व्याधीनभिनिर्व्वर्त्तयितुमित्ययमाशयः। अतएव वक्ष्यति च "कृत्स्नेऽर्द्धेऽवयवे वापि" इत्यादि। किण्वमत्र मद्यवीजम्। पिष्टानि चार्द्रस्विन्ना एव तण्डुलादयो न तु चूर्णिताः, मद्याभिषवे प्रायस्तेषामनुपयोगात्। मेलनापरपर्य्यायोऽपि समवायशब्दः "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् समवेतत्वेनैतानि विवक्षितानीत्यनुसन्धेयम्। भगवन् किमु खलु कारणमासाद्याचेतनानामेते चेतनवत् प्रकामं प्रसरन्तीत्यनुयोगिमामवसरं सुश्रुतात्राह तेषामित्यादि। तेषां दोषाणां मध्ये वायुरचैतन्ये सत्यपि गतिमत्त्वात् प्रसरणहेतुः, प्रसारे निमित्तकारणमित्यर्थः। उक्तमर्थं द्रढ़यति स इत्यादिना। हि यस्मात् स वायू रजोभूयिष्ठः, वक्ष्यति च "रजो-

यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदार्य्यापरेणोदकेन व्यामिश्रः सर्व्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति। तद्यथा— वातः पित्तं श्लेष्मा शोणितम्। वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते। वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणितानि वातपित्तकफा वात-पित्त-कफ-शोणितानीत्येवं पञ्चदशधा प्रसरन्ति॥ ३२॥

कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्।
दोषो विकारं नभसि मेघवत्तत्र वर्षति॥ ३३॥

---

बहुल एव च" इति। अस्तु रजोभूयिष्ठत्वं वायोः किन्तेनेत्याह रजश्चेति। चकारोऽवधारणार्थः। सर्व्वभावानां सत्त्वाद्यात्मकानां सर्व्वेषां पदार्थानां रज एव प्रवर्त्तकं, प्रवृत्तिप्रत्ययभूतम्। तथाच "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः" इति सांख्याः। तस्माद्वायोः प्रसरणहेतुत्वे न काचिद्विप्रतिपत्तिरिति भावः। न च तिर्य्यग्गत्वाद्वायोः सर्व्वतः प्रसरणे निमित्तत्वमनुपपन्नमिति वाच्यम्,जीववति शरीरे प्राणापानयोरूर्द्ध्वाधोगतिदर्शनादेव तिर्य्यग्गत्वमात्रेणानभ्युपगमात्। विकारिणां विकृतत्वेनानियतगतित्वाद्वा॥ ३१॥

प्रसरप्रकारं दृष्टान्तेन स्फुटीकृत्य संख्यया निर्द्दिदिक्षति यथेत्यादिना। अतिवृद्धः पर्य्याप्तत्वेन मर्य्यादामतिक्रान्तः। एवमिति तथार्थः। अत्र एकश इत्यपि दृष्टान्तं सर्व्वथाऽनुकरोत्येव "न रोगोऽप्येकदोषजः" इति स्मरणात्, दोषान्तरेण व्यामिश्रा अपि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायादेकैकत्वेन व्यपदिष्टा इत्यर्थोपपत्तेः॥ ३२॥

यथाप्रसरं व्याधिजन्मानुसन्धायाभिधत्ते कृत्स्न इत्यादि। भृशमत्यर्थं

नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति ।
निष्प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥ ३४ ॥

तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतीकारः, पित्तस्य कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवत्; एष क्रियाविभागः । एवं प्रकुपितानां प्रसरताञ्च वायोर्विमार्गगमनाटोपौ । ओषचोषपरिदाहधूमायनानि पित्तस्य । अरोचकाविपाकाङ्गसादाश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति । तत्र तृतीयः क्रियाकालः ॥ ३५ ॥

अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः । एवं कुपितास्तांस्तान्

---

कुपितो दोषो यत्र कृत्स्ने समस्ते अङ्गे, अर्द्धे खण्डे वा अवयवे प्रसरति, तत्र नभसि मेघवत् विकारं वर्षति विकृतिभावं करोतीत्यर्थः । उक्तमर्थं पुनर्विशिनष्टि नेत्यादिना । चकारेण पूर्व्वस्माद्दोषपदमाक्षिप्यते । नात्यर्थं कुपितश्च दोषो निष्प्रत्यनीकोऽकृतप्रतिक्रियत्वेन प्रतिबन्धरहितः सन् मार्गेषु स्रोतःसु लीनस्तिष्ठति । स एव पुनः कालेन हेतुं हेत्वन्तरमासाद्य कुप्यति विकारायेति शेषः । नातः स्वल्पेन हेतुना महान्तं विकृतिभावमभिसमीक्ष्य कुतोमूलोऽयमिति नाशङ्कितव्यम् ॥ ३३—३५ ॥

ननु प्रसरन्तो दोषाश्चेत् विकुर्व्वन्ति कथन्तर्हि येन येन पथा प्रसरन्ति सर्व्वत्रैव तत्र विकारं नाभिनिर्व्वर्त्तयन्तीत्याशङ्कां परिजिहीर्षुः स्थानसंश्रयं व्याकर्त्तुं प्रतिजानीते अत इति । स्थानानामाश्रयः स्थानसंश्रयः, स्थानानामिति कर्म्मणि षष्ठी न शेषे, संश्रयस्य संश्रितव्यापेक्षित्वात् संश्रितव्यानामितरेषामनिर्द्देशाच्च । अत्रानुक्ता अपि दोषाः कर्त्तृत्वेन स्मर्य्यन्ते प्रकृतत्वात् । न च प्रसृत्य स्थानसंश्रयिणो दोषाः क्षणमप्यामयाननुत्पाद्य तूष्णीमासते, विकृता हि ते, नापि चायं स्थानसंश्रयस्तदात्वे तांस्तानुत्पित्सूनामयान् विहायान्येन केनचित्कारणेनाध्यवसातुं शक्यते, तस्मात्तल्लिङ्ग-

शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति । ते यदोदर-सन्निवेशं कुर्व्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचि-कातिसारप्रभृतीन् जनयन्ति । वस्तिगताः प्रमेहाश्मरीमूत्रा-घातमूत्रदोषप्रभृतीन् । मेढ्रगता निरुद्धप्रकशोपदंशशूकदोष-प्रभृतीन् । गुदगता भगन्दरार्शःप्रभृतीन् । वृषणगता वृद्धीः । ऊर्द्ध्वजत्रुगतास्तूर्द्ध्वजान् । त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च । मेदोगता ग्रन्थ्यपच्यर्व्वुदगलगण्डालजी-प्रभृतीन् । पादगताः श्लीपद-वातशोणित-वातकण्टकप्रभृ-तीन् । सर्व्वाङ्गगता ज्वरसर्व्वाङ्गरोगप्रभृतीन् ॥ ३६ ॥

तेषामेवमभिसन्निविष्टानां पूर्व्वरूपप्रादुर्भावः, तत् प्रति-रोगं वक्ष्यामः । तत्र पूर्व्वरूपगतेषु चतुर्थः क्रियाकालः॥३७॥

अत ऊर्द्ध्वं व्याधिदर्शनं वक्ष्यामः । शोफार्व्वुदग्रन्थिविद्र-धिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातिसारप्रभृतीनाञ्च । तत्र पञ्चमः क्रियाकालः ॥ ३८ ॥

---

त्वात्, तदिदमुच्यते एवमित्यादि । एवमित्थम्भूताः प्रसृता इति यावत्, कुपितास्ते दोषा इति योजना । अत्र व्याधीन् जनयन्तीति सामान्ये-नोक्तमप्यव्यक्तत्वेन विशेषणीयम् । वक्ष्यति हि "तेषामेवमभिसन्निविष्टानां पूर्व्वरूपप्रादुर्भावः" इति । शेषमतिरोहितार्थम् ॥ ३६ ॥

तेषामित्यादि । एवमुक्तप्रकारेण उदरादिषु सन्निवेशं कुर्व्वद्भिर्दोषैर्जाय-मानत्वप्रकारेणेति यावत्, अभिसन्निविष्टानां भविष्यत्त्वलक्षणं कञ्चित्प्रकार-मुररीकृत्य संस्थितानां तेषां गुल्मादीनां व्याधीनामित्यर्थः । अभिरत्र इत्थ-म्भूतार्थः, इत्थम्भूतश्च कञ्चित्प्रकारमापन्न उच्यते । पूर्व्वरूपप्रादुर्भाव इति

अत ऊर्द्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः । ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्धः । अत्राप्रतिक्रियमाणत्वेऽसाध्यतामुपयान्ति ॥ ३९ ॥

भवन्ति चात्र ।

सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम् ।
व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद्भिषक् ॥ ४० ॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ।
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥ ४१ ॥
सर्व्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः ।
संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥ ४२ ॥
संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ।
शेषदोषाविरोधेन सन्निपाते तथैव च ॥ ४३ ॥

---

पूर्व्वरूपं नाम "भविष्यद्व्याधिख्यापकं लिङ्गम्" इति स्वयमेव निवेदयिष्यते । तच्च पूर्व्वरूपमिहोपदिष्टमपि न सुखं प्रत्ययकरं भविष्यतीति सम्प्रधार्य्याह तदित्यादि ॥ ३७—३८ ॥

सञ्चयमित्यादि । सर्व्वैरिति सर्व्वशब्दस्त्र्यधिकान् भावानुपलक्षयतीत्यवश्यं वक्तव्यम् । अन्यथा प्रत्येकमशक्तुरादिका भावा नावाप्यन्त एकान्तेन । भावास्तत्र रूक्षत्वादयो वातस्य, उष्णत्वादयः पित्तस्य, स्निग्धत्वादयस्तु कफस्येति लक्षणीयम् । संसर्गे इति स्वशास्त्रसिद्धान्ताद्द्वयोः समवाये व्यस्तसमस्तैरेभिर्भावैः कुपितो दोषः क्रुद्धं दोषम् अनुधावति अनुसरति संयोगेनात्मीकर्त्तुमित्यर्थः । तं पुनः प्रतीकारविधौ धर्म्ममाश्रित्य विशिनष्टि संसर्ग इत्यादिना । संसर्गे यो गरीयान् तत्तद्धर्म्मद्वारेण बलीयान् स्यात् स एक शेषदोषाविरोधेन तदनुगतदोषाभिवृद्धिभयात् तदविरोधेनोपक्रम्यः प्रति-

व्रणोति यस्माद्रूढ़ेऽपि व्रणवस्तु न नश्यति ।
आदेहधारणात्तस्माद्व्रण इत्युच्यते बुधैः ॥ ४४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणप्रश्नो
नामैकविंशोऽध्यायः ।

---

कर्त्तव्य इति निष्कर्षः । वैशब्दोऽवधारणार्थः । उक्तमर्थद्वयं सन्निपातेऽप्यतिदिदिक्षति सन्निपाते तथैव चेति । अत्र संसर्गे सन्निपाते च गरीयसः प्रतीकारविधानात् दोषवलसाम्ये यथायोगं सर्व्व एवोपक्रम्या इत्यर्थाक्षिप्ते सत्यपि सन्निपाते कफानुपूर्व्व्येव पित्तानिलयोः प्रतिकर्त्तव्यत्वमभिनन्दन्ति कुशलाः । "सन्निपातज्वरे पूर्व्वं कुर्य्यादामकफापहम् । पश्चात् श्लेष्मणि संक्षीणे शमयेत्पित्तमारुतौ" इति स्मरणात् ॥ ४०—४३ ॥

प्राग्व्रणप्रश्नेति पदस्यार्थतः समालोचनायां प्रक्रान्तत्वात् प्रसङ्गाद्वा यद्व्रणनिर्व्वचनं व्याचिख्यासितमित्यपश्यं तदेवेदानीमवसरवशाद्वाग्विषयमुपस्थापयति भगवांस्तन्त्रकारो व्रणोतीत्यादिना । रूढ़ इति भावप्रधानोऽयं निर्देशः । यथा द्वित्वैकत्वयोरिति वक्तव्ये "द्व्येकयोर्द्विवचनैकवचने" इति पाणिनिसूत्रम् । तथाच "त्वक्सवर्णं समतलं सम्यग्रूढ़ं विनिर्द्दिशेत्" इत्यनागताविक्षणात् रूढ़े सम्यक् प्रशान्तत्वे जाते यस्मात् व्रणवस्तु वक्ष्यमाणं त्वगाद्यष्टावयवं व्रणोपादानं व्रणोत्याच्छादयति नापि चा देहधारणात् यावज्जीवं नश्यति, अतस्तमाख्योऽयं रोगोऽङ्गमात्रेण परिणस्येति शेषः । तस्मात् बुधैरयमेव व्रण इत्युच्यते, "व्रण गात्रविचूर्णने" इति धात्वर्थस्मरणात्, नत्वेव ज्वरादय उपशान्तेरुत्तरकालं गात्रविचूर्णकत्वेनानुमानेणानभ्युपगमादिति भावः । रूढ़ इति प्रथमान्तपाठे तु सुगमम् ॥ ४४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने व्रणप्रश्नो नामैकविंशोऽध्यायः ।

---

# द्वाविंशोऽध्यायः ।



अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्म्माणीत्यष्टौ व्रणवस्तूनि ; अत्र सर्व्वव्रणसन्निवेशः ॥ २ ॥

तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः, शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः । तत्रायतश्चतुरस्रो वृत्त-

अविदिते ह्यास्रावस्वरूपे "व्रणभावमापन्नानां षष्ठः क्रियाकालः" इति प्रागुक्तं वाक्यान्तेन पर्य्यवस्यति "स्रावानेतान् परीक्ष्यादौ ततः कर्म्म समाचरेत्" इत्यनागतावेक्षणादित्येव मन्वानो भगवानिदानीं व्रणास्रावविज्ञानीयमधिकरोति अथात इत्यादिना ॥ १ ॥

अत्र व्रणास्रावेष्वेव हि विज्ञानेनाभिमतेष्वपि यैर्विज्ञातैर्व्विना व्रणास्रावा न विज्ञाता भवन्ति तान्यर्थाक्षिप्तानीति त्वगादीनि व्रणवस्तूनि प्रस्तूयन्ते, तदपेक्षा हि त इति परमतो व्यक्तीभविष्यति "दृष्टासु च्छिन्नासु वा त्वक्षु" इत्यादिना ग्रन्थसन्दर्भेण, तदिदमुच्यते त्वगित्यादि । व्रणवस्तूनि व्रणोपादानभूतानि द्रव्याणि, व्रणवस्तुत्वं स्फोरयति अत्र सर्व्वव्रणसन्निवेश इति । अत्रेत्यभिव्यापकलक्षणा सप्तमीयं, तिलेषु तैलमितिवत् ॥ २ ॥

ननु व्यर्थोऽयमारम्भो व्रणप्रतीकारविधावेतद्विज्ञानस्याकिञ्चित्करत्वात्, दृश्यन्ते हि स्रावसाम्येऽपि केचिद्व्रणाः सुखमुपरोहन्ति, केचित् पुनर्दुःखेनेत्याह तत्रेत्यादि । तत्र व्रणेषु मध्ये, आद्यैकवस्तुसन्निवेशी त्वङ्मात्रसंश्रयी, केवलापरपर्य्यायो ह्ययमेकशब्दः, "एके मुख्यान्यकेवलाः" इत्यमरः । मा भूदुत्वगन्तरभेदिनस्त्वङ्मात्रेणासंरोहित्वे सूपचारत्वेनावगम इत्यतो विशिनष्टि त्वग्भेदीति । त्वङ्मात्रं भेत्तुं शीलमस्येति त्वग्भेदी । सूपचारः सुखसाध्यः, शेषा मांसादिवस्तुसन्निवेशिनः, स्वयमवदीर्य्यमाणाः वैद्यप्रयत्नं निरपेक्ष्य

स्त्रिपुटक इति व्रणाकृतिसमासः; शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥ ३ ॥

सर्व्व एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भि-श्चोपक्रान्ताः, अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति प्रवृद्ध-त्वाच्च दोषाणाम् ॥ ४ ॥

तत्रातिसंवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतो-

---

दोषप्रकोपात् स्वयमेव विदीर्य्यमाणाः दुरुपचाराः स्वभावाद्दुःसाध्या इत्यर्थः । वैद्यप्रयत्नकृतास्तु सुखसाध्या इति भावः । एतेनैतदेवानुसन्धेयम् । व्रणानां सूपचारदुरुपचारत्वे प्रति स्रावाणामेवमकिञ्चित्करत्वेऽप्यनन्तरं दोष-विशेषेण स्रावानुपदिश्य "स्रावानेतान् परीक्ष्यादौ ततः कर्म्म समाचरेत्" इत्यनुशासनात् स्रावविजृम्भितानेव हि दोषाननुसन्धाय प्रतीकारः कार्य्य इति निश्चीयते, तस्मान्नापार्थकोऽयमारम्भ इति। स्यादेतत् किन्तु खलु तेषामाकृतिविशेषा भवन्ति यानुपलभ्य विमुक्तसन्देहाः सद्य एवाध्यव-स्यामोऽयं सूपचारोऽयञ्च दुरुपचार इत्यत आह तत्रेत्यादि । तत्रेति बुद्ध्या समाकृष्टतया सूपचारेषु व्रणेष्वित्यर्थः । त्रिपुटो नाम कलायभेदः "खेसारी" इत्याख्यायते । तदाकारो व्रणाकृतिभेदस्त्रिपुटक इत्युच्यते । अत्र तत्रेति तदा व्रणानां परामृष्टत्वेऽपि व्रणाकृतिसमास इति व्रणशब्दो गोबलीवर्द्द-न्यायात् झटित्यवबोधार्थः । शेषाः सूपचारव्यतिरिक्ताः ॥ ३ ॥

नन्वेतच्चेत्तत्त्वं कथन्तर्हि व्यत्यासेनाप्येषां सूपचारत्वं दुरुपचारत्वञ्चोप-लभामहे एवं विवक्षूनपाचिकीर्षति सर्व्व इत्यादिना । आत्मवतां बुद्धिमतां समीक्ष्याहारविहारं कुर्व्वतामिति यावत् । सुभिषग्भिः सम्यक् स्रावस्व-रूपादिकं जानद्भिरुपक्रान्ताः सर्व्व एव व्रणाः क्षिप्रं संरोहन्तीति समन्वयः । एवकारेणेह सम्यगुपक्रान्तानां चिरेण संरोहित्वमसंरोहित्वञ्चावश्यमेकान्ते-नेति प्रत्येतव्यम् । प्रदुष्यन्ति प्रदुष्टतामुपयान्ति दुरुपचारा भवन्तीत्यर्थः ॥४॥

कानि पुनः प्रदुष्टानां व्रणानां लिङ्गानि भवन्ति, कथं वा प्रदुष्टाप्रदुष्टास्ते

ऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूति-पूय-मांस-शिरा-स्नायु-प्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाह-पाक-राग-कण्डू-शोफ-पीडकोपद्रुतोऽत्यर्थं दुष्टशोणितस्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि। तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतिकारे प्रयतेत ॥ ५ ॥

अत ऊर्द्धं सर्व्वस्रावान् वक्ष्यामः। तत्र दुष्टासु छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु विदारितेषु वा सलिलप्रकाशो भव-[illegible]स्रावः किञ्चिद्विस्रः पीतावभासश्च। मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च। शिरागतः सद्यश्छिन्नासु शिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं, पूयश्चास्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च। स्नायुगतः स्निग्धो घनः सिंघाणक-

---

प्रतीकार्य्या इत्याह तत्रेत्यादि। अतिसंवृतोऽतिसङ्कुचितमुखः, उत्सन्नो मांसाभिवृद्ध्योन्नतः, अवसन्नस्तद्विपरीतः, उन्मार्गी ऊर्द्धमुखः, उत्सङ्गी कोटरवान्। दुष्टरुधिरस्रावित्वन्तु प्रदुष्टरक्तवहसिराच्छेदादवगणीयम्, वक्ष्यति हि "सद्यश्छिन्नासु" इत्यादि। षट्त्वन्त्वत्र शोफवदेव द्रष्टव्यं तन्मूलत्वात् तस्य व्रणस्य षट्त्वं, दोषोच्छ्रायेण दोषप्राबल्येन, विभज्य व्रणप्रश्नोक्तक्रमेण प्रसरणसामर्थ्यात् पञ्चदशधेति शेषः, एतच्च द्विव्रणीये व्यक्तीभविष्यति ॥ ५ ॥

सम्प्रत्यर्थान्तरप्रसङ्गेन दूरतरमागतानां शिष्याणां प्रकृतेऽर्थे बुद्धिमाक्षिपन् पुनः प्रतिजानीते अत इत्यादिना। अत्र व्रणवस्तुषु मध्ये त्वक्ष्विति सम्बन्धः। विस्रः आमगन्धी, विच्छिन्नो भागशो विभक्तः, अल्पमल्पं प्रवृत्तं

प्रतिमः सरक्तश्च। अस्थिगतोऽस्थिन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति। आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च। सन्धिगतः पीड्यमानो न प्रवर्त्तते, आकुञ्चन-प्रसारणोन्नमन-विनमन-प्रधावनोत्कासन-प्रवाहणैश्च स्रवति। आस्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च। कोष्ठगतोऽसृङ्मूत्र-पुरीष-पूयोदकानि स्रवति। मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते ॥ ६ ॥

तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्य-श्यावावश्याय-दधिमस्तु--क्षारोदक-मांसधावन--पुलाकोदक--सन्निभत्वानि मारुताद्भवन्ति। पित्ताद्-गोमेदक-गोमूत्र-भस्म-शङ्ख-कषायोदक-माध्वीक-तैल-सन्निभत्वानि। पित्तवद्रक्तादतिविस्रत्वञ्च। कफान्नवनीत-कासीस-मज्ज-पिष्ट-तिल-नारिकेलोदक-वराहवसा-सन्निभत्वानि। सन्निपातात् तिल-नारिकेलोदकेर्व्वारुकरस--काञ्जिकप्रसादारुणोदक--प्रियङ्गु-फल-यकृन्मुद्गयूषसवर्णत्वानीति ॥ ७ ॥

---

इति यावत्। कश्चिद्व्रण एव ह्यात्मशक्त्या सिराञ्छित्त्वा शोणितं प्रवर्त्तयतीत्युच्यते सद्यश्छिन्नास्विति। अवश्यायो नीहारः, नासिकास्रुतः पीताभः श्लेष्मा सिंहाणक इत्युच्यते। धौता शुक्तिः शुक्तिधौतं, मयूरव्यंसकादिषु द्रष्टव्यम्। सफेनपूयरुधिरेणालोड़ितः सफेनपूयरुधिरोन्मथितः, प्रधावनं वेगेन गमनम्। उत्कासं मुहुर्मुहुर्बलवत्कासः, प्रवाहणं कुन्थनम्। पुलाकस्तुच्छधान्यम्, "भुसरा" इति विज्ञायते। गोमेदको नाम रत्नास्मि

श्लोकौ चात्र भवतः।

पक्वाशयाद्रसाभस्तु पुलाकोदकसन्निभः।
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात्स्रवन्॥
आमाशयात्कलायाम्भोनिभश्च त्रिकसन्धिजः।
स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद्भिषक्॥ ८॥

अत ऊर्द्ध्वं सर्व्वव्रणवेदना वक्ष्यामः। तोदन-भेदन-ताडन-छेदनायमन-मन्थन-विक्षेपण-चुमुचुमायन-निर्द्दहनावभञ्जन-स्फोटन-विदारणोत्पाटन-कम्पन-विविधशूल-विश्लेषण-विकिरण-पूरण-स्तम्भन-स्वप्नाकुञ्चनाङ्कुशिकाः सम्भवन्ति। अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदना-विशेषास्तं वातिकमिति विद्यात्। ओष-चोष-परिदाह-धूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वं सुप्तत्व-

---

सन्निभः। गर्व्वीणां वक्ष्यमाणम्, एर्व्वारुकं कार्कटीफलम्, आरुकम् "आर" इत्याख्यायते। शेषमतिरोहितार्थम्॥ ६—८॥

अत इत्यादि। तोदनं सूच्येव व्यथनम्, भेदनम् आरयेव, ताडनं दण्डादिनेव, आयमनमाकृष्यायतीकरणेनेव, चुमुचुमायनन्तु सर्षपराजिकालेपेनेव, स्वप्नः स्पर्शानवबोधः, स्वपेः सुप्तिरिति तदर्थे प्रयोगदर्शनात्। अङ्कुशाहतस्येव वेदनाविशेषोऽङ्कुशिका। कारणमन्तरेण कार्य्यस्यासम्भवेऽपि विविधवेदनां प्रत्यनिमित्तमिति विशेषणं तदात्वे निमित्तान्तररहितत्वमाख्यातुम्। ओषादयस्तारतम्येन दाहविशेषाः। उष्माभिवृद्धा

मुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं सान्निपातिकमिति विद्यात् । यत्र सर्वासां वेदनानां समुत्पत्तिस्तं त्रैदोषिकमिति विद्यात् ॥ ९ ॥

अत ऊर्द्धं व्रणवर्णान् वक्ष्यामः । भस्मकपोतास्थिवर्णाः परुषोऽरुणः कृष्ण इति मारुतजस्य । नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः । श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य । सर्ववर्णोपेतः सान्निपातिक इति ॥ १० ॥

भवति चात्र ।

न केवलं व्रणे युक्तो वेदनावर्णसंग्रहः ।
सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक् ॥ ११ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणास्रावविज्ञानीयो नाम द्वाविंशोऽध्यायः ।

---

व्रणात् धूमोद्गिरणमिवेति धूमायनम्, नार्थोऽयमनुपपन्नो "वाष्पोष्मफेनधूमादुद्दान्तौ" इति वोपदेवसूत्रेणानुगतत्वात् । उपदेहोऽत्र श्लेषोपलिप्ततेति प्रतीयते, प्रकृतत्वात् श्लेषेति श्लिषधातोरर्थानुगमात् "लिप्ततिक्तास्यता" इति पित्तश्लेष्मज्वरलिङ्गदर्शनाच्च ॥ ९ ॥

अत इत्यादि । कपोतोऽत्र धूसर एव प्रत्येतव्यः, परुषो नानावर्णः "परुषं कर्व्वुरे रुचे" इति मेदिनी । सर्व्वे वातजाद्युक्ता वर्णाः सर्व्ववर्णाः ॥१०॥

व्रणोक्ता वर्णवेदनाः शोफेऽप्यतिदिशति नेत्यादिना ॥ ११ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये व्रणास्रावविज्ञानीयो नाम द्वाविंशोऽध्यायः ।

# त्रयोविंशोऽध्यायः ।



अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

तत्र वयःस्थानां दृढानां प्राणवतां सत्त्ववताञ्च सुचिकित्स्या व्रणाः एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः ॥ २ ॥

तत्र वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति । दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणं शिरास्नाय्वादिविशेषान् न प्राप्नोति । प्राणवतां वेदनाभिघाताहारयन्त्रणा-

भगवन् जिज्ञास्यं पुनरापन्नं, दृश्यन्ते ह्यात्मवतामप्यादित एव सुभिषग्भिश्चोपक्रान्ता केचिद्व्रणाः क्षिप्रं संरोहन्ति, केचित् पुनः क्षिप्रतरं, अपिचापरे तथाविधा एव केचिच्चिरात् संरोहन्ति, व्यापादयन्ति वाऽनियमेन, तत्कथमुपपन्नं भवति "सर्व्व एव व्रणाः क्षिप्रं संरोहन्त्यात्मवताम्" इत्यादिं यदुक्तं पूर्व्वाध्याये, इत्येवमाशंसूत्रमपाचिकीर्षुरिदानीं कृत्याकृत्यविधिमधिकरोति अथात इत्यादिना । कृत्याकृत्यशब्देनेह चिकित्स्याचिकित्स्या एव व्रणा लिलक्षयिषिता इति निश्चीयते प्रकृतत्वात्, प्रकारापरपर्य्यायश्च विधिशब्दो हेमचन्द्रानुशासनात् । तदेषां प्रकारोऽनेनेति कृत्याकृत्यविधिः । समानमन्यत् ॥ १ ॥

व्याचिख्यासितमर्थं क्रमेणोपदिदिक्षति तत्रेत्यादिना । तत्र पूर्व्वोद्दिष्टेषु सुदुरुपचारेषु व्रणेषु मध्ये वयःस्थादीनां व्रणाः सुचिकित्स्या इति समन्वयः । तत्र वयःस्थास्तरुणाः, दृढाः सुसंहतावयवाः, प्राणवन्तो बलवन्तः, सत्त्ववन्तश्च सात्त्विकाः ॥ २ ॥

उक्तमर्थं पुनरुपपादयन् स्फुटीकृत्यावगमयति तत्रेत्यादिना । अभिनवा धातवो येषां ते प्रत्यग्रधातवस्तेषां भावस्तस्मात्, विवर्द्धमानधातुत्वात्-

दिभिर्न ग्लानिरुत्पद्यते। सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति। तस्मादेतेषां सुखसाधनीयतमाः। त एव विपरीतगुणा दृद्ध-कृशाल्पप्राण-भीरुषु द्रष्टव्याः॥ ३ ॥

स्फिक्-पायु-प्रजनन-ललाट-गण्डौष्ठ-पृष्ठ-कर्णफल-कोषोदर-जत्रु-मुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः। अक्षि-दन्त-नासाऽपाङ्ग-श्रोत्र-नाभि-जठर-सेवनी-नितम्ब-पार्श्व-कुक्षि-वक्षः-कक्षा-स्तन-सन्धिभागगताः सफेन-पूय-रक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः। अधोभागाश्चोर्द्ध्वभागनिर्व्वाहिणो रोमान्तोपनख-मर्म्म-जङ्घास्थिसंश्रिताश्च। भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम् ॥ ४ ॥

---

दिति यावत्। सत्त्ववतां व्यथा न भवतीति सर्व्वसहत्वात्, वक्ष्यति हि "सत्त्ववान् सहते सर्व्वम्" इति। त एवेति तदा व्रणानां प्रत्यवमर्शः क्रियते। विपरीतगुणा दुःसाध्यदुःसाधनीयतमत्वेन विपरीतधर्म्माणो वृद्धादिषु द्रष्टव्याः तत्तद्वयःस्थादिधर्म्मविपर्य्यासादिति भावः ॥ ३ ॥

नन्वेतच्चेत्तत्त्वं कथन्तर्हि वृद्धादीनामपि केचिद्व्रणाः सुखमुपरोहन्ति, नोपरोहन्त्युपरोहन्ति वा दुःखेनेतर इतरेषामित्याशङ्क्य तामाशङ्कामपनिनीषति स्फिगित्यादिना। स्फिक् कटिप्रोथः कटिमांसपिण्डमित्येतत्। अत्राभ्यन्तरशब्दः कर्णादिभिः सम्बध्यते, फलकोषाभ्यन्तरस्थानां व्रणानां सुखरोपणीयत्वं पाकाभिनिर्व्वर्त्तितवृद्धिचिकित्सिते बहुशः प्रत्यक्षीकृतमस्माभिः। शेषाणां सुखरोपणीयत्वन्तु प्रसिद्धमेव। अक्षीत्यादि दन्तशब्दस्येह दन्तवेष्टे तात्पर्य्यम्; श्रोत्रशब्दस्य च श्रोत्रपाल्यामिति प्रतीयते, तदभ्यन्तरसंस्थानां व्रणानां प्राक् सुखरोपणीयत्वेनाऽभ्युपगमात्। अधोभागाश्चेति चकारो विशेषणार्थः। ऊर्द्ध्वभागनिर्व्वाहिन ऊर्द्ध्वमुखेन विस्राविणो ये अधो-

भवति चात्र ।

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।

व्रणाः कृच्छ्रेण सिध्यन्ति येषाञ्चापि व्रणे व्रणाः ॥ ५ ॥

अवपाटिका-निरुद्धप्रकाश-सन्निरुद्धगुद--जठर-ग्रन्थिक्षत-क्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते; शर्करा-सिकतामेह-वातकुण्डलिका-ष्ठीला-दन्तशर्करोपकुश-कण्ठशालूक-निष्कोषणदूषिताश्च दन्त-वेष्टा विसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः ॥ ६ ॥

भागा अन्तःसंश्रयिणः, ये च रोमान्तादिसंश्रिताः, सर्व्वे ते दुश्चिकित्स्या-इत्यर्थः । रोमान्तास्त्वत्र शिरसि विभक्ता मर्म्मसु परिगण्याः पञ्च रोमन्ता-एव, न तु केशान्तो देशस्तस्य मर्म्मादिविरहितत्वेन तत्संश्रितानां दुःसाध्यत्वं प्रति युक्त्यभावात् । अन्तरभ्यन्तर्मुखं सेवन्यादिसंश्रितञ्च भगन्दरमपि दु-श्चिकित्स्यं विद्यादिति शेषः । सेवन्युपलक्षितं कट्यस्थि सेवनीकुटकास्थि सेवनीमविहितमस्थीत्येतत्, न तु सेवनी च कुटकास्थि चेति द्वन्द्वः, सेवनी-संश्रितानां कृच्छ्रत्वेनानभ्युपगमात् । "भगन्दरोऽन्तर्व्वदनस्तथा कट्यस्थि-संश्रितः" इति वाग्भटानुशासनाच्च । कुष्ठिनामित्यादौ व्रण इति रूढ़-व्रणावच्छेदे । शेषमतिरोहितार्थम् ॥ ४—५ ॥

सुखदुःखसाध्यानुपदिश्यासाध्यान् निर्द्दिदिक्षुस्तेषु प्रतीकार्य्यत्वेन दुः-साध्यसाधर्म्म्यात् प्रथमं तावत् याप्यानेवाधिकरोति अवेत्यादिना । क्षत-मूलाः क्रमयः क्षतक्रमयः, पदमिदं क्रमिशब्दस्य समासस्थमपि तात्पर्य्य-वशाद्यथायोगमुत्तरत्रावस्थ्श्यान्वीयते समन्वयान्तरानुपपत्तेः । तथाचाव-पाटिकादिजाः प्रतिश्यायजास्त्वग्दोषिणां कुष्ठिनां कोष्ठजाश्च, क्षतक्रमयो, ये वा प्रमेहिणां परिक्षतेषु, व्रणीभूतासु पीड़कासु क्रिमयो दृश्यन्ते तथा शर्करादिदूषिता दन्तवेष्टा विसर्पास्थिक्षत * * * * प्रभृतयः,

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ ७ ॥

---

विसर्पदग्धिचतादयस्ते याप्या दोषशक्तेरचिन्त्यत्वादिति निष्कर्षः । अत्र सन्निरुद्धगुदे व्यक्तं चतमविवच्यमाणमप्युररीकुर्व्वन्ति भिषजः पुरीषाभिघातात्, वच्यति हि "मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति" इति । जठरशब्दश्च सामान्येनोक्तोऽपि परिस्राव्युदर एव प्रवर्त्तते, सामान्यशब्दस्य विशेषवृत्तित्वादित्युपपन्नं भवति अवेत्यादि । दन्तवेष्टा इति बहुवचनन्त्वनेकदोषदूषितत्वेन बहुविधभेदाल्लक्षणीयम् । निष्कुष्णाति वहिर्निःसारयति मलानेभिरिति व्युत्पत्त्या निष्कोषणशब्दस्येह सविष एव दन्तशोधने तात्पर्य्यं दोषस्वभावात् । केचिदत्र विसर्पः स्वनामप्रसिद्धो रोगोऽक्षिचतञ्चेति विसर्पाक्षिचतमित्याहुस्तत्तु न सम्यक्, विसर्पस्याक्षिचतसामान्यस्य चानन्तरं साध्यासाध्यत्वेनैव विवचितत्वात् । अत्राविशेषेणोक्तमप्युरःचतं परिसंवत्सरत्वेन निरूपयन्ति भिषजश्चरकैकवाक्यत्वात् । व्रणाय ग्रन्थिः व्रणग्रन्थिः, सच मर्म्मज एवेति प्रत्येतव्यम्, अमर्म्मजानां साध्यत्वेनोपदेच्यमाणत्वात् । प्रभृतिग्रहणात् संवत्सरोत्थितानां स्फुटितवातरक्तादीनामादेशः ॥ ६ ॥

मा भूत् साध्ययाप्यविभागोऽयं सर्व्वजनीनविषयत्वेन प्रेचावत्प्रतिपित्सागोचर इति सम्प्रधार्य्याह साध्या इत्यादि । अक्रियावतां नराणां साध्या व्याधयो याप्यत्वमायान्ति, तथा याप्याश्चकारात् याप्यत्वमागताः साध्याश्चासाध्यतां यान्तीति समन्वयः । याप्यानामसाध्यत्वे दोषं दर्शयति घ्नन्तीति । तुकारः पूर्व्वपचव्यावृत्त्यर्थः, अतोऽवश्यं क्रियाजिहासा परिहर्त्तव्येति भावः । केचिदत्र घ्नन्ति प्राणानसाध्याः इत्येकं पचं मन्यमाना असाध्येषु कालान्तरप्राणहराः सद्यः प्राणान् घ्नन्तीति व्याचचते, तत्तु न सम्यक्, तेषां याप्येष्वेवान्तर्भावात् "असाध्यान्नोपक्रमेत्" इत्याद्यागमविरोधाच्च । प्रसङ्गा-

यापनीयं विजानीयात् क्रिया धारयते तु यम्।
क्रियायान्तु निवृत्तायां सद्य एव विनश्यति ॥ ८ ॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम्।
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः ॥ ९ ॥

अत ऊर्द्ध्वमसाध्यान् वक्ष्यामः। मांसपिण्डवदुद्गताः प्रक्लेदिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः। केचित् कठिना गोशृङ्गवदुन्नतसूक्ष्ममांसप्ररोहाः। अपरे दुष्टरुधिरा-स्राविणस्तनुपिच्छिलास्राविणो वा मध्योन्नताः। केचिदव-सन्नमुपरिपर्य्यन्ताः ऋक्षतूलवत् स्नायुजालवन्तो दुर्दर्शनाः। वसा-मेदो-मज्जा-मस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीतासित-मूत्र-पुरीष-वात-स्राविणश्च कोष्ठस्थाः। क्षीण-मांसानाञ्च सर्व्वगात्रेष्वङ्कुरा बुद्बुदवन्तः सशब्दवातवाहिनश्च शिरः-कण्ठस्थाः। क्षीण-मांसानाञ्च पूयरक्तनिर्व्वाहिणो-

---

प्रक्रमतो याप्यव्याधितमभिधत्ते यापनीयमित्यादिना। यं हृदादिकं क्रिया धारयति रक्षति, तं यापनीयं विजानीयादित्यन्वयः। न च क्रियाधृतत्वाऽविशेषात् साध्यसमाख्याता युवादयोऽपि यापनीयत्वेनाध्यव-सितव्या भविष्यन्तीति विभिनष्टि क्रियायामित्यादिना। उक्तमर्थं दृष्टान्ते-नावगमयति प्राप्तेत्यादिना। प्राप्ता विधिबोधिता, न्याय्येति यावत्। विष्कम्भोऽवष्टम्भनं कीलकमित्यनर्थान्तरम्। किन्तु खलु साध्यासाध्येऽस्मिन्नेता-वन्त एवासाध्या इत्याह अत इत्यादि। अश्वापानवदुद्वृत्तौष्ठाः अश्वगुद-वदुद्वृत्तप्रान्ताः। निम्नाः सच्छिद्राश्च प्रान्तप्रदेशाः येषां ते अवसन्नमुपरिपर्य-न्ताः। "ऋक्षतूलं मक्षिप्पलम्" इति निघण्टुः। अथ दोषसमुत्था इति

ऽरोचकाविपाक-कास-श्वासोपद्रवयुक्ताः । भिन्ने वा शिरः-कपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति ॥ १० ॥

भवन्ति चात्र ।

वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत् ।
आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसम्भवः ॥ ११ ॥
अमर्म्मोपहिते देशे शिरास्नाय्वस्थिवर्ज्जिते ।
विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम् ॥ १२ ॥
क्रमेणोपचयं प्राप्तो धातूननुगतः शनैः ।
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः ॥ १३ ॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ।
निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा ॥ १४ ॥
अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते ।
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः ॥ १५ ॥

---

विशेषणेनागन्तून् निरुणद्धि । सर्व्वतो गतश्च ऊर्द्धाधस्तिर्य्यग्गतश्च एवाणुमुखा इत्यर्थः । चकारोऽवधारणार्थः । एवमुत्तरत्रापि चकारो द्रष्टव्यः । त्रि-दोषलिङ्गत्वेनैव श्वासकासयोर्लाभे, पृथगुपादानं द्वाभ्यामेव, ताभ्यामनु-विद्धत्वेऽसाध्यत्वमाख्यातुम् ॥ ७—१० ॥

वसामित्यादि । अनुपर्य्येति पौनःपुन्येनाभ्युदेति । धातूनिति धातु-शब्दोऽयमजहत्स्वार्थया लक्षणया सिरादिष्वपि प्रवर्त्तत इति वक्तव्यमेव, तदनुगतत्वानुपपत्तेः । स्थिरत्वात् बलवत्त्वात् । क्षुपको नाम ह्रस्वशाखा-शिफो वृक्षः । अत्राबद्धमूल इति विशेषणेनातितरामुत्पाटनसुखतामावि-

त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठोऽपिडकी समः ।
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥ १६ ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ।
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥ १७ ॥
रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ।
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥ १८ ॥
दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः ।
हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढोऽपि दीर्य्यते ॥ १९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने कृत्याकृत्यविधि-
र्नाम त्रयोविंशोऽध्यायः ।

---

करोति । पिड़की स्फोटकाकारोन्नतमांसोपचितः । कपोत इह धूसर एव गन्तव्यः । स्वल्पश्चिपिटकश्चिपिटिका, "स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि" इत्यमरः । चिपिटिकाकारो मांसाङ्कुरश्चिपिटिका, यथा काकपक्षाकारा चूड़ा काकपक्ष उच्यते तद्वत् । रूढं जाताङ्कुरं वर्त्म आवरणं यस्य स रूढवर्त्मा, मांसाङ्कुरसम्पूरितावकाश इति तात्पर्य्यम् । त्वगावयवसमुदाय एव हि व्रण इत्यायुर्व्वेदविदो मन्यन्ते । शेषमतिरोहितार्थम् ॥ ११—१९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने कृत्याकृत्यविधिर्नाम त्रयोविंशोऽध्यायः ।

# चतुर्व्विंशोऽध्यायः।



अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः ॥ १ ॥

द्विविधा व्याधयः शस्त्रसाध्याः स्नेहादिक्रियासाध्याश्च। तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते। स्नेहादिक्रियासाध्येषु शस्त्रकर्म्म न क्रियते। अस्मिन् पुनः शास्त्रे

---

भगवन्! स्नेहादिक्रियासाध्यत्वेन व्याचिख्यासितेषु, याप्यत्वादिप्रत्ययभूतत्वेन याप्यत्वेन च छत्याछत्योपदिष्टेष्ववपाटिकादिषु, क्रिमिषु च किं शल्याङ्गपरिपठितत्वाद्व्रणवत् शस्त्रमप्यवचार्य्यमाहोस्विन्नेति संशयमपाचिकीर्षन् द्वेधा विभज्य व्याधिनिचयान् सङ्क्षेपेणोपदिदिक्षुरिदानीं व्याधिसमुद्देशीयमधिकरोति अथात इत्यादिना। व्याधीनां सङ्क्षेपेणोपदेशो व्याधिसमुद्देशः, "समासकथनमुद्देशः" इति स्मरणात् ॥ १ ॥

अत्राभिसन्धीयते हि स्नेहादिक्रियासाध्येष्ववपाटिकादिषु शस्त्रकर्म्मजिज्ञासापरीहारः, व्यक्तीभविष्यति चायमर्थोऽनन्तरं स्नेहादिक्रियासाध्येष्वित्यादिना ग्रन्थसन्दर्भेण; तदलमसाध्यानामिहोपदेशेनेति मन्वानो भगवांस्तन्त्रकारः शस्त्राशस्त्रसाध्यत्वेनासाध्यत्वेन च व्याधीनां त्रैविध्ये सत्यप्याह त्रिविधा इत्यादि। शस्त्रशब्देनेहानुशस्त्राणामपि परिग्रहः क्रियते, प्रायः क्रियैकत्वात्; "शस्त्रकर्म्म न क्रियते" इति त्वनुपयोगित्वादेवेति विदितवेदितव्या भिषजो मन्यन्ते, अचिरकालजत्वादिना भेषजसाध्येष्वपंशशादिष्वजस्रं शस्त्रफलदर्शनात्। नेह प्रकृतत्वात् सन्निहितत्वाद्वा शस्त्रसाध्यपदेन छत्याछत्योपदिष्टान् व्रणानेव प्रतीयुर्नापि च स्नेहादिक्रियासाध्यपदेन केवलमवपाटिकादीनित्येवाभिसन्धाय युक्त्या समन्वीय व्याधिसामान्यं ग्राहयितुं विशिनष्टि अस्मिन्नित्यादिना। पुनःशब्दोऽयमवधारणार्थः। शल्या-

सर्व्वतन्त्रसामान्यात् सर्व्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते ॥ २ ॥

प्रागभिहितं तद्दुःखसंयोगा व्याधय इति । तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति ॥ ३ ॥

तत्तु सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा

---

दीनामष्टानामेव तन्त्राणां रुग्विनिश्चयाद्यर्थत्वेन तुल्यत्वात् सर्व्वतन्त्रसामान्यात्, अस्मिन् शास्त्रे शल्यतन्त्र एव सर्व्वेषां व्याधीनां यथास्थूलमवरोधः परिग्रहः क्रियते ; तन्त्राणामेषां व्याधिसमुद्देशं प्रति विनिगमनाभावेऽपि तन्त्रस्यास्य प्राथम्यात् प्राधान्याद्वेति भावः ; अतः सर्व्वेष्वेव शस्त्रसाध्येषु स्नेहादिक्रियाः क्रियन्ते, स्नेहादिक्रियासाध्येषु च नैव शस्त्रकर्म्मेति निष्कर्षः। अत्र हि विस्तरशः सर्व्वे व्याधय उपदिष्टा अपि दुरधिगमा भवन्ति निदानाद्यनेकार्थविज्ञेयत्वात्तदिदमुक्तं यथास्थूलमिति, यथास्थूलं निर्व्विशेषम् ॥२॥

यद्येह सर्व्वे व्याधयो यथास्थूलमवरुध्यन्ते तदुपदिदिक्षुः श्रोतॄणां स्मृतिविप्लवमाशङ्क्य दूरपरिभ्रष्टं व्याधिलक्षणं पुनः स्मारयति प्रागिति। आध्यात्मिकं द्विविधं शारीरं मानसञ्च—तत्र शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं पुनः काम-क्रोध-लोभ-मोह-भयेर्ष्या-विषाद-विषयविशेषादर्शननिबन्धनम् ; सर्व्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकमुच्यते। आधिभौतिकं पुनर्मानुष-पशु-पक्षि-सरीसृप-स्थावर-निमित्तम्। आधिदैविकन्तु यक्ष-राक्षस विनायक-ग्रहावेशादिनिबन्धनम् ॥ ३ ॥

तदित्यादि। तदेतत् प्रत्यात्मवेदनीयं दुःखत्रिकं सप्तविधे व्याधौ सत्येवोपनिपतति, परिलक्षितं भवतीत्यर्थः। तुकारोऽवधारणार्थः। एतेन व्याधावुपशान्ते दुःखमप्युपशाम्यतीति सूचितं भवति। दृश्यन्ते हि भगवन् बहुविधा व्याधयो ज्वरगुल्मादिभेदेन, येषु सत्सूपनिपतति दुःखत्रयं नियमेन, तत् कथमिदमुच्यते सप्तविधे व्याधावित्येतामाशङ्कां परिहरति त इत्यादिना। ते पूर्व्वोक्तास्तद्दुःखसंयोगरूपा व्याधयः सप्तविधा एव, न

व्याधयः। तद्यथादिबलप्रवृत्ताः जन्मबलप्रवृत्ताः दोषबलप्रवृत्ताः सङ्घातबलप्रवृत्ताः कालबलप्रवृत्ताः दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ता इति ॥ ४ ॥

तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः। तेऽपि द्विविधा मातृजाः पितृजाश्च। जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्गु-जात्यन्ध-बधिर-मूक-मिन्मिन-वामन-प्रभृतयो जायन्ते। तेऽपि द्विविधा रसकृता दौर्हृदापचारकृताश्च। दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च। तेऽपि द्विविधा आमाशयसमुत्थाः पक्वा-

---

त्विका इत्यवधारणार्थेन पुनःशब्देनावगमयति। यथा च तत्सप्तत्वमुपपद्यते तद्दर्शयति तदित्यादिना ॥ ४ ॥

प्रागुक्तमर्थं क्रमेण विवृणोति तत्रेत्यादिना। आदिरादिकारणम्, जीवावक्रान्तमन्तर्गर्भाशयगतं शुक्रशोणितमित्येतत्; बलं प्रकारणाद्व्याध्यभिनिर्व्वर्त्तिनी शक्तिः, तेनोत्पन्ना आदिबलप्रवृत्ताः। प्रभृतिग्रहणात् सहजक्लैब्यादीनामादेशः। जन्मन्या देहधारणात्, आ च योनिनिःसरणात् बलं येषां दोषाणां, तत्प्रवृत्ता जन्मबलप्रवृत्ताः। मिन्मिना अस्पष्टवाचः। वामनप्रभृतयो वामनकुब्जादयः। एषां पुनर्मातुरपचारजत्वमुपरिष्टान्निवेदयिष्यते। तान् पुनर्विभजते त इति। स्वहृदयेन गर्भहृदयेन च द्विहृदया नारी गर्भिणी, तत्सम्बन्धित्वाद्गर्भो दौर्हृदमुच्यते। "दौर्हृदलक्षणम्" इति रघुः, दौर्हृदलक्षणं गर्भलक्षणमिति तदर्थः। दौर्हृदार्थोऽपचारो वक्ष्यमाणोऽकालप्रवाहणादिरूपो दौर्हृदापचारः। दोषा वातादयो रजस्तमसी च। आतङ्को रोगस्तत्समुत्पन्ना अपि व्याधयो दोषबलप्रवृत्ता एवेति प्रत्येतव्यम्; तदिहोपपन्नं भवति आतङ्कसमुत्पन्ना इति। मिथ्याहाराचाराद्यालस्यात्मिका अपि लक्षणीयास्तेन ग्राम्यवीर्यसुरापानब्रह्मवधादि-

शयसमुत्थाश्च, पुनश्च द्विविधाः शारीरा मानसाश्च । त एते आध्यात्मिकाः ॥ ५ ॥

सङ्घातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात् । तेऽपि द्विविधाः शस्त्रकृता व्यालादिकृताश्च । एते आधिभौतिकाः ॥ ६ ॥

कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्ताः । तेऽपि द्विविधा व्यापन्नर्तुकृता अव्यापन्नर्तुकृताश्च । दैवबल-

---

जनितानां शातातपीयकर्मविपाकोक्तानां श्यावदन्तादीनामप्यवरोधः । आमाशयशब्देनेह पच्यमानाशयस्यापि परिग्रहः क्रियते, प्रायेणामान्वयात् ; तथाच पित्तस्थानसमुद्भवा ग्रहण्यादयोऽप्यवरुध्यन्ते । तान् पुनः भिनत्ति पुनश्चेति । आमाशयादिसमुत्थत्वेनोपदिष्टानां पुनर्मानसत्वं दोषसम्बन्धान्निरूपणीयम्, एतच्चोन्मादप्रतिषेधे निपुणतरमुपपत्स्यते ॥ ५ ॥

सङ्घातबलप्रवृत्ता इति । सङ्घातोऽत्रात्यधिकः संसर्गः, य इत्यागन्तुविशेषणं दैवबलप्रवृत्तागन्तुकव्याधिव्यवच्छेदार्थम् । बलाढ्यौ विग्रहो बलवद्विग्रहः, "तदर्हम्" इति वतिः । बलवद्विग्रहादित्यजहत्स्वार्थया लक्षणया तद्वदनिष्टापातिन्यन्यस्मिन्नपि भावे प्रवर्त्तते । शस्त्रकृता इति शस्त्रशब्दस्य पारिभाषिकः, यथाह देवीपुराणम् "पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः । पतनानशनप्रायैर्वज्राग्निविषबन्धनैः । मृता जलप्रवेशेन ते वै शस्त्रहता स्मृताः" इति । अत्र पक्षिमत्स्यादिभिर्मृतानां शस्त्रहतत्वेनोपदेशात्, तेषां शस्त्रत्वमप्यस्तमिति प्रतीतं भवति । तथाच वक्ष्यमाणानां पतनादिनिमित्तानामप्यत्रैवान्तर्भावात् भूताभिहताः सर्वे आगन्तवः परिगृहीता भवन्ति । न चात्र शस्त्रशब्दस्य पारिभाषिकशस्त्रपरत्वे व्यालादिकृतश्चेत्यनर्थकमिति वाच्यम्, परिभाषापरिपठितेतरेषां व्यालादीनां ग्रहणे सार्थकत्वात् प्रपञ्चार्थत्वाद्वा । व्याला हिंस्रजन्तवः ॥ ६ ॥

प्रवृत्ता ये देवद्रोहादभिशस्तका आथर्व्वणकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च, पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च। स्वभाववलप्रवृत्ताः क्षुत्-

देववलप्रवृत्ता इति। देवानां यक्षप्रभृतीनां देवकल्पानां गुर्व्वादीनाञ्चेदमिति दैवम्। द्रोहोऽत्रावमानना, देवानां द्रोहो देवद्रोहस्तस्मादभिशस्तकाः पापमूला रोगाः. ये यक्ष्यन्ते नवग्रहाकृतिविज्ञानीयादौ। आथर्व्वणकृता इत्यथर्व्ववेदाभिहितमारणादिकृताः; उपसर्ग इहाशुभसूचक उत्पात एव परिगृह्यत आत्ययिकत्वात्, तेन सततोल्कापातादिरिति निष्कर्षः। अस्य च सूचकत्वेन कर्त्तृत्वाभावेऽपि यदैवोत्पात उत्पद्यते, तदैव व्याध्युत्पत्तेः कर्त्तृत्वमध्यस्योच्यते उपसर्गकृताश्चेति काकतालीयन्यायात्; यथोक्तं महाभारते "धूमकेतुर्महाघोरः पुष्यञ्चाक्रम्य तिष्ठति। सेनयोरशुभं घोरं करिष्यति महाग्रहः" इति। अभिशस्तकानां पिशाचादिकृतत्वं स्वयमप्युक्तं "हत्या-पिशाच-रक्षः-क्रोधाधर्म्मैरुपध्वस्यन्ते जनपदाः" इत्यन्तेन ग्रन्थसन्दर्भेण। पुनश्चेति। संसर्गजा इति संसर्गोऽयं सामान्येनोक्तोऽपि कुपितानां देवादीनामेवेति मन्तव्यं, प्रकृतत्वात्; तथाचाभिशापाभिषङ्गजाश्चेति तात्पर्य्यम्। तत्राभिषङ्गो देवादीनामावेशः। अभिशापस्तु "इदन्तेऽनिष्टं भूयात्" इत्येवं देवादिभिराशंसनम्। अत्राभिशापस्य पापमूलत्वात् तज्जा व्याधयोऽप्यभिशस्तका उच्यन्ते। यदुक्तमात्रेयेण "अभिशापप्रभवस्याप्यधर्म्म एव हेतुर्भवति" इति। आकस्मिका इति निगूढत्वाद्विप्रकृष्टत्वाद्वा सूत्रकारणत्वेनोपदिष्टानां देवादिद्रोहाणां तदात्वे अनुपलम्भात् आकस्मिका इत्याख्यायते। तदिदं विद्युदशनिकृतत्वेन पिशाचादिकृतत्वेन च प्रविभक्ततया सकारणत्वेनाभ्युपगतानामपि पुनराकस्मिकत्वेन विभजनं नानुपपन्नम्। यथा "अकस्माद्दधिक्षारवत्" इति तन्त्रान्तरीयं वातोदरप्रत्ययकारं वचनम्। स्वभाववलप्रवृत्ता इति। अत्र शरीराध्यक्षस्यात्मनः स्वीयो भावः स्वभावो न तु शरीरस्य, अपगते ह्यात्मनि कस्मिंश्चिदपि शरीरे क्षुधादयो न प्रादुर्भवन्तीत्यवधेयम्। नन्विदमामनन्ति "न सोऽस्ति प्रत्ययो लोके यत्र

पिपासा-जरा-मृत्यु-निद्रा-प्रकृतयः। तेऽपि द्विविधाः काल-कृता अकालकृताश्च। तत्र परिरक्षणकृताः कालकृताः अपरिरक्षणकृता अकालकृताः। एते आधिदैविकाः। तत्र सर्व्वेषां व्याध्यवरोधः ॥ ७ ॥

सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्ग-त्वाद्दृष्टफलत्वादागमाच्च। यथाहि कृत्स्नं विकारजातं

---

कालो न भाषते" तथा "कालो हि नाम भगवान् स्वयम्भुरनादिमध्य-निधनः" इति, तत्कथमिदमुच्यते अकालकृता इति, न ह्यसम्पूर्णता सच्छि-द्रता वा कालस्योपपद्यत इत्याशङ्क्य तामाशङ्कां परिहरत्यैकान्तेन तत्रे-त्यादिना। परिरक्षणकृताः स्वास्थ्यानुगुणकालकृताः, तद्विपरीतास्त्वपरि-रक्षणकृताः। एते कालबलप्रवृत्तादयः। अथ "कालस्वरूपं रूपं तद्विष्णो-र्मैत्रेय वर्त्तते" इति स्मरणात् "आत्मा च ब्रह्म" इति वेदान्तवाक्याच्च, कालबल-स्वभावबलप्रवृत्तानामाधिदैविकत्वं बोद्धव्यम्। सम्प्रत्युक्तमर्थमुप-संहरन् प्रागुक्ता या शङ्का तन्मूलमुन्मूलितेत्यवगमयति तत्रेत्यादिना। तत्रादिबलप्रवृत्तादिषु सर्व्वव्याध्यवरोधः सर्व्वव्याधिपरिग्रहः क्रियत इति शेषः, अतो ज्वरगुल्मादिभेदेन व्याधीनामनेकविधत्वे सत्यपि यथोक्तमव-रोधः कर्त्तुं शक्यत एवेति निगूढो भावः ॥ ७ ॥

शास्त्रमिदं रुक्प्रतीकारार्थमुपदिश्यते प्रतीकारे चावश्यं दोषा अपेक्षि-तव्या भवन्तीत्यभिसन्धाय सततविधानामेषां दोषमूलत्वमुपदिदिक्षति सर्व्वेषा-मित्यादिना। मूलमिति मूलकारणम्। न खलु कारणसामान्ये कार्य्य-भेदः सहसा समन्वितो भवतीति सम्प्रधार्य्य पृथग्विधत्वेऽप्येषां यथा दोष-मूलत्वमध्यवसितव्यं तदावधारणे भगवांस्तन्त्रकारो हेतुत्रितयमुदीरयति तदित्यादिना। वातादीनां लिङ्गानि रूक्षशीतादीन्येव लिङ्गान्येषामिति तल्लिङ्गास्तेषां भावस्तस्मात् तल्लिङ्गत्वात् वातपित्तश्लेष्माण एव मूलमिति सम्बन्धः। एतदेव द्रढयन्नाह दृष्टेत्यादि। दृष्टफलत्वात् वातादिहरं

विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते। दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पा भवन्ति। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजोऽयमस्थिजोऽयं मज्जजोऽयं शुक्रजोऽयं व्याधिरिति ॥ ८ ॥

तत्रान्नाश्रद्धारोचकाविपाकाङ्गमर्द-ज्वर-हृल्लास-तृप्ति-गौरव-हृत्पाण्डुरोग-मार्गोपरोध-कार्श्य-वैरस्याङ्गसादाकाल-

---

पथ्यैर्वाताद्युपशमनेन तत्तद्व्याध्युपशमदर्शनात्, आगमात् "नास्ति रोगो विना दोषैः" इत्यादि शास्त्राच्च वातपित्तश्लेष्माण एव मूलमिति पूर्व्वेणान्वयः। उक्तमर्थं दृष्टान्तेन स्फुटीकृत्यावगमयति यथाहीति। विकारजातं विकारसमूहः; अत्र कृत्स्नमिति विशेषणं महदादिगोवटप्रभृतीनां परिग्रहार्थम्। एतच्च "मूलप्रकृतिरविकृतिः" इति साङ्ख्यकारिकायां विस्तरशो द्रष्टव्यम्। विश्वरूपेण नानाकारेण। न व्यतिरिच्यन्ते न त्यज्यन्ते कारणेन कार्य्यस्यानन्यत्वादिति भावः। अर्थोऽयं प्राक् "व्याधिग्रहणात्" इत्युपक्रम्य "सर्व्वे एव व्याधयो व्याख्याताः" इत्यनेनोपदिष्टोऽपि व्यवस्थाभिहृदये व्यासतः पुनरिहोपदिष्ट इति न पौनरुक्त्यम्। न च व्याधीनां वातादिमूलत्वेऽभ्युपगते एकैकशस्तैर्वातादिभिः प्रमेहादीनामनेकधाभिनिर्वृत्तिरनुपपन्नेत्याह दोषेत्यादि। नन्वेतच्चेत्तत्त्वं कथन्तर्हि रसजत्वादिभेदेन व्याधीनां संज्ञा क्रियते, नहि नीचा अपि स्थलजान् जलजत्वेन व्यपदेष्टुमभीप्सन्ति, किं पुनर्विदितवेदितव्या महर्षय इत्याशङ्कां परिहरति दोषदूषितेष्वित्यादिना। धातुष्वत्यर्थं दोषदूषितेषु खलु "रसजोऽयं व्याधिः" इत्यादिक्रमेण संज्ञा क्रियते, सर्पिर्दग्धोऽयं व्रण इतिवत् तादात्म्याध्यासेनेति भावः, अतो व्याधीनां दोषमूलत्वेऽपि तथा तथा संज्ञा नानुपपन्नेत्ययमभिसन्धिः। सम्प्रति दोषादिसंसर्गादायतनविशेषाच्च ये ये व्याधयो जायमाना-

वलि-पलित-दर्शनप्रभृतयो रसदोषजा विकाराः। कुष्ठ-विसर्प-पिड़का-मशक-नीलिका-तिलकालक-न्यच्छ-व्यङ्गेन्द्रलुप्त-प्लीह-विद्रधि-गुल्म-वातशोणितार्शोऽर्व्वुदाङ्गमर्द्दासृग्दर-रक्त-पित्तप्रभृतयो रक्तदोषजा गुद-मुख-मेढ्रपाकाश्च। अधि-मांसार्व्वुदार्शोऽधिजिह्वोपकुश-गलशुण्डिकालजी-मांससङ्घात-ओष्ठप्रकोप-गलगण्ड-गण्डमालाप्रभृतयो मांसदोषजाः। ग्रन्थि-वृद्धि-गलगण्डार्व्वुद-मेदोजौष्ठप्रकोप-मधुमेहातिस्थौल्याति-स्वेदप्रभृतयो मेदोदोषजाः। अध्यस्थ्यधिदन्तास्थितोद-शूल-कुनखप्रभृतयोऽस्थिदोषजाः। तमोदर्शन-मूर्च्छा-भ्रम-पर्व्व-स्थूलमूलारुर्जन्म-नेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः। क्लैव्या-प्रहर्ष-शुक्राश्मरी-शुक्रमेह-शुक्रदोषादयश्च तद्दोषजाः। त्वग्-दोषाः सङ्गोऽतिप्रवृत्तिर्वा मलायतनदोषाः। इन्द्रियाणामप्र-वृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः। इत्येवं समास उक्तो विकारनिमित्तानि चैषां प्रतिरोगं वक्ष्यामः॥ ९॥

भवति चात्र।

कुपितानां हि दोषाणां शरीरे परिधावताम्।
यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते॥ १०॥

---

स्थानानि सन्ति आपद्यन्ते तान् पुनर्निर्दिदिक्षति तत्रेत्यादिना। मार्गोप-रोधी मूत्रसङ्गादिः। पर्व्वसु स्थूलमूलानामरुषां जन्म, पर्व्वस्थूलमूलारुर्जन्म "अरुषां स्थूलमूलानां पर्व्वजानाञ्च दर्शनम्" इत्यात्रेयः। अप्रहर्षः स्त्रीष्विति शेषः। क्लैव्याग्रणीयस्त्वेनायं भिद्यते॥ ८।९॥

नन्विदमाससन्ति "सर्व्वशरीरचरास्तु खलु वातपित्तश्लेष्माणः सर्व्वस्मिन्

भूयोऽत्र जिज्ञास्यं, किं वातादीनां ज्वरादीनाञ्च नित्यः संश्लेषः परिच्छेदो वा? इति। यदि नित्यः संश्लेषः स्यात् तर्हि नित्यातुराः सर्व्व एव प्राणिनः स्युः। अथाप्यन्यथा, वातादीनां ज्वरादीनाञ्च "अन्यत्र वर्त्तमानानामन्यत्र लिङ्गं

---

शरीरे कुपिताकुपिताः शुभाशुभानि कुर्व्वन्ति" इति, नेह तारतम्येनैषां प्रकोप उपदिश्यते, तत्कथमिदमुपपन्नं भवति. "दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते" इति, नैतत्तु निपुणं विचिन्तयन्तोऽणुमात्रेणाप्यवगच्छाम-स्तद्विशदं विज्ञापयतु भगवानित्याह कुपितानामित्यादि। अत्र यत्रेति सर्वनाम्ना सन्निहितत्वाद्रसादीनां प्रत्यवमर्शः क्रियते; शरीरे परिधावतां कुपितानां दोषाणां यत्र रसादिषु सङ्गो मेलनमित्यनर्थान्तरम्; तत्र स्वेषां दोषाणां वैगुण्यात् स्ववैगुण्यात् व्याधिरुपजायत आविर्भवतीत्यर्थः, नासदुत्-पत्तेरित्यवधेयम्। तथाच यत्र परिधावतां दोषाणां सङ्गस्तत्रैवात्यर्थं दोष-दुष्टिर्निरूप्यत इत्यवगमान्नानुपपत्तिः। अत्र स्ववैगुण्यादिति स्वशब्दो व्याध्यु-त्पादनायां रसादीनामकिञ्चित्करत्वमाख्यातुम्, दोषतन्त्रा हि ते स्वातन्त्र्येण किमपि कर्त्तुं नैव शक्यन्ते, अतएवोक्तञ्च "त एव च व्यापन्नाः प्रलयहेतवः" इति ॥ १० ॥

नन्वयं व्याधिनिचयश्चेद्दोषवैगुण्यादेवाविर्भवति तर्हि सत्त्वेनोपलब्धा ज्वरादयः किं नित्यमेव सूक्ष्मतया वातादिष्ववतिष्ठन्ते? आहोस्विदन्यत्रेत्येवं संशयमवतारयन्नाह भूय इति। अत्र व्याध्युत्पत्तावित्यर्थः। संश्लेषः सम्बन्धः परिच्छेदोऽसम्बन्धः। आस्तां तावद्यथा तथैषां सम्बन्धः का वस्तुगतिरिति विप्रतिपत्तिं दर्शयति यदीति। नित्यातुराः स्वाभाविकव्याधि-परिपीड़िता इव, नित्यज्वरादिव्याधिप्रपीड़िताः स्युर्दैनन्दिनाहारविहारतः कालप्रकर्षतश्चावश्यमुपस्थितेन भिषक्सहस्रैरपि प्रतिहन्तुमशक्येन बलवता वातादीनां वैगुण्येन क्षुधादीनामिवान्तर्निहितानां ज्वरादीनामप्युपबृंहित-त्वेनावाप्तेरिति भावः। अथेति पक्षान्तरोपन्यासार्थम्। वातादीनां

न भवति” इति ज्ञात्वा यदुच्यते वातादयो ज्वरादीनां मूला-नीति तन्न। अत्रोच्यते, दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति, अथच न नित्यः सम्बन्धो यथाहि विद्युद्वाताशनि-वर्षाण्याकाशं प्रत्याख्याय न भवन्ति। सत्यप्याकाशे कदा-चिन्न भवन्ति; अथच निमित्ततस्तत एवोत्पत्तिरिति। तरङ्गबुद्बुदादयश्चोदकविशेषा एव, वातादीनां ज्वरादीनाञ्च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः अथच निमित्तत-एवोत्पत्तिरिति॥ ११॥

---

ज्वरादीनाञ्चान्यथा परिच्छेदेऽपि, “अन्यत्र वर्त्तमानानां भावानामन्यत्र लिङ्गं न भवति’ इति ज्ञात्वा इति न्यायात् “वातादयो ज्वरादीनां मूलानि” इति यदुच्यते “सर्व्वेषाञ्च व्याधीनाम्” इत्यादिना प्रागुक्तेन ग्रन्थसन्दर्भेण, तन्नोपपद्यते, प्राणिनां वातादिमत्त्वे सत्यपि नित्यातुरत्वेनालक्ष्यमाणत्वात्, ज्वरादीनां वातादिलिङ्गत्वेनैवोपलम्भाच्चेति भावः। परिहरति अत्रेति। न भवन्ति नाविर्भवन्ति; अथचेति निपातसमुदायः किन्त्वर्थः। सम्बन्धो-ऽत्राभिव्यज्याभिव्यञ्जकत्वलक्षणो भावो न नित्यो नित्यविकाशी, निमित्त-विशेषसापेक्षत्वात् वक्ष्यति हि “निमित्तत एवोत्पत्तिः” इति। न चैत-दप्रसिद्धमिति दृष्टान्तमवतारयति यथाहीति। निमित्ततः सङ्घर्षादिवि-शेषतः। तत आकाशत एवोत्पत्तिर्विद्युदादीनामिति शेषः। इतिशब्दो वाक्यसमाप्त्यर्थः। किन्त्वेतावता विद्युदादीन् प्रत्याकाशस्येव ज्वरादीन् प्रत्येषां निमित्तत्वमप्यङ्गीकरोषि? नेत्याह तरङ्गेति। उदकविशेषाः कारणेन कार्य्यस्यानन्यत्वादुदकादभिन्ना एव तरङ्गबुद्बुदादयो यथा सत्य-प्युदके कदाचिन्न भवन्ति, अथच निमित्ततो निमित्तविशेषात् वातादि-प्रचारविशेषादिति यावत् तत एवोदकादुत्पद्यन्ते; एवमिति तथार्थः। तथा वातादीनां ज्वरादीनाञ्च न शाश्वतिकः सततप्रवृत्तः संश्लेषो नापि च

भवति चात्र ।

विकारपरिमाणञ्च सङ्ख्या चैषां पृथक् पृथक् ।

विस्तरेणोत्तरे तन्त्रे सर्वाबाधाश्च वक्ष्यते ॥ १२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्विंशोऽध्यायः ।

---

शाश्वतिकः परिच्छेदः, अथच निमित्तत इति कार्य्यसामान्यस्यैव निमित्ता-पेक्षित्वेऽप्यत्र निमित्तत इति विशेषणं निमित्तविशेषपरिग्रहार्थमिति युक्त-मुत्पश्यामः ; तदयमर्थः निमित्ततो वस्तुशक्तेरचिन्त्यत्वान्निमित्तविशेषात् मिथ्याहारादितो न तु दैनन्दिनाहारादित इति यावत्, उत्पत्तिर्ज्वरादीनां तत एव वातादिभ्यो न त्वन्यस्मादित्येवं दृष्टान्तसाम्याद्वाक्यशेषेण व्याख्येयम् । एतेन ज्वरादीनामनित्यविकाशित्वादशाश्वतिकः संश्लेषस्तल्लिङ्गत्वाद्वापरि-च्छेदः स्वीक्रियते । वस्तुतस्तु वातादीनां ज्वरादीनाञ्चाविशेष इति निश्ची-यते, एतच्च प्रथमेऽध्याये विशदं व्याहृतमस्माभिः "स्वधातुवैषम्यनिमित्तजा ये" इत्यादिवचनोपन्यासेन ; नातो नित्यातुर्य्यप्रसङ्गो नापि च ज्वरादीनां वातादिलिङ्गतानुपपत्तिरिति विप्रतिपत्तिः परिहृता भवति ॥ ११ ॥

नन्विह समुद्दिष्टा व्याधयः स्थूलतो विशेषतश्च कतिधा भवन्तीत्याह विकारेति । विकारपरिमाणं "व्याधीनाञ्च सहस्रं यत्" इत्यादिना । पृथक् पृथक् सङ्ख्या चैषां "षड्शांसि" इत्यादिक्रमेण, वक्ष्यत इत्यन्वयः । अर्थोऽयं तन्त्रान्तरेषूक्तो वक्ष्यमाणोऽपीह "उत्तरे तन्त्रे" इति बाहुल्यानुशया-दुपात्तमित्यनुसन्धेयम्, सर्व्वा बाधाः सर्व्वे प्रतीकारक्रमा वक्ष्यन्त इति वचनव्यत्यासेनान्वयः प्रासङ्गिकमेतत् ॥ १२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये व्याधिसमुद्देशीयो नाम चतुर्विंशोऽध्यायः ।

# पञ्चविंशोऽध्यायः ।

अथातोऽष्टविधशस्त्रकर्मीयमध्यायं व्याख्यास्यामः ॥ १ ॥

छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकाः ।
व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थिमांसगम् ॥
शल्यं जतुमणिर्मांससङ्घातो गलशुण्डिका ।
स्नायुमांसशिराकोथो वल्मीकं शतपोनकः ।
अध्रुषश्चोपदंशाश्च मांसकन्यधिमांसकः ॥ २ ॥

---

न खलु "द्विविधा व्याधयः शस्त्रसाध्याः" इत्यादि व्याधिसन्देशीयोक्तं प्रतिपित्सूनां किञ्चन प्रतिपित्सितमर्थं प्रतिपादयति, मनागपि प्रत्ययगन्धे-नाविषयीकरणात्. पूर्व्वं हि शस्त्रकर्म्माष्टविधमित्युपदिष्टं, न च तत्सर्व्वं सर्व्वस्मिन् व्याधावुपयोगमेति इत्यविशेषेण विशेषात्तदिदानीमविभक्तं तमर्थं विभज्योपदिदिक्षुरष्टविधशस्त्रकर्म्मीयं नामाधिकरोति अथात इत्यादिना। कर्म्मणि साधवः कर्म्मीयाः, अष्टविधशस्त्रकर्म्माहान् व्याधीनधिकृत्य कृतो ग्रन्थोऽष्टविधशस्त्रकर्म्मीयः ॥ १ ॥

छेद्या इति। श्लैष्मिको ग्रन्थिरिति सामान्येनोक्तोऽप्ययमर्थोऽवश्यममर्म्मज-त्वादिना विशेषणीयः, वक्ष्यति हि "अमर्म्मजातं समसग्रयातमपक्कमेवाप-हरेद्विदार्य्य" इति। तिलकालकस्तिलकालकसामान्यं, तिलकालकाद्वय-मित्येतत्, कश्चित्तु नेह तिलकालकोऽयं शूकदोषोक्तस्तस्यासाध्यत्वात्, किन्तर्हि? क्षुद्ररोगविशेष इत्याचक्षाणो भिषग्विद्यायां स्वस्यैव क्षुद्रत्व-माख्यापयति, असाध्योऽपि हि स प्रत्याख्यायाचरितव्य इति निवेदयिष्यते, प्रयोगत उपदिश्यते च छेदमात्रप्रतीकार इति। व्रणवर्त्म नाड़ीव्रणः, चर्म्मकीलोऽर्शोभेदः शल्यमित्युत्तुण्डितमेवेति प्रत्येतव्यम् "उत्तुण्डितं छित्त्वा" इत्यनागताविक्षणात्। कोथः पूतिभावः, उपदंशस्य छेद्यत्वमागतपाक-

भेद्या विद्रधयोऽन्यत्र सर्व्वजाद्ग्रन्थयस्त्रयः ।
आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ॥
प्रमेहपीड़काशोफस्तनरोगावमन्थकाः ।
कुम्भीकानुशयीनाड्यो वृन्दौ पुष्करिकालजी ॥
प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ।
तुण्डिकेरी गिलायुश्च पूर्व्वं ये च प्रपाकिणः ।
वस्तिस्तथाश्मरीहेतोर्मेदोजा ये च केचन ॥ ३ ॥

---

विषयं कुथितमेहनविषयञ्चेत्युन्नेयम् । शतपोनकशब्देनेह भगन्दरभेद-एवाभिप्रेयते, न तु शूकदोषविशेषस्तस्य लेख्यत्वेन वक्ष्यमाणत्वात्, अस्य च भगन्दरग्रहणेनैवोपलम्भेऽपि पुनरुपादानं नितरां छेद्यत्वमाख्यातुम् । अत्यं कन्दाकारं मांसं मांसकन्दी, मृणाल्यादिषु पाठादीप्, कठिनो मांसाङ्कुर-इति यावत् । छेद्यत्वमस्या ग्रन्थिचिकित्सिते व्यक्तीभविष्यति । अत्र जतु-मणिर्वल्मीकश्च क्षुद्ररोगभेदौ, मांससङ्घातो गलशुण्डिकाऽभुषोऽधिमांसकश्च मुखरोगेषु द्रष्टव्याः ॥ २ ॥

भेद्या इत्यादि । सर्व्वजो हि विद्रधिरसाध्यस्तदिदमुच्यते, अन्यत्रेति । ग्रन्थयस्त्रय इति प्राथमिकत्वेन वातादिजाः । आदित इत्यादावुपदिष्टाः वातपित्तकफजा इति यावत्, अत्रादित इति विशेषणं क्षतजसर्व्वजयो-रसाध्यत्वात्तदवच्छेदार्थम् । शोफो व्रणशोफः, स्तनरोगः स्तनविद्रधिः, प्रायशः क्षुद्ररोगाश्चेत्यनुशयीविदारिकयोर्लाभे पृथगुपादानं प्रपञ्चार्थमेका-न्ततो भेद्यत्वप्रतिपादनार्थं वा । अत्र प्रायश इत्यनेनेन्द्रलुप्तादीन्निरस्यति । नाड्यो नाड़ीव्रणाः, भेद्यावस्था चैषामशोपहरणीये विशदं व्याहृता स्वयमेव "यतो यतः" इत्यादिना ग्रन्थसन्दर्भेण, एतच्च प्रायेण बालनाड़ीविषयमत्या-यतनाड़ीविषयञ्चाङ्गुस्तेन प्रागुक्तं छेद्यत्वमेव प्रायेणाभिमतमित्यनुसन्धेयम् । वृन्दाविति द्विवचनं वृन्दैकवृन्दयोः परिग्रहार्थम् । पूर्व्वं ये चेति, गिलायु-

लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका ।
मेदोजो दन्तवैदर्भो ग्रन्थिवर्त्माधिजिह्विका ।
अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ॥ ४ ॥
वेध्याः शिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ ५ ॥
एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ॥ ६ ॥
आहार्य्याः शर्करास्तिस्रो दन्तकर्णमलाश्मरी ।
शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे ॥ ७ ॥

---

तुण्डिकार्य्यौः साहचर्य्यात् सुखरोगेष्वेव ये व्रणांकिणः पाकशीलाः कण्ठ-शालूकादयस्ते पूर्व्वं पच्यमानावस्थायां भेद्या इत्यर्थः, तथा अश्मरीहेतो-रश्मर्य्याहरणनिमित्तं वस्तिर्भेद्य इति तात्पर्य्यम्। अनामजीकुम्भिका-समन्यपुष्करिकाः शूकदोषभेदाः ॥ ३ ॥

लेख्या इत्यादि । चतस्र इति वातपित्तकफशोणितजाः । उपरिष्टा-दसाध्यत्वेन व्याचिख्यासितायाः अपि शोणितजाया इह परिगणनं नानुप-पन्नं, "पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्" इति स्मरणात् । दुष्ट-मेदःकृतो ग्रन्थ्यादिर्नाम रोगोऽत्र मेदोजशब्देनाभिप्रेयते प्रकृतत्वात्, ग्रन्थि-भूतं वर्त्म, नेत्रच्छदो नाडीव्रणो वा ग्रन्थिवर्त्मोच्यते, अर्शांसि चेह महामूला-न्येव, तान्येव हि समूलमुन्मूलयितुं लिख्यन्त एकान्तेन । मण्डलं दद्रुपुण्ड-रीकादीनां, मांसोन्नतिर्व्रणेषु दुष्टमांसाभिवृद्धिः ॥ ४ ॥

वेध्या इत्यादि । सर्व्वमेव जातोदकमुदरं धर्म्ममाश्रित्य दकोदरशब्देनेह ग्राहयन्त्याचार्य्या वेधेनानुगतत्वात् । एष्या इत्यादि । एष्याः शलाकया अन्वेषणीयाः, उन्मार्गी विमार्गी, ऊर्द्ध्वाधस्तिर्य्यङ्मार्ग इति यावत्, अश्मरी शर्करा, दन्तशर्करा, क्षुद्ररोगोक्ता शर्करार्व्वुदारम्भिका शर्करा चेति तिस्रः शर्कराः । दन्तकर्णमलसहिताश्मरी दन्तकर्णमलाश्मरी, शल्यत्वेनैव मूढ-गर्भाणां परिग्रहेऽपि मूढगर्भाश्चेति महात्ययकरत्वादनुपेक्षणीयत्वमाख्या-तुम् ॥ ५—७ ॥

स्राव्या विद्रधयः पञ्च भवेयुः सर्व्वजादृते ।
कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ॥
पाल्यामयाः श्लीपदानि विषजुष्टञ्च शोणितम् ।
अर्व्वुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये ॥
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ।
शौषिरो गलशालूकं कण्टकाः कृमिदन्तकः ॥
दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ।
पित्तासृक्कफजाश्चौष्ठाः क्षुद्ररोगाश्च भूयशः ॥ ८ ॥

---

स्राव्या इत्यादि । सरुजो वायुः स्राव्यसूषणेन निर्हरणीयः, वक्ष्यति हि "निरुद्धेऽस्थनि वा वायौ" इत्युपक्रम्य "चूषयेत् पवनं बली" इति, अत्र निरुद्धत्वेन वायोः सरुजत्वमाख्यातमिति गम्यते । न च स्रवतेर्जलादिक्षरण एव तात्पर्य्यमिति केनचिदुक्तं युक्तं "ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा । स्रवत्यनोङ्कृतं पूर्व्वम्" इति बहुलं प्रयोगदर्शनात् । एकदेशजः शोफ इह अम्लभोजननिमित्तानां तथोपद्रवभूतानाञ्च शोफानामस्राव्यत्वेनाभिधानात्तदितर एव प्रत्येतव्यः । आदित आदावुपदिष्टा ये त्रयो वातादिजा ग्रन्थयश्चकारादादितो ये त्रय उपदंशा इत्यर्थः । अत्र त्रयाणामुपदंशानां स्राव्यत्वेनोपदेशेनैव शोणितसन्निपातजयोरप्युपदंशयोः स्राव्यत्वमुपदिष्टं भवति, वक्ष्यति हि "उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम्" इति । न चैषां ग्रन्थीनां प्राग्भेद्यत्वेनोपदेशात् स्राव्यत्वमनुपपन्नमिति वाच्यम् "कर्म्मणा कश्चिदेकेन द्वाभ्यां कश्चित्त्रिभिस्तथा । विकारः साध्यते कश्चिच्चतुर्भिरपि कर्म्मभिः" इत्युक्तेः । एतेनैवंविधाः सर्व्व एव व्याख्याताः । विदारिकाशब्देनेह क्षुद्ररोगमुखरोगोक्तयोर्द्वयोरेव विदारिकयोः परिग्रहः क्रियते, प्रायः समक्रियत्वादाकृतिसाम्याद्वा ॥ ८ ॥

सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ।
सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रयाः ॥ ९ ॥
न क्षाराग्निविषैर्जुष्टा न वा मारुतवाहिनः ।
नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥
पांशुरोमनखादीनि चलशल्यं भवेच्च यत् ।
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ।
रुजश्च विविधाः कुर्य्युस्तस्मादेतान् विशोधयेत् ॥ १० ॥
ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ।
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मान्तकस्य वा ॥

---

सीव्या इत्यादि । भिन्नाः सुलिखिता मेदःसमुत्था गदा अर्बुदादय-श्चकारात्तथाविधा मांसादिसमुत्था अपि सीव्याः, ये च सद्योव्रणाश्चल-सन्धिव्यपाश्रयास्ते सीव्या एव, अवधारणार्थोऽयमेवशब्दः । अस्यूता हि ते सन्ध्यनुग्राहकं श्लेषाणमुपहत्यापाकरोति सन्धिचेष्टामेकान्तेनेत्ययमभिसन्धिः, एतेनेतरदेशस्थाः सद्योव्रणा अनात्ययिकतया नावश्यं सीव्या इत्यपि सूचितं भवति । अवस्थाविशेषे चैषां पुनः सेवनं प्रतिषेधयति नेत्यादिना । क्षारा-ग्निविषैर्जुष्टाः प्रतीकारार्थं प्रयुक्तक्षाराग्निकाः, दिग्धविद्धत्वेनान्यथा वा विषजुष्टाश्चेत्यर्थः । मारुतवाहिनः फुप्फुसादिगताः, अन्तर्लोहितशल्या अन्त-र्दुष्टशोणितशरादिशल्या इत्यर्थः । सम्प्रति शल्यत्वेनैव पांशुप्रभृतीनामुपलम्भे-ऽप्यतितरां प्रपाकित्वात्तानि पुनस्त्वरितं निर्हर्त्तुमुपदिदिक्षन्ति पांश्वित्या-दिना । भृशमत्यर्थं पाचयेयुः, तस्मादेतान् शल्यविशेषान् निर्हृत्य वि-शोधयेदाश्वेवेति भावः ॥ ९—१० ॥

तत इत्यादि । व्रणं व्रणौष्ठं समुन्नम्य किञ्चिदुन्नतं कृत्वा यथास्थितं यथास्थानं स्थापयित्वा ओष्ठेनौष्ठं संयुज्येति यावत्, सीव्येदिति परेणान्वयः ।

शणजक्षौमसूत्राभ्यां स्नाय्वा बालेन वा पुनः ।
मूर्व्वागुड़चीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥
सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् ।
ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥
देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् ।
आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥
धनुर्वक्रा हिता मर्म्मफलकोषोदरोपरि ।
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः ।
कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः ॥

---

अश्मान्तकः पाषाणभेदस्तदाकारः क्षुपभेद इहाश्मान्तकशब्देनोपदिश्यते, विज्ञायते चाम्ललोटक इति । कथं सीव्येदित्याशङ्क्याह सीव्येदित्यादि । वेल्लितकं कुटिलं तिर्य्यक् प्रणिहितया सूच्या सूत्रेणैकेनावेष्ट्य सम्पादितमित्येतत् । उक्तञ्च "अल्पान्तरन्तु कुटिलं सीव्यते बहुवेष्टनम् । यत्तद्वेल्लितकं नाम शाखादौ युज्यते बुधैः" इति । शलाकोपहिता सेवनी गोफणिकेत्यायुर्व्वेदविदो भाषन्ते, तथाच "पाटितं योनिगुदयोरन्तरं वा तथाविधम् । देशं स्यूत्वा यथायोगं पुनस्तच्छेदशङ्कया ॥ नातिस्थूले नातिसूक्ष्मे शलाके द्वे निपात्य च । तदासक्तेन सूत्रेण संवेष्ट्य सेवनीकृता । नाम्ना गोफणिका प्रोक्ता दुष्करा मन्दबुद्धिभिः" इति । पृथक् ग्रथित्वा संच्छिन्ना सेवनी तुन्नसेवनी । यदाह "पृथक् पृथक् तु संच्छिन्नं सीव्यते तुन्नसेवनी । या योज्या पक्ष्मकोपादौ" इति । प्रायेणौष्ठसन्धानार्थं यत्र सेवन्यां सृक्कतः सृक्कपर्य्यन्तम् ऋजुसूचीं निपात्य तदग्रमूलासक्तेन सूत्रेणाकृष्य सन्धेयभागं संयुज्य ग्रन्थिः क्रियते सा ऋजुग्रन्थिर्नाम "पार्श्वात् पार्श्वान्तरं यावत् ऋजुसूचीं निपात्य च । संवेष्ट्याकृष्य सूत्रेण ग्रन्थिर्यः सन्धिहेतवे । क्रियते स ऋजुग्रन्थिरोष्ठादिषु विधीयते" इति तन्त्रान्तरञ्च । देश इत्यादि ।

नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत्।
दूराद्रुजो व्रणोष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥ ११ ॥
अथ क्षौमपिचुच्छन्नं संस्यूतं प्रतिसारयेत्।
प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥
शल्लकीफलचूर्णैर्वा क्षौमभस्मासेन वा पुनः।
ततो व्रणं यथायोगं बद्ध्वाचारिकमादिशेत् ॥ १२ ॥
एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम्।
चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥ १३ ॥
हीनातिरिक्तं तिर्य्यक् च गात्रच्छेदनमात्मनः।
एतास्तस्रोऽष्टविधे कर्म्मणि व्यापदः स्मृताः ॥ १४ ॥

अज्ञानलोभाहितवाक्ययोग-
भयप्रमोहैरपरैश्च भावैः।
यदा प्रयुञ्जीत भिषक् कुशस्त्रं
तदा सशेषान् कुरुते विकारान् ॥ १५ ॥

---

इतिशब्दः प्राग्वक्ष्यमाणत्वेनाभ्युपगतानां सूचीनां व्याख्यापरिसमाप्त्यर्थः। परिशिष्टं निगदव्याख्यातम् ॥ ११ ॥

अथेत्यादि। प्रतिसारयेदवचूर्णयेत्। शल्लकी नामौषधिः, शिल्लकीति विज्ञायते। क्षौमभस्मेन अतसीवीजचूर्णेन कत्तृणचूर्णेन चेत्यर्थः। अत्रानुक्तोऽपि सूत्रच्छेदो वक्तव्य एव "यदा मन्येत संश्लिष्टां पेश्या पेशीं त्वचा त्वचम् तदा बन्धनमेकं द्वे त्रीणि वा मोचयेत् क्रमात्" इति तन्त्रान्तरीयस्मरणात् तिर्य्यगित्यविहिततथाविधच्छेदं विषयीकरोतीति भूगण्डादौ तिर्य्यक्छेदे न विप्रतिषिद्धः ॥ १२—१४ ॥

तत्र हीनातिच्छेदौ दोषाख्यानेनातितरां न्यक्करोति अज्ञानेत्यादि

तं चाद्शस्त्राग्निभिरौषधैश्च
भूयोऽभियुञ्ज्यान्नमयुक्तियुक्तम् ।
जिजीविषुर्दूरत एव वैद्यं
विवर्ज्जयेदुग्रविषाग्नितुल्यम् ॥ १६ ॥
तदेव युक्तन्त्वति मर्म्मसन्धीन्
हिंस्यात् शिराः स्नायुमथास्थि चैव ।
सूर्व्वप्रयुक्तं पुरुषं क्षणेन
प्राणैर्वियुञ्ज्यादथवा कथञ्चित् ॥ १७ ॥
भ्रमः प्रलापः पतनं प्रमोहो
विचेष्टनं संलपनोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात-
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥

अज्ञानमनभिज्ञत्वं, अहितवाक्यं बालोऽयं नार्हति यवमात्रादधिकं शस्त्रपदमेवं स्नेहादन्यस्माद्वा कारणात् स्वजनादिभिः प्रयुक्तमनिष्टापाति वाक्यं, प्रमोहः कर्म्मकाले ज्ञानवतोऽपि चित्तविभ्रमः, अपरैर्याथातथ्येन व्याधितत्त्वानभिज्ञत्वादिभिर्भावैः, ईषदर्थोऽयं कुशब्दः क्रियाविशेषणम्। यदा भिषक् शस्त्रमीषन्मात्रं प्रयुञ्जीतेत्यर्थः। तदेवेति। अतियुक्तन्तु तदेव शस्त्रमित्यर्थः, तुकारो विशेषणार्थः। कथञ्चिज्जीवेदिति शेषः ॥ १५—१७ ॥

किन्तु खलु मर्म्मादिषु च्छिन्नेषु लिङ्गानि भवन्ति, यान्युपलभ्य शस्त्रमतियुक्तं जानीम इत्याह भ्रम इत्यादि। भ्रमश्चक्रारूढस्येवावघूर्णनम्, अन्यथाभूतस्य वस्तुनोऽन्यथाज्ञानं वा, ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा, तन्नाशो विचेष्टनम्, संलपनं रहसि भाषणम्, चित्तविभ्रमादस्पष्टमनन्यापेक्षिभाषणमित्येतत्।

मांसोदकाभं रुधिरञ्च गच्छेत्
सर्व्वेन्द्रियार्थोपरतिस्तथैव ।
दशार्द्धसंख्येष्वपि हि क्षतेषु
सामान्यतो मर्म्मसु लिङ्गमुक्तम् ॥ १८ ॥
सुरेन्द्रगोपप्रतिमं प्रभूतं
रक्तं स्रवेद्दै क्षततश्च वायुः ।
करोति रोगान् विविधान् यथोक्तां-
श्छिन्नासु भिन्नास्वथवा शिरासु ॥
कौब्ज्यं शरीरावयवावसादः
क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं मनुजं व्यवस्येत् ॥

---

ऊर्द्ध्ववातः श्वासः,वातलता रुजो मन्यास्तम्भादयश्चरकसंवादात्, मांसोदकाभं मांसधावनतोयाकारम्, अत्र रुधिरस्य तदाकारता रञ्जकाल्पत्वाल्लक्षणीया, अतस्तद्वर्णोगेव प्रवर्त्तत इत्यप्यनुसन्धेयम्। रसरञ्जकसम्भूतादि रुधिराद्रञ्जकमादौ गच्छत्याग्नेयत्वाल्लघुत्वाच्च, नत्वाप्यो रसः। दशार्द्धसङ्ख्येषु सिरास्नायुस्थिसन्धिमांसात्मकतया पञ्चसङ्ख्यकेषु मर्म्मसु क्षतेषु सामान्यतोऽविशेषाल्लिङ्गमुक्तम्, विशेषतस्तु लिङ्गमनन्तरं निवेदयिष्यते "यथास्वमेतानि विभावयेत्तु:" इत्यादिनातिदेशार्थेन ग्रन्थसन्दर्भेण। लिङ्गानामेषां बलतारतम्यन्तु मर्म्मबलमभिसमीक्ष्य जिज्ञासितव्यम्। मर्म्मबलानि च वक्ष्यमाणेन सद्यःप्राणहरत्वादिना वेदितव्यानि ॥ १८ ॥

सन्ध्यादिषु मध्ये सिरैव हि सर्व्वं शरीरमहरहस्तर्पयति, स्नायुश्च तामनु-

शोफातिवृद्धिस्तुमुला रुजश्च
बलक्षयः पर्व्वसु भेदशोफौ ।
क्षतेषु सन्धिष्वचलाचलेषु
स्यात्सन्धिकर्म्मोपरतिश्च लिङ्गम् ॥
घोरा रुजो यस्य निशादिनेषु
सर्व्वास्ववस्थासु न शान्तिरस्ति ।
तृष्णाङ्गसादौ श्वयथुश्च रुक् च
तमस्थिविद्धं मनुजं व्यवस्येत् ॥ १९ ॥
यथास्वमेतानि विभावयेयु-
र्लिङ्गानि मर्म्मस्वभिताड़ितेषु ।
स्पर्शं न जानाति विपाण्डुवर्णो
यो मांसमर्म्मण्यभिताड़ितः स्यात् ॥ २० ॥

---

कूलयतीति परस्तो व्यक्तीभविष्यत्यतः प्राधान्याद्व्युत्क्रमेण प्राक् सिरास्नायुक्षतलक्षणान्युपदिदिक्षति सुरेन्द्रेत्यादिना श्लोकद्वयेन। सुरेन्द्रगोपो नाम कीटभेद इन्द्रगोप इत्याख्यायते। तुमुलास्तीव्राः। शोफेत्यादि। अचलाचलेषु स्थिरास्थिरेषु सन्धिषु क्षतेषु, शोफातिवृद्धिस्तुमुला रुजश्चेति प्रत्यासत्त्या तेषु तेषु सन्धिष्वेवेति प्रत्येतव्यम्। पर्व्वस्विति पर्व्वशब्दस्येह सन्धिसन्निहितदेशे सन्धौ च तात्पर्य्यमिति ब्रूमः; सन्धिमात्रेषु क्षतेषु तत्र तत्र भेदशोफदर्शनात्। भेदस्त्वत्र विदारणवद्वेदनाविशेषः। सन्धिकर्म्मोपरतिर्यथाक्रमम्-उन्नमनविनमनादीनां, चालनापवर्त्तनादीनाञ्च कर्म्मणां विरतिः। उक्तान्येतानि सिरादिक्षतलिङ्गानि क्षतेषु तत्तत्सिरादिमर्म्मस्वतिदिशति यथास्व-

आत्मानमेवाथ जघन्यकारी
शस्त्रेण यो हन्ति हि कर्म्म कुर्व्वन् ।
तमात्मवानात्महनं कुवैद्यं
विवर्ज्जयेदायुरभीप्समानः ॥ २१ ॥
तिर्य्यक्प्रणिहिते शस्त्रे दोषाः पूर्व्वमुदाहृताः ।
तस्मात्परिहरन्दोषान् कुर्य्याच्छस्त्रनिपातनम् ॥ २२
मातरं पितरं पुत्रान् बान्धवानपि चातुरः ।
अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥
विसृजत्यात्मनात्मानं न चैनं परिशङ्कते ।
तस्मात्पुत्रवदेवैनं पालयेदातुरं भिषक् ॥ २३ ॥

---

म्मिति। यथास्वं येषां सिरादीनां यान्येतानि लिङ्गानि भवन्ति, तानि ताड़ितेषु तत्तत्सिरादिमर्म्मसु विभावयेयुरित्यर्थः। सम्प्रति सिरादिक्षत-वर्ज्जमांसक्षते लिङ्गविशेषानुपलम्भात् पृथक्त्वेन तन्मर्म्मक्षतलिङ्गान्यभिधत्ते स्पर्शमित्यादिना। स्पष्टम् ॥ १९।२० ॥

स्यादेतत् कथं नु खल्वातुरेणानभिसम्बन्धमप्यात्मगात्रच्छेदनमस्यानिष्ट-मापादयति, यदभिसन्धाय व्यापदधिकारे "गात्रच्छेदनमात्मनः" इत्युक्तं नैतत्त्वणमात्रेणाप्यवगच्छामस्तदिमदं विज्ञापयतु भगवानित्याह आत्मान-मित्यादि। आयुरभीप्समानो जिजीविषुः। यो हि प्रमादादात्मानमपि हन्तुमुत्सहते न च तेनातुरशरीरातिपातनं चित्रमित्ययमभिसन्धिः। शेषो-ऽक्षरार्थस्त्वतिरोहितः ॥ २१ ॥

मा भूत् स्मृतिवैकल्यवशात्तिर्य्यक्च्छेदस्यापि व्यापत्तिकरत्वे काचिद्-विप्रतिपत्तिरित्यथोपहरणीयोक्तं पुनः स्मारयन्नुपसंहरति तिर्य्यगित्यादिना।

धर्म्मार्थौ कीर्त्तिप्रीत्यर्थं सतां ग्रहणमुत्तमम् ।
प्राप्नुयात् स्वर्गवासञ्च हितमारभ्य कर्म्मणा ॥ २४ ॥
कर्म्मणा कश्चिदेकेन द्वाभ्यां कश्चित् त्रिभिस्तथा ।
विकारः साध्यते कश्चिच्चतुर्भिरपि कर्म्मभिः ॥ २५ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽष्टविधशस्त्रकर्म्मीयो नाम पञ्चविंशोऽध्यायः ।

---

सुगमम् । धर्म्मेत्यादि । कीर्त्तिर्यशः, प्रीतिस्तुष्टिः, अर्थश्चेह वस्तुजातमन्नाच्छादनादिः, एषां समाहारः कीर्त्तिप्रीत्यर्थम् । आदरापरपर्य्यायोऽयं ग्रहणशब्दः "ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु" इति मेदिनी । न च ग्रन्थिप्रभृतीनां केषाञ्चिद्व्याधीनां छेदाद्यनेकविषयत्वेनाभिधानमनुपपन्नमित्याह कर्म्मणेति । अतिरोहितार्थमेतत् ॥ २२—२५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थानेऽष्टविधशस्त्रकर्म्मीयो नाम पञ्चविंशोऽध्यायः ।

# षड्विंशोऽध्यायः ।



अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

शल खलु आशुगमने धातुस्तस्य शल्यमिति रूपम् ।
तद्द्विविधं शारीरमागन्तुकञ्च ॥ २ ॥

सर्व्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्य-

---

पूर्व्वाध्याये "नान्तर्लोहितशल्याश्च" इत्यादिना परमार्थतोऽन्तर्नि-
हितानां शल्यानां निर्हरणं कार्य्यमित्युपदिष्टम्, इदानीन्ताहरणसौकर्य्यार्थं
किंलक्षणानि तानीत्यावेदयन् प्रनष्टशल्यविज्ञानीयमधिकरोति अथात-
इत्यादिना । द्रष्टुमयोग्यानां शल्यानां विज्ञानं प्रनष्टशल्यविज्ञानम् ॥ १ ॥

संशयश्चात्र किं शल्यशब्देनेह शङ्कुर्नाम शल्यविशेषः परिगृह्यते, आहो-
स्वित् शरशलाकादय इति । शल्यशब्दो हि मुख्यया वृत्त्या शङ्कौ प्रवर्त्तते,
इतरत्र भक्त्येति प्रतीयते "वा पुंसि शल्यं शङ्कुर्ना" इत्यादि कोषप्रामाण्यात्,
"यत्किञ्चिदाबाधकरं तत्सर्व्वं शल्यसंज्ञितम्" इति परिभाषाविशेषाच्च, न
चानेकतरग्रहणं सुकरं भवति, मुख्ये हि सहसा बुद्धिरारोहति, विज्ञानञ्च
भाक्तानामेव शल्यानामतितरामभीप्सन्ति कुशलाः प्रायस्तेषामेवाहार्य्यत्वात्,
किन्तावत् प्राप्तम् ? इत्येवमाशंसूनपाचिकीर्षुः शल्यशब्दस्य योगरूढ़मर्थं
परिग्राहयन् प्रथमं तावद्धात्वर्थमनुसन्धत्ते शलेत्यादिना । शल्यमिति रूपं,
शलत्याशुगच्छति वेगेन अन्तःशरीरमनुप्रविशतीति व्युत्पत्त्या "शलेर्यत्"
इत्यौणादिकेन यतेति तात्पर्य्यम् ॥ २ ॥

नन्वेतच्चेत्तर्हि इदं तावद्भवान् प्रष्टव्यः, किमाशुनुप्रवेशित्वान्नित्यं
शरीरानुपातिनामप्यन्तःश्वासान्नपानादीनां शल्यत्वं ब्रवीति ? नेत्याह
सर्व्वेति । सर्व्वं शरीराबाधकरं सर्व्वशरीराबाधकरम् । अत्र शरीरग्रहणे-
नैव मनोऽपि गृहीतं भवति "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति गौतमसूत्र-

शास्त्रम् । तत्र शारीरं रोमनखादि धातवोऽन्नमला दोषाश्च दुष्टाः । आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा-दुःखमुत्पादयन्ति । अधिकारो हि लोह-वेणु-वृक्ष-तृण-शृङ्गास्थिमयेषु, तत्रापि विशेषतो लोहमयेष्वेव विशसनार्थो-

---

त्सरणात् । अयमभिसन्धिः, अस्मिन् शास्त्रे यत्किञ्चिद्वस्तुजातमाश्वनुप्रवेशि सत् शरीरं बाधते तत्सर्वं शल्यमुच्यते, नित्यं शरीरानुपालीन्यन्तःश्वासादीनि तु आश्वनुप्रवेशीन्यपि नैव लवमात्रेणापि शरीराबाधकराणि भवन्तीति न तेषां शल्यत्वम्. एतेन शल्यशब्दस्यावयवशक्त्या समुदायशक्त्या चार्थावबोधकत्वेनाभ्युपगमात् योगरूढ़त्वं सुष्ठु सूचितं भवतीत्यनुसन्धेयम् । न चैतदश्रद्धेयमित्याह तदिति । तत् शल्यमिहामुष्यां संहितायाम् उपदिश्यते प्रतीकारार्थमिति शेषः । इति हेतोरिदं तन्त्रं शल्यशास्त्रमुच्यत इत्यर्थः, अत इति प्रथमान्तात् सार्व्वविभक्तिकस्तसिल्, उक्तञ्च "यत्किञ्चिदाबाधकरं तत्सर्वं शल्यसंज्ञितम् । व्यातान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा" इति । अयमाशयः, यदि हि शरीरानुपालिनामन्तःश्वासादीनां शल्यत्वमिहाभिप्रेतमभविष्यत्तर्हि शल्यप्रतीकारार्थत्वेन तन्त्रस्यास्य शल्यत्वेनाभिधानं नाकरिष्यदिति । न चैवं स्थिते प्राक्तन्त्रैकदेशस्य शल्यतन्त्रत्वेन विभजनमसाम्प्रतमिति वाच्यम् तस्य तन्त्रविशेषे तात्पर्य्यात्, यथा आलेपविशेषस्यालेपत्वेन विभजनं तद्वत् । स्यादेतत् शल्येषु किं नाम शारीरं, किं वागन्तुकमित्याह तत्रेति । अत्रादिग्रहणाद्दन्तादीनामादेशः । ओदनापरपर्य्यायोऽप्यन्नशब्द इहोपचाराच्चतुर्व्विध एवाहारे प्रवर्त्तते इति गम्यते, फलं प्रत्यविशेषात् । दुष्टा दोषस्वभावा अपकारिण इति यावत्, पदमिदं वचनव्यत्यासेन यथायोगं सर्व्वत्रान्वीयते । भावास्तृणकाष्ठादयः, शोकमोहादयश्च पदार्थाः । न खल्वतिबहुत्वात् सर्व्वाणि शल्यानीह व्याकर्त्तुं शक्यन्ते, कथञ्चिद्व्याकृतान्यपि दुरधिगमानि भवन्त्यायुर्व्वेदवाक्यनिचयप्रतिपाद्यत्वात्तदिदानीं प्रकृतत्वाद्व्रणहेतुत्वेन यानि विशिष्यन्ते तान्येवाधिकर्त्तुमिदमुच्यते अधीति । हिशब्दो भेदप्रत्ययार्थः । लोहशब्दत्रितयञ्च

पपन्नत्वाल्लोहस्य लोहानामपि दुर्व्वारत्वादणुमुखत्वाद्दूर-प्रयोजनकरत्वाच्च शर एवाधिकृतः ॥ ३ ॥

स द्विविधः कर्णवान् श्लक्ष्णश्च, प्रायेण विविधवृक्षपत्रपुष्प-फलतुल्याकृतयो व्याख्यातो व्यालमृगपक्षिवक्त्रसदृशाश्च ॥ ४ ॥

सर्व्वशल्यानान्तु महतामणूनां वा पञ्चविधो गतिविशेष-ऊर्द्ध्वमधोऽर्व्वाचीनस्तिर्य्यगृजुरिति । तानि यदा वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थि-तद्विवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु तत्र शल्यलक्षण-मुच्यमानमुपधारय । तत्तु द्विविधं सामान्यं वैशेषिकञ्च । श्यावं पिड़काचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्रा-

---

धातुसामान्यवचनम् । लोहस्येति षष्ठीनिर्द्दिष्टो लोहशब्दस्त्वायसपरः । लोहादिमयेषु लोहादिविकारेष्वित्यर्थो मयटो विकारार्थत्वात् । पुनर्वि-शिनष्टि तत्रापीति । कुतः पुनर्लोहमयेष्वेवायमधिकार आह विशसनेति । विशसनार्थोपपन्नत्वात् हिंसार्थोपयोगित्वात् । लोहस्यायसः, लोहानां सुवर्णरजतादीनामपि दुर्व्वारत्वादप्रतिबन्धेनाभ्यन्तःशरीरप्रवेशित्वात् । दूर-प्रयोजनकरत्वाद्दूरादपि कार्य्यसम्पादकत्वात्, अतएव लोहमयेष्वेव वि-शेषतोऽयमधिकार इति भावः ॥ ३ ॥

स इत्यादि । कर्णवानिवेति कर्णी, वड़िशवत् कण्टकाचितमुख इति यावत् । श्लक्ष्णोऽकर्णश्च द्विविधः स शरः प्रायेण विविधवृक्षपत्रादितुल्या-कृतयो व्यालादिवक्त्रसदृशाश्च व्याख्यात इति समन्वयः "एको वृक्षः पञ्च नौका भवति" इतिवत् ॥ ४ ॥

सर्व्वेत्यादि । ऊर्द्ध्वापरपर्य्यायोऽयमूर्द्ध्वंशब्दोऽव्ययम् स्वलक्षणादप्रति-क्रान्तो गतिविशेषस्त्वत्राऽर्व्वाचीन उच्यते, "अर्व्वाचीनो विपर्य्यस्ते" इति धरण्यनुशासनात् । शेषास्तु निगदव्याख्याताः । तानीति शल्यप्रभवसर्व-

विशं बुद्बुदवदुन्नतं मृदुमांसञ्च व्रणं जानीयात् सशल्योऽयमिति । सामान्यलक्षणमेतदुक्तम् । वैशेषिकन्तु त्वग्गते विवर्णः शोफो भवत्यायतः कठिनश्च । मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीड़नासहिष्णुता चोषपाकौ च । पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्ज्जम् । शिरागते शिराध्मानं शिराशूलं शिराशोफश्च । स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च । स्रोतोगते स्रोतसां स्वकर्म्मगुणहानिः । धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्द्दः पिपासा हृल्लासश्च । अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च । अस्थिविवरगतेऽस्थिपूर्णतास्थिक्लेदः संहर्षो बलवांश्च । सन्धिगते अस्थिवच्चेष्टोपरमश्च । कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनञ्च व्रणमुखात् । मर्म्मगते मर्म्मविद्धवच्चेष्टते । सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ ५ ॥

---

कम् । प्रतीघातादस्थ्यादिप्रतिबन्धात् । चोषः समीपस्थेनेवाग्निना दाहः । स्नायुजालोत्क्षेपणं स्नायुजालानामुन्नमनम् । संरम्भः सहसाऽत्यर्थं शोफरागप्रादुर्भावः । स्रोतांसि धमनीव्याकरणे वक्ष्यन्ते । अस्थिपूर्णता क्लेदशोणितप्रपूरितास्थिविवरता । सन्धीत्यादि । अस्थिवदित्यस्थिगते यानि लिङ्गानि तानीत्यर्थः । चेष्टोपरमः प्रसाराकुञ्चनादीनां विरतिः । आटोपः सशब्दस्य वायोः क्षोभः । मर्म्मसु विद्ध इवेति मर्म्मविद्धवत् । चेष्टते ईहते । चेष्टाप्रकाराश्च ते परमतो निवेदयिष्यन्ते मर्म्माधिकारे, परिशिष्टं निगदव्याख्यातम् ॥ ५ ॥

महान्ति स्वल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति, विशेषतः कण्ठस्रोतः-शिरा-त्वक्-पेश्यस्थिविवरेषु दोषप्रकोपव्यायामाभिघातेभ्यः प्रचलितानि पुनर्बाधन्ते ॥ ६ ॥

तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माष-यव-गोधूम-गोमय-मृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्। स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाशु विसरति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्यं विजानीयात्। मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्। कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भो वेदना वा भवति तत्र च शल्यं विजानीयात्।

---

किन्नु खलु सर्वाण्येव शल्यान्येवमाबाधकराणि भवन्तीत्यत आह महान्तीत्यादि। अनुलोमसन्निविष्टानि सिरादेर्नातितरामुपघातित्वेन स्वल्पाबाधं सन्निविष्टानि महान्ति स्वल्पानि वा शल्यानि रोहन्ति रूढ़-व्रणानि भवन्ति वस्तुशक्तेरचिन्त्यत्वादिति भावः। न चैवमपि तान्युपेक्षणीयानि भवन्तीत्याह विशेषत इत्यादि। तानि पुनः शल्यानि विशेषतः कण्ठादिषु दोषप्रकोपादितः प्रचलितानि सन्ति बाधन्ते, अतोऽवश्यं तान्यप्याहरणार्थं विजानीयानीत्ययमाशयः ॥ ६ ॥

स्यादेतत् कथं नु पुनस्तानि जानीम इत्याह तत्रेत्यादि। विसरति द्रवीभावाद्विसर्पति, अविरुद्धैरनुगुणैः, प्रकृत्यादिविवेकेन, प्रमाणवीर्य्यसमं कृत्वोपयुक्तैरिति यावत्। न च सागरं गन्तुकामस्य हिमवद्गमनमिव व्यर्थोऽयमारम्भ इत्याह कर्शितस्येति। कर्शितस्य स्नेहस्वेदादिभिस्तथा कृशतामापादितस्यातुरस्य यत्र संरम्भो वेदना वा भवति तत्र शिथिलीभूतं कार्शनेन शरीरशैथिल्यात् श्लथतामापन्नम् अनवबद्धमिव क्षुभ्यमाणम् आकु-

कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवं परीक्षेत । शिरा-धमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायाद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात् । अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात् । सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसारणाकुञ्चन-बन्धन-पीडनैर्भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यमिति जानीयात् । मर्म्मप्रनष्टे त्वनन्य-भावान्मर्म्मणामुक्तं परीक्षणं भवति ॥ ७ ॥

सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठ-पर्व्वत-द्रुमा-रोहण-धनुर्व्यायाम-द्रुतयान-नियुद्धाध्वगमन-लङ्घन-प्रतरण-प्लवन-व्यायामैर्जृम्भोद्गार-कास-क्षवथु-ष्ठीवन-हसन-प्राणा-यामैर्वात-मूत्र-पुरीष-शुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात् ॥ ८ ॥

भवन्ति चात्र ।

यस्मिंस्तोदादयो देशे सुप्तता गुरुतापि च ।
घट्टिते बहुशो यत्र स्रूयते तुद्यतेऽपि च ॥

---

ञ्चनप्रसारणादिभिः सन्ध्यमानं शल्यं विजानीयादिति योजना, अतोऽवश्यं तथोपपादयेदिति भावः । मर्म्मणां सिरादिपञ्चात्मकत्वात्तत्र प्रनष्टेषु शल्येषु सिरादिप्रनष्टशल्यलक्षणमतिदिशन्नाह मर्म्मेति । सामान्येत्यादि । नियुद्धं बाहुयुद्धम् । अतिरोहितार्थमन्यत् ॥ ७।८ ॥

आतुरस्यापि यं देशमभीक्ष्णं परिरक्षति ।
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्द्दिशेत् ॥ ॥
अल्पबाधलघूनञ्च नीरुजं निरुपद्रवम् ।
प्रसन्नं मृदुपर्य्यन्तं निराघट्टमनुन्नतम् ॥
एवम्बा सर्व्वतो दृष्ट्वा यथामार्गं चिकित्सकः ।
प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्द्दिशेत् ॥ १० ॥
अस्थ्यात्मकं भज्यते तु शल्यमन्तश्च शीर्य्यते ।
प्रायो निर्भुज्यते शार्ङ्गमायसञ्चेति निश्चयः ॥ ११ ॥
वार्क्ष्यवैणवताणीनि निर्द्दियन्ते तु नो यदि ।
पचन्ति रक्तं मांसञ्च क्षिप्रमेतानि देहिनाम् ॥ १२ ॥

---

यस्मिन्नित्यादि । घट्टिते चालिते सतीत्यर्थः । संवाह्यमानः स्थानात् स्थानान्तरं नीयमान आतुरो यं देशमभीक्ष्णं निरन्तरं बहुशो बाहुल्येन परिरक्षति, तत्र शल्यं विनिर्द्दिशेदित्यन्वयः ॥ ८—१० ॥

सम्प्रति कथमप्यनिर्हृतानां शल्यानां प्रकृतिविशेषेण कालान्तरभाविनमवस्थाविशेषं कर्म्मविशेषञ्चोपदिदिक्षति अस्थीत्यादि । अस्थीन्येवात्मा स्वरूपं यस्येत्यस्यात्मकम् अस्थिदन्तशल्यमित्यर्थः । भज्यत इति कर्म्मकर्त्तरि लकारः सत्येव काले भङ्क्तरि सौकर्य्यमपेक्ष्य द्रष्टव्यः, यथा लूयते केदारः स्वयमेवेति, सत्येव देवदत्ते लवितरि ; यद्वा कर्म्मण्येव लकारोऽर्थाक्षिप्तं तमेव कर्त्तारमपेक्ष्य द्रष्टव्यः, यथा गम्यते ग्राम इत्येवमुभयथैव कर्त्तृत्वेनोपलब्धं कालं पुनः सुचिरत्वेन विशेषयन्त्याचार्य्याः, अस्थ्नां शरीरसारत्वेनाशुविनाशित्वात्, वक्ष्यति हि "तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् । अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम्" इति, तथाच अन्तरन्तःशरीरं भज्यते खण्डतामापद्यते, शीर्य्यते कणशः स्फुटति, निर्भुज्यते वक्रीभवति, चिरेणेत्यर्थः ॥ ११—१२ ॥

कानकं राजतं ताम्रं रैतिकं त्रपु सीसकम् ।
चिरस्थानाद्विलीयन्ते पित्ततेज:प्रतापनात् ॥
स्वभावशीता मृदवो ये चान्येऽप्येवंविधा मताः ।
द्रवीभूता: शरीरेऽस्मिन्नेकत्वं यान्ति धातुभिः ॥ १३ ॥
विषाणदन्तकेशास्थि-वेणुदारूपलानि तु ।
शल्यानि न विशीर्य्यन्ते शरीरे मृन्मयानि च ॥ १४ ॥
द्विविधं पञ्चगतिकं त्वगादिव्रणवस्तुषु ।
यो वेत्त्यधिष्ठितं शल्यं स राज्ञः कर्त्तुमर्हति ॥ १५ ॥

**इति सुश्रुतसंहितायां सूत्रस्थाने प्रनष्टशल्यविज्ञानीयो नाम षड्विंशोऽध्यायः ।**

---

कानकमित्यादि । रीतिः पित्तलं तस्या इदमिति रैतिकं, त्रपु वङ्गं, चिरस्थानान्निर्विकारित्वेन चिरावस्थानादित्यर्थः । न विशीर्य्यन्ते विशेषेण शीर्णतया न विनाशमापद्यन्ते इत्येवार्थः, "अस्थ्यात्मकं भज्यते तु, शल्यमन्तश्च शीर्य्यते" इति प्रागुक्तेः ॥ १३—१५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने प्रनष्टशल्यविज्ञानीयो नाम षड्विंशोऽध्यायः ।

# सप्तविंशोऽध्यायः ।

अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

शल्यं द्विविधमवबद्धमनवबद्धञ्च । तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश हेतून् वक्ष्यामः । तद्यथा— स्वभावः पाचनं भेदनं दारणं पीडनं प्रमार्ज्जनं निर्ध्मापनं वमनं विरेचनं प्रक्षालनं प्रतिमर्शः प्रवाहणमाचूषणमयस्कान्तो हर्षश्चेति ॥ २ ॥

---

पूर्व्वाध्याये प्रनष्टशल्यानां विज्ञानान्युक्तानि, विज्ञाय च तानि कथमपनेयानि भवन्तीत्यभिसन्धायेदानीं शल्यापनयनीयं नामाधिकरोति तथात इत्यादिना । शल्यनिर्हरणप्रकारमधिकृत्य कृतोऽध्यायः शल्यापनयनीयः ॥ १ ॥

नहि साधनमन्तरेण भिषजां सहस्रमपि किञ्चन शल्यमपनेतुमीशते साधनानि च तानि शल्यानां सन्निवेशविशेषेणातितरां भिद्यन्त इत्यतः शल्यापनयनप्रकारं व्याचिख्यासुः प्रथमं तावत् शल्यं द्वेधा विभजते शल्यमिति । अवबद्धमस्थ्यादावतीवासक्तं तद्विपरीतमनवबद्धम् । अत्रानवबद्धं नाम शल्यं सुखमपनीयते, साधनानि चाल्पीयांस्यपेक्षन्त एकान्तेनेत्यप्रयासोपदेश्यत्वात् सूचीकटाहन्यायेन क्रमं हित्वा तदपनयनोपायानुपदिशन्नाह तत्रेति । स्वभावोऽत्र संसिद्धोऽश्रुादिर्भाव इति निश्चीयते, अनन्तरं तेषामेवोपादानात्, निर्ध्मापनशब्देन च वेगविशेषं ग्राहयन्त्याचार्य्याः वक्ष्यति हि "श्वसनोत्कासनप्रधमनैर्निर्धमेत्" इति । प्रतिमर्शोऽङ्गुल्यादिनावघर्षणम्, प्रवाहनं कुन्थनम्, अयस्कान्तो लौहाकर्षको मणिभेदः । हेतुः पर्य्यायः साधनमित्यनर्थान्तरम् ॥ २ ॥

तत्राश्रु-क्षवथूद्गार-कास-मूत्र-पुरीषानिलैः स्वभावबल-प्रवृत्तैर्नयनादिभ्यः पतति। मांसावगाढ़ं शल्यमभिदह्यमानं पाचयित्वा प्रकोपात् तस्य पूयशोणितवेगाद्गौरवाद्वा पतति। पक्वमभिद्यमानं भेदयेद्दारयेद्वा भिन्नमनिरस्यमानं पीड़नीयैः पीड़येत् पाणिभिर्वा। अणून्यक्षशल्यानि परिषेचनाध्मापनैर्वालवस्त्रपाणिभिः प्रमार्ज्जयेत्। आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्हरेत्। अन्नशल्यानि वमनाङ्गुलिप्रतिमर्शप्रभृतिभिः, विरेचनैः पक्वाशयगतानि। व्रणदोषाश्रयगतानि प्रक्षालनैः। वातमूत्रपुरीषगर्भसङ्गेषु

---

स्यादेतत् किन्तु खलु शल्यं केन हेतुनापनेयमित्यपेक्षायामाह तत्रेत्यादि। तत्र स्वभावादिषु मध्ये स्वभावबलप्रवृत्तैर्विश्वजनीनानिर्व्वचनीयशक्त्याविर्भूतैरश्र्वादिभिर्भावैर्नयनादिभ्यः पतति केशादिशल्यमिति शेषः। मांसेत्यादि। अभिरत्र भागार्थः "यदत्र ममाभि ष्यात् तद्दीयताम्" इतिवत्, "अभिरभागे" इति पाणिनिसूत्रञ्च। तदयमर्थः, मांसावगाढ़ं मांसप्रविष्टं शल्यं काष्ठकादि, दह्यमानं वेदनादिभिः पीड्यमानम् अभि भागं, पाचयित्वा स्वोष्मसहायेन वैद्यप्रयुक्तेन क्षारादिनेति शेषः, प्रकोपात् आत्मनः पाकजनितसन्निवेशशैथिल्यात् पूयादिवेगाद्गौरवाद्वा पततीति पाचनं हेतुः। एवमुत्तरत्रापि द्रष्टव्यम्। पीड़नीयैर्मिश्रके वक्ष्यमाणैः पीड़नद्रव्यैः। अक्षशल्यानि इन्द्रियगतशल्यानि, आध्मापनन्त्वत्र वायोर्निरोधेनोदरपरिपूरणम्, एतत्तु कर्णस्रोतःप्रविष्टानां पिपीलिकादीनामाहरणार्थमुपदिश्यते, शेषा हेतवस्त्वतिरोहितविषयाः। लवमात्रेण कण्ठादावासक्तानि श्लेष्मणाऽरूषितान्यन्नादीनि ताम्बूलादीनि वा आहारशेषश्लेष्महीनाणुशल्यानि। अत्र श्लेष्महीनेति विशेषणं तत्सम्पृक्तानां पैच्छिल्येनानालम्बित्वादित्यनुसन्धेयम्। तानि च शल्यानि श्वसनादिभिर्व्वेगविशेषैर्निर्भ्रमेदपसारयेदित्यर्थः। प्रधमनञ्च

प्रवाहणमुक्तम्। मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषणा-स्याख्येन विषाणैर्वा। अनुलोममनवबद्धमकर्णमनल्पव्रणा-सुखमयस्कान्तेन। हृदयवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ३ ॥

सर्व्वशल्यानान्तु महतामणूनां वा द्वावेवाहरणहेतू भवतः प्रतिलोमोऽनुलोमश्च। तत्र प्रतिलोममर्व्वाचीनमानयेदनु-लोमं पराचीनम्। उत्तुण्डितं छित्त्वा निर्घातयेच्छेदनीय-

---

नस्त्रभेद इति निवेदयिष्यते। मारुतेत्यादि। मारुतोऽत्र पाणिमन्थेन दारिते अश्मनि निरुद्धो वायुरुदकञ्च कर्णस्रोतोगतमिति वातव्याधि-चिकित्सितं कर्णरोगप्रतिषेधञ्चाभिसमीक्ष्य प्रत्येतव्यम्। शृङ्गापरपर्य्यायोऽयं विषाणशब्दो यथायोगं नाडीयन्त्रमुपलक्षयतीति गम्यते, यया कयाचि-न्नाड्या चूषणोपपत्तेः। अन्वित्यादि। अनुलोमम्‌ऋजुस्थितम् अकर्णमनु-त्तुण्डितमनुन्नतकण्टकाचितमुखमित्येतत्, अनल्पव्रणमुखमनवबद्धं शल्यमय-स्कान्तेन निर्हरेदिति पूर्व्वेणान्वयः। अर्थमिममनुवदता वाग्भटेनाप्युक्तम् "अयस्कान्तेन निष्कर्षेद्विवृतास्यमृजुस्थितम्" इति। शोकशल्यं हर्षेणेति मानसशल्यापनयनं प्रति निदर्शनमात्रमेतावदिति गम्यते, कामादिशल्यानां भयादिना, भयादिशल्यानाञ्च कामादिना निर्हर्त्तव्यत्वेनोपदेशात्। परि-शिष्टं निगदव्याख्यातम् ॥ ३ ॥

पारिशेष्यादवबद्धशल्योद्धरणहेतूनुपदिशन्नाह सर्व्वेत्यादि। सर्व्वशब्देनेह शक्तिकुन्तादीनां निखिलानामासङ्गिनां शल्यानामादेशः क्रियते, यथा शल्य-मनुप्रविशति तद्विपर्य्यासेनाकर्षणं प्रतिलोम उच्यते, प्रतिलोमविपरीतस्त्वनु-लोमः। अविभक्तमर्थमिमं विभज्य सूत्रतः शल्यापनयनक्रममुपदिदि-क्षति तत्रेत्यादिना। अर्व्वन्तमवरमञ्चति, परा वहुलञ्चाञ्चतीत्यर्व्वाचीनं पराचीनं, "विभाषाञ्चेरदिक्स्त्रियाम्" इति स्वार्थे खः। "निकृष्टप्रति-

मुखम्। छेदनीयमुखान्यपि कुक्षि-वक्षः-कक्षा-वङ्क्षण-पर्शुकान्तरपतितानि च हस्तशक्यं यथामार्गं हस्तेनैवापहर्त्तुं प्रयतेत। हस्तेनापहर्त्तुमशक्यं विशस्य शस्त्रेण वा यन्त्रेणापहरेत्॥ ४॥

---

कष्टार्व्वरेफयाप्यावमाऽधमाः" तथा "परा विमोक्ष-प्राधान्य-प्रातिलोम्येषु" इत्यमरमेदिन्यौ। तदयमर्थः, तत्र शल्येषु मध्ये यदर्व्वाचीनमनतिक्रान्तपर्य्यन्तं तत्प्रतिलोममानयेत्, यच्च पुनः शल्यं पराचीनमतिक्रान्तपर्य्यन्तं तदनुलोममानयेत्, विपर्य्यये हि व्रणोऽभिवर्द्धते, पीड्यते वा शल्यसंघर्षेणेत्ययमभिसन्धिः। न ह्यर्व्वाचीनं नामोत्तुण्डितं क्वचिदपि प्रतिलोममाहर्त्तुं युज्यते, नापि चातिदीर्घं तदनुलोमं छेदानुबन्धेन सङ्घर्षप्रकर्षेण चाशङ्कितत्वात्, तदिदमुच्यते उत्तुण्डितमिति। उत्तुण्डितम् उन्नतकण्टकाचितमुखं छिद्यते अनेनेति कृत्यल्युटोर्व्वाहुल्यात् छेदनीयं धारा मुखे यस्येति छेदनीयमुखं तात्पर्य्यादर्व्वाचीनं शल्यं छित्त्वा निर्घातयेदानुलोम्येनाहरणार्थं पराचीनं कर्त्तुमिति शेषः। अत्र छित्त्वेति शल्यदैर्घ्यपरिणाहसङ्घर्षकृतोपतापशङ्काजिहासार्थमिदं छेदनं तावत्यंशे कर्त्तव्यं यावत्यंशे छिन्ने सुखं शल्यं पराचीनं भवितुमर्हतीति सुधियो मन्यन्ते। न च विधिरयं सर्व्वत्र साम्प्रतं भवतीत्यत आह छेदनीयेत्यादि। अपिशब्दः पूर्व्वपक्षव्याहत्त्यर्थः। हस्तशक्यमिति क्रियाविशेषणम्। हस्तशक्यं कुक्ष्याद्यन्तरपतितानि कुक्ष्यादिमध्यपतितानि कुक्ष्यादिष्वर्व्वाचीनानीति यावत्, चकारादुत्तुण्डितानि शल्यानि छेदनीयमुखानि धारामुखान्यपि, यथामार्गं प्रतिलोमं हस्तेनैवापहर्त्तुं यतेतेति समन्वयः। पर्शुका पार्श्वास्थि। पुनर्व्विशिनष्टि हस्तेनेति। तेषु हस्तेनापहर्त्तुमशक्यं यत् तद्विशस्य तत्रोपयोगि यन्त्रं शस्त्रञ्च निरूप्य यन्त्रेण शस्त्रेण वाशब्दस्यानुक्तसमुच्चयार्थत्वादुभाभ्यां वाऽपहरेत्, न त्वेव पूर्व्वोक्तेन विधानेन निर्घातयेदिति तात्पर्य्यम्। स्यादेतत् कथं नु पुनस्तत्र तत्र पतितान्यनुत्तुण्डितशल्यानि छेदनीयमुखान्यच्छेदनीयमुखानि चापनयाम इत्याह

भवति चात्र।

अनुत्तुण्डितशल्यानि छेदनीयमुखानि च।
अनिर्घात्यानि जानीयाद्भयस्छेदानुबन्धतः॥ ५॥
शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत्।
संरक्षेदस्य मर्म्माणि मुहुराश्वासयेच्च तम्॥ ६॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्नि-घृतप्रभृतिभिः संस्वेद्यावदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाचारिक-मुपदिशेत्। सिरास्नायुविलग्नं शलाकादिभिर्विसुच्यापनयेत्।

---

अनित्यादि। चकारेणाच्छेदनीयमुखानां समुच्चयः क्रियते, अनुकृष्यते च क्षुद्रीत्यादिपदम्। भूयोऽत्यर्थं च्छेदानुबन्धतच्छेदानुवृत्तिभयादनिर्घात्यानि अनुलोमसाहरणार्थं पराचीनानि कर्त्तुं न निर्घातनीयानि जानीयात्, जानीयाच्च हस्तशक्यं कुक्ष्यादिपतितानि हस्तेन, हस्तेनापहर्त्तुमशक्यानि च शस्त्रेण यन्त्रेण वापनेयानीति भावः। वाग्भटेनाप्ययमेवार्थो निबद्धो, यदुक्तम् "शल्यं न निर्घात्यमुरःकक्षावङ्क्षणपार्श्वगम्। प्रतिलोममनु-त्तुण्डं छेद्यं पृथुमुखञ्च यत्" इति, अत्र शल्यशब्द उत्तुण्डितानुत्तुण्डितशल्य-परिग्रहार्थः, छेद्यमित्यपि क्षत्यत्रुटीर्वाहुल्यादेव छेद्यं छेदनीयमुखं, पृथु-मुखमच्छेदनीयमुखम्। नातो व्याख्यानमिदमनुपपन्नमित्यवधेयम्॥४—६॥

पश्चात्कर्म्माण्युपदिदिक्षति तत इत्यादिना। स्वेदार्हं स्वेद्यत्वेन वक्ष्यमाणं, अवदह्य विदह्येऽपि यथायोगमग्न्यादिभिरेव, अत्र विशेषयति भोजः "अग्निक्षत्या व्रणा ये तु तेष्वग्निमवचारयेत्। स्वेदयेत् शक्तुपिण्डीभिः स्वेदक्षत्यान् समन्ततः। तर्पयेत् तर्पणीयन्तु सुखोष्णेन तु सर्पिषा" इति। न हि सूत्रत्वेनोपदिष्टोऽयं सर्व्वभिषजां प्रतिपत्तिसौकर्य्याय प्रभवतीति निदर्शनार्थं कांश्चिदपनयनप्रकारान् प्रपञ्चयति सिरेत्यादिना। गृहीतं

स्वयमेव ग्रस्तवाराङ्गं समवपीड्य स्वयमेव दुर्बलवाराङ्गं कुशादिभिर्बद्ध्वा हृदयमभितो वर्त्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गम् । दुरपहरमन्यतोऽपवाध्यमानं पाटयित्वोद्धरेत् । अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पादाभ्यां यन्त्रेणापहरेत् । अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवाराङ्गं प्रविभोज्य धनुर्गुणैर्बद्ध्वैकतश्चास्य पञ्चाङ्ग्यासुपसंयतस्याश्ववल्गाकविके वा बध्नीयादथैनं कशया ताड़येद्यथोन्नमयन् शिरो वेगेन शल्य-

---

हस्तेन वारयत्याहणोति यस्मिन्नङ्गे तद्वाराङ्गं ग्रहणयोग्यस्थानं, ग्रस्तं वाराङ्गं येनेति ग्रस्तवाराङ्गं स्वयमेव समवपीड्य तदुन्नमनार्थं प्रपीड्य, दुर्बलवाराङ्गं क्षुद्रत्वादिनाग्राह्यत्वेन निहीनवाराङ्गञ्च शल्यं कुशादिभिर्बद्ध्वा यथामार्गमपहरेदिति परेणान्वयः । हृदयमभितो हृदयसमीपे, शीतलजलादिभिरिति मूर्च्छाप्रतिबन्धार्थम् । अस्थीत्यादि । अस्थि विद्धं येनेत्यस्थिविदष्टम् अस्थिविवरप्रविष्टम् अस्थिविदष्टं वा, शल्यमित्यनुषज्यते । यन्त्रेणापहरेत् प्रतिलोममपनयेदित्यर्थः । कथमित्याह अवगृह्येति । अवगृह्य पादाभ्यामिति शल्यं मध्ये कृत्वा पादाभ्यां प्रतिवेगेनातुरं प्रपीड्येत्यर्थः । एवमशक्यम् एवं निर्हर्तुमयोग्यञ्चेत्तर्हि बलवद्भिः सुपरिगृहीतस्य, "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः । एकत्र मिलितञ्चैतत् पञ्चाङ्गमिति संज्ञितम्" इति राजनिर्घण्टानुशासनात् पञ्चानां त्वगादीनामङ्गानां समाहारः पञ्चाङ्गी नाम सम्पन्नत्वगादिको वृक्षस्तस्यासुपसंयतस्य यथापद्धस्य वा अस्यातुरस्य, शल्यवाराङ्गं शल्यस्य ग्रहणावकाशं यन्त्रेण ग्राहयित्वा प्रविभोज्य बन्धनसौकर्य्यार्थं कर्म्मारैर्वक्रीकारयित्वा एकत एकांशावच्छिन्नैर्धनुर्गुणैर्धनुर्गुणानामेकप्रान्तेनेति यावत् बद्ध्वा, चकारादेकतश्च धनुर्गुणैस्तात्पर्य्यात् धनुर्गुणानामपरप्रान्तेन च अश्ववल्गाकविके अश्ववल्गाखलिने वा प्रग्रहणरज्जुयोजनार्थमश्वमुखाभ्य-

मुद्धरति। दृढ़ां वा वृक्षशाखामवनम्य तस्यां पूर्व्ववद्बद्ध्वोद्धरेत् ॥ ७ ॥

अदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव। यन्त्रेण विस्टदितकर्णानि कर्णवन्त्य-

---

न्तरप्रणिहितलौहमयवन्तसंलग्ने हि वलये एव बध्नीयादिति वाशब्दसमन्वयान्निष्कर्षः, एका हि वल्ली कविका न सम्यक् कार्य्यकरी भवतीत्यवधारणार्थोऽयं वाशब्द इति प्रतीयते। अथ बन्धनानन्तरं एनमश्वं तथा ताड़येत् यथा वेगेन शिर उन्नमयन् शल्यमुद्धरतीत्यन्वयः। अत्र एनमित्येतदा उपसर्जनीभूतस्याप्यश्वस्य परामर्शो बुद्ध्या समाकृष्टत्वात्। पञ्चाङ्गीमिति पञ्चाङ्गीशब्देन चेह वृक्षस्योपदेशो वेगसहत्वाज्जातसारत्वेनैनं ग्राहयितुमिति निश्चीयते, जात एव हि सारे पुष्पफलागमात् पञ्चान्यङ्गानि पूर्य्यन्ते, अतः कालप्रभावपाकजातपुष्पादेरपि वृक्षस्य तद्योग्यतायां पञ्चाङ्गीत्वेनाध्यवसायो नानुपपन्नः। वाग्भटस्त्वत्र "अस्थिदष्टे नरं पद्भ्यां पीड़यित्वा विनिर्हरेत्। इत्यशक्ते सुबलिभिः सुगृहीतस्य किङ्करैः॥ तथाप्यशक्ये वाराङ्गं वक्रीकृत्य धनुर्ज्यया। सुबद्धं वल्गाकटके बध्नीयात् सुसमाहितः" इत्याह तत्तु चिन्त्यमेव, स्वयं शल्यापहरणे बलवद्ग्रहणमपेक्ष्य पादप्रपीड़न एव प्रकर्षेण बलस्याधीयमानत्वेनोपलम्भात् "इत्यशक्ये सुबलिभिः" इत्यनुपपत्तेः। पक्षान्तरमाह दृढ़ामिति। अतिरोहितार्थमेतत् ॥ ७ ॥

किन्तु खलु "उत्तुण्डितं छित्त्वा निर्घातयेत् छेदनीयमुखम्" इति धारणादनुलोमेनाहर्त्तुमतिच्छेददोषमविगणय्य मनाग्विद्धमप्युत्तुण्डितं छित्त्वा निर्घात्यमित्याह अदेशेति। नञोऽत्रेषदर्थत्वादणीयसि मांसादौ विद्धमुत्तुण्डितमुन्नतकर्णिकं शल्यमदेशोत्तुण्डितं, शाकपार्थिवादिषु द्रष्टव्यम्। अष्ठीलादीनां प्रहारेण विचाल्य यथामार्गं प्रतिलोममेवोद्धरेदिति पूर्व्वेणान्वयः, न त्वनुलोमेनाहरणार्थं निर्घात्यमिति निगूढ़ो भावः। न चैतावता सर्व्वमेवानल्पविद्धमुत्तुण्डितं निर्घात्यमिति प्रतीयादित्यतो विशिनष्टि यन्त्रेणेति।

नाबाधकरदेशोत्तुण्डितानि पुरस्तादेव । जातुषे कण्ठासक्ते कण्ठे नाड़ीं प्रवेश्याग्नितप्ताञ्च शलाकां तथावगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतमुद्धरेत् । अजातुषं जतुमधूच्छिष्टलिप्तया शलाकया पूर्व्वकल्पेनेत्येके ॥ ८ ॥

अस्थिशल्यमन्यद्वा तिर्य्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत् ॥ मृदुना वा दन्तधावनकूर्च्चकेनापहरेत् प्रगुदेद्वान्तः । क्षत-

---

मर्म्मादिरहितत्वेन यन्त्रोपयोगार्थं शस्त्रकर्म्मार्हे देशे उन्नततुण्डत्वेन परिलक्षितानि शल्यान्यनाबाधकरदेशोत्तुण्डितानि, कर्णवन्ति कर्णीनि शल्यानि, यन्त्रेण विमृदितकर्णानि कृत्वा पुरस्तादग्रतः प्रतिलोममेवेत्यर्थः, उद्धरेदिति पूर्व्वेणान्वयः । जातुष इत्यादि । जतु लाचेति पर्य्यायौ, तद्विकारो जातुषम्, अणि षुगागमः, तस्मिन् कण्ठासक्ते बालादिभिः प्रमादादसम्यग्गिलिते, कण्ठे नाड़ीमग्नितप्ताञ्च शलाकामिति युक्त्या नाड्यन्तरेव प्रवेश्य, अवगृह्य जातुषं शल्यं गृहीत्वा, शीताभिरद्भिः परिषिच्य, स्थिरीभूतं शीतजलावसेकेन दृढीभूतं तच्छल्यं तथा प्रतिलोममेवोद्धरेदिति योजना । जातुषादन्यदजातुषं प्रकृतत्वात् कण्ठासक्तं फलादिशल्यमित्येतत् । अत्र पूर्व्वकल्पेनेति विशेषणम् कण्ठे नाड़ीं प्रवेश्येत्यादिप्रागुक्तक्रमसाचेसुमित्यवधेयम् ॥ ८ ॥

अस्थीत्यादि । उण्डुकं नाम विशेषेण प्रसादकिट्टतः परिणामिमलाश्रयः स्थूलक्षुद्रान्त्रयोरन्तरालस्थो गोलः, वक्ष्यति च "उण्डुकस्थं विभजते मलं मलधरा कला" इति, तथाच केशोऽयमुण्डुकमिवेति केशोण्डुकं "पुरुषव्याघ्रः" इतिवत् "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति पूर्व्वनिपातः, केशगुच्छक इति निष्कर्षः । दन्तधावनकूर्च्चकं पुनः सच्छिद्ररजतादिपत्रेषु विन्यासविशेषेण निबद्धं विन्यस्ता रोमराजी,

कण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत् त्रिफलाचूर्णं वा मधुशर्करालिप्तम्। उदकपूर्णोदरमवाक्शिरसमवपीडयेत् धुनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात्। ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्। बालरज्जुलतापाशशल्ये तु कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं फेनागमनं संज्ञानाशञ्चापादयति। तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसञ्च वातघ्नं विदध्यादिति॥ ९॥

"कुची" इत्याख्यायते, अन्तर्मध्ये वा प्रणुदेत् प्रेरयेत्, तेनैवेति वाशब्देन समन्वयः। अत्र कूर्चकशब्दस्तथाविधशल्यापनयनोपयोगियन्त्रमात्रोपलक्षणमिति गम्यते, तूलकाद्युपहितेन मृदुवेत्राग्रादिना, पृथुकादिग्रासेन च तद्वद् कर्म्मनिष्पत्तेः। उदकपूर्णोदरम् उदकनिमज्जनादितो बहुपीतोदकम्, अवाक्शिरसमधःशिरसम्, अवपीडयेदित्युदर एवेति तात्पर्य्यम्, धुनीयात् दोलयेदित्यप्यवाक्शिरसमेव, वामयेदिति कण्ठादावङ्गुल्यावमर्शेनाऽऽमसल्लकरसादिना वा, भस्मराशावामुखात् मुखपर्य्यन्तं निखनेत् खनित्वा स्थापयेत् निखननमिदमविशेषेणोक्तमप्युदकजनितस्तैमित्योन्मूलनार्थमुपदिश्यत इति गम्यते, उदकञ्चोपेक्षितं निमेषमात्रादेव पञ्चत्वमापादयत्यातुरं प्राणावरोधेनेत्युदकनिर्हरणात् परस्तादेव कार्य्यमित्यनुसन्धेयम्। निःशङ्कमनवबुद्धञ्चेति द्वे क्रियाविशेषणे, निःशङ्कम् अभिघाते क्षते मृत्युरात्ययिको वा कश्चिद्व्याधिरापतिष्यतीत्येवमाशङ्कापरिरहितम्, अनवबुद्धं स्कन्धे मामभिहनिष्यतीत्यवसातुराणामनालोचिततया एकान्ततोबुद्धिविषयमतिक्रान्तम्, सहसेति यावत्, मुष्टिना स्कन्धे अभिहन्यादित्यन्वयः। तमभ्यज्येत्यादावपरे मतमपि ललाटे सिराव्यधनमुपदिशन्ति प्राञ्चः॥ ९॥

भवति चात्र ।

शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ।
तथा यन्त्रपृथक्त्वञ्च सम्यक् शल्यमथाहरेत् ॥ १० ॥
कर्णवन्ति तु शल्यानि दुःखाहार्य्याणि यानि च ।
आददीत भिषक् तस्मात्तानि युक्त्या समाहितः ॥ ११ ॥
एतैरुपायैः शल्यन्तु नैव निर्घात्यते यदि ।
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥ १२ ॥
शोफपाकौ रुजश्चोग्राः कुर्य्याच्छल्यमनिर्हृतम् ।
वैकल्यं मरणञ्चापि तस्माद्यत्नाद्विनिर्हरेत् ॥ १३ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने शल्यापनयनीयो नाम सप्तविंशोऽध्यायः ।

---

एतावन्तो स्थूलमल्पबुद्धीनां व्यवहाराय, बुद्धिमतास्वानुष्ठानायेति सम्प्रधार्य्य शिष्टानि शल्यानि बुद्ध्याऽभिसमीक्ष्य निर्हर्त्तव्यानीत्युपदिदिक्षति शल्येत्यादिना । नैव निर्घात्यते दृढमवबद्धत्वान्नैव निष्काश्यते, यन्त्रयोगैः यन्त्रविशेषोपयोगैः । परिशिष्टं निगदव्याख्यातम् ॥ १०—१३ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने शल्यापनयनीयो नाम सप्तविंशोऽध्यायः ।

# अष्टाविंशोऽध्यायः।



अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः॥ १॥

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा।
ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम्॥ २॥

---

नन्वपनीतेषु शल्येषु व्रणा अवश्यं चिकित्सितव्या भवन्त्याम्नायते च "असाध्यान्नोपक्रमेत्" इति, तदिदं जिज्ञास्यं पुनरापन्नं किन्तु खलु विशेषमभिसमीक्ष्य विदितवेदितव्या भिषजः प्रागुक्तैः सुखसाध्यत्वप्रत्ययकरैस्तैस्तैर्लिङ्गैरुपेतानपि कांश्चिद्व्रणान् कटाक्षमात्रेण मूर्त्तिमन्तं मृत्युमिव मत्वाऽऽराद्देवापसर्पन्ति ये भवन्त्यनिष्टोदर्का नियमेन, अपिचापरान् तथाविधानेव कांश्चित् पुनः प्रतिकुर्वन्त्यातुरमुत्थापयितुं नैतल्लक्षणमात्रेणाप्यवगच्छामो यदुपलभ्य विमुक्तसन्देहा वयमप्यवधार्य्य यथावत्तांस्तान् व्रणान् प्रत्याख्यातुं प्रतिकर्त्तुं वा प्रभविष्यामोऽनायासेन, तत् सर्व्वं विशदं विज्ञापयत्वशेषेणेत्येवमनुयुक्तो भगवांस्तन्त्रकारः शल्यापनयनीयादनन्तरं विपरीताविपरीतव्रणविज्ञानीयं नामाधिकरोति अथात इत्यादिना। अत्र सामान्यशब्दस्य विशेषवृत्तित्वाद्विपरीतशब्देन व्रणानां नियतमरणाख्यापित्वेनातितरां वैहातिकत्वम्, अविपरीतशब्देन च साध्यत्वात् प्राकृतिकत्वमाख्यातमिति लिङ्गीयते अनन्तरं तेषामेवोपादानात्, परिशिष्टं समानम्॥ १॥

न खलु व्रणानां विपरीताविपरीतत्वेन सहसा निरूपणमप्रसिद्धमित्यभिसन्धाय दृष्टान्तेनावगमयति फलेत्यादिना। अम्बु ददतीत्यम्बुदाः प्रवर्षिणो मेघाइत्यर्थः; पुष्पादयोयथा फलादीनां भविष्यत्त्वं ख्यापयन्ति तथैव रिष्टानि "क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः। दोषाः कुर्व्वन्ति यल्लिङ्गं तदरिष्टं निरुच्यते" इति स्मरणान्नियमतो मरणख्यापकानि लिङ्गानि

तानि सौक्ष्म्यात्प्रमादाद्वा तथैवाशु व्यतिक्रमात् ।
गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसम्भवात् ॥ ३ ॥
ध्रुवन्तु मरणं रिष्टे ब्राह्मणैस्तन्विकामलैः ।
रसायनतपोजप्य-तत्परैर्वा निवार्य्यते ॥ ४ ॥

---

पञ्चतां पञ्चभूतमात्रावशेषत्वं मरणमित्येतत्, अरिष्टं रिष्टमित्यनर्थान्तरम् । न च पुष्पमन्तरेणापि फलाभिनिर्वृत्तेर्दृष्टान्तोऽयमसाम्प्रतम् । "छत्रिणो गच्छन्ति" इतिवद्वाहुल्यानुशयेनोपपत्तेः । अत्र रिष्टानां पञ्चताख्यापकत्वेनाभिधानादर्थाच्चिह्नं भवतीतरेषामन्यथात्वमित्युभे एव विपरीताऽविपरीतत्वे दृष्टान्तेनैव व्याख्यते इत्यनुसन्धेयम् ॥ २ ॥

न च कदाचिन्मुमूर्षुशरीरे रिष्टानामनुपलम्भादेव वचनमिदमश्रद्धेयमित्याह तानीत्यादि । सौक्ष्म्यादणीयस्त्वेन द्रष्टुमयोग्यत्वात्, प्रमादात् स्फीतावयवत्वेऽपि समनस्केन्द्रियैरविषयीकरणात्, आशुव्यतिक्रमात् दोषशक्तेरचिन्त्यत्वेनाशुवान्यथाभावात्,उद्गतान्युपस्थितान्यपि तानि रिष्टान्यज्ञैरनिपुणैर्न गृह्यन्ते न ज्ञायन्ते, गृह्यन्ते तु तान्यनुमानादभिनिवेशवशादनुशीलनाच्चाभिज्ञैर्भिषग्भिस्तदिदमुच्यते "मुमूर्षोर्न त्वसम्भवात्" इति । मुमूर्षोर्मुमूर्षुशरीरे असम्भवान्न गृह्यन्त इति नेति योजना । एतेन मुमूर्षुशरीरे नियमेन रिष्टानि जायन्ते, निवर्त्तन्तेतराच्चानन्तरं मरणादेवेति निष्कर्षः; [illegible]देव विशदमुक्तञ्चात्रेयेण "न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते । मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इति ॥ ३ ॥

लौकिकेन वैदिकेन च कर्म्मविशेषेण रिष्टसंसूचितस्य मृत्योर्व्यभिचारं दर्शयति ध्रुवमित्यादिना । दोषापरपर्य्यायोऽयं मलशब्दः, अमलैर्मानसदोषरहितैर्नीरजस्तमैरिति यावत्; "रजस्तमश्च मानसौ दोषौ" इत्यवोचाम, रसायनं वक्ष्यमाणम् । रसायनादितत्परैः रसायनाद्यासक्तैरेव निवार्य्यते नान्यैरित्यर्थः । अवधारणार्थोऽयं वाशब्दः ॥ ४ ॥

नक्षत्रपीड़ा बहुधा यथा कालाद्विपच्यते।
तथैवारिष्टपाकञ्च ब्रुवते बहुधा जनाः॥ ५॥
असिद्धिमप्रुयाल्लोके प्रतिकुर्व्वन् गतायुषः।
अतो रिष्टानि यत्नेन लक्षयेत्कुशलो भिषक्॥ ६॥
गन्धवर्णरसादीनां विशेषाणां समासतः।
वैकृतं यत्तदाचष्टे व्रणिनः पक्वलक्षणम्॥ ७॥
कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः।
लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः॥ ८॥

---

नन्वनिवारितन्तद्रिष्टं कियन्तं कालमातुरमुपतापयत्यनिवार्य्येण दुःखेनेत्याह नक्षत्रेति। नक्षत्रविशेषे ग्रहावस्थानजन्या पीड़ा नक्षत्रपीड़ा यथाकालात् कालविशेषमाश्रित्य बहुधा विपच्यते "होरायां नवमे सूर्य्यः सप्तमे च शनैश्चरः। एकादशे गुरुः शुक्रो मासमेकं न जीवति॥" तथा "अशुभे लग्नसम्प्राप्ते षष्ठाष्टमे निशाकरः। शनैश्चरस्तु बन्धुस्थो द्विमासे मृत्युमृच्छति" इत्यादि पराशराद्यनुशासनादनेकधा भुज्यते, तथैव कालाद्बहुधा अरिष्टपाकम् अरिष्टविपाकम् अरिष्टभोगमिति यावत्, जना ऋषयो ब्रुवते। पाको विपाको भोग इत्यनर्थान्तरम्, "सति मूले तद्विपाको जात्यायुर्भोगाः" इति पातञ्जलसूत्रम्। मूलं वासनाख्यः संस्कारः। जातिर्जन्मेति पर्य्यायः॥ ५—६॥

प्रकृतमनुसन्धत्ते गन्धेत्यादिना। आदिना शब्दस्पर्शयोरादेशः क्रियते, विशेषाणां तत्तद्रूपदोषस्वभावसंसिद्धत्वेन विशिष्टानां गन्धादीनां यद्वैकृतं समासतः संक्षेपतो व्रणिनस्तत्पक्वलक्षणं विनाशोन्मुखताया लिङ्गं "स्याद्विनाशोन्मुखं पक्वम्" इत्यमरः। सुखप्रतिपत्तये समासोक्तेषु तेषु दुरधिगमसमर्थं प्रपञ्चेनाधिगमयति कटुरित्यादिना। कटुरप्रियः, सिक्तपलालधुष्मान्तर्निहितवाष्पवदुद्वेजन इति यावत् "अकार्य्याप्रिययोः कटुः" इति

आजातसीतैलसमाः किञ्चिद्विस्राश्च गन्धतः ।
ज्ञेयाः प्रकृतिगन्धाः स्युरतोऽन्यद्गन्धवैकृतम् ॥ ९ ॥
मद्यागुर्व्वाज्यसुमनःपद्मचन्दनचम्पकैः ।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ १० ॥
श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ।
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ ११ ॥
कृष्णास्तु ये तनुस्रावा वातजा मर्म्मतापिनः ।
स्वल्पामपि न कुर्व्वन्ति रुजं तान् परिवर्ज्जयेत् ॥ १२ ॥
कुङ्कुमश्यामकङ्कुष्ठसवर्णाः पित्तकोपतः ।
न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥ १३ ॥
कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ।
दूयन्ते च विदह्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥ १४ ॥

---

पाच्यलिङ्गे वोपाल्लितः । तीक्ष्ण उग्रः पूतित्वेनासहनीय इति तात्पर्य्यम् "गन्धैः स्रावैश्च पूतिकैः" इति चरकपित्तजव्रणलिङ्गकवाक्यत्वात्; विस्र-इव विस्र आमान्वयाच्चिताधूमादिगन्धवदमनोज्ञ इत्यर्थः, पवनादिभिर्यथा-क्रमं पवनपित्तकफैरित्यर्थः । रक्तस्येव गन्धोऽस्येति लोहगन्धिर्व्रणविशेषण-मेतत् ॥ ७—८ ॥

मद्येत्यादि । सुमना मालती, सगन्धाः समानगन्धाः, दिव्यगन्धा-अलौकिकगन्धाः । ध्वाङ्क्षः काकः, पूतिः दुर्गन्धद्रव्यजातम्, वल्लूरं शुष्क-मांसम्, मत्कुणो नाम शय्याचरो कीटभेदः । क्रमागतत्वाद्वर्णवैकृतमनुसन्धत्ते कृष्णा इत्यादिना श्लोकत्रयेण । इह हि कारणानुरूपं कार्य्यमिति कृत्वा कषायतिक्तमधुरा दोषरसा एव व्रणेष्वप्यनुदिश्यन्ते, परीक्ष्यन्ते च विपरी-

क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ।
त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ।
ये च मर्म्मस्वसम्भूता भवन्त्यत्यर्थवेदनाः ॥
दह्यन्ते चान्तरत्यर्थं वहिः शीताश्च ये व्रणाः ।
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥
शक्तिध्वजरथाः कुन्तवाजिवारणगोवृषाः ।
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥
चूर्णावकीर्णा इव ये भान्ति वा न च चूर्णिताः ।
प्राणमांसक्षयश्वासकासारोचकपीड़िताः ॥
प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्म्मसु ।
क्रियाभिः सम्यगारब्धा न सिद्ध्यन्ति च ये व्रणाः ।
वर्ज्जयेत्तान् भिषक् प्राज्ञः संरक्षन्नात्मनो यशः ॥ १५ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतव्रणविज्ञानीयो नाम अष्टाविंशोऽध्यायः ।

---

सिकाद्युपसर्पणात्मकेनानुमानविशेषेणेति तद्विकृतिविज्ञानं सुकरं भवतीति सम्प्रधार्य्य क्रमागतमपि रसवैकृतं हित्वा परिशिष्टं शब्दवैकृतं स्पर्शवैकृतञ्चोपदिदिक्षति क्ष्वेडन्तीत्यादिना । क्ष्वेडन्तीति "वंशशल्ये सिंहनादे क्ष्वेड़ा णा तु ध्वनौ विषे" इति रुद्रानुशासनात् ध्वन्यपरपर्य्यायोऽयं क्ष्वेड़शब्दस्तदुपचारात्सहति कीचके प्रवर्त्तत इत्याहुः, तथाच क्ष्वेड़ा इवाचरन्तीति "सर्व्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि वाय्वाश्रयाच्छब्दं कुर्व्वन्तीत्यर्थः, कीचकानां तथात्वात्, तथाच "कीचका नाम ते वंशा ये स्वन-

न्त्यनिलाहताः" इति । घुर्घुरो नाम कीटभेदः "घुरघुरीया" इत्याख्यायते, ते इवाचरन्तीति घुर्घुरायन्ते "घुर्घुर" इति शब्दं कुर्व्वन्त्याविष्कुर्व्वन्ति चोर्द्ध्वमधस्तिर्य्यङ्मार्गविशेषानन्तःशरीरे इत्यर्थः । कुन्तः प्रासः, परिशिष्टं निगदव्याख्यातम् । निदर्शनमात्रमेतावदनिमित्ततो विकृतेरेवारिष्टत्वेनोपदेशात्, उक्तञ्च "अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः । विकृतिर्या समासेन रिष्टं तदिति लक्षयेत्" इति ॥ १०—१५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने विपरीताविपरीतव्रणविज्ञानीयो नाम अष्टाविंशोऽध्यायः ।

# अत्रिंशोऽध्यायः ।



अथातो विपरीताविपरीतदूत-शकुन-स्वप्ननिदर्शनीय-मध्यायं व्याख्यास्यामः ॥ १ ॥

दूतदर्शनसम्भाषा-वेशाश्चेष्टितमेव च ।
ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥
देशो वैद्यस्य वाग्देहमनसाञ्च विचेष्टितम् ।
कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ २ ॥

---

पूर्व्वाध्याये विपरीता अविपरीताश्च व्रणा निदर्शनेन विज्ञापिता इत्य-सौचाम इदानीं पुनस्तत्प्रसङ्गेन ... दूतादीन् निदर्शननोपदिद-र्व्विपरीताविपरी...दूत-शकुन स्वप्न-निदर्शनीयं नामाधिकरोति अथात इत्या-दिना ...। शकुनं निमित्तं चिह्नमित्यनर्थान्तरम्, "निमित्ते च शकुनं स्यान्नपुं-सकम्" इति मेदिनीस्मरणात् । अत्र दूतस्वप्नयोरपि शकुनत्वेनैव व्याचिख्या-सितत्वेऽपि, पृथगुपादानं प्रपञ्चार्थमित्यनुसन्धेयम् । विपरीतानामनिष्टाशंसि-त्वेन प्रतिकूलानाम्, अविपरीतानां तत्प्रतियोगिनाञ्च दूतादीनां निदर्शन-मुदाहरणमनुक्तार्थज्ञानायैकदेशेन कथनमित्येतत्, परिशिष्टं समानम् ॥ १ ॥

न च तावत् कण्ठासक्तकरटकेन मार्ज्जारपादालम्भनमिवातुरशुभाशुभ-परिज्ञानार्थिना भिषजा आतुरशरीरेणानभिसम्बन्धिनामपि दूतानां शकुनानाञ्च विपरीताविपरीतत्वेन विज्ञानमपार्थकमित्यत आह दूतेत्यादि । दृश्यत इति दर्शनमाकृतिः, कर्म्मणि ल्युट्, नपुंसकत्वादिरिति निष्कर्षः । सम्भाषा उच्चारुच्चस्वराच्चरादिविशेषेण सम्यग्भाषणम्, वेशाः पाण्डरेतरवासः-प्रभृतयः, चेष्टितं तृणादिच्छेदनम्, ऋक्षं वैद्योपसर्पणकालिकमार्द्रादि-नक्षत्रम्, एवमेव तिथिवेले अपि द्रष्टव्ये वेला तत्र मध्याह्नादिः, तिथि-

पाषण्डाश्रमवर्णानां सपक्षाः कर्म्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्म्मविपत्तये ॥
नपुंसकं स्त्रीबहवो नैककार्य्या असूयकाः ।
गर्द्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ३ ॥
पाशदण्डायुधधराः पाण्डरेतरवाससः ।
आर्द्रजीर्णापसव्यैकमलिनध्वस्तवाससः ॥
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ।
रूक्षनिष्ठुरवादाश्चाप्यमाङ्गल्याभिधायिनः ॥

---

चतुर्थ्यादिः, निमित्तमुदकुम्भादि, शकुनः कौशिकादिः पक्षी, अनिलो मृदुशीतादिगुणो वातः ॥ २ ॥

एतदेव प्रपञ्चेन स्फुटीकृत्यावगमयन् निगमयति पाषण्डेत्यादिना "ध्रुवं तस्माद्दूतादीन् लक्षयेद्भिषक्" इत्यन्तेन ग्रन्थसन्दर्भेण । पाषण्डा वेदबाह्यरक्तपटमौण्ड्यादिचर्य्यानिरताः, आश्रमाः सर्व्वेषामित्यपि आश्रमा आश्रमस्थाः ब्रह्मचारिगृहस्थवानप्रस्थयतिनः, वर्णा ब्राह्मणक्षत्रियादयः सपक्षाः समानपक्षाः, पाषण्डानां पाषण्डाः, ब्रह्मचारिणाञ्च ब्रह्मचारिण इत्येवमादय इति यावत् । नैककार्य्या नैकस्मिन् दौत्य एव नियुक्ताः, असूयका गुणिष्वपि दोषारोपं कुर्व्वन्तः । परम्परा परिपाटी अनुक्रम इति पर्य्यायाः, ताः प्राप्ताः, विलम्बनासहत्वेन त्वरितं भिषगानिनीषया क्रमान्वयिन इत्यर्थः, ये दूता इति परेणान्वयः । अत्र परम्परा इति बहुवचनेन तत्सामान्यपरिग्रहात् शुभशंसित्वेन व्याचिख्यासितानामपि दूतानामनुक्रमागतत्वेऽसंशयं गर्हितत्वमाख्यातमित्यवधेयम् ॥ ३ ॥

पाशेत्यादि । पाण्डरं शुक्लम्, आर्द्रेत्यादावपगतो वहिष्कृतः सव्यो वामबाहुर्येनेति व्युत्पत्त्याऽपसव्यशब्दो वाससः प्राचीनावीताकारेण न्यस्तत्वं

छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ।
वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥
स्रोतोऽवरोधहृद्गण्डमूर्द्धोरःकुक्षिपाणयः ।
कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥
विलिखन्तो महीं किञ्चिल्लुञ्चन्तो लोष्टभेदिनः ।
तैलकर्द्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥
फलं पक्वमसारं वा गृहीत्वान्यच्च तद्विधम् ।
नखैर्नखान्तरं वापि करेण चरणं तथा ॥
उपानच्चर्म्महस्ता वा विकृतव्याधिपीड़िताः ।
वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ॥
याम्यां दिशं प्राञ्जलयो विषमैकपदे स्थिताः ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ४ ॥

---

प्रतिपादयति, वाक्यार्थस्त्वतिरोहितः । मृतदग्धविनष्टान्यभिधातुं शीलमेषामित्यमाङ्गल्याभिधायिनः । दशाऽत्र दीपवर्त्तिरेव, प्राग्वस्त्रान्तानामुपदेशात् । स्रोतसामवरोधो राजान्तःपुरमिव संवृतोऽवकाशः स्रोतोऽवरोधो नासादिच्छिद्रमिति निष्कर्षः, कपालं मृद्भाण्डखण्डम्, लोष्टभेदिन इति लोष्टशब्दोऽजहत्स्वार्थया लक्षणया काष्ठादिष्वपि प्रवर्त्तत इति वक्तव्यमेव "काष्ठलोष्टादिमर्द्दनम्" इति तन्त्रान्तरीयस्मरणात् । असारं कदलीफलादिकं, तद्विधं तद्वदमाङ्गल्यमन्यत् सूर्पमार्ज्जन्यादिवस्तुजातम् । नखैरित्यादि । नखैर्नखान्तरं गृहीत्वेति पूर्व्वेणान्वयः । चर्म्मपादुका चर्म्म च हस्ते येषां त उपानच्चर्म्महस्ताः । वामाचारा अधमाचाराः । याम्यामित्यादि । स्वय एवातुरस्यानिष्टाशङ्कित्वेन स्थानास्थानविवेकविरहाद्विषमे नतोन्नते देशे विलम्बनासहत्वाच्चैकपदे एकपदमात्रगमनयोग्ये काले

दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ।
ज्वलयन्तं पचन्तं वा क्रूरकर्म्मणि चोद्यतम् ॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाशुचिम् ।
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ५ ॥
वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने ।
मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ॥
आर्द्राश्लेषामघामूलपूर्व्वासु भरणीषु च ।
चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ६ ॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ।
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥
त एव कफरोगेषु कर्म्मसिद्धिकराः स्मृताः ।
एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु तत् ॥

---

दण्डायमाना विषमैकपदे स्थिताः, याम्यां दक्षिणां दिशमाश्रित्य प्राञ्जलयो बद्धाञ्जलयो य इत्यादिना परेणान्वयः ॥ ४ ॥

क्रूरकर्म्मणि पशुवधादौ, प्रकीर्णकेशं विक्षिप्तकेशम्, पैत्रे कार्य्ये पिण्डदानादौ, दैवे कार्य्ये होमादौ, उत्पाता भूमिकम्पादयो दृश्यन्ते अत्रेत्युत्पातदर्शने भूमिकम्पाद्युपलक्षिते काले, पूर्व्वासु पूर्व्वभाद्रपदपूर्व्वाषाढ़ापूर्व्वफल्गुनीषु, सन्धिदिने पर्व्वसन्धौ पञ्चदश्याः प्रतिपदश्चान्तराले चन्द्रसूर्य्यग्रहणयोग्ये काले, अमावस्यायाः पूर्णिमाया वा शेषसार्द्धदण्डचतुष्टये, प्रतिपदश्च प्रथमसार्द्धदण्डचतुष्टय इति यावत् । एतेन शेषं, विकारसामान्यगुणे

रक्तपित्तातिसारेषु प्रमेहेषु तथैव च ।
प्रशस्तो जलदोषेषु दूतवैद्यसमागमः ।
विज्ञायैवं विभागन्तु शेषं बुध्येत पण्डितः ॥ ७ ॥
शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः ।
स्वस्यां जातौ स्वगोत्रो वा दूतः कार्य्यकरः स्मृतः ॥ ८ ॥
गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः ।
धृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान् ।
अलङ्कृतो मङ्गलवान् दूतः कार्य्यकरः स्मृतः ॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ।
उपसर्पति यो वैद्यं स च कार्य्यकरः स्मृतः ॥ ९ ॥
मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥

---

देशादौ तत्तद्विकारलिङ्गलिङ्गितानां दूतानामागमनं गर्हितं, वैपरीत्ये च प्रशस्तमित्येतत्, परिशिष्टमर्थजातं व्याख्यातम्, तद्बुद्ध्वा संविभजेत् विभज्योपदिशेदित्यर्थः । इदानीं पुनर्विकाराणां प्रतीकारानुरूपक्रियोपलक्षिते काले देशे वा, प्राशस्त्येनानयोः समागमं प्रस्तूयते रक्तेत्यादिना । एवं विभागमेकदेशं विज्ञाय, शेषं मूत्रसङ्गादौ प्रतिकर्त्तव्ये सेतुविध्वंसनादिष्वनयोः समागममित्यर्थः ॥ ५—८ ॥

गोयानेनेत्यादि । गोयानेन गोवाह्यशकटेन, न तु गौरेव यानं तेन "गवान्तु यानं पृष्ठेन सर्व्वथैव विगर्हितम्" इति मनूक्तेः । एतच्चातिप्रशस्तत्वेनोक्तमिति निश्चीयते, "अनुष्ट्रखरयानस्थम्" इति चरकानुशासनात् । स्वतन्त्रः स्वपरिजनः ॥ ९ ॥

मांसेत्यादि । मांसमत्र सद्यस्कमेव "सद्योमांसं घृतं वा" इति यात्रिक-

स्त्री पुत्रिणी सवत्सा गौर्वर्द्धमानाः स्वलङ्कृताः।
कन्या मत्स्याः फलञ्चामं स्वस्तिकं मोदका दधि॥
हिरण्याक्षतपात्रं वा रत्नानि सुमना नृपः।
अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा॥
ब्रह्म-दुन्दुभि-जीमूत-शङ्ख-वेणु-रथस्वनाः।
सिंह-गो-वृषनादाश्च ह्रेषितं गजबृंहितम्॥
शस्तं हंसरुतं नृणां कौशिकञ्चैव वामतः।
प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः॥

---

त्वेनास्योपलम्भात्। उदकार्थं रिक्त उदकेन पूर्णश्च कुम्भ उदकुम्भ उच्यते, "एकहलादौ पूरयितव्येऽन्यतरस्याम्" इति पूरयितव्यवाचिन्युदादेशात्, तथाच "रत्नानां पूर्णकुम्भानाम्" इति चरकोक्तं "चिकित्सकस्य चौरस्य तथैवाध्ययनार्थिनः। प्रशस्तसाहुर्भिषजो जलार्थं रिक्तकं घटम्" इति निमित्तोक्तञ्च सम्मतं भवति। वर्द्धमाना अङ्कुरितयौवनाः, स्वलङ्कृताश्च कन्याः कुमार्य्यः। चरकेऽप्युक्तं "कन्यानां वर्द्धमानानां वडस्यैकपशोस्तथा" इति। वर्द्धमानमलङ्कृता इत्यनाकरः पाठः। न च वर्द्धमानं शराव इति केनचिदुक्तेः साकरत्वमुन्नेयम्, मेदिन्यादौ पुंस्त्व एव तत्पर्य्यायदर्शनात्। स्वस्तिकं तण्डुलपिष्टम्, "स्वस्तिकं प्राङ्मुखं यत् स्यादलिन्दानुगतं भवेत्" इत्याद्युक्तलक्षणं मण्डलं वा। सुमनाः पुष्पं, न च "बहवः समाः सिकता वर्षा सुमनसो जलौकसः" इति वामनोक्ते सत्यप्येकत्वमनुपपन्नम्, "वेश्या श्मशानसुमना इव वर्ज्जनीया" इत्यादि-प्रयोगदर्शनात्। अदन्तपाठे तु सुमनो गोधूमः। अप्रशान्तोऽर्च्चिष्मान्, वायुप्रोक्ते चोक्तम् "अर्च्चिष्मान् पिण्डितशिखः सर्पिः काञ्चनसन्निभः। स्निग्धप्रदक्षिणश्चैव वह्निः स्यात् कार्य्यसिद्धये" इति। ब्रह्म वेदः। कौशिकस्येदं कौशिकम्, उलूकरुतमित्येतत्। अत्र वामत एवेति नियमादितरेषां सामान्यत एव प्राशस्त्यं प्रत्ये-

पत्र-पुष्प-फलोपेतान् सक्षीरान् नीरुजो द्रुमान् ।
आश्रिता वा नभो-वेश्म-ध्वज-तोरण-वेदिकाः ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ।
वामा वा दक्षिणा वापि शकुनाः कर्म्मसिद्धये ॥ १० ॥
शुष्कोऽशनिहतेऽपत्रे वल्लीनद्धे सकण्टके ।
द्रुमेऽथवाश्म-भस्मास्थि-विट्-तुषाङ्गार-पांशुषु ॥
चैत्य-वल्मीक-विषम-स्थिता दीप्तखरस्वराः ।
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥

---

तव्यम् । प्रतीकारार्थं गच्छासि किन्न वेत्येवमादौ विचिकित्सितेऽर्थे अना-देशिता निश्चयात्मिका अनुकूला वाचः क्वचिदपि नाऽसत्या भवन्तीति निर्णीयते "पूर्व्वं चरति देवेषु पश्चाद्गच्छति मानुषान् । नादेशिता वाग्भवति सत्या ह्येषा सरस्वती" इति स्मरणात्, तदिदमुच्यते "वाचश्च हृदयङ्गमाः" इति, अर्थमिमं स्फुटीकृत्य निदर्शनेनावगमयति मत्स्यपुराणम्, तद्यथा "एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः । गच्छेति पश्चाच्छुभदः पुरस्ताच्च विगर्हितः । विसर्ज्जयति यद्येकं एकश्च प्रतिषेधति । सविरोधोऽशुभो यातुर्ग्राम्यो वा बलवत्तरः" इत्यादि । पत्रेत्यादि । शान्तासु शुभदेवततया दक्षिणेतरासु, नानाविधकोलाहलध्वनिरहितासु वा दिक्षु पत्रादिसम्पन्नान् द्रुमान् नभःप्रभृतीन् पदार्थान् वा आश्रिताः वामा दक्षिणा वा,पृष्ठतोऽनुगा वा शकुनाः अपि निश्चितं कार्य्यसिद्धये मधुरं वक्तार इति समन्वयः ॥ १० ॥

शुष्क इत्यादि । अस्मिन् श्लोके "स्थिता" इत्यध्याहार्य्यम् । चैत्यो नाम ग्रामादौ प्रसिद्धो देवावासो वा सभास्थो वा तरुः, विषमो नतोन्नतो देशः, दीप्तखरस्वरा उग्रकर्कशस्वराः । दीप्तासु सूर्य्यावस्थानेन वह्निज्वालया वा सप्रकाशासु, कोलाहलध्वनिभिर्व्याकुलासु क्रूरदेवततया दक्षिणासु वा दिक्षित्यर्थः । अत्र विशेषयति दीपिका "द्वन्द्वरोगार्द्दितास्त्रस्ताः कलहा-

पुन्नामानः खगा वामा स्त्रीसंज्ञा दक्षिणाः शुभाः ।
दक्षिणाद्वामगमनं प्रशस्तं श्व-शृगालयोः ॥
वामं नकुल-चाषाणां नोभयं शश-सर्पयोः ।
भास-कौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥
दर्शनं वा रुतञ्चापि न गोधा-कृकलासयोः ।
दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥
कुलत्थ-तिल-कार्पास-तुष-पाषाण-भस्मनाम् ।
पात्रं नेष्टं तथाङ्गार-तैल-कर्द्दम-पूरितम् ॥
प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ।
शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ॥

---

मिषकाङ्क्षिणः । आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित्" इति । पुन्नामानः पुमांसः कोकिलसारसप्रभृतयः, स्त्रीसंज्ञाः स्त्रियः वरटा चटका प्रभृतयः । नेह दक्षिणादिति "उत्तराधरदक्षिणादातिः" इति पञ्चम्यन्त-प्रतिरूपकमव्ययम्, नापि चापादाने पञ्चमी, अनन्तरश्लोकमर्थतोऽनुसन्धा-येति निश्चीयते, किन्तर्हि ? ल्यब्लोपे पञ्चमी, दक्षिणगमनमपेक्ष्येत्यर्थः । वाममित्यादि । चाषः सुवर्णचातको नाम पक्षी, इहापि दक्षिणादित्यनु-वर्त्यते, नकुलचाषाणां दक्षिणमपेक्ष्य वामं गमनं प्रशस्तमित्यर्थः । न तु वाममेव"नकुलः सर्व्वतोभद्रः" तथा "यत्र तत्र कुरुश्रेष्ठ चाषं दृष्ट्वा नमस्कुरु । न हि वैदुर्य्यवर्णस्य दर्शनं विफलं भवेत्" इति ज्योतिषमहाभारतीयस्मर-णात् । नोभयं न वामं नापि च दक्षिणम् । भासोऽत्र गृध्रः "भासो गृध्रे कुक्कुटे च" इति विश्वः, वाग्भटेन प्रशस्तदर्शनत्वेनोक्तो भासस्तु स्वनाम-प्रसिद्ध इत्यविरोधः । कार्पासं कार्पासफलम् । प्रसन्नेतरमद्यानां पात्रमित्य-न्वयः । प्रसन्ना वक्ष्यमाणः सुराभेदः । शवार्थानि काष्ठपलाशानि शल-

नेष्यन्ते पतितान्त्यस्थ-दीनान्ध-रिपवस्तथा ।
मृदु-शीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥ ११ ॥
ग्रन्थ्यर्व्वुदादिषु सदा च्छेदशब्दश्च पूजितः ।
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ।
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥ १२ ॥
तथैवाक्रुष्ट-हाक्रष्टमाक्रन्दरुदित-स्वनाः ।
छर्द्दी वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः ॥
प्रतिषिद्धं तथा लग्नं क्षुतं स्खलितमाहतम् ।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥ १३ ॥

---

काष्ठपलाशानि, अनन्तरं केशेत्यादिना सामान्यतः काष्ठानामशुभर्गसित्वेन व्याचिख्यासितत्वे सत्यपीह पृथगुपादानं नियमेनानिष्टसूचकत्वमाख्यातुम्, शुष्काणामिति तृणादीनामेव काष्ठादिसाहचर्य्यात्। अन्त्यस्थाश्चण्डालाः ॥ ११ ॥

ग्रन्थीत्यादि। ग्रन्थ्यादिषु प्रतिकर्त्तव्येषु छेदशब्दः "छिन्धि च्छिन्धि" इत्येवमाकारकः शब्दः, एतेनैव भेदशब्दो रुद्धशब्दश्च व्याख्यातप्रायः। अनुक्तार्थमुपसंहरन्नाह एवमिति। व्याधिविशेषेण शर्करादिव्याधिभेदेन निमित्तमुपलक्षयेत् आहरणादिशब्दमिति शेषः। तथैवेत्यादि। आक्रुष्टम् आक्रोश उच्चैर्व्विवदनमित्येतत्। आक्रन्दः सारावं रोदनम्, रुदितन्तु मृदुस्वरेणेत्ययं विशेषः। प्रतिषिद्धं नैव गन्तव्यमित्येवमाकारकं प्रतिषेधवचनम्, लग्नं कण्टकादिभिरासङ्गः। क्षुतं क्षवथु, स्खलितं स्खलनम्, आहतमाघातः, दौर्म्मनस्यं विमनस्कता, एतदेव विशेषेणाशुभमाशंसतीत्याचष्टे "शुभाशुभानि

प्रवेशेऽप्येतदुद्देशादवेच्यञ्च तथातुरे ।
प्रतिद्वारं गृहे वास्य पुनरेतन्न गण्यते ॥
केश-भस्मास्थि-काष्ठाश्म-तुष-कार्पास-कण्टकाः ।
खट्टोर्द्धपादा मद्यापो वसा तैलं तिलास्तृणम् ॥
नपुंसक-व्यङ्ग-भग्न-नग्न-मुण्डासिताम्बराः ।
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥
भाण्डानां सङ्करस्थानां स्थानात्सञ्चरणं तथा ।
निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥

---

सर्व्वाणि निमित्तानि स्युरेकतः । एकतस्तु मनो यातुः शुचिशुद्धं जयावहम्" इति भुजबलभीमोक्तेः ॥ १२—१३ ॥

उक्तं निमित्तजातम् आतुरगृहप्रवेशकालादावप्यतिदिशति प्रवेश इत्यादिना । प्रतिद्वारमिति प्रतिर्भागे अर्थे कर्म्मप्रवचनीयः, तदयमर्थः एतदुद्देशात् एतत् दूतादिनिदर्शनमभिसमीक्ष्य, प्रवेशे प्रवेशकाले, आतुरे तथा प्रतिद्वारं द्वारभागे, अस्यातुरस्य गृहे वा एतन्निमित्तजातमवेच्यम्, चकारो हेतौ तस्मात् पुनर्न गण्यते न कथ्यत इत्यर्थः । प्रस्थाननिमित्तानि प्रवेशादावतिदिश्य अन्यदपि किञ्चित् प्रपञ्चेनोपदिदिचति केशेत्यादिना । कार्पासः कार्पासवृक्षः, खट्टा "अष्टाभिः काष्ठखण्डैश्च कृता खट्टेति कथ्यते" इत्युक्तलक्षणा शय्या । ऊर्द्धपादः शरभाख्यो गजाकृतिः पशुभेदः । मद्यापो मद्यपायी, व्यङ्गा हीनाङ्गाः, नग्ना विवस्त्राः, मुण्डा मुण्डितशिरसः । दूतैरनिष्टैस्तुल्यानामित्यादिनैव नपुंसकादेर्लाभे पृथगुपादानं नितरामातुरस्याशुभशंसित्वमाख्यातुम् । सङ्कीर्य्यन्ते भाण्डान्यत्रेति सङ्करो भाण्डाधारः, तत्रस्थानां भाण्डानां सञ्चरणं पतनम्, चरकेऽप्युक्तम् "आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा । अतिमात्रममत्राणि दुर्लभं तस्य जीवितम्" इति, अमत्राणि पात्राणीत्यनर्थान्तरम् । निखातं भूम्यादेः, खननम्,

वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ।
वैद्यं सम्भाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥
प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा ।
हस्तन्त्वाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥
यो वैद्यमुन्मुखः पृच्छेदुन्मार्ष्टि स्वाङ्गमातुरः ।
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥
भवने पूज्यते वापि यस्य वैद्यः स सिध्यति ।
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ।
आतुरस्य ध्रुवं तस्माद्दूतादीन् लक्षयेद्भिषक् ॥ १४ ॥
स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ।
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ॥
स्नेहाभ्यक्तशरीरस्तु करभ-व्याल गर्द्दभैः ।
वराहैर्महिषैर्वापि यो यायाद्दक्षिणामुखः ॥
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्द्धजा ।
यं वा कर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ॥

---

उत्पाटनं भङ्गः पतनञ्च यस्य कस्यचित्, निर्गमस्तु पूर्णकुम्भादीनामेव "प्रविशेपूर्णकुम्भाग्निमृद्वीजफलसर्पिषाम् । वृषब्राह्मणरत्नानां देवतानाञ्च निर्गतिम्" इति विपरीतनिमित्ताधिकारे चरकोक्तेः । एतानि दर्शनं गतानि नेष्यन्त इति पूर्व्वेणान्वयः । वैद्यासनावसादो यस्यातुरस्य वैद्यासनभङ्गः, यो वा रोगी अधोमुखः स्यात् स न सिद्ध्यति परेणान्वीयते, परिशिष्टं निगदव्याख्यातम् ॥ १४ ॥

स्वप्नानित्यादि । उष्ट्रापरपर्य्यायोऽयं करभशब्दो न तु करिशावकस्तस्य

अन्त्यावसायिभिर्यो वा क्षष्यते दक्षिणामुखः ।
परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा ॥
मूर्द्धन्याघ्रायते यस्तु श्वापदैर्विकृताननैः ।
पिबेन्मधु च तैलञ्च यो वा पङ्केऽवसीदति ॥
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत्प्रहसेत्तथा ।
निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम् ॥
यस्य वंशो नलो वापि तालो वोरसि जायते ।
यं वा मत्स्यो ग्रसेद्यो वा जननीं प्रविशेन्नरः ॥
पर्व्वताग्रात्पतेद्यो वा श्वभ्रे वा तमसावृते ।
ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ॥
पराजीयेत बध्येत काकाद्यैर्व्वाभिभूयते ।
पतनं तारकादीनां प्रणाशं दीप-चक्षुषोः ॥
यः पश्येद्देवतानां वा प्रकम्पमवनेस्तथा ।
यस्य च्छर्द्दिर्विरेको वा दशनाः प्रपतन्ति वा ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ।
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ॥

---

शुभशंसित्वेनोपदेशात्, अन्त्यावसायी "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते" इति मनूक्तलक्षणः । वंशो नाम वृक्षभेदो "बाँश" इत्याख्यायते । नलतालौ स्वनामप्रसिद्धौ । प्रविशेन्मैथुनायेति शेषः, मौण्ड्यं मुण्डितशिरस्त्वम्, पराजीयेत पराजीयते, बध्येत बध्यत इति युक्तादावेव । यथास्वमिति यस्य वातादिप्रकृतेर्यः "वियदपि गच्छति सप्त-

कार्पास-तैल-पिण्याक-लोहानि लवणं तिलान् ।
लभेताश्नीत वा पक्वमन्नं यश्च पिबेत्सुराम् ।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥ १५ ॥
यश्च स्वप्नं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः ।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ १६ ॥
ज्वरितानां शुना सख्यं कपिसख्यन्तु शोषिणाम् ।
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्त्तनम् ॥
मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्द्ध्नि शिरोरुजि ॥

---

मेण सुप्तः" तथा "सुप्तः सन् कनकपलाशकर्णिकारान् सम्पश्येत्" तथा "सुप्तः सन् सकमलहंसचक्रवाकान् सम्पश्येत्" इत्यादि वक्ष्यमाणलक्षणः स्वप्ननिचय इत्यर्थः। विहतः किञ्चिद्विस्मृतोऽसम्यग्दृष्टश्च,अन्ये तु "अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः। पश्येत् सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम्" इति चरकस्मरणात् पश्चाद्दृष्टेन विशिष्टस्वप्नेन पराहतप्रभावमपि विहतं मन्यन्ते; चिन्ताकृतः संस्कारानुवृत्त इति तात्पर्य्यम् दृष्टश्रुतानुभूतप्रार्थितकल्पितसमाख्य इति यावत्, चकारादतिह्रस्वदीर्घयोरप्यादेशः क्रियते चरकैकवाक्यत्वात् ॥ १५—१६ ॥

ज्वरितानामित्यादि। विशेषार्थवाचिना तुकारेणाफलदार्थं परिहृत्य मुख्यं मरणव्यञ्जकं व्याचिख्यासितमर्थमनुसन्धत्ते, तेन प्रवर्त्तनं नृत्यैरेवेति निर्वोयते। सख्यमत्र नृत्येनैवोन्नावयन्त्याचार्याः "नृत्येद्रक्षोगणैः सार्द्धं यः स्वप्नेऽम्भसि मज्जति। स प्राप्य भृशमुन्मादं याति लोकमितः परम्" इत्याद्यनुशासनात्। गुल्मेषु कोष्ठे "स्थानान्यामाग्निपक्वानाम्" इत्यादिना वक्ष्यमाणे देशे स्थावरोत्पत्तिर्वंशलतादीनामुत्पत्तिः, शिरोरुजि च मूर्द्ध्नि तेषा-

शष्कुली-भक्षणं छर्द्यामध्वा श्वासपिपासयोः ।
हारिद्रं भोजनं वापि यस्य स्यात्पाण्डुरोगिणः ।
रक्तपित्ती पिबेद्यस्य शोणितं स विनश्यति ॥ १७ ॥
स्वप्नानेवंविधान्दृष्ट्वा प्रातरुत्थाय यत्नवान् ।
दद्यान्माषांस्तिलाँल्लोहं विप्रेभ्यः काञ्चनं तथा ॥
जपेच्चापि शुभान्मन्त्रान् गायत्रीं त्रिपदां तथा ।
दृष्ट्वा च प्रथमे यामे सुप्याद्ध्यात्वा पुनः शुभम् ॥
जपेद्वान्यतमं वेदं ब्रह्मचारी समाहितः ।
न चाचक्षीत कस्मैचिद्दृष्ट्वा स्वप्नमशोभनम् ॥
देवतायतने चैव वसेद्रात्रित्रयं तथा ।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात्प्रविमुच्यते ॥ १८ ॥
अत ऊर्द्धं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ।
देवान्द्विजान् गो-वृषभान् जीवतः सुहृदो नृपान् ॥
समिद्धमग्निं विप्रांश्च निर्म्मलानि जलानि च ।
पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥ १९ ॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ।
लभन्ते धनलाभाय व्याधेरपगमाय च ॥ २० ॥
महाप्रासाद-सफलवृक्ष-वारण-पर्व्वतान् ।
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ २१ ॥

---

मुत्पत्तिः प्रवर्त्तनमिति समन्वयः । श्वासपिपासयोरध्वा अध्वगमनं प्रवर्त्तन-

नदी-नद-समुद्रांश्च क्षुभितान् कलुषोदकान् ।
तरेत्कल्याणलाभाय व्याधेरपगमाय च ॥ २२ ॥
उरगो वा जलौको वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्द्दिशेत्तस्य धनलाभञ्च बुद्धिमान् ॥ २३ ॥
एवंरूपान् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म्म समाचरेत् ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतदूत-शकुन-स्वप्ननिदर्शनीयो नामैकोनत्रिंशोऽध्यायः ।

---

स्तीति पूर्व्वेणान्वयः । जपेत् पठेदित्यर्थः, "जपस्तन्नामपणं ध्येयसम्मुखीकरणं मुने" इति स्मरणात् । परिशिष्टं निगदव्याख्यातम् ॥ १७—२४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने विपरीताविपरीतदूतशकुनस्वप्ननिदर्शनीयो नामैकोनत्रिंशोऽध्यायः ।

# त्रिंशोऽध्यायः ।



अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।
तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे ॥ २ ॥

शरीरेऽस्मिन्निन्द्रियाण्यर्थाश्च प्रधानानि भवन्ति, तैरेव हि पुरुषः सुखमभीप्सति दुःखञ्च जिहासतीति मन्वानो भगवांस्तन्त्रकारो दूतादिनिदर्शनादनन्तरं दूताद्यानुलोम्येनातुरगृहं प्रविश्य प्रकृतत्वात्तदीया ये ये इन्द्रियार्थसंश्रया रिष्टसमाख्याता भावाः परीक्षितव्यास्तानिदानीं व्याचिख्यासुः प्रथमं तावत् पञ्चेन्द्रियार्थविप्रतिपत्तिं नामाधिकरोति अथात इत्यादिना। अत्र "शब्देऽविप्रतिपत्तिः" इति कात्यायनसूत्रस्मरणात् विकृतिसामान्ये प्रवृत्तत्वेनोपलब्धोऽपि विप्रतिपत्तिशब्द इह रिष्टसमाख्यातायां विकृतौ प्रवर्त्तत इत्यवश्यं वक्तव्यमनन्तरं तस्या एवोपादानात् "यदुपक्रमे सन्दिग्धं तच्छेषान्निर्णीयते" इति न्यायाच्च। अत्रेन्द्रियग्रहणेनैव मनोऽर्थोऽपि संभवतीत्यवधेयम् मनोऽधिष्ठितानामेव तेषां स्वस्वविषयेषु प्रवृत्तेः; तथाच पञ्चानां मनःपुरःसराणामिन्द्रियाणामर्थानाञ्च विप्रतिपत्तिं रिष्टजातमाचष्टे इति णिचि क्विपि चेन्द्रियार्थविप्रतिपत्तिः, अध्यायविशेषणमेतत् ॥ १ ॥

किंलक्षणा सा विप्रतिपत्तिरित्यत इन्द्रियार्थानामेव विप्रतिपत्तौ व्याचिख्यासितायामपि सर्व्वपरिग्रहादाह शरीरेत्यादि। शरीरं चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारजातम् अर्थेन्द्रियादिसमुदायात्मकमिति तात्पर्य्यम्, शीलमुच्यते स्वभावो यस्तु खलु नराणां नैसर्गिको सुहृदादिगुणयोगः, तयोः शरीरशीलयोस्तुकारात् प्रकृतेर्जातिप्रसक्तादिरूपाया गर्भव्याकरणे वक्ष्यमाणायाः प्रत्यात्मनियतायाश्च या विकृतिरन्यथाभावस्तदरिष्टं रिष्टं विप्रति-

शृणोति विविधान् शब्दान् यो दिव्यानामभावतः।
समुद्र-पुर-मेघानामसम्पत्तौ च निःस्वनान्॥
तान् स्वनान् नावगृह्णाति मन्यते चान्यशब्दवत्।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति।
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम्॥ ३॥
यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत्।
सञ्जातशीतपिड़को यश्च दाहेन पीड्यते॥

---

पत्तिरित्यनर्थान्तरम्। अत्र ह्यविशेषेऽपि विकृतिशब्दस्तामेव लक्षयति, याऽन्तर्गतस्यायुषः प्रमाणज्ञानाय प्रभवति, याश्चाधिकृत्य मुमूर्षतां लिङ्गान्युपदिश्यन्ते एतच्च परमतो व्यक्तीभविष्यति "न शृणोति च योऽकस्मात् तं ब्रुवन्ति गतायुषम्" इत्यादिनाऽनन्तरीतेन ग्रन्थसन्दर्भेण॥ २॥

क्रमेण प्रकृतमनुसन्धत्ते शृणोतीत्यादिना। सम्पत्तिरत्र तपस एव यया सम्पन्नस्तापसो दिव्यलोचनतामुपैति तदभावे असम्पत्तावित्युपपद्यते; यो दिव्यानां दिवि स्थितानां देवादीनां, यश्च अभावतः समीपे अविद्यमानानां समुद्रादीनां निःस्वनान् शृणोति तं गतायुषं ब्रुवन्तीति परेणान्वयः। अभावत इति षष्ठीबहुवचनान्तात् सार्व्वविभक्तिकस्तसिल्। चरकेऽप्युक्तं "अन्तरेण तपस्तीव्रं योगं वा विधिपूर्व्वकम्। इन्द्रियैरधिकं पश्यन् पञ्चत्वमुपपद्यते," तथा "अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते। तावुभौ पश्यतः क्षिप्रं यमालयमसंशयम्" इति। अत्र "अन्तरेण तपस्तीव्रम्" इति विशेषणादसम्पत्तावित्यस्य तपोविषयत्वं सहसैव बुद्धिमारोहतीति सम्पत्तिरत्र तपस एवेति यद्व्याहृतमस्माभि स्तन्नानुपपन्नमित्यनुसन्धेयम्॥ ३॥

प्रायेण हि शब्दविप्रतिपत्तिर्न सम्भवतीति श्लोकत्रितयेन श्रोत्रेन्द्रियविप्रतिपत्तिं प्रदर्श्य, स्पर्शविप्रतिपत्तिं रूपविप्रतिपत्तिश्चोपदिदिक्षति "य

उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते ।
प्रहारान् नाभिजानाति योऽङ्गच्छेदमथापि वा ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ।
वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥
स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ ४ ॥
विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ।
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥
यस्य दोषाग्निसाम्यञ्च कुर्य्युर्मिथ्योपयोजिताः ।
यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते ॥ ५ ॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ।

---

इत्यादिना * * भवन्ति हि" इत्यन्तेन ग्रन्थेन । शीतपिड़का हि कफजा अतस्तत्र जाड्यादयो वेदनाविशेषाः प्राकृताः, दाहस्त्वेकान्ततः स्फुटतरानुभवविरुद्ध इति विप्रतिपत्तिरित्येव सञ्जातेत्यादावभिसन्धिः । पांशुनेवावकीर्णानि चूर्णितानि रूषितानीति यावत् । रसविप्रतिपत्तिं गन्धविप्रतिपत्तिञ्चोपन्यस्यति स्नातेत्यादिना श्लोकेन । अत्र विशेषयति चरकः "अत्यर्थं रसिकं कायं कालपक्वस्य मक्षिकाः । अपि स्नातानुलिप्तस्य भृशमायान्ति सर्व्वतः" इति, रसोऽस्त्यस्येति ठन्, रसिकं रसवन्तमित्यर्थः । य आतुरः, शोभनो गन्धोऽस्येति सुगन्धिरित्वमार्षम्, "गन्धस्येत्वे तदेकान्तग्रहणम्" इति काशिकोक्तेः, वाति गन्धयते सुगन्धेनानुगतो भवतीत्यर्थः, इयन्तु गन्धविप्रतिपत्तिः ; एवमुत्तरत्रापि निपुणं विभाव्य विप्रतिपत्तिप्रकाराः परिलक्षणीयाः । सुगन्धमित्यादि । यस्य मन्यया मालतीयस्य केतकीयत्वेन केत-

गृह्णीते योऽन्यथा गन्धं शान्ते दीपे च नीरुजः ।
यो वा गन्धं न जानाति गतासुं तं विनिर्द्दिशेत् ॥ ६ ॥
द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा ।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ।
रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्च्चसम् ॥
अमेघोपप्लवे यश्च शक्रचापतड़िद्गुणान् ।
तड़िल्वतोऽसितान् यो वा निर्म्मले गगने घनान् ॥
विमान-यान-प्रासादैर्यश्च सङ्कुलमम्बरम् ।
यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति ॥

---

कीयस्य पुनर्म्लानीयत्वेनैवं विजातीयत्वेनेत्यर्थः गन्धं गृह्णीते, यश्चापि नीरुजः पीनसादिरोगविरहितः शान्ते निर्व्वाणमुपगते दीपे गन्धं न जानातीति समन्वयः ॥ ४—६ ॥

द्वन्द्वानीत्यादि । सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ, द्वन्द्वानि परस्पर-विरुद्धानि, उष्णहिमादीनीत्यादिग्रहणात् सुखदुःखादीनामादेशः । कालावस्था प्रातरादिः । दिवेत्यादि । ज्योतींष्यग्निनक्षत्रादीनि, चन्द्रवर्च्चसं चन्द्रस्य वर्च्चस्तेज इव वर्च्चोऽस्येति चन्द्रवर्च्चास्तं तथोक्तं, सूर्य्यविशेषणमेतत् । अमेघेत्यादि । तड़ितो गुणा इव तड़ितां गुणा वा तड़िद्गुणाः "तड़ितां गुणैरिव" इति माघः । अमेघोपप्लवे मेघोपद्रवरहिते, यः शक्रचापतड़िद्गुणान् शक्रचापं तड़िद्गुणांश्च ; यो वा निर्म्मले गगने तड़िल्वतो विद्युत्वतः, असितान् वा घनान् मेघान्, यश्च वा विमानाद्यैः सङ्कुलं निरवकाशमाततमम्बरमाकाशम्, यश्च पुनरनिलं मूर्त्तिमन्तं तथाविधमन्तरीक्षञ्च पश्यति तं

धूम-नीहार-वासोभिरावृतामिव मेदिनीम्।
प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति।
न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम्।
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम्॥ ७॥
ज्योत्स्नादर्शोष्णतोयेषु च्छायां यश्च न पश्यति।
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम्॥

---

गतायुषं वदन्तीति परेणान्वयः। धूमेत्यादि। लोकं भुवनम्। यश्चेति चकारोऽवधारणार्थः। यो लेखाभिः रेखाभिरेव भूमिमष्टापदाकारां सुवर्णाकारां पश्यति, यश्च सनक्षत्रां विद्यमाननक्षत्रां मेघाऽनाच्छन्नवशिष्ठादिनक्षत्रसमन्वितामिति यावत् अरुन्धतीं देवीम् अरुन्धतीसमाख्यं नक्षत्रं न पश्यति तं गतायुषं वदन्तीत्यन्वयः। अत्र विद्यमानार्थेन सहशब्देन समासः सलोमक इतिवत् प्रायिकः। एतेनैतदुक्तं भवति सति सप्तर्षिमण्डलेऽरुन्धत्या अदर्शनं विप्रतिपत्तिरित्यतो वचनमिदं प्रायेण "सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम्। संवत्सरान्तरे जन्तुः स पश्यति महत्तमः" इति चरकवचनेनानुगतम्भवति। विशेषणमिदं तत्तन्नक्षत्रदर्शनादृते अरुन्धतीदर्शनासम्भवादित्यनुसन्धेयम्। आकाशगङ्गा नाम छायापथ इत्यामनन्ति ज्योतिर्व्वेदविदः, या तु खल्वाकाशे उत्तरतो दक्षिणान्तं यावदायता सती दूरवर्त्तिनी शुभ्रजला नदीव परिलक्ष्यते॥ ७॥

ज्योत्स्नेत्यादि। आदर्शो दर्पणः, आतपापरपर्य्यायोऽयमुष्णशब्दः "उष्ण-आतपः" इति हेमचन्द्रः, छायात्र स्वप्रतिच्छायैवेति द्रष्टव्या, "ज्योत्स्नाया-मातपे" इत्युपक्रम्य "प्रतिच्छाया विगर्हिताः" इत्यात्रेयश्च। अन्यसत्त्वजाम् अन्यप्राणिजातामिव छायां यः पश्यति तं गतायुषं वदन्तीति पूर्व्वेणान्वयः।

श्व-काक-कङ्क-गृध्राणां प्रेतानां यक्ष-रक्षसाम् ।
पिशाचोरगनागानां भूतानां विकृतामपि ॥
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ।
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥ ८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने पञ्चेन्द्रियार्थ-
विप्रतिपत्तिर्नाम त्रिंशोऽध्यायः ।

---

ग्न्यसत्त्वजामिति प्रागुक्तं प्रपञ्चयति श्वेत्यादिना । विकृतामपीति । वे-कुर्व्वन्तीति विकृतो व्यालादयस्तेषामपीत्यर्थः ; छायामिति सम्बन्धः । परिशिष्टं निगदव्याख्यातम् ॥ ८ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशोऽध्यायः ।

# एकत्रिंशोऽध्यायः ।

अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥

श्यावा लोहितिका नीला पीतिका वापि मानवम् ।
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥ २ ॥
ह्रीरपक्रमते यस्य प्रभास्मृतिधृतिश्रियः ।
अकस्माद्यं भजन्ते वा स परासुरसंशयम् ॥ ३ ॥

---

किन्तु खल्वायुर्वेदे मरणाभिमुखमभिद्रवन्त्यस्तावत्य एव विप्रतिपत्तयोऽभिधीयन्ते यावत्योऽभिहिताः पूर्वाध्याय इत्येवमाशंसूनपाचिकीर्षुरिदानीं शरीरशीलयोर्यस्येति प्रागुक्तमर्थं पुनः प्रपञ्चयन् छायाविप्रतिपत्तिं नामाधिकरोति अथात इत्यादिना । छाया कान्तिरिति पर्य्यायौ, अत्र च छायासंश्रिता विप्रतिपत्तिश्छायेत्युच्यते उपचारात् तदादिर्विप्रतिपत्तिश्छायाविप्रतिपत्तिः शाकपार्थिवादित्वात्समासमाचष्टे इति समानं पूर्व्वेण ॥ १ ॥

श्यावेत्यादि । श्यावादयश्छाया यमातुरमभिद्रवन्ति स्वां छायां तिरस्कृत्य वेगेनोपसर्पन्ति, स परासुरित्यसंशयं विद्यादिति योजना । न चाभिपूर्व्वस्य द्रवतेरर्थोऽयमनुपपन्नः "अभिदुद्राव सहसा कर्णमेव सपत्नजित्" इति महाभारतीयादौ तदर्थे प्रयोगदर्शनात् । चरकेऽप्युक्तम् "छाया विवर्त्तते यस्य स्वस्थोऽपि प्रेत एव सः ।" इति । यत्तु तत्र "नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च । रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा । विशुद्धरक्ता त्वाग्नेयी दीप्ता सा दर्शनप्रिया" इत्युपक्रम्य "वायवी गर्हिता तासां चतस्रः स्युः शुभोदयाः" इत्युक्तम् तत् श्यावायाः सर्व्वावस्थास्वितरासाञ्च स्वच्छायातिरस्कारपुरःसरत्व एवानिष्टाशंसित्वमाख्यातुमित्यविरोधः । ह्रीर्लज्जा, अपक्रमते पलायते अपसरतीति यावत् । प्रभा दीप्तिः, न च

यस्याधरोष्ठः पतितः क्षिप्तश्चोर्द्ध्वं तथोत्तरः ।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ४ ॥
आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च ।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥ ५ ॥
कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै ।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ ६ ॥
कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका ।
अवस्फूर्ज्जति मग्ना वा न स जीवति मानवः ॥ ७ ॥
सङ्क्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने ।
स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ ८ ॥
केशाः सीमन्तिनो यस्य सङ्क्षिप्ते विनते भ्रुवौ ।
लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥ ९ ॥

---

छायाप्रभयोरविशेषः प्रत्येतव्यः, "वर्णमाक्रामति च्छाया प्रभा वर्णविकाशिनी । आसन्ना लक्ष्यते च्छाया विकृष्टा भाः प्रकाशते" इति चरकोक्तेः । श्रीः शोभा । जाम्बवं पक्वजम्बूफलम् । खञ्जनप्रतिमाः खञ्जन-कण्ठवन्नीलाः ॥ २—६ ॥

कुटिलेत्यादि । स्फुटिता स्फूर्त्तिमती । अवस्फूर्जति दृढं शब्दायत इत्यर्थः "स्फुर्ज वज्रनिर्घोषे" इति धात्वर्थानुगमात्, मग्ना निम्ना । सीमन्तिनो दोषस्वभावात् विन्यासविशेषेण विन्यस्ततया परिलक्षितवर्त्मानः । केशा इति केशशब्देनेह भ्रूकेशा अप्युद्दिश्यन्ते "भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून् । अपूर्व्वानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत्" इति चरकैकवाक्यत्वात् । लूनन्ति लूना इवाचरन्तीति "सर्व्वप्रातिपदिकेभ्यः क्विप्" इति क्विपि भ्रान्तिः, स्वयमेव लूयन्त इति तात्पर्य्यम् । "लुनन्ति"

नाहरत्यन्नमास्यस्थं न धारयति यः शिरः ।
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥ १० ॥
बलवान् दुर्ब्बलो वापि सम्मोहं योऽधिगच्छति ।
उत्थाप्यमानो बहुशस्तं धीरः परिवर्ज्जयेत् ॥ ११ ॥
उत्तानः सर्व्वदा शेते पादौ विकुरुते च यः ।
विप्रसारणशीलो वा न स जीवति मानवः ॥ १२ ॥
शीतपादकरोच्छ्वास-श्छिन्नश्वासश्च यो भवेत् ।
काकोच्छ्वासश्च यो मर्त्त्यस्तं धीरः परिवर्ज्जयेत् ॥ १३ ॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा ।
मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः स जानता ॥ १४ ॥
उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः ।
प्रेतैर्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत् ॥ १५ ॥
खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते ।
पुरुषस्याविषार्त्तस्य सद्यो जह्यात्स जीवितम् ॥ १६ ॥

---

इत्यलं वैयाकरणखसूचिकः पाठः । पादौ विकुरुते शय्याघाताद्यर्थमुत्क्षेपणादिनेति शेषः । विप्रसारणशीलः सङ्कोचनपराङ्मुख इति पादयोरेव । छन्नः श्वास उच्छ्वासः, शीताः पादकरोच्छ्वासा अस्येति शीतपादकरोच्छ्वासः, काकोच्छ्वासः काकवदुच्चादितास्यत्वेनोच्छ्वसनशीलः ॥ ७—१५ ॥

खेभ्य इत्यादि । खेभ्य ऊर्द्ध्वाधः सर्व्वच्छिद्रेभ्यः, चरकेऽप्युक्तं "छिद्रेभ्य एकं सर्व्वेभ्यो रोमकूपेभ्य एव च । वर्त्तते तामसङ्ख्यां गतिं तस्याहुरन्तिकीम्॥"

वाताष्ठीला तु हृदये यस्योर्द्ध्वमनुयायिनी ।
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥ १७ ॥
अनन्योपद्रवकृतः शोफः पादसमुत्थितः ।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥ १८ ॥
अतिसारो ज्वरो हिक्का छर्द्दिः शूनाण्डमेढ्रता ।
श्वासिनः कासिनो वापि यस्य तं क्षीणमादिशेत् ॥ १९ ।
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ।
बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयः ॥ २० ॥
श्यावा जिह्वा भवेद्यस्य सव्यञ्चाक्षि निमज्जति ।
मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत् ॥ २१ ॥
वक्त्रमापूर्य्यतेऽश्रूणां स्विद्यतश्चरणावुभौ ।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ २२ ॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च ।
यस्याकस्मात्स विज्ञेयो गन्ता वैवस्वतालयम् ॥ २३ ॥

---

पूति, अत्र वर्त्तते प्रवर्त्तते रक्तमिति शेषः । वातेत्यादि । यस्योर्द्ध्वमनुयायिनी रुजान्नविद्वेषकरी वाताष्ठीला हृदये वर्त्तते, स परासुरित्यसंशयं विद्यादिति योजना । अनन्योपद्रवकृतो नान्योपद्रवकृतः शोफोपद्रवैरेव कृत इति निष्कर्षः । शोफोपद्रवास्तु वक्ष्यन्ते "श्वासः पिपासा दौर्ब्बल्यं ज्वरश्छर्द्दिररोचकः । हिक्कातिसार-कासाश्च शूनं संक्षपयन्ति हि" इत्यनेन ग्रन्थसन्दर्भेण । स्वेद इत्यादौ वियुञ्जन्तीति कर्त्तृत्वमध्यस्तं यथा "सैनयोर्दशिवं घोरं करिष्यति महाग्रहः" इति महाभारतीयादौ तद्वदित्यवधेयम्, मरणं प्रति नृपकालेनाभ्युपगताया विप्रतिपत्तेः कर्त्तृत्वानुपपत्तेः । वक्त्र-

पङ्क-मत्स्य-वसा-तैल-घृतगन्धांश्च ये नराः ।
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥ २४ ॥
यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः ।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम् ॥ २५ ॥
ज्वरातिसार-शोफाः स्युर्यस्यान्योऽन्यावसादिनः ।
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥ २६ ॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥ २७ ॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ २८ ॥
विषमेणोपचारेण कर्म्मभिश्च पुराकृतैः ।
अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥ २९ ॥

---

मित्यादि । असूणामिति करणे षष्ठी, "नाग्निस्तृप्यति काष्ठानाम्" इतिवत् । आपूर्य्यते आप्लाव्यते दोषैरिति तात्पर्य्यम् ॥ १६—२३ ॥

पङ्केत्यादि । मृष्टगन्धो मरिचगन्धः, "मृष्टन्तु मरिचम्" इति राजनिर्घण्टः । निर्म्मलो वा गन्धो मृष्टगन्धः । यूको नाम केशाश्रयी कीटभेदः "उकुण" इत्याख्यायते । बलिं नाश्नन्तीत्यशरीरमपि प्रसङ्गादिहोक्तमित्यनुसन्धेयम् । ज्वरेत्यादि । अन्योऽन्यावसादिनः परस्परावमर्द्दिनः । अत्र विशदमुक्तमात्रेयेण "ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये । दुर्ब्बलस्य विशेषेण नरस्यान्ताय जायते" इति । नन्वायुर्व्वेदे मृत्युं प्रति किं नाम कारणान्युपदिशन्ते, यान्युपलभ्य परिहर्त्तुं शक्येरंश्चेत् तद्विपर्य्यासेनातुरमारोग्येणोपपादयितुञ्च प्रभविष्याम इत्येवं विवक्षून् तूष्णीञ्चिकीर्षति

प्रेता भूताः पिशाचाश्च रक्षांसि विविधानि च ।
मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥ ३० ॥
तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया ।
तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव गतायुषः ॥ ३१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशोऽध्यायः ।

---

विषमेणेत्यादिना । उपचारो व्यवहारः, स पुनर्द्विविधो दैवयुक्तिव्यपाश्रयभेदात् । अनित्यत्वादुत्पत्तिमत्त्वेन तत्तद्युगनियतायुःपर्य्यवसानप्रध्वंसित्वात् । स्यादेतत् कथं नु खलु प्रत्युपस्थिते मृत्युकाले सहस्रशः परिदृष्टकर्म्माण्यपि भेषजान्यकिञ्चित्कराणि भवन्तीत्यत आह प्रेता इत्यादि । अतिरोहितार्थमन्यत् ॥ २४—३१ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशोऽध्यायः ।

# द्वात्रिंशोऽध्यायः ।



अथातः स्वभाव-विप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥

स्वभावप्रसिद्धानां शरीरैकदेशानामन्यभावित्वं मरणाय । तद्यथा ;—शुक्लानां कृष्णता, कृष्णानां शुक्लता, रक्तानामन्यवर्णत्वं, स्थिराणामस्थिरत्वं, मृदूनां स्थिरता, चलानामचलत्वमचलानां चलता, पृथूनां सङ्क्षिप्तत्वं, सङ्क्षिप्तानां पृथुता, दीर्घाणां ह्रस्वत्वं, ह्रस्वानां दीर्घताऽपतनधर्म्मिणां पतनधर्म्मित्वं, पतनधर्म्मिणामपतनधर्म्मित्वमकस्माच्च शैत्यौष्ण्य-स्नैग्ध्य-रौक्ष्य-प्रस्तम्भ-वैवर्ण्यावसदनञ्चाङ्गानाम् । स्वेभ्यः

---

पूर्व्वाध्याये समासेनोपदिष्टाञ्च विप्रतिपत्तिं पुनर्विशदं व्याचिख्यासुरिदानीं स्वभावविप्रतिपत्तिं नामाधिकरोति अथात इत्यादिना । स्वीयोऽङ्गादिर्भावः स्वभावः, शेषं समानम् ॥ १ ॥

स्वभावेत्यादि । प्रकृत्या प्रसिद्धाः स्वभावप्रसिद्धाः । समासेनोक्तमर्थं पुनर्विशदयति तद्यथेति । शुक्लानां दन्तादीनाम्, कृष्णानां केशादीनाम्, रक्तानामोष्ठादीनाम्, स्थिराणां कठिनानामस्थ्यादीनामस्थिरत्वं मृदुता, मृदूनामुदरादीनां स्थिरता कठिनता, चलानां जान्वसन्ध्यादीनाम्, अचलानां नासादीनाम्, पृथूनां महतामुरःप्रभृतीनां सङ्क्षिप्तत्वं सङ्कुचितत्वम्, सङ्क्षिप्तानां दृष्टिमण्डलादीनां पृथुता विस्तीर्णता, दीर्घाणां जङ्घादीनाम्, ह्रस्वानां ग्रीवादीनाम्, अपतनधर्म्मिणां नखादीनाम्, पतनधर्म्मित्वं प्रभ्रंशित्वम्, पतनधर्म्मिणां मूत्रपुरीषादीनाम् ; प्रस्तम्भः स्तब्धता । स्वेभ्य इत्यादि ।

स्वस्थः शरीरैकदेशानामवस्रस्तोत्क्षिप्त-भ्रान्तावक्षिप्त-पतित-विमुक्त-निर्गतान्तर्गत-गुरु-लघुत्वानि। प्रवालवर्णव्यङ्गप्रादुर्भावोऽप्यकस्मात्। शिराणाञ्च दर्शनं ललाटे नासावंशे वा पिडकोत्पत्तिः। ललाटे प्रभातकाले वा स्वेदः। नेत्ररोगाद्विना वाश्रुप्रवृत्तिः ॥ २ ॥

गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा कपोतकङ्कप्रभृतीनाम्। मूत्रपुरीषवृद्धिरभुञ्जानानां तत्-

---

अत्रावस्रस्तत्वं चक्षुरादीनामधोलम्बितत्वम्, उत्क्षिप्तत्वमुद्गतत्वम्, भ्रान्तत्वं चञ्चलत्वम्, अवक्षिप्तत्वं तिर्य्यक्क्षिप्तत्वमपि च तेषामेव, पतितत्वन्तु शिरोग्रीवादीनामेवेति वेदितव्यम् "न बिभर्त्ति शिरोग्रीवम्" इत्यादि चरकानुशासनात्। विमुक्तत्वं सन्धीनां मोक्षः, निर्गतत्वं जिह्वानेत्रादीनाम्, अन्तर्गतत्वमपि तेषामेव। प्रवालेत्यादि। व्यङ्गो हि नाम "नीरुजं तनुकं श्यावं मुखे व्यङ्गम्" इति वक्ष्यमाणलक्षणो रोगभेदस्तस्य प्रवालवर्णताविहीनत्वमिदमुक्तं भवतीति। शिराणाञ्चेत्यपूर्व्वाणामेव ललाटे दर्शनं ज्ञातव्यमित्यूचान "धमनीनामपूर्व्वाणां जालमत्यर्थशोभनम्। ललाटे दृश्यते यस्य षड्भिर्मासैर्मरिष्यति" इत्यात्रेयैकवाक्यत्वात्। धमनीनां शिराणामित्यर्थः, शिराधमन्योरविशेषात्। पिडकोत्पत्तिरिति पिडकेह विम्बादिवर्णेत्याहुः 'विम्बी विद्रुमवर्णाभा अक्कणोपप्रभापि वा। नासावंशे भवेद्यस्य पिडका न स सिद्ध्यति" इति स्मरणात्। पूर्व्वं वक्षसापूर्य्यत इत्यादिना लिङ्गान्तरसहकृतेऽश्रुणि जाते अरिष्टमित्युक्तम्, इदानीन्तु केवले अश्रुण्युपदिशति नेत्रेत्यादिना। अतिरोहितार्थमेतत् ॥ २ ॥

गोमयेत्यादि। अत्र विशेषयति चरकः "यस्य गोमयचूर्णाभं चूर्णं मूर्द्धनि जायते। सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम्" इति। निलयनं पतनमिति तात्पर्य्यम्। कङ्को लोहपृष्ठः पक्षिभेदः "काँक"

अशाशो भुञ्जानानाम्। स्तनमूल-हृदयोरःसु च शूलोत्पत्तयः। मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्य्ययो वा तथार्द्धाङ्गे श्वयथुः शोषोऽङ्गपक्षयोर्वा नष्ट-हीन-विकल-विकृत-स्वरता। विवर्णपुष्पप्रादुर्भावो वा दन्त-मुख-नख-शरीरेषु। यस्य वाप्सु कफ-पुरीष-रेतांसि निमज्जन्ति। यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते। स्नेहाभ्यक्तकेशाङ्ग इव यो भाति। यश्च दुर्ब्बलो भक्तद्वेषातिसाराभ्यां पीड्यते। कासमानश्च तृष्णाभिभूतः। क्षीणश्छर्द्दि-भक्तद्वेष-युक्तः सफेन-पूय-रुधिरोद्वामी हतस्वरः शूलाभिपन्नश्च मनुष्यः। शून-कर-चरण-वदनः क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणि-पादो ज्वरकासाभिभूतः। यस्तु पूर्व्वाह्णे भुक्तमपराह्णे च्छर्द्दयत्यविदग्धमतिसार्य्यते वा ज्वरकासाभिभूतः स

---

इत्याख्यायते। स्तनमूलादिषु युगपदेव शूलोत्पत्तयो विप्रतिपत्तिः। मध्ये मध्यावयवे उरोग्रीवान्तराले इति निष्कर्षः, अन्तेषु पाणिपादसमाख्येषु चतुर्ष्ववयवेषु। परिम्लायित्वं शुष्कता। अङ्गपक्षयोर्वेति। अङ्गमवयवः, पक्षस्तु बाहुकक्षपार्श्वादिविभागेनार्द्धदेहः, पुष्पाणि नेत्ररोगे वक्ष्यमाणाऽव्रणशुक्रवत् चिह्नभेदाः। यस्येत्यादि। अत्र कफादीनि सर्व्वाण्येवेति विशेषयन्त्याचार्य्याः। क्षीण इत्यादि। छर्द्दिभक्तद्वेषावत्र प्रसक्तौ बलवन्तौ च बोध्यौ। शूनेत्यादि। पिण्डिका नाम जान्वधो जङ्घासंश्रितो मांसपिण्डः, वस्तवत् व्यापाद्यमानच्छागवत् विलपन् अव्यक्तध्वनिं कुर्व्वन्नि-

स्थानात् च्यवन्ते। वस्त्रवद्विलपन् यश्च भूमौ पतति; स्रस्तांसः स्रस्तमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः॥ प्रतिबुध्यमानहृदय आर्द्रशरीरो यश्च लोष्टं लोष्टेनाभिहन्ति काष्ठं काष्ठेन तृणानि वा छिनत्ति। अधरोष्ठं दशत्युत्तरोष्ठं वा लेढि। आलुञ्चति वा कर्णौ केशांश्च। देवद्विज-सुहृद्वैद्यांश्च द्वेष्टि॥ ३॥

यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीड़यन्ति जन्मर्क्षं वा; यस्योल्काशनिभ्यामभिहन्यते होरा वा। गृह-

---

त्यर्थः। स्रस्तेत्यादि। स्रस्तोऽङ्गलोपः, मेढ्रः शिश्नः, प्रनष्टमेहनः प्रनष्टमूत्रः, "मेहनं मूत्रशिश्नयोः" इति मेदिनी। आर्द्रेत्यादि। अर्थसिद्धिं निमित्तव्याख्येयः "यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम्। आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति" इति॥ ३॥

प्रसङ्गादन्यथापि विप्रतिपत्तिमुपदिदिक्षति यस्येत्यादिना। वक्रानुवक्रे द्वे ग्रहाणां गती, तथाच सूर्यसिद्धान्तः "वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा। तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः" इति। गर्हितस्थानानि तु "लग्नं धनं सोदरश्च बन्धुः पुत्रो रिपुस्तथा। भार्या च निधनं धर्मः कर्म चायो व्ययस्तथा" इत्युक्तेषु द्वादशस्थानेषु मध्ये मारकत्वाल्लग्नाच्चन्द्राच्चाष्टमं, तथा अष्टमादष्टमस्थानं तयोर्द्वादशस्थानञ्चेत्येवमादीनि ज्योतिर्वेदविदो भाषन्ते। जन्मर्क्षं जन्मनक्षत्रम्, पीड़यन्त्यधिष्ठानेनेक्षणेन वेत्यनुसन्धेयम्। यस्येत्यादि। उल्का नाम सूर्याधिष्ठितान्नक्षत्रादेकविंशतितमं नक्षत्रम्, अशनिस्तु त्रयोविंशमित्याहुः "सूर्यभात् पञ्चमं धिष्ण्यम्" इत्युपक्रम्य "उल्का स्यादेकविंशतिः। द्वाविंशतितमं कम्पं

दार-शयनासन-यान-वाहन-मणि-रत्नोपकरणगर्हितलक्षण-निमित्त-प्रादुर्भावो वेति ॥ ४ ॥

भवन्ति चात्र ।

चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते ।
प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥
निवर्त्तते महाव्याधिः सहसा यस्य देहिनः ।
न चाहारफलं यस्य दृश्यते स विनश्यति ॥

---

तयोर्विंशश्च वञ्चकम् । निर्घातश्च चतुर्विंशमुक्ता ह्यष्टावुपग्रहाः” इति ज्योतिस्तत्त्वानुसरणात् । आभ्यामुल्काशनिभ्यां यस्य होरा जन्मलग्नमभिहन्यते सर्वतोभद्रवेधक्रमेण विध्यते स म्रियते इति पूर्व्वेणान्वयः । ज्योतिषेऽप्युक्तम् “क्रूरवेधसमायोगे यस्योपग्रहसम्भवः । तस्य मृत्युर्न सन्देहः” इति । गृहेत्यादि । शयनं खट्वा, आसनं पीठादि, यानं रथादि, वाहनमश्वादि, मणयो मुक्तादयः, रत्नानि माणिक्यादीनि, उपकरणानि गोघटादीनि । गर्हितलक्षणान्यत्र गृहस्य गृहप्रपातादि, दाराणां पश्वादिप्रसवनम्, तथा सद्यो हसन्तीनां गायन्तीनां वा चतसृणां पञ्चानां वा कन्यानां युगपत्प्रसवनम्, खट्वासनयोः सहसावसादनम्, यानस्य ध्वजे वायसादिपतनम्, वाहनस्य रोदनादि, मणिरत्नादीनां सहसा निष्प्रभत्वादि, उपकरणानाञ्चाकस्मादिजातीयप्रसवादिस्खलनभञ्जनादि चेति ज्योतिःशास्त्रीयाद्भुतप्रकरणात् महाभारतीयभीष्मविराटपर्व्वतश्चानुसन्धेयानि । निमित्तमिहाशुभशंसि चिह्नम्, तच्चाग्नेर्नीललोहितत्वादिना लक्षणीयम्, यदाह निमित्ताख्याने महाभारतम् “नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः । वामार्च्चिर्दुष्टगन्धश्च मुञ्चन् वै दारुणं स्वनम्” इत्यादि । अथ गृहादिगर्हित-

एतान्यरिष्टरूपाणि सम्यगबुध्येत यो भिषक्।
साध्यासाध्यपरीक्षायां स राज्ञः सम्मतो भवेत्॥ ५॥

इति सुश्रुतसंहितायां सूत्रस्थाने स्वभावविप्रति-
पत्तिर्नाम द्वात्रिंशोऽध्यायः।

---

लक्षणानां निमित्तत्वे सत्यपि पृथक्त्वेनोपादानमनिष्टफलत्वेनाव्यभिचारि-
त्वादित्यवधेयम्। परिशिष्टं निगदव्याख्यातम्॥ ४—५॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने स्वभावविप्रतिपत्तिर्नाम द्वात्रिंशोऽध्यायः।

# त्रयस्त्रिंशोऽध्यायः ।



अथातोऽवारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

---

आयुर्व्वेदे हि व्याधीनामसाध्यत्वं चतुर्धोपदिदिचन्त्याचार्य्याः काल-स्वभाव-रिष्टोपद्रवसंश्रयादिति निश्चीयते शास्त्रमिदं सामग्र्येणावगाह्य ; तत्र कालसंश्रितं स्वभावसंश्रितञ्चोभे इहोपदिष्टेऽपि दुरधिगमे भवतोऽतिबहुत्वादिति सम्प्रधार्य्य तत्तद्व्याधिव्याख्यानावसरे उपदेक्ष्येते, रिष्टसंश्रितन्तूपदिष्टं पूर्व्वाध्यायेष्वित्यतः पारिशेष्यादुपद्रवसंश्रितमेकविधमेव व्याधीनामसाध्यत्वं व्याचिख्यासुरिदानीमवारणीयं नामाधिकरोति अथात इत्यादिना । वार्य्यते निवार्य्यते अनेनेति वारणं प्रतीकारः, न विद्यते उपद्रवविशेषजुष्टतया वारणं प्रतीकारो येषां ते अवारणास्तानधिकृत्येति प्राग्वच्छः । कश्चित्तु रिष्टासाध्यप्रपञ्चार्थोऽयमारम्भ इत्याह, तत्तु न सम्यक् रिष्टोपद्रवयोरतितरां भेदात्, रिष्टानि हि नियमेनासाध्यैर्दोषैरुपजायन्ते इत्यवोचाम "क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः" इत्यादिवचनोपन्यासेन, उपद्रवास्तु नैवं वक्ष्यति हि सामान्येन "यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः" इति । स्यादेतत्, नन्वायुर्व्वेदे इदमाम्नायते "मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्" इत्यतः सोपद्रवाणामपि व्याधीनामवश्यं रिष्टपुरःसरत्वेनैवानिष्टापातित्वेनाभ्युपगमाद्विभज्य व्याख्यानमिदं वाङ्मात्रेण पर्य्यवस्यतीति व्यर्थोऽयं प्रयासः स्यात्, न तावद्व्यर्थः, विदितैतदर्था हि भिषजः प्रागेव रिष्टोत्पत्तेः प्रत्याख्याय प्रभवन्त्यात्मानं स्फीतेन यशसा योजयितुम् आतुरमपि च तदात्महितेन कर्म्मणेत्यवधेयम् ॥ १ ॥

उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम् ।
रसायनाद्विना वत्स तान् शृणुष्वेह सुश्रुत ॥ २ ॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः ।
अश्मरी मूढ़गर्भश्च तथैवोदरमष्टमम् ।
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ॥ ३ ॥
प्राण-मांस-क्षय-श्वास-तृष्णा-शोष-वमि-ज्वरैः ।
मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः ।
वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥ ४ ॥
शूनं सुप्तत्वचं भग्नं कम्पाध्मान-निपीड़ितम् ।
नरं रुजार्त्तिमन्तञ्च वातव्याधिर्विनाशयेत् ॥ ५ ॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ।
पिड़कापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम् ॥ ६ ॥

---

प्रकृतेऽर्थे शिष्याणां मन आक्षिपति उपद्रवैरित्यादिना । रसायन-शब्दोऽयमजहत्स्वार्थया लक्षणया तपआदावपि प्रवर्त्तत इति वक्तव्यम् "भुवन्तु मरणं रिष्टे" इत्यादिप्रागुक्तसाहचर्य्यात् । वातेत्यादि । बलापर-पर्य्यायोऽयं प्राणशब्दः, एतैर्व्यस्तैः समस्तैर्वा प्राणमांसक्षयादिभिरुपद्रुताः अतितरां क्लिष्टा इत्यर्थः ॥ २—४ ॥

उक्तमर्थं पुनः प्रपञ्चयति शूनमित्यादिना । सुप्तत्वचं स्पर्शानभिज्ञ-त्वचम् । अत्र शूनत्वादीनां समुदितत्व एवासाध्यत्वमुन्नेयम् "शैत्यशोथगुरु-त्वानि तस्मिन्नेव कफावृते" इत्यादिना वक्ष्यमाणानां वातव्याधीनां साध्यत्वे-नावगमात् । यथोक्तेत्यादि । अत्र यथोक्तेति भाविनि भूतवदुपचारा-दुक्तम् । वक्ष्यमाणैर्मक्षिकोपसर्पणादिभिरुपद्रवैर्ग्रस्तं यथोक्तोपद्रवाविष्टं वा

प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् ॥
पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ ७ ॥
तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम् ।
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ ८ ॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ।
भगन्दरात्प्रस्रवन्ति यस्य तं परिवर्ज्जयेत् ॥ ९ ॥
प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम् ।
अश्मरी, क्षपयत्याशु सिकताशर्कराऽन्विता ॥ १० ॥

---

अतिप्रस्रुतं धातुमूत्रातिस्राविणं वा, पिड़कापीड़ितं वेति वाशब्दादाविष्क्रि-यते, पिड़का वक्ष्यमाणाः शराविकाद्याः ॥ ५—६ ॥

प्रभिन्नमित्यादि । प्रभिन्नं विदीर्णम्, प्रस्रुताङ्गत्वादिभिर्धर्म्मैरन्वितं कुष्ठिनं प्रभिन्नं कुष्ठं हन्तीत्यर्थः । पञ्चकर्म्माणीह कुष्ठिनामननुवास्यत्वाद्-वमन-विरेचनास्थापन-शिरोविरेचन-शोणितावसेचनान्येव, तेषां गुणो वम-नाद्यर्हत्वं फलं वा, तमतिक्रान्तं पञ्चकर्म्मगुणातीतम्; पञ्चकर्म्माणि चेत् पूर्व्वरूपक्रियया सह चतुर्णां रसादिधातूनां क्रियाकलापास्तर्हि तेषां गुणान् वीर्य्याण्यतीतं पञ्चकर्म्मगुणातीतम् अस्थिमज्जशुक्रगतमित्येतत्, वक्ष्यति च "पञ्चमं नैवोपक्रमेत" इति । वातेत्यादि । प्रस्रवन्ति वहिर्निःसरन्ति, परि-वर्ज्जयेत् प्राज्ञ इत्युपदेशः; वातादीनां पञ्चानां पदत्रयेणोपदेशोऽन्योपद्रवाणां वैविध्यमाख्यातुम्, एषां निःसरणस्योपद्रवत्वन्तूपरिष्टादुपपादयिष्यामो नि-दानोक्तार्थतत्त्वमनुसन्धाय । प्रशूनमित्यादि । निरुद्धं हि मूत्रं दुष्टतामुपेत्य निःस्यन्देन नाभिवृषणयोः सवेदनं शोफं जनयित्वा शोणितं दूषयति येना-तुरोऽप्रतिबन्धं मृत्युमात्मीकरोतीत्युच्यते क्षपयतीति, क्षपयति परलोकाय प्रेरयतीत्यर्थः, "क्षप प्रेरणे" इति धात्वर्थस्मरणात् । शर्कराऽन्विता सिकता च क्षपयतीति समन्वयः, सिकता तदाख्यो मेहः, शर्करा चाश्मरीभेद इति

गर्भकोष्ठपरासङ्गो मक्कल्लो योनिसंवृतिः ।
हन्युस्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ॥ ११ ॥
पार्श्वसङ्ग्रान्नविद्वेष-शोफातिसारपीड़ितम् ।
विरिक्तं पूर्य्यमाणञ्च वर्जयेदुदरार्दितम् ॥ १२ ॥
यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा ।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १३ ॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान् ।
नित्यं वक्त्रेण चोच्छ्वस्यात्तं ज्वरो हन्ति मानवम् ॥ १४ ॥
हिक्काश्वासपिपासार्त्तं मूढं विभ्रान्तलोचनम् ।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १५ ॥

---

व्यक्तीभविष्यति । गर्भेत्यादि । गर्भाशये गर्भस्यात्यर्थं सक्तता गर्भकोष्ठपरासङ्गः, मक्कल्लो नाम “प्रजातायाश्च नार्य्याः” इत्यादिना गर्भिणीव्याकरणे वक्ष्यमाणः सशूलो ग्रन्थिः, योनिसंवृतिर्योनिसङ्कोचः, मूढगर्भे जाते पृथक् प्रवर्तितत्रितयं स्त्रियं हन्यात् हन्तीत्यर्थः । यथोक्ता मूढगर्भनिदाने वक्ष्यमाणा उपद्रवा विपरीतेन्द्रियार्थाऽऽक्षेपकादयश्च घ्नन्तीति योजना ॥ ७—११ ॥

पार्श्वेत्यादि । आदौ विरिक्तं विरेचनेन निर्हृतदोषतया परिम्लानोदरं, पूर्य्यमाणं पश्चादाध्मानेन पीड्यमानमित्यर्थः । य इत्यादि । यो विसंज्ञो विह्वलस्ताम्यति मुह्यति, अपिशब्दः समुच्चयार्थः, यश्च निपतितः सन्नुत्थातुमसमर्थत्वेन निरन्तरं पतित एव शेते स्वपिति ; यश्च वा शीतार्दितो बहिः शीतार्त्तः, अन्तरुष्णोऽन्तर्दाहवांश्च । हृष्टरोमा रोमाञ्चितदेहः, हृदि हृदयप्रदेशे सङ्घातशूलवानिति, संहन्यतेऽतितरां संश्लिष्टत्वेन पीड्यते अनेनेति सङ्घातः कर्मणि घञ् आत्ययिकशूल इत्यर्थः, अत्र सङ्घातशूल इति वक्तव्ये

आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च ।
क्षीणशोणितमांसञ्च नरं क्षपयति ज्वरः ॥ १६ ॥
श्वास-शूल-पिपासार्त्तं क्षीणं ज्वरनिपीड़ितम् ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ १७ ॥
शूक्ताक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ १८ ॥
श्वासशूलपिपासान्न-विद्वेषग्रन्थिमूढ़ताः ।
भवन्ति दुर्ब्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः ॥ १९ ॥
आध्मातं बहुनिष्यन्दं छर्द्दिहिक्काटड़न्वितम् ।
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥ २० ॥
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ।
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ॥ २१ ॥
लोहितं छर्द्दयेद्यश्च बहुशो लोहितेक्षणः ।
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति ॥ २२ ॥

---

अत्वर्थीयः शूलस्य नैरन्तर्य्यमाख्यातुम् । हिक्केत्यादि । हिक्कादिभिः समस्तै-र्ब्बलवद्भिर्व्यस्तैर्वा युक्तमित्युन्नेयम् । मूढं मोहेनानुगतम्, विभ्रान्तलोचनं शश्वदितस्ततश्चलितनेत्रम् । निद्रायुक्तमतीव चेति सामान्येनोक्तमपि स्पन्दितुं सामर्थ्ये सतीति विशेषणीयं, पूर्व्वं शेते निपतित इत्युक्तः ॥ १२—१६ ॥

श्वासेत्यादि । अत्र विशेषेण नरं वृद्धमित्यनेनार्थाच्चिप्तं भवत्यवृद्धः कदाचिदुत्तिष्ठेदिति । श्वासादिभिर्मिलितं बलवद्भिरेकैकशो वाऽऽर्त्तं, क्षीणं वा, ज्वरनिपीड़ितं वा ज्वरेणात्यर्थं पीड़ितं वेत्यर्थः । ग्रन्थिरूपस्य

अवाङ्मुखस्तून्मुखो वा क्षीण-मांसबलो नरः ।
जागरिष्णुरसन्देहमुन्मादेन विनश्यति ॥ २३ ॥
बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम् ।
नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत् ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽवारणीयो
नाम त्रयस्त्रिंशोऽध्यायः ।

---

मुखस्याकस्माद्दीनता अभिद्रुतता । बद्धनिःस्यन्दं बद्धमूत्रम् । अवाङ्मुखोऽधोमुखः, उन्मुखस्तूर्द्धमुखः । अपस्मरन्तमिति "स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्ज्जने" इत्याद्यनागतविधानात् स्मृतिं त्यजन्तमपस्मारं नाम रोगमापद्यमानमित्यर्थः । चलितभ्रुवं तिर्य्यगाक्षिप्तभ्रुवम्, नेत्राभ्यां विकुर्व्वाणं तिर्य्यक्क्षेपणादिरूपां विक्रियां कुर्व्वाणमित्यर्थः ॥ १७—२४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने अवारणीयो नाम त्रयस्त्रिंशोऽध्यायः ।

---

# चतुस्त्रिंशोऽध्यायः ।



अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः ॥ १ ॥

नृपतेर्युक्तसेनस्य परानभिजिगीषतः ।
भिषजा रक्षणं कार्य्यं यथा तदुपदेक्ष्यते ॥ २ ॥
विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ।
रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ ३ ॥
पन्थानमुदकं छायां भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयस्तच्च जानीयाच्छोधयेत्तथा ।
तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥ ४ ॥

---

विपरीताविपरीतव्रणविज्ञानीयादारभ्य अवारणीयान्तैरध्यायैर्यान्युदाहृतान्यनिष्टप्रत्ययार्थान्यरिष्टादीनि तेभ्यस्त्वतितरां विषादितो राज्ञोऽरक्षणं विशिष्यते प्रकर्षेण व्याध्यनपेक्ष्यानिष्टफलकत्वात् वक्ष्यति च "प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः" इत्यतो राज्ञो रक्षणमवश्यं सूत्रयितव्यमित्येव मन्वानो भगवांस्तन्त्रकारोऽवारणीयादनन्तरं युक्तसेनीयं नामाधिकरोति अथात इत्यादिना । युक्ता संग्रामार्थं नियुक्ता सेना चतुरङ्गं बलमस्येति युक्तसेनोऽस्यमित्रः शत्रुमभिसामर्थ्येन गन्तेति यावत् ; पदमिदं सामान्येनोक्तमपि तथाविधं राजानमेव लक्षयतीति गम्यते अनन्तरं "नृपतेर्युक्तसेनस्य" इत्युक्तेः, तं तद्रक्षणं वाधिकृत्य कृतोऽध्यायो युक्तसेनीयः ॥ १ ॥

प्रकृतार्थं सूत्रयति नृपतेरित्यादिना । अत्र नृपतेर्युक्तसेनत्वेन विशेषणं तदवस्थायामेव विशेषेण रक्षणस्यौचित्यादित्यवधेयम् । यात्रेह प्रकृतत्वाज्जयार्थमेव गमनम् । आयुर्व्वेदवाक्यानि हि सूत्रैरुदाहृत्य व्याख्यायन्ते

एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते ।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥ ५ ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥ ६ ॥
ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्व्वेदमभाषत ।
पुरोहितमते तस्माद्वर्त्तेत भिषगात्मवान् ॥ ७ ॥

---

तदिदमुच्यते यन्नानमित्यादि । दूषयन्ति विषेणेति शेषः, शोधयेन्निर्विषी-कुर्य्यात् । प्रवक्ष्यति "राज्ञोऽरिदेशे" इत्यादिना ग्रन्थसन्दर्भेण ॥ २—४ ॥

नन्विदमामनन्ति "नाऽकाले म्रियते कश्चित् प्राप्तकालो न जीवति" इति, तत्कृतमकिञ्चित्करेणानेनारम्भेणेत्येवं ये प्रत्यवतिष्ठन्ते तान् पुनः कटाक्षयन्नाह एकेत्यादि । तथैकोत्तरमृत्युशतमध्ये एको मृत्युः कालसंज्ञः, शेषाः शतमेवागन्तवो विषमाभ्यवहारादितोऽभिचारादितश्च आगमनशीलाः अनियतत्वेनाकालजाता इति यावत् । एतच्चात्रेयेण जनपदोद्ध्वंसनीये विशदं निरूपितं नातोऽकिञ्चित्करोऽयमारम्भ इति निगूढो भावः ॥ ५ ॥

तेषामागन्तुसमाख्यानां मृत्यूनां प्रतिषेधायोपदिदिक्षति दोषेत्यादि । दोषागन्तुजमृत्युभ्यो यथाक्रमं प्राक् पश्चाच्च दोषसम्बन्धात् विषमाभ्यवहार-निमित्तेभ्योऽभिचारादिनिमित्तेभ्यश्च प्रागुक्तागन्तुसमाख्येभ्यो मृत्युभ्य इत्यर्थः । रसमन्त्रविशारदौ द्रव्यमन्त्रविचक्षणौ "रसः * * * तिक्तादौ द्रव्यरागयोः" इति मेदिनी । किन्नु खलु भगवन् भिषग्विद्यायां पुरोहितसामर्थ्यमभि-समीक्ष्येदमुच्यते वैद्यपुरोहिताविव्यत आह ब्रह्मेत्यादि । वेदाङ्गमिवेति वेदाङ्गं दृष्टप्रधानत्वेऽपि क्वचिदलौकिकार्थप्रमापकत्वात् अथर्व्ववेदस्योपाङ्ग-मित्येतत् ; न चायमर्थोऽनुपपन्नः, "यदुपाङ्गमथर्व्ववेदस्य" इत्यतिक्रान्तावे-क्षणात्, तथाच ब्रह्मा यमष्टाङ्गमायुर्व्वेदमभाषत स यस्माद्वेदाङ्गम् "अङ्गानि वेदाश्चत्वारः" इत्यादि प्रागुपस्थापितविष्णुपुराणीयस्मरणात् क्वचिल्लोका-

सङ्करः सर्व्ववर्णानां प्रणाशो धर्म्मकर्म्मणाम् ।
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः ॥ ८ ॥
पुरुषाणां नृपाणाञ्च केवलं तुल्यमूर्त्तिता ।
आज्ञा त्यागः क्षमा धैर्य्यं विक्रमश्चाप्यमानुषः ॥ ९ ॥
तस्माद्देवमिवाभीक्ष्णं वाङ्मनःकर्म्मभिः शुभैः ।
चिन्तयेन्नृपतिं नित्यं श्रेयांसीच्छन्विचक्षणः ॥ १० ॥
स्कन्धावारे च महति राजगेहादनन्तरम् ।
भवेत्सन्निहितो वैद्यः सर्व्वोपकरणान्वितः ॥ ११ ॥
तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ।
उपसर्पन्त्यमोहेन विषशल्यामयार्द्दिताः ॥ १२ ॥
स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्ववहिष्कृतः ।
वैद्यो ध्वज इवाभाति नृपतद्विधपूजितः ॥ १३ ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ।
एते पादाश्चिकित्सायाः कर्म्मसाधनहेतवः ॥ १४ ॥

---

तीतार्थप्रमापकतया धर्म्मप्रमितिसाधनेन वेदाङ्गेनोपमितः, तस्मात् आयुर्व्वेदस्य वेदाङ्गेनोपमितत्वादात्मवान् कार्य्यकुशलो भिषक् पुरोहितस्य मतं ज्ञानं यत्र तस्मिन् पुरोहितमते देवार्च्चनादौ कृते सति प्रवर्त्तेत प्रतिकर्त्तुम्, भिषग्विद्यायां विदितवेदितव्यत्वेऽप्यात्मनस्तस्मिन् जपयज्ञादिसाध्ये लोकातीते अर्थे असामर्थ्यादित्युच्यते वैद्यपुरोहितावित्ययमभिसन्धिः ॥ ६—७ ॥

किन्तु स्खलितरान् हित्वा नृपतेरेव रक्षणमभीप्सन्त्यायुर्व्वेदविद इत्याशङ्क्य तदरक्षणे दोषं दर्शयन् नृपतिं स्तौति सङ्कर इत्यादिना विचक्षण इत्यन्तेन श्लोकत्रितयेन। स्कन्धेत्यादि। स्कन्धावारे युद्धार्थमुद्युक्तानां सैन्यानां

गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक्।
व्याधिमल्पेन कालेन महान्तमपि साधयेत्॥ १५॥
वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं विनाध्वरे॥ १६॥
वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि॥ १७॥
तत्त्वाधिगतशास्त्रार्थो दृढ़कर्म्मा स्वयंकृती।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः।
सत्यधर्म्मपरो यश्च स भिषक् पाद उच्यते॥ १८॥
आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि।
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते॥ १९॥

---

सन्निवेशे, अनन्तरम् अदूरम्। उद्गाता सामवेदवित्, होता ऋग्वेदवित्, ब्रह्मा च यज्ञसंसिद्धेर्व्वाचकः "भाषेत यज्ञसंसिद्धिम्" इति गोभिलः, होता अन्यथा क्रियमाणे कर्म्मणि तत्सिद्ध्यर्थम् एतदेवं कुरु एतत् कृत्वा एतत् कुरु इत्यादि ब्रह्मा भाषेत इति तदर्थः। अध्वर्य्युस्तु यजुर्व्वेदवित् स एव सर्व्व-कर्म्मोपदेशक इति तस्य प्राधान्यम्। प्लवमुडुपम्, प्रतिस्रोतस्यपि नौका-दण्डादिकं निःक्षिप्य नौगुणमाकृष्य वा तरन्तीति प्रतितराः पोतवाहाः, कर्णधारो नाविकः॥ ८—१७॥

स्वयमात्मना कृतमनेनेति स्वयंकृती। सज्जानि उपस्करभेषजानि यन्त्र-शस्त्रादिसमाख्यान्युपकरणानि भेषजानि च येन स सज्जोपस्करभेषजः। प्रत्युत्पन्नमतिस्तत्कालोचितबुद्धिः। व्यवसायी इदमेवैतदित्येवं निश्चयबुद्धिः

प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम् ।
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारि विपर्य्यये ।
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥ २० ॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ २१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने युक्तसेनीयो
नाम चतुस्त्रिंशोऽध्यायः ।

---

उद्यमशीलो वा । विशारदः सदसद्विवेककुशलः, आयुष्मान् वक्ष्यमाण-दीर्घायुर्लक्षणान्वितः, सत्त्ववानिति सत्त्वन्तु "व्यसनाभ्युदयक्रियादिस्थाने-ष्ववैकल्यकरम्" इति वक्ष्यति, तद्वानित्यर्थः । साध्यो रिष्टोपद्रवरहितत्वेना-नतिक्रान्तक्रियापथः, आत्मवान् सर्व्वासु शारीरावस्थास्वभिज्ञः, आस्तिकः परलोकास्तित्वमतिः, एतेन पापभीरुत्वं सूचितम् । युक्तमात्रं हीनातिमात्रो-पयोगदोषविरहितम्, विपर्य्यये यत्किञ्चिदुपयोगव्यतिक्रमेऽपि अविकारि विकारं कर्त्तुमनर्हम् । समीक्ष्य दोषबलादिकं विमृश्य काल एव दत्तम्, चकारोऽवधारणार्थः । निन्दको हि परिचर आतुरविषादमापादयति तदिदमुच्यते अजुगुप्सुरिति । परिशिष्टं निगदव्याख्यातम् ॥ १८—२१ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने युक्तसेनीयो नाम चतुस्त्रिंशोऽध्यायः ।

# पञ्चत्रिंशोऽध्यायः ।

अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्ष्येत । सत्यायुषि व्याध्यृत्वग्नि--वयो--देह--बल--सत्त्व--सात्म्य--प्रकृति-भेषज-देशान् परीक्षेत ॥ २ ॥

तत्र जङ्घापाणि--पाद--पार्श्व--पृष्ठ--स्तनाग्र--दशन-वदन-स्कन्ध-ललाटं दीर्घाङ्गुलिपर्व्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रू-

भगवन्नुपदिष्टानां चतुर्णां पादानामुपस्थिते समवाये तत्रभवान् प्रतीकाराय समुत्सुको भिषक् प्रथमं तावत् कतमानुपायानवलम्बेत नियमेनाखीयं यशः स्फीतीकर्त्तुमित्येवंवादिनामवसरं सुधन्नातुरोपक्रमणीयं नामाधिकारोति अथात इत्यादिना । उपक्रमणमिहोपायं ज्ञात्वा यथावत् प्रतीकारार्थमेवारम्भः प्रकृतत्वात्, न चोपपूर्व्वस्य क्रमेरर्थोऽयमनुपपन्नः "उपायपूर्व्व आरम्भ उपधा चाप्युपक्रमः" इत्यादिकोषप्रामाण्यात् । शेषं समानम् ॥ १ ॥

आतुरेत्यादि । उपक्रममाणेन प्रतीकारार्थमारभमाणेनेत्यर्थः । अविद्यमाने ह्यायुषि भिषजः सर्व्वे प्रयासा व्यर्थाः स्युस्तदिदमुच्यते सतीत्यादि । अपिरवधारणार्थः सत्येवायुषीत्यर्थः ॥ २ ॥

न च तावद्दिष्टादिरहितत्व एव पर्य्याप्तमायुरध्यवसेयुरित्यत आह तत्रेत्यादि । पाण्यादीनां महत्त्वादिकन्त्वत्र वक्ष्यमाणप्रमाणतः किञ्चिदाधिक्येनानुमानेन च वेदितव्यम् । पाणिस्तत्र मणिवन्धतोऽङ्गुलीपर्य्यन्तो भागः । उच्छ्वासः श्वासः, दीर्घस्यास्यायुष्यलिङ्गता चरकेऽप्युक्ता "ऋज्वी महोच्छ्वासा वंशसम्पन्नेषदवनताग्रा नासिका" इत्यनेन ग्रन्थेन दीर्घता चास्य

स्तनान्तरोरस्कं ह्रस्व-जङ्घा-मेढ्र-ग्रीवं गम्भीर-सत्त्व-स्वर-नाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति । तमेकान्तेनोपक्रमेत् । एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्य-मायुरिति ॥ ३ ॥

भवन्ति चात्र ।

गूढसन्धिशिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ।
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥
गर्भात्प्रभृत्यरोगो यः शनैः समुपचीयते ।
शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥ ४ ॥

---

सुप्त्यवस्थायामेव प्रत्येतव्या विशेषेण । प्रेक्षणं नेत्रम् । सत्त्वं स्वभाव-मित्यनर्थान्तरम् "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी । उपचितौ मांसलौ महान्तौ रोमशौ च कर्णावस्येति उपचितमहारोमश-कर्णस्तं तथोक्तम् । पश्चान्मस्तिष्कं शिरःपश्चाद्देशे श्रौन्नत्या विस्तृततया चानुमितं प्रचुरतरं मस्तिष्कमस्येति तात्पर्य्यम् । स्नातानुलिप्तं पूर्व्वं स्नातः पश्चादनुलिप्तस्तं तथोक्तम्, पदमिदं मूर्द्धेत्यादिना सम्बध्यते । दीर्घायुष्ट्वञ्च सप्तत्यधिकजीवित्वादेवेति निश्चीयते, सप्ततेरूर्द्धं हि वृद्धमाचक्षत इति नि-वेदयिष्यते । एभिरित्यादि । विपरीतैः केनाप्यंशेन प्रतिकूलैरित्यर्थः । तथाच पूर्व्वोक्तानां प्रत्यवमर्शार्थमेभिरिति नानुपपन्नम्, "एकदेशविकृतमनन्यवत्" इति न्यायात् ॥ ३ ॥

गूढेत्यादि । गूढा मांसादिसंवृताः सन्ध्यादयोऽस्येति गूढसन्धिशिरा-

मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ।
अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥
द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ ।
नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः ।
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ॥ ५ ॥
जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ।
ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् ॥
तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् ।
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ॥
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम् ॥ ६ ॥

---

स्यायुः, संक्षिप्ताङ्गो दृढशरीरः, उत्तरोत्तरसुखेन कौमाराद्यानुपूर्व्व्येण क्रमशः पुष्टशरीरः। पूर्व्वम् चातुर्य्यं छित्वा क्रमशः स्वस्थस्य दीर्घायुष्ट्वमुक्तम्, इदानीन्त्वाक्रान्तरोऽनातुरस्य दीर्घायुष्ट्वमुपदिश्यते गर्भादित्यादिना। ज्ञानं बुद्धिः, विज्ञानं शिल्पादिज्ञानम्। मध्यमस्येत्यादि। अधस्तादित्यध-स्तादधो सम्भागतोऽपि, तयोरधस्तादक्षयोः, चक्षुषोऽधोभागस्थितय इत्यर्थः। अत्र सप्ततिः परममायुरिति नायुक्तं सप्ततेश्चरममध्यमत्वेन विवक्षितत्वात् ॥ ४—५ ॥

जघन्यस्येत्यादि। पर्व्वाणि सन्धयो ह्रस्वानि वक्ष्यमाणप्रमाणतोऽनु-ल्पतश्च दीर्घत्वेनानुभूतानीत्यर्थः। अवलीढानि भक्षितानि निम्नानीति तात्पर्य्यम्, यद्वेदं पर्व्वाणीति पूर्व्वेण समन्वीयते, तथाच यस्योरसि पञ्ज-रास्थिसञ्चयः प्रणता भवन्तीति निष्कर्षः ॥ ६ ॥

अथ पुनरायुषो विज्ञानार्थमङ्ग-प्रत्यङ्ग-प्रमाण-सारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधि-सक्थि-बाहु-शिरांसि, तदवयवाः प्रत्यङ्गानीति। तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीना। चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले। पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्दशाङ्गुलायतः पादः। चतुर्दशाङ्गुलपरिणाहानि पाद-गुल्फ-जङ्घा-जानुमध्यानि। अष्टादशाङ्गुला जङ्घा, जानूपरिष्टाच्च द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू ॥ ७ ॥

द्व्यङ्गुलानि वृषण-चिबुक-दशन-नासापुटभाग-कर्णमूल-नयनान्तराणि। चतुरङ्गुलानि मेहन-वदनान्तर-नासा-कर्ण-

---

अथेत्यादि। अन्तरमिह सक्थ्यादीनामवकाश आधीयते अत्रेति अन्तराधिः, शिरसोऽत्र सग्रीवत्वेनैव परिग्रहः क्रियते "द्वौ बाहू द्वे सक्थिनी शिरोग्रीवमन्तराधिरिति षडङ्गम्" इति चरकानुशासनात्। प्रपदं पादाग्रम्, अङ्गुष्ठं हित्वा पादस्याग्रो भाग इति निष्कर्षः, तदनन्तरस्तलगतो भागः पादतलम्, पार्ष्णिर्गुल्फस्याधोभागः, अस्यायतता गुल्फं प्रत्येव लक्षणीया, विस्तृतता च पादतलं प्रतीति ब्रूमः, तथा चाङ्गुष्ठेन समं प्रपदपादतलायामौ पार्ष्णेः परिणाहश्च मिलित्वा चतुर्दशाङ्गुलं भवतीति युक्तमुक्तं चतुर्दशाङ्गुलायतः पाद इति; पादप्रमाणमेतत् प्रमाणान्तरानपेक्षं वा। अतिरोहितार्थमन्यत् ॥ ७ ॥

द्व्यङ्गुलानीत्यादि। वृषणप्रमाणं न त्वण्डकोषः; चरके तस्य षडङ्गुलत्वेनाभिधानात्। चिबुकमधरौष्ठादधोभागस्तच्च द्व्यङ्गुलं विस्तारत एव, दशनास्त्वायामेन, द्वयोर्नासापुटयोर्बहिर्भागो नासापुटभागः, नयनयोरन्त-

ललाट-ग्रीवोच्छ्राय-दृष्ट्यन्तराणि, द्वादशाङ्गुलानि भगविस्तार-मेहन-नाभि-हृदय-ग्रीवा-स्तनान्तर-मुखायाम-मणिबन्ध-प्रकोष्ठ-स्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठ-कूर्परान्तरायामः षोड़शाङ्गुलः। चतुर्विंशत्यङ्गुलो हस्तः। द्वात्रिंशदङ्गुल-परिमाणौ भुजौ, द्वात्रिंशत्परिणाहावूरू। मणिबन्धकूर्परा-न्तरं षोड़शाङ्गुलम्। तलं षट्चतुरङ्गुलायाम-विस्तारम्। अङ्गुष्ठमूल-प्रदेशिनी-श्रवणापाङ्गान्तर-मध्यमाङ्गुल्यौ पञ्चा-ङ्गुले। सार्द्धचतुरङ्गुले प्रदेशिन्यनामिके, सार्द्धत्र्यङ्गुलौ

---

रालं नयनान्तरम्, मेहनं मेढ्रम्, ग्रीवोच्छ्रायो ग्रीवोन्नतिर्ग्रीवायाम इति यावत्, दयोर्दृष्टिमण्डलयोरन्तरं दृष्ट्यन्तरम्। भगं योनिरिति पर्य्यायौ, अस्य विस्तारतो द्वादशाङ्गुलता अगर्भतायामेव लक्षणीया, परीक्षणमेव-मस्यासुकरमपि पूर्व्वाचार्य्यप्रसिद्धत्वादेवोपदिष्टमित्यनुसन्धेयम्, मेहननाभ्यो-र्हृदयग्रीवयोः स्तनयोश्चान्तरं मेहनाद्यन्तरम्, मुखं नाम "ओष्ठौ च दन्त-मूलानि दन्तजिह्वे च तालु च। गलगोष्ठादिसकलं सप्ताङ्गं मुखमुच्यते" इत्युक्तलक्षणं सप्तावयवं वदनम्, मणिबन्धः पाणिप्रकोष्ठमध्यस्थो ग्रन्थिः, प्रकोष्ठशब्दस्तु सामान्यतः कूर्परादधोभागे प्रवृत्तोऽपीह मणिबन्धादूर्द्ध्वं पञ्चा-ङ्गुल एव देशे प्रवर्त्तत इत्याहुः, अनुक्रमेण पीवरस्य हि कूर्परसन्धेरधोदेशस्या-विभागेन स्थौल्यतो द्वादशाङ्गुलत्वेनाभ्युपगमस्यासामञ्जस्यात्। इन्द्रेत्यादि। "पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम" इति वक्ष्यमाणलक्षणो देश इन्द्र-वस्तिरुच्यते, तत्परिणाहेन सहितोऽंसपीठकूर्परयोरन्तरायाम इन्द्रवस्तिपरि-णाहाद्यन्तरायामः। अंसो भुजशिरस्तस्य पीठमासनं बाहुसन्धिरिति यावत्, कूर्परस्तु भुजमध्यसन्धिः, भुजो बाहुः कक्षादारभ्य मध्यमाङ्गुल्यग्र-पर्य्यन्तो देश इति यावत्। अङ्गुष्ठेत्यादि। अङ्गुष्ठमूलप्रदेशिन्योस्तथा श्रवणापाङ्गयोश्चान्तरं मध्यमाङ्गुली च ते पञ्चाङ्गुले। प्रदेशिनी तर्ज्जनीति

कनिष्ठाङ्गुष्ठौ। चतुर्विंशत्यङ्गुल-विस्तार-परिणाहं मुखग्रीवं, त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभाग-परिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्त-मस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशा-ङ्गुलः, कर्णावट्वन्तरं चतुर्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति॥ ८॥

---

अनयोरन्तरम्। चतुरङ्गुलविस्तारं मुखं मुखद्वारं विंशत्यङ्गुलपरिणाहा च ग्रीवेति चतुर्विंशत्यङ्गुलविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुली-विस्तारा अङ्गुल्यास्तृतीयभागपरिणाहा नासापुटमर्य्यादा नासारन्ध्रयोः सीमा। नवमस्तारकांशो दृष्टिरित्यायुषः श्रेष्ठतमत्व एवेति निरूपणीयम् "कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः" इति वक्ष्यमाणाविरोधात्। केशानामन्तो मर्य्यादा अत्रेति व्युत्पत्त्या केशसीमायां प्रवृत्तोऽपि केशान्तशब्द इह शङ्खयोरुपर्य्येव प्रवर्त्तत इत्याहुः सामान्यशब्दस्य विशेषवृत्तित्वात्, तथाच शङ्खोर्द्धदेशात् मस्तकान्तरं मस्तकमध्यदेशः केशान्तमस्तकान्तरम्। मस्तकान्मस्तकान्तरादवटुकेशान्तो ग्रीवापश्चाद्भागस्थः केशान्तो देशः। कर्णाभ्यां परिमितमवटुसंज्ञकमन्तरं कर्णावट्वन्तरं, शाकपार्थिवादिषु द्रष्टव्यम्। पुरुषोरःप्रमाणविस्तीर्णेत्यष्टादशाङ्गुला, स्त्रीश्रोणिरित्युपचारात् स्त्रियाः श्रोणिफलकमित्येव प्रत्येतव्यम् न तु कटीति, स्वभावतो विपुल-श्रोण्या अपि स्त्रियाः पुरुषेण समं समश्रोणिकत्वापत्तेः यतो वक्ष्यति "तत्प्रमाणा पुरुषस्य कटी" इति, तत्प्रमाणा अष्टादशाङ्गुलप्रमाणा। सविंशमित्यादि विंशत्या सह वर्त्तमानं सविंशं साधितमेतत् प्रथमाध्याये; प्रमाणान्तरासम्भवे पुरुषस्य सविंशाङ्गुलशतायामत्वेऽपि दीर्घायुष्ट्वमुन्नेयमिति तात्पर्य्यम्॥ ८॥

भवन्ति चात्र ।

पञ्चविंशे ततो वर्षे पुमान्नारी तु षोड़शे ।
समत्वागतवीर्य्यौ तौ जानीयात्कुशलो भिषक् ॥ ९ ॥
देहः स्वैरङ्गुलैरेष यथावदनुकीर्त्तितः ।
युक्तप्रमाणेनानेन पुमान् वा यदि वाङ्गना ॥
दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति ।
मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथावरम् ॥ १० ॥

अथ सारान् वक्ष्यामः । स्मृति-भक्ति-प्रज्ञा-शौर्य्य-शौचो-पेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात् । स्निग्ध-संहत-श्वेतास्थि-दन्त-नखं बहुलकामप्रजं शुक्रेण । अकृशमुत्तमबलं

---

उक्तान्येतान्यङ्गप्रत्यङ्गप्रमाणानि पुंसां पञ्चविंशात्, नारीणान्तु षोड़शाद्-वर्षात् प्रभृत्येव परिलक्षितव्यानि भवन्तीति व्याजेनोपदिशन्नाह पञ्चेत्यादि । समत्वागतवीर्य्यौ पर्य्याप्ताप्यायनशक्तिकावित्यर्थः, वीर्य्यं प्रभावः शक्तिरित्यन-र्थान्तरम् । अर्थमिमं विशदयति तन्त्रान्तरम् "वर्षेऽथ पञ्चविंशे नरः सम-न्वितबलः षोड़शे नारी अर्हति मानोन्मानं जीवितभागे चतुर्थे वा" इति । अत्र स्वैरङ्गुलैः परिमायेति शेषः । दीर्घमित्यादि । चकारेणेह सुखादयो भावाः समुच्चीयन्ते "तत्रायुर्बलमोजः सुखमैश्वर्य्यं वित्तानीष्टाश्चापरे भावाभावा भवत्यायत्ताः प्रमाणवति शरीरे विपर्य्ययस्ततो हीनेऽधिके वा" इति चरकैकवाक्यत्वात् ॥ ९।१० ॥

अर्थान्तरतः शिष्याणां मन आक्षेप्तुं पुनः प्रतिजानीते अथेत्यादिना । सत्त्वसारं सत्त्वेन मनसोपलक्षितः सारः सत्त्वगुणवैशेष्यात् बलविशेषो यस्य तं तथोक्तम्, "सत्त्वमुच्यते मनः" इत्युपक्रम्य "तत्त्रिविधं बलभेदेन * * * तत्र प्रवरसत्त्वाः सत्त्वसाराः" इत्यात्रेयः । स्निग्धेत्यादि । शुक्रेणोक्तलक्षणं

स्निग्ध-गम्भीर-स्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा । महाशिरः-स्कन्ध-दृढ़दन्त-हन्वस्थि-नखमस्थिभिः । स्निग्ध-मूत्र-स्वेद-स्वरं बृहच्छरीरमायाससहिष्णुं मेदसा । अच्छिद्रगात्रं गूढ़ास्थिसन्धिं मांसोपचितञ्च मांसेन । स्निग्ध-ताम्र-नख-नयन-तालु-जिह्वौष्ठ-पाणि-पादतलं रक्तेन । सुप्रसन्न-मृदु-त्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुःसौभाग्ययोरपि ॥ ११ ॥

विशेषतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः ।
परीक्ष्यायुः सुनिपुणो भिषक्सिध्यति कर्म्मसु ॥ १२ ॥

व्याधिविशेषास्तु प्रागुक्ताः सर्व्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च ; तत्रैतान् भूयस्त्रिधा परीक्षेत किमसावौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति ॥ १३ ॥

---

विद्यात् प्रक्षतत्वात् सारवत्त्वेनेति शेषः । एवमुत्तरत्रापि यथायोगं व्याख्येयम् । अच्छिद्रगात्रमनिन्दितगात्रम् । शेषमतिरोहितार्थम् ॥११।१२॥

पूर्व्वं हि सत्यप्यायुषि व्याध्यादीन् परीक्षेतेत्युक्तं तदिदानीं व्याधीन् स्मारयन् परीक्षणप्रकारमुपदिदिक्षति व्याधीत्यादिना । तुकारेणेह व्याधीनां पुनर्वक्तव्यतां निरुणद्धि एते "साध्यान् साधयेत् याप्यान् यापयेत् असाध्यान्नोपक्रमेत्" इत्यनेन व्याजेनोपदिष्टाः साध्या याप्याः प्रत्याख्येयाश्च त्रिविधा व्याधिविशेषास्तु सर्व्व एव प्राग्व्याधिसमुद्देशीये उक्ता इति सम्बन्धः । तत्रातुरोपक्रमणकाले एतान् प्रागुक्तान् व्याधीन् भूयो विशेषेण त्रिधा परीक्षेत । कथम् ? इत्याह किमित्यादि ॥ १३ ॥

तत्रौपसर्गिको नाम यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूलमूलक एवोपद्रवसंज्ञः ॥१४॥

प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्व्वरूपोऽनुपद्रवश्च । अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः ॥१५॥

तत्र सोपद्रवस्यान्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं

---

किंलक्षणास्त औपसर्गिकादयः ? इत्यत आह तत्रेत्यादि। तत्रौपसर्गिकादिषु मध्ये यो जघन्यकालजात उत्तरकालजातस्तस्य पूर्व्वोत्पन्नस्य व्याधेर्मूलं मूलमस्येति तन्मूलमूलको व्याधिः पूर्व्वोत्पन्नं व्याधिमुपसृजति गौण्यादाश्रयति स उपद्रवसंज्ञ औपसर्गिक इति प्रसिद्धः। नामेत्यव्ययं प्राकाश्ये चरकेऽप्युक्तम् "उपद्रवस्तु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा पश्चाज्जायत इत्युपद्रवः" इति, अत्र रोग एवेति इवार्थोऽयमेव-शब्दः, तन्मूलमूलकत्वात् प्रागुत्पन्नो रोग इवेत्यर्थः। अतएव सङ्क्षेपेणोक्तःस्थान्यत्र "रोगारम्भक-दोषप्रकोपजन्योऽन्यो रोग उपद्रवः" इत्यतः "तन्मूल-एवोपद्रवसंज्ञः" इत्यनुपपन्नः पाठः ॥ १४ ॥

प्राक्केवलं विवृणोति प्रागित्यादिना। नेह "अपूर्व्वरूपः पूर्व्वरूपरहितोऽनुपद्रवश्चोपद्रवरहितः, एतेन मशकतिलकालकान्यच्छव्यङ्गादयः प्राक्केवला व्याधयः कथ्यन्ते, व्याधिस्वभावात् पूर्व्वरूपमन्तरेणापि प्रागेवोत्पद्यन्ते" इति केनचिदुक्तं युक्तं. तथात्वे सपूर्व्वरूपाणां सोपद्रवाणाञ्च ज्वरादीनामौपसर्गिकादिप्रकारत्रयेणापरिग्रहात् "तत्रैतान् भूयस्त्रिधा परीक्षेत" इत्यादि-प्रागुक्तस्यासामञ्जस्यात्; तस्मादेवं ब्रूमः य उत्पन्नो व्याधिः प्रागेव जन्मत-एवापूर्व्वरूपः पूर्व्वरूपेतरः, अनुपद्रव उपद्रवेतरश्च स प्राक्केवल इत्यर्थः। अन्यलक्षण इति, अन्ये उत्पित्सवो व्याधयो लक्ष्यन्ते अनेनेति ल्युट्, अस्यैव विवरणं य इत्यादि ॥ १५ ॥

तेषां पुनर्व्याधीनां चिकित्साप्रकारमुपदिदिक्षति तत्रेत्यादिना। सोपद्रवं व्याधिमन्योऽन्याविरोधेन सन्तर्पणादिसाध्यत्वेनापतर्पणादिसाध्यत्वेन च

वा। प्राक्केवलं यथास्वं प्रतिकुर्व्वीत। अन्यलक्षणे त्वादिव्याधौ प्रयतेत॥ १६॥

भवति चात्र।

नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्॥ १७॥

प्रागभिहिता ऋतवः।

शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्।
कृत्वा कुर्य्यात्क्रियां प्राप्तां क्रियाकालं न हापयेत्॥१८॥
अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया।
क्रिया हीनातिरिक्ता वा साध्येष्वपि न सिध्यति॥ १९॥
या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्॥ २०॥

---

सुप्रतिपन्नत्वे नातिसन्तर्पणेन नात्यपतर्पणेन च लघ्वाहारादिनेत्यर्थः। अथ सोपद्रवमिति "सहयोगे अप्रधाने" इत्यप्रधाने तृतीयाविधानादुपद्रवस्योपक्रमं प्रति सहभावमात्रं विवक्षितं भवतीति प्राधान्यतो मूलव्याधिमप्राधान्यतस्तथोपद्रवमुपक्रमेतेति निष्कर्षः। यत्तु चरके "तत्र प्रधानं व्याधिर्व्याधेर्गुणभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमात् प्रशमो भवति" इत्युक्तं, तदतिदुर्व्वलोपद्रवविषयमितीह उपद्रवोपक्रमणविधिर्नानुपपन्नः। व्याधेरादिः प्रथमावस्थेत्यादिव्याधौ राजदन्तादिषु द्रष्टव्यः, तस्मिन्नादिव्याधौ प्रयतेत "ज्वरस्य पूर्व्वरूपेषु वर्त्तमानेषु बुद्धिमान्। पाययेत घृतं स्वच्छम्" इत्यादिना विधिनेति शेषः॥ १६—१७॥

क्रमागतानृतूनधिकरोति प्रागित्यादिना। प्राक् ऋतुचर्य्याध्याये। शीतप्रतीकारमुष्णगृहवासादिना, उष्णनिवारणं शीतगृहवासादिना कृत्वा

शरीरस्थितोऽग्निरन्नस्य पाचकः। स चतुर्विधो भवति, दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति। विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्व्वसाम्यादिति ॥ २१ ॥

तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः समैर्दोषैः। यः कदाचित् सम्यक् पचति कदाचिदाध्मान-शूलोदावर्त्तातिसार-जठर-गौरवान्त्रकूजन-प्रवाहणानि कृत्वा स विषमः। यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते; स मुहुर्मुहुः प्रभूत-मप्युपयुक्तमन्नमाशुतरं पचति पाकान्ते च गल-ताल्वोष्ठ-शोष-दाह-सन्तापान् जनयति। यस्तु स्वल्पमप्युपयुक्तमुदर-शिरोगौरव-कास-श्वास-प्रसेक-च्छर्द्दि-गात्रसदनानि कृत्वा महता कालेन पचति स मन्दः ॥ २२ ॥

विषमो वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान्।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥ २३ ॥

तत्र समे परिरक्षणं कुर्व्वीत, विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत, तीक्ष्णे मधुर-स्निग्ध-शीतैर्विरे-

---

आप्तासूचितां क्रियां कुर्य्यादित्यर्थः। क्रियत्कालहापने दोषं दर्शयन्नधिक-मपि कञ्चिदर्थमुपदिदिक्षति अप्राप्त इत्यादिना श्लोकद्वयेन ॥ १८—२० ॥

क्रमागतोऽग्निरधिक्रियते शरीरेत्यादिना। प्राग्व्रणप्रश्ने अभिहितः

पक्वैश्च, एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीर-दधि-सर्पिर्भिः मन्दे कटु-तिक्त-कषायैर्वमनैश्च ॥ २४ ॥

जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः ।
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥ २५ ॥
प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः ।
ध्मायते पाल्यते चापि स्वां स्वां गतिमवस्थितैः ॥ २६ ॥

---

"पक्वामाशयमध्यस्थं पित्तम्" इत्यादिना ग्रन्थसन्दर्भेण । दोषान् अनापन्नो दोषानभिपन्नोऽदोषदुष्ट इत्यर्थः ॥ २१—२४ ॥

नन्वग्निरयं भूताग्नितः कं नाम विशेषमाश्रयते, येन दाहादिकं हित्वा "विसर्गादानविक्षेपैः" इत्यादिना प्रागुपदिष्टेऽचिन्त्ये रसादाणादौ प्रवर्त्तते, नैतत्श्रवणमात्रेणाप्यवगच्छामस्तदिदानीं विशदं विज्ञापयतु भगवानित्याह जाठर इत्यादि । भगवानिति प्रशंसायां वतुप्, भगं वीर्य्यम् "भगं श्री काम-माहात्म्य-वीर्य्य-यत्नार्क-कीर्त्तिषु" इत्यमरः । तदयमर्थः, "आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा । ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः" इत्यादि स्मरणात्, ईश्वर आयुरादीनां मूलत्वाच्छरीरस्य नेता भगवान् अचिन्त्यवीर्य्यः, अतएव रसानाददानोऽन्नस्य पाचको जाठरो नामाग्निः सौक्ष्म्यात् विवेक्तुं विशेषतो निर्णेतुं नैव शक्यते, केवलम् "अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इति वृहदारण्यकश्रुत्या जाठरोऽग्निरिति संज्ञा क्रियत इति भावः ॥ २५ ॥

नन्वेतच्चेत्तत्त्वं कथन्तर्ह्यन्तःशरीरे सर्व्वाध्यक्षत्वेनोपलब्धोऽयमग्निर्नियोज्यैरिव वातादिभिरन्यथयित्वा विकाराय नियुज्यते, येनोच्यते "विक्रियामापन्नस्त्रिविध" इत्युपक्रम्य "विषमो वातजान् रोगान्" इत्यादि, नाद्यापि ममास्मिन्नर्थे सम्यक् प्रत्ययो जातस्तद्विशदं विजिज्ञापयस्व भगवानित्याह प्राणेत्यादि । तुकारो विशेषणार्थः, स्वां स्वां गतिमवस्थितैः प्रकृतिस्थैः प्राणादिभिस्त्रिभिः पवनैस्त्वयं ध्मायते फुत्कारेणेव प्रज्वाल्यते, पाल्यते प्रकृतौ

वयस्तु त्रिविधं, बाल्यं मध्यं वृद्धमिति। तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः—क्षीरपाः, क्षीरान्नादाः, अन्नादा इति। तेषु संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा इति। षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पा वृद्धिर्यौवनं सम्पूर्णता हानिरिति। तत्राविंशतेर्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता। अत ऊर्द्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति। सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वली-पलित-खालित्य-जुष्टं कास-श्वास-प्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते। तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यपेक्षया प्रतिकुर्व्वीत ॥ २७ ॥

---

क्षाम्यति अभ्यवहारादिना वक्ष्यमाणेन तेन तेन कर्म्मणेति शेषः। प्रथमस्थि-तन्त्विः, यस्मादोषारोऽपि सन् प्राणादेरायत्तत्वेनावतिष्ठते, तस्मादेव वि-कृतैस्तैः प्राणादिभिर्व्विकाराय नियुज्यते इति ॥ २६ ॥

वय इत्यादि। कालप्रमाणापेक्षिणी शरीरावस्था वय इत्युच्यते। संवत्सरपराः संवत्सरेण परिच्छिन्नसीमानः। एवमेव द्विसंवत्सरपरा अपि व्याख्येयाः। "परः स्यादुत्तरे सीमापरिच्छिन्ने" इति कोषान्तरात्। विकल्पयन्तीति विकल्पाः विकल्पका इत्यर्थः। अभिवृष्टं वृष्टिभिराक्लिन्न-मित्यर्थः। तत्रेत्यादि। उत्तरोत्तरासु परापरासु वयोऽवस्थासु, उत्तरो-त्तराः क्रमवृद्धा इत्यर्थः। कियन्तं कालमेवं भेषजमात्राविशेषाः कार्य्याः

भवन्ति चात्र ।

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ २८ ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्ज्जयेत् ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ॥ २९ ॥

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः ।

कर्षयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ ।
रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ॥ ३० ॥

---

स्युरित्याह ऊत इत्यादि। पर्य्यतिशयेन हानिर्धात्विन्द्रियादीनामपचयो-ऽन्नेति परिहाणिर्हद्धावस्थेति यावत्, तदन्तरेणेत्यर्थः । चकारो विशेषणार्थः । स्यादेतत् परिहाणौ तु किम्मानेण भेषजेनातुरमुपपादयिष्याम इत्याह तत्रेत्यादि। आद्यापेक्षया बाल्यापेक्षया, बाल्यावस्थोपयोगिनीं भेषज-मात्रामाश्रित्येति तात्पर्य्यम्. हद्धानां क्रमशो धातुक्षयात् व्यक्तप्रायव्यज्य-मानाव्यक्तधात्विन्द्रियबलादीनां बालानामिव सर्व्वक्रियासहत्वादित्यय-माशयः, तेन यथा यथा वार्द्धक्यक्षतेन धातुक्षयेण वयवृद्धो बालवत् धात्वादिबलमनुमीयते, तथा तथा वार्द्धक्ये तावद्वयो बालवदेव प्रतिकुर्व्वी-तेति सुधियो मन्यन्ते ॥ २७ ॥

मा भूत् "आद्यापेक्षया प्रतिकुर्व्वीत" इति प्रागुक्तेन प्रतीकारविधौ बालवदेव हद्धानां दोषोऽप्यवेक्षितव्य इति प्रतीतिरित्यतो विशिनष्टि बाल-इत्यादिना। स च श्लेष्मा तच्च पित्तं स च वायुरिति तत् "नपुंसकमनपुं-सकेन" इति क्लीबशेष एकवच्च ; तान् श्लेष्मादीनित्यर्थः । वीक्ष्येति समन्वयः, योजयेत् भेषजमिति शेषः । पुनर्व्विशिनष्टि अग्नीत्यादिना । देह इत्यादि। प्रागिति दोषादिविज्ञानीये ॥ २८—३० ॥

बलमभिहितगुणं दौर्ब्बल्यन्तु स्वभावदोषजरादिभिरवेक्षितव्यम्। यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्॥ ३१॥

केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः।
तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत्॥ ३२॥

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम्।
सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना।
राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः॥ ३३॥

---

बलमित्यादि। निन्दितं बलमस्येति दुर्ब्बलस्तस्य भावो दौर्ब्बल्यम्, बलापचय इति यावत्। बलं दौर्ब्बल्यञ्चाभिहितगुणं दोषादिविज्ञानीये "बलेन स्थिरोपचितमांसता" इत्यादिना ग्रन्थसन्दर्भेण। तं च स्वभावादिभिर्व्विना न केनचिदप्युपायेन विज्ञातुं शक्नोति तदिदमुच्यते स्वभावेत्यादि। स्वीया व्यायामशक्त्यादिका भावाः स्वभावाः, दोषाः कुपिताकुपिता वातादयः, जरा वार्द्धक्यम्, आदिग्रहणादजरादीनामादेशः। अर्थोऽयं प्रागुपदिष्टोऽपि श्लोकेनेह पुनरुपदिश्यत इति न पौनरुक्त्यम्। यदुक्तम् "गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते। तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गण्यते" इति। प्रक्रियायां बलं स्तौति यस्मादित्यादिना। इदानीं पुनः "बलेन स्थिरोपचितमांसता" इत्यस्य व्यभिचारं प्रदर्शयन् विशिनष्टि केचिदित्यादिना। स्थिरत्वं दृढत्वमित्यनर्थान्तरम्॥ ३१।३२॥

सत्त्वमित्यादि। सत्त्व सांख्यप्रसिद्धः प्रकाशकः प्रकृत्यवयवभेदः। व्यसनं विपत्तिः, अभ्युदयोऽभीष्टलाभः, क्रियादिस्थानं छेदन-भेदन-लङ्घनादीनां स्थित्यधिकरणः कालः। तेषु तथोक्तेषु, अवैकल्यकरमवैक्लव्यकरम्। सत्त्वं वैशद्येनावबोधयन् सात्त्विकं व्याचष्टे सत्त्ववानिति। अत्राप्रकृतावपि राजसतामसौ भिषक्कर्म्मानुगुणत्वेनोपदिश्येते राजस इत्यादिना॥ ३३॥

सात्म्यानि तु देश-जात्यृतु-रोग-व्यायामोदक-दिवास्वप्न-प्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति ॥३४॥

यो रसः कल्पते यस्य सुखायैव निषेवितः ।
व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्द्दिशेत् ॥
प्रकृतिं भेषजञ्चोपरिष्टाद्वक्ष्यामः ॥ ३५ ॥

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र बहूदक-निम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः । आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्प-वर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्प-

---

सात्म्यानीत्यादि । जातिशब्दस्येह जन्मतः शीलिते आहारविहारादावेव तात्पर्य्यमित्याहुः, मुख्यार्थस्यासम्भवात् "जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि" इति प्रागुक्तेनानुगतत्वाच्च । रोगास्त्वर्व्वुदतिलकालकादय एवेति प्रत्येतव्यम् । प्रभृतिग्रहणादहिफेनादीनामनशनादीनाञ्चादेशः । तदयमर्थः, देशादीनि यानि प्रकृत्या विरुद्धानि प्रकृतिविरुद्धानि तत्तद्-वातादिप्रकृतेस्तुल्यगुणत्वेनातितरामनिष्टापातित्वेनोपलब्धानीत्यर्थः, अपेः समुच्चयार्थत्वात्तद्विपरीतानि वा स्वल्पबाधकराणि भवन्ति, तानि सात्म्यानीति समन्वयः । न च तावदर्व्वुदादीनां मनस आबाधकरत्वादसात्म्यत्वमिति वाच्यम्, तथाविधस्याबाधस्याकिञ्चित्करत्वेनाविवक्षितत्वात् । उक्तमर्थं सङ्क्षेपतः श्लोकेन विशदयति य इत्यादिना । स्पष्टम् । एतेन यत् सातत्येनोपयुज्यमानमुपशेते तत् सात्म्यमिति निष्कर्षः । प्रकृतिमित्यादि । उपरिष्टादिति गर्भव्याकरणे शारीरे भूमिप्रविभागीयादिषु च ॥ ३४।३५ ॥

देश इत्यादि । आकाशसमः अल्पवृक्षत्वेन निरावरणो निम्नोन्नतत्व-

शैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः। उभयदेशलक्षणः साधारण इति ॥ ३६ ॥

भवन्ति चात्र।

समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः।
दोषाणां समता जन्तोस्तस्मात् साधारणो मतः ॥ ३७ ॥
न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः।
स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः ॥ ३८ ॥
उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति ॥ ३९ ॥

---

रहितश्चेत्यर्थः। समा इत्यादि। तस्मात् शीतादीनां दोषाणाञ्च साम्ये-नावस्थानात् साधारणो जाङ्गलानूप्यामिश्रलिङ्ग इत्यर्थः। स्यादेतत् कथन्नु खलु देशप्रतिकूलमाहारविहारं कुर्व्वतामपि नराणाम् ऋतुविपर्य्ययादिभिस्तैस्तैर्हेतुभिर्दशेन तुल्यगुणे दोषे सञ्चिते देशविपर्य्यासमभीप्सन्ति भिषजस्तत्तदाहारादिभिरुपबृंहितबलेन तेन तेन शरीरमुपगतेनाभीप्सित-देशगुणेनाशङ्कितं व्याधिभयमविगणय्येत्यत आह नेत्यादिश्लोकद्वयेन। आहारादौ तद्देशस्याभीप्सितदेशस्य, गुणे इत्यकारो मत्वर्थीयः, गुणे गुणवति सति उचिते परिमिते तस्मिन्नाहारादौ वर्त्तमानस्य देशकृतं भयं नास्ति सात्म्यत्वादिति योजना। तस्मात् जलजाः कूर्म्मादयः स्थलाहृताः, वा-शब्दात् स्थलजाश्च गवादयो जलाहृताः सन्तो यथा न बलवन्तः स्युस्तथैव स्वदेशे स्वगुणेन तुल्यगुणे देशे निचिताः सञ्चिता दोषाः अन्यस्मिन् स्वप्रति-कूलगुणे देशे कोपमागताः सन्तो न बलवन्तः स्युरिति कृत्वा देशविपर्य्यास-मभीप्सन्तीत्ययमाशयः। एतेन जाङ्गले सञ्चिते वातपित्ते, अनूपे च सञ्चितौ वातकफौ, प्रतिकूले अनूपे जाङ्गले च तत्तद्देशीयगौरवस्निग्धत्वा-

देशप्रकृतिसात्म्यर्त्तु-विपरीतोऽचिरोत्थितः ।
सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा ॥
केवलः समदेहाग्नेः सुखसाध्यतमो गदः ।
अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः ॥४०॥
क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥ ४१ ॥
गुणालाभेऽपि सपदि यदि सैव क्रिया हिता ।
कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥ ४२ ॥
य एवमेनं विधिमेकरूपं
बिभर्त्ति कालादिवशेन धीमान् ।

---

रिभी रौद्यलाघवादिभिरपचयात् न यथावत् प्रकुप्यन्तीति फलितम् । अत्र सञ्चितानामयथावत् प्रकुपितत्वेनाभ्युपगमात्, प्रकुपितानामपि प्रकोपलाघवमर्यादाचिख्यत इत्यवधेयम् ॥ ३६—३९ ॥

न तावत् परीक्षितव्यत्वेनोपदिष्टानां व्याध्यादीनां परीक्षितत्वादेव सर्व्वं परीक्षितव्यं परीक्षितुमलम्हत इत्यप्रकृतमपि कञ्चिदर्थमिहोपयोगित्वयोपदिदिक्षति देशेत्यादिना । केवल उपद्रवादिरहितत्वेनैकः । चरकेऽप्युक्तम् "न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्" इत्यादि । अपवादो ह्युत्सर्गं बाधत इति "ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इत्यविरुद्धम् । सङ्क्षेपतः प्रक्रियापरिपाटीमुपदिशन्नाह क्रियाया इत्यादि । व्याजेनोक्तं विधिं स्तौति य इत्यादिना । प्रशस्त एको मुख्य इत्येकरूपः "प्रशंसायां रूपप्" इति रूपप्, तं तथोक्तम् "एके मुख्यान्यकेवलाः" इत्यमरः । यो धीमान् एकरूपमतिमुख्यम्, एनं "क्रियायाः" इत्यादिना उक्तं विधिम्, कालादिवशेन ऋत्व-

स मृत्युपाशान् जगतो गदौघां-
श्छिनत्ति भैषज्यपरश्वधेन ॥ ४३ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने आतुरोपक्रमणीयो
नाम पञ्चत्रिंशोऽध्यायः ।

---

ग्न्यादिविवेकेन एवं विभज्य कार्य्यकाले यथावद्व्यवहरति स इति परेणा-
न्वयः । परिशिष्टं निगदव्याख्यातम् ॥ ४०—४३ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने आतुरोपक्रमणीयो नाम पञ्चत्रिंशोऽध्यायः ।

# षट्त्रिंशोऽध्यायः ।

अथातो मिश्रकमध्यायं व्याख्यास्यामः ॥ १ ॥

मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफहृत् ॥ २ ॥
दूर्व्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्व्वे प्रलेपः पित्तशोफहृत् ।
आगन्तुजे रक्तजे च एष एव विधिः स्मृतः ॥ ३ ॥
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥ ४ ॥
अजगन्धाश्वगन्धा च काला सरलया सह ।
एकैषिकाजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥ ५ ॥
एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च ।
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत् ॥ ६ ॥

---

पूर्व्वाध्यायोक्तेन विधिना परीक्षितस्यातुरस्य कर्त्तव्ये प्रतीकारे प्रायेण हि मिश्रं द्रव्यजातमायुर्व्वेद उपदिश्यत इत्यतः सामान्येन तस्मिन् व्याचिख्यासिते सत्यपि तन्त्रस्यास्य शल्याङ्गप्राधान्यात् व्रणशोफानेवाधिकृत्य किञ्चिद्व्याचिख्यासुरिदानीं मिश्रकं नामाधिकरोति अथात इत्यादिना । मिश्रं संयुतमालेपनादिद्रव्यजातमाचष्टे इति णिचि अच्, स्वार्थिकश्च कः, शेषं समानम् ॥ १ ॥

मातुलुङ्गेत्यादि । मातुलुङ्गाऽग्निमन्थाऽहिंस्राः नामौषधयो यथाक्रमं "छोलङ्गजम्बीर, गणियारि, काँटागड़" इत्येतैः प्रसिद्धैर्नामभिरभिधीयन्ते, एषां मूलत्वचो ग्राह्या इत्यायुर्व्वेदविदः । वक्ष्यमाणाः काकोल्यादि न्यग्रोधा-

स्निग्धाम्ललवणो वाते कोष्णः शीतः पयोयुतः ।
पित्ते चोष्णः कफे क्षारमूत्राढ्यस्तत्र शस्यते ॥ ७ ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः ।
शक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥ ८ ॥
चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोत-गृध्र-कङ्काणां पुरीषाणि च दारणम् ॥ ९ ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ।
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीडनम् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥ १० ॥
शङ्खिन्यङ्कोठ-सुमनः-करवीर-सुवर्चलाः ।
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥ ११ ॥

---

उत्पलाद्या गणाः शीतला गणाः । विषघ्नो विधिः कल्पे वक्ष्यते । अज-गन्धा यमानी, कालाऽहिंस्रेति पर्य्यायौ, एकैषिका त्रिवृत्, अज-शृङ्गी "गाड़लशिङ्गा" इति प्रसिद्धा, एते मातुलुङ्गेत्यादिनोक्ता इत्यर्थः । पिण्डीतकानि शुक्लहरितपीतपुष्पभेदात् त्रिविधं मदनफलम्, अनन्ता शारिवा, प्रयोगबाहुल्यात् पुनर्विशिनष्टि स्निग्धेत्यादिना । सन्निपाते हि दोषतार-तम्यं दोषसाम्ये चोपशयमभिसमीक्ष्य यथायोगमुपयोगमभीप्सन्तीति न किञ्चित् विशेषेणोपदिश्यत इत्यनुसन्धेयम् । शणेत्यादि । किण्वं सुरा-किट्टम्, उष्णान्युष्णवीर्य्याणि कुष्ठादीनि ॥ २—८ ॥

चिरेत्यादि । चिरबिल्वः करञ्जभेदः "गोकरञ्ज" इत्याख्यायते । अग्निको भल्लातकः, हयमारकः करवीरः, क्षारद्रव्याणि पलाश-मुष्कक-प्रभृतीनि, क्षारो वेत्यग्रकुमारविषयम् । पिच्छिलानां शाल्मलीप्रभृतीनाम्, शङ्खिनी यवतिक्तेत्यात्रेयः, अङ्कोठः "केश्रीकरा" इत्यभिधीयते । सुमनाः

अजगन्धाजशृङ्गी च गवाक्षी लाङ्गलाह्वया।
पूतीकश्चित्रकः पाठा विडङ्गैला हरेणवः।
कटुत्रिकं यवक्षारो लवणानि मनःशिला॥
कासीसं त्रिवृता दन्ती हरितालं सुराह्वजा।
संशोधनीनां वर्त्तीनां द्रव्याण्येतानि निर्द्दिशेत्॥ १२॥
एतैरेवौषधैः कुर्य्यात्कल्कानपि च शोधनान्।
कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयोः।
पूर्व्वोद्दिष्टेषु चाङ्गेषु कुर्य्यात्तैलघृतानि वै॥ १३॥
अर्कोत्तमा-सुधाक्षीरं पिष्ट्वा क्षारोत्तमान्यपि।
जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम्।
पूर्व्वोद्दिष्टानि चान्यानि कुर्य्यात्संशोधनं घृतम्॥ १४॥

---

मालती, सुवर्च्चला "सूर्य्यमुखी" इति प्रसिद्धा, गवाक्षी "राखालशशा" इति लोकप्रसिद्धा, हरेणू रेणुका, कासीस सुराह्वजे यथाक्रमं "हिराकष-फिट्कारी" इति कथ्येते। संशोधनीनां सम्यक् नाड़ीव्रणशोधनीनाम्। कटुरोहिणी "कट्की" इति प्रसिद्धा। पूर्व्वोद्दिष्टेषु संशोधनार्थमुपदिष्टेषु। अत्राधिकरणनिर्द्देशादुभयोरेव क्वाथकल्कयोः परिग्रहः क्रियते "यत्राधि-करणेनोक्तिर्गणे स्यात् स्नेहसंविधौ। तत्रैव कल्कनिर्य्यूहाविष्येते" इत्यादि-स्मरणात्। क्वाथस्वत्र चतुर्गुणः, कल्कस्तु पादिकः॥ ८—१३॥

अर्केत्यादि। उत्तमा क्षीरिणी "क्षीरुनी" इत्याख्यायते, सुधा स्नुही, आसां क्षीरम् अर्कादिक्षीरम्, क्षारचूर्णादित उत्तमो येषां तानि क्षारो-त्तमानि मुष्कक-कुटजादीनि द्रव्याणि, क्षारोत्तमत्वेनैषामुपदेशः क्षारानेव ग्राहयितुमित्यनुसन्धेयम्। पूर्व्वोद्दिष्टानि शोधनकषायादिनिर्द्दिष्टानि, घृतमेतत् कल्कसाध्यमित्येव निश्चीयते पिष्ट्वेति विशेषणात्, तथाचैषां

मयूरको राजवृक्षो निम्बः कोषातकी तिलाः ।
बृहती कण्टकारी च हरितालं मनःशिला ।
शोधनानि च योज्यानि तैले द्रव्याणि शोधने ॥ १५ ॥
कासीसे सैन्धवे किण्वे वचायां रजनीद्वये ।
शोधनाङ्गेषु चान्येषु चूर्णं कुर्व्वीत शोधनम् ॥ १६ ॥
सालसारादिसारेषु पटोलत्रिफलासु च ।
रसक्रिया विधातव्या शोधनी शोधनेषु च ॥ १७ ॥
श्रीवेष्टके सर्ज्जरसे सरले देवदारुणि ।
सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम् ॥ १८ ॥
कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितः ।
शृतशीतः कषायो वा रोपणार्थेषु शस्यते ॥ १९ ॥

---

पादिकः कल्को जलं चतुर्गुणं देयम् । एतेनैवानन्तरोक्तं मयूरकादिसिद्धं तैलमपि व्याख्यातप्रायम् । मयूरकोऽपामार्गः, राजवृक्षः शम्याकः "सोँनालु" इत्याख्यायते, कोषातकी "घोषा" इति विज्ञायते, शोधनानि प्रागुक्तानि ॥ १४।१५ ॥

कासीस इत्यादि । सप्तम्योऽत्र घटकतासम्बन्धे इति व्याख्येयम्; यथा व्याप्तिपञ्चके "नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ?" इत्यत्र "घटकत्वार्थकसप्तम्या तत्पुरुषसमासात्" इति व्याख्यातं मथुरानाथेन, तद्वत्; एवमेव यथासम्भवमुत्तरत्रापि सप्तमी व्याख्येया । शोधनार्थानां कषायादीनामङ्गानि शोधनाङ्गानि तेषु तथोक्तेषु । सालसारादिर्गणो वक्ष्यमाणः, शोधनेषु शोधनाङ्गेषु, रसक्रियाघनीभूतः क्वाथः, श्रीवेष्टकः "नवनीतखोँटी" इति प्रसिद्धः, सारेषु सालसारादिसारेषु, व्रणधूपनमिति प्रकरणाच्छोधनमित्येव । क्रमेण रोपणकषायादिकमभिधत्ते कषायाणाः

सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ।
क्षीरिप्ररोहेष्वपि च वर्त्तयो रोपणाः स्मृताः ॥ २० ॥
समङ्गा सोमसरलः सोमवल्कः सचन्दनः ।
काकोल्यादिश्च कल्कः स्यात्प्रशस्तो व्रणरोपणे ॥ २१ ॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ।
काकोल्यादिश्च योज्यः स्यात्प्रशस्तो रोपणे घृते ॥ २२ ॥
कालानुसार्य्यागुरुणी हरिद्रे देवदारु च ।
प्रियङ्गवश्च रोध्रञ्च तैले योज्यानि रोपणे ॥ २३ ॥
कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ।
धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते ॥ २४ ॥
प्रियङ्गुका सर्ज्जरसः पुष्पं कासीसमेव च ।
त्वक्चूर्णं धवजञ्चैव रोपणार्थं प्रशस्यते ॥ २५ ॥

---

मित्यादिना । अनुष्णानामनुष्णवीर्य्याणाम्, कषायाणां कषायवर्गत्वेन व्याचिख्यासितानां न्यग्रोधादीनां वृक्षाणां त्वक्षु त्वग्घटितः शृतः शीतः साधितो घनवस्त्रपरिस्रुतत्वेन शोधितः कषायः "साधितः शोधितोऽपि च" इति शब्दरत्नावली, वाशब्दस्यानुक्तसमुच्चयार्थत्वात्तथाभूतः कल्कादिर्वा, रोपणार्थेषु रोपणार्हेषु व्रणेषु शस्यत इत्यर्थः ॥ १६—१८ ॥

सोमेत्यादि । सोमो नामौषधिः "वाव्ला" इत्याख्यायते । क्षीरिप्ररोहा वटादीनां शुङ्गाः, समङ्गा वराहक्रान्ता, सोमेन सहितः सरलः सोमसरलः, सोमवल्कः श्वेतखदिरः, "सोमसरला सोमवल्का सचन्दना" इति पाठे लाव्ययोरकारो मत्वर्थीयो द्रष्टव्यः । पृथक्पर्णी पृश्निपर्णी, आत्मगुप्ता "आलकुषी" इति नामतो व्यज्यते, सिता शर्करा, कालानुसार्य्या तगरम्, कङ्गुका "काउन" इत्यभिहितो धान्यभेदः, श्रवणाह्वया मुण्डितिका

त्वचन्तु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ।
रसक्रियां रोपणार्थे विदधीत यथाक्रमम् ॥ २६ ॥
अपामार्गोऽश्वगन्धा च तालपत्री सुवर्च्चला ।
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥ २७ ॥
कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ।
कुक्कुटाण्ड-कपालानि सुमनोमुकुलानि च ॥
फले शरीष-करञ्जे धातुचूर्णानि यानि च ।
व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ॥ २८ ॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्म्मसु ॥ २९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने मिश्रको
नाम षट्त्रिंशोऽध्यायः ।

---

"मुखेरी" इति नाम्ना परिचीयते, धवः प्रसिद्धो राढ़ीयो वृक्षः, श्वेतं कृष्णञ्च कासीसं पुष्पकासीसमुच्यते इति रत्नमालानुशासनात्, द्विव्रणीये वक्ष्यमाणं क्रममनतिक्रम्येति यथाक्रमं, शोधनाद्यनन्तरमित्यर्थः । तालपत्री तालमूली, उत्सादनमवचूर्णनम्, सुमनोमुकुलानि मालतीकलिकाः । यानि च धातुचूर्णानि हरिताल-मनःशिला-तुत्थक-कासीसप्रभृतीनि उत्सन्नमांसेषु व्रणेषु प्रशस्तानि छेदनीयत्वादुपयोगीनि, तान्यप्यवसादने प्रयोजयेदिति शेषः । परिशिष्टं निगदव्याख्यातम् ॥ २०—२९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने मिश्रको नाम षट्त्रिंशोऽध्यायः ।

---

# सप्तत्रिंशोऽध्यायः ।



अथातो भूमिप्रविभागीयमध्यायं व्याख्यास्यामः ॥ १ ॥

श्वभ्र-शर्कराश्म-विषम-वल्मीक-श्मशानाघातन-देवताय-तन-सिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा

नन्विदमुक्तं "प्रशस्तदेशसम्भूतम्" इत्युपक्रम्य "भेषजं पाद उच्यते" इत्यायुर्व्वेदवाक्येन च नानाप्रकृतिकानि भेषजान्यभिधीयन्त इति सिद्धकोक्तानि समवधार्य्य निश्चीयते, तदिदं जिज्ञास्यं पुनरापन्नं कतमः कतमो देशः कतमत् कतमत् भेषजं प्रत्युपदिश्यते प्राशस्त्येनेत्येवंवादिनामवसरं सम्यग्निदानीं भूमिप्रविभागीयं नामाधिकरोति अथात इत्यादिना । सामान्यतो विशेषतश्च विभागः प्रविभागः ॥ १ ॥

सामान्येन विभक्तो ह्यर्थो विशेषेण विभज्यते न पुनर्व्विशेषेण विभक्तः सामान्येनेति प्रथमं तावत् सामान्येनैव विभक्तुमभीप्सति श्वभ्रेत्यादिना । श्वभ्रं स्थूलगर्त्तः, अश्मशब्देनेह नातिक्षुद्राणामुपलानां परिग्रहः क्रियते, शर्कराशब्दसान्निध्यात् । विषमत्वमत्र विषमम्, अघातमलच्चायतनम्, यथा "अविवेक्यादेः सिद्धिः" इति साङ्ख्यकारिकायाम् "अविवेकित्वमविवेकि" इति वाचस्पतिमिश्राः, तद्वत् । तत्रायतनत्वमभिनवत्वं तच्च सद्योऽपगतोदकत्वादिनाऽनवाप्तस्वभावत्वाल्लक्षणीयम् । देवानां वन्दनस्थानं देवायतनम् । तदयमर्थः, मृद्वीमकठिनां, स्थिरां कठिनां, समां समसर्व्वभूतगुणां साधारणीमिति यावत्, कृष्णां गौरीं लोहितां वा, श्वभ्रादिभिरनुपहतामनुपसृष्टाम्, अनूषरां क्षारमृत्तिकारहिताम्, अभङ्गुरामसन्निहितनद्यादिकत्वेनाभञ्जनशीलाम्, भञ्जनशीला ह्यजातसारा भवत्यचिरस्थायित्वा-

भूमिमौषधग्रहणाय परीक्षेत। तस्यां जातमपि कृमि-विष-शस्त्रातप-पवन-दहन-तोयसंबाध-मार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्याञ्चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः ॥ २ ॥

विशेषतस्तु—तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा। स्निग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा। नानावर्णा लघ्वश्मवती प्रविरलाल्प-पाण्डु-वृक्ष-प्ररोहा अग्निगुणभूयिष्ठा। रूक्षा भस्मरासभवर्णा तनु-रूक्षकोटराल्परसवृक्षप्राया अनिलगुणभूयिष्ठा। मृद्वी

---

दित्वतो विशेषणमिदं नानुपपन्नम्, अदूरोदकां स्निग्धां प्ररोहवतीमिति भूम्नि मतुप्, प्रचुरतराङ्कुरेणानुगतां भूमिमौषधग्रहणाय परीक्षेतेति। किन्तु खलु भगवन्नुक्तलक्षणायां भूमौ जातत्वादेवौषधमादेयं भवति? नेत्याह तस्यामित्यादि। कृम्यादय एव सम्बाधमार्गा वीर्य्यक्षयहेतवः, कृम्यादिसम्बाधमार्गैस्तैरनुपहतमत एवैकरसं श्रेष्ठरसं यथा स्वरसमित्येतत् "एकः संख्यान्तरे श्रेष्ठे" इति मेदिनी। उदीच्यां दिशि, स्थूलमन्तःप्रविष्टञ्च मूलमस्येति पृथ्ववगाढमूलम् औषधमाददीत, न त्वविशेषेण तस्यां जातमिति तात्पर्य्यम्। उक्तमर्थमुपसंहरति इतीति। इत्येष औषधभूमिपरीक्षाविशेषः औषधस्य भूम्याश्च परीक्षाविशेषको भावः सामान्यः सामान्येनोपदिष्टः ॥२॥

सामान्येनोक्तमर्थं पुनर्व्विशदयन् विभज्योपदिदिक्षति विशेषत इत्यादिना। तुकारः पूर्व्वपक्षव्यावृत्त्यर्थः। तत्रोक्तासु भूमिषु मध्ये, अश्मवतीत्यतिशायने मतुप्, बाहुल्येनाश्मनाऽनुगतेत्यर्थः। स्वेषां गुणानां वक्ष्यमाणानां स्थूलत्वादीनां भूयिष्ठमाधिक्यमत्रेति स्वगुणभूयिष्ठा। एतेनैवाम्बुगुणभूयिष्ठेत्यादयोऽपि व्याख्यातप्रायाः। स्वल्पखननलभ्यत्वेनासन्नमुदकमत्रेत्यासन्नो-

समा श्वभ्रवत्यव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वत-वृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥ ३ ॥

अत्र केचिदाहुराचार्य्याः । प्रावृड्वर्षा-शरद्धेमन्त-वसन्त-ग्रीष्मेषु यथासंख्यं मूल-पत्र-त्वक्-क्षीर-सार-फलान्याददीतेति । तत्तु न सम्यक्; कस्मात्? सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्ध-शीतानि जायन्ते । एतेन शेषं व्याख्यातम् ॥ ४ ॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचन-द्रव्याण्याददीत, अग्न्याकाशमारुतगुणभूयिष्ठायां वमन-द्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाश-गुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति सर्व्वाण्येव चाभिनवानि । अन्यत्र मधु-घृत-गुड़-पिप्पली-विड़ङ्गेभ्यः ॥५॥

---

दृका, लघ्वी अश्मवती चेति लघ्वश्मवती; रासभो गर्द्दभः, कोटरो गह्वरः । इदमत्रावधेयम्, इहोक्ताः स्वगुणभूयिष्ठादयः संज्ञा अन्यशास्त्रासामान्याः केवलमनायासेन व्याचिख्यासितार्थस्याकरणायोपदिश्यन्ते इत्यतः "द्विधा विधाय चैकैकं चतुर्धा प्रथमं ततः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते" इत्येतेषां पञ्चीकृतानां भूम्यादीनां प्रत्येकांशः स्वगुणभूयिष्ठत्वप्रत्यायकं तात्त्विकं वेदान्तवाक्यमविप्रतिषिद्धम् ॥ ३।४ ॥

न तावदुक्तेन विधिनाऽऽदानादेव भेषजद्रव्याणि नियमेन वसवन्ति भवन्तीति पुनर्विशिनष्टि तत्रेत्यादिना । तत्र भूमिषु मध्ये इत्यर्थः ।

भवति चात्र ।

विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् ।
भेषजान्यन्यभिनवं गृह्णीयाद्दोषवर्ज्जितम् ॥ ६ ॥

सर्व्वाण्येव सक्षीराणि वीर्य्यवन्ति, तेषामसम्पत्तावनति-क्रान्तसंवत्सराण्याददीतेति ॥ ७ ॥

भवन्ति चात्र ।

गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ।
मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ ८ ॥
सर्व्वावयवसाध्येषु पलाश-लवणादिषु ।
व्यवस्थितो न कालोऽस्ति तत्र सर्व्वो विधीयते ॥ ९ ॥
गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते ।
तस्माद्भूमिस्वभावेन वीजिनः षड्रसा युताः ॥ १० ॥

---

वमनविरेचनोभयकार्य्यसाधकौ भागावनेनोभयतो भागानि । विडङ्ग-मित्यादि । अपिना गुडधान्याकयोरादेशः क्रियते "ऋते गुड-घृत-क्षौद्र-धान्य-कृष्णा-विडङ्गतः" इति तन्त्रान्तरीयैकवाक्यत्वात् । गोपाला इत्यादि । भेषजानां नामतो रूपतश्च स्फुटतरावबोधो भेषजव्यक्तिः । चरकेऽप्युक्तम् "ओषधीर्नामरूपाभ्यां जानन्ति ह्यजपा वने" इत्यादि । सम्प्रति "सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत" इत्यादिशास्त्रव्यभिचारं दर्शयति सर्व्वेत्यादिना । व्यवस्थितो नियत इत्यनर्थान्तरम् ॥ ५—९ ॥

मा भूत् "व्यवस्थितो न कालोऽस्ति" इति प्रागुक्तानुशासनात् सैन्यादि-भिर्भूमेरुपहतावस्थोपलक्षितः कालोऽप्यादेय इत्युपलब्धिरिति युक्तिपुरःसरं विशिनष्टि गन्धेत्यादिना । यस्मात् वीजिनो वृक्षादयो भूमिस्वभावेन युताः सन्तः षड्रसा व्यस्तसमस्तैरत्यापन्नैः षड्भी रसैरनुगता भवन्ति,

अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितम् ।
रस एव स चाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥ ११ ॥
सर्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता ।
द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥ १२ ॥

---

तस्मात् स्वगुणभूयिष्ठादयः पञ्च समा चैकेति षड्विधैव भूमिर्गन्धवर्णरसोपेताऽव्यापन्नगन्धवर्णरसेत्यर्थः, इष्यत इति समन्वयः ; नातो भूमिस्तथाविधावस्थोपलक्षितः काल आदेय इति भावः। व्यापन्नलिङ्गानि च तानि प्रकृतिविपर्य्यासेनैवोपलभ्यन्त इति नेहोक्तान्यप्याविस्तरां जिज्ञासुभिश्चरकजनपदोद्ध्वंसनीयोऽवेक्षितव्यः। न चैतदश्रद्धेयं यद्रस आप्योऽपि सन् भूमिस्वभावेन षोढ़ा विभक्तो बीजिनो रसैः षड्भिरुपपादयतीत्यत आह अव्यक्त इत्यादि। तोयस्य रसोऽव्यक्त इति निश्चयनिश्चितं सिद्धान्तेन निर्णीतमित्यर्थः। स एव चाव्यक्तो रसो यस्मात् भूमिरसाद्व्यक्तो भवेदिति निवेदयिष्यते तस्मान्नैतदश्रद्धेयमित्ययमाशयः ॥ १०।११ ॥

प्रागुक्तां समां भूमिं लक्षणतः सङ्क्षेपतो निर्द्दिशति सर्व्वेत्यादिना। सर्व्वशब्देनेह क्षित्यादयोऽभिधीयन्ते प्रकृतत्वात् वाक्यार्थस्त्वतिरोहितः। सम्प्रति "सौम्यान्यौषधानि" इत्युपक्रम्य "एवमव्यापन्नगुणानि भवन्ति" इति प्रागुक्तमपरिच्छिन्नमर्थं परिच्छिनत्ति द्रव्याणीत्यादिना। यत्र सौम्येष्वाग्नेयेषु वा ऋतुषु, द्रव्याणि सौम्यान्याग्नेयानि वा गृह्यन्ते, तानि तत्रैव विशेषतस्तद्गुणानि सोमगुणभूयिष्ठान्यग्निगुणभूयिष्ठानि वा भवन्ति, न त्वितरत्राग्नेयेषु सौम्येषु वा ऋतुष्वित्येवकारेणाविष्क्रियते ; तानि हि तत्र तत्र तत्तद्विजातीयर्त्तुगुणोपहतस्वभावत्वेनोपलभ्यन्ते। एतेनैवार्थाक्षिप्तं भवति गुणप्रकर्षादादेयत्वेनोपदिष्टानि विरेचनादिद्रव्याण्यपि तत्र तत्र स्वयोनिभूतायामेव भूमौ विशेषतो बलवत्तराणि भवन्ति, न त्वेवान्यत्राहृतानीति तत्तत्प्रतिकूलभूमिगुणापचितस्वगुणत्वेनानुभवात्। अयमभिसन्धिः, विधिवद्गृहीतानि सौम्यान्याग्नेयानि वा द्रव्याणि चेदाग्नेयेषु सौम्येषु वा ऋतुषूपयोज्यानि स्युस्तर्हि तद्विजातीयगुणोपहतगुणाभिहृदये तान्युपयोग-

विगन्धेनापरामृष्टमविपन्नं रसादिभिः ।
नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् ॥ १३ ॥
जङ्गमानां वयःस्थानां रक्त-रोम-नखादिकम् ।
क्षीर-मूत्र-पुरीषाणि जीर्णाहारेषु संहरेत् ॥ १४ ॥
प्लोत-मृद्भाण्ड-फलक-शङ्कु-विन्यस्तभेषजम् ।
प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥ १५ ॥
इति सुश्रुतसंहितायां सूत्रस्थाने भूमिप्रविभागीयो
नाम सप्तत्रिंशोऽध्यायः ।

---

काले संयोगसंस्कारप्रमाणविकल्पेनोपपाद्य प्रमाणवीर्य्यसमान्यवश्यं कार्य्याणीति। एतेनैव शेषाणि विरेचनादिद्रव्याण्यपि व्याख्यातानीत्यनुसन्धेयम्॥१२॥

"तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीत" इत्युक्तमर्थं विशिनष्टि विगन्धेनेत्यादिना। पुराणं संवत्सरातीतम्, एतेन विगन्धं व्यापन्नरसवीर्य्यादिकञ्च नवमप्यग्राह्यमिति निष्कर्षः। प्रायेण हि भेषजद्रव्याणां विगन्धत्वादयो भावा विन्यासदोषादागारस्थैमित्यादितश्चोपजायन्ते, तदिदमुच्यते प्लोतेत्यादि। प्लोतमत्र वस्त्रखण्डम्, फलकं काष्ठपट्टम्, शङ्कुश्च विन्यासविशेषेण विन्यस्तच्छिन्नशाखो वंशादिप्रकाण्डः, "स्थाणु वा ना ध्रुवः शङ्कुः" इत्यमरः। प्लोतादिषु विन्यस्तानि भेषजान्यत्रेति वाक्यार्थः, भेषजागारविशेषणमेतत्। शुचौ जलप्रक्लिन्नत्वादिदोषविरहितत्वेन विशुद्धायां प्रशस्तायामिति "प्राच्यां दिशि स्थिता देवाः" इत्यनुशासनाद्देवावासतया प्रशंसनीयायां श्रेष्ठायां वा पूर्व्वस्यां दिशीत्यर्थः। परिशिष्टं निगदव्याख्यातम् ॥ १३—१५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने भूमिप्रविभागीयो नाम सप्तत्रिंशोऽध्यायः ।

---

# अष्टात्रिंशोऽध्यायः ।



अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः ॥ १ ॥

समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति । तद्यथा— विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभी चेति ।

---

न ह्यञ्जसाऽविदितेषु सौम्येष्वाग्नेयेषु चौषधेषु "सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेषु" इति पूर्व्वाध्यायोपदिष्टोऽर्थः प्रतिपित्सूनां मनागपि प्रत्ययगन्धेनासज्यते, नापि च तान्यौषधानि किञ्चन शास्त्रमवलम्ब्य वर्षसहस्रैरप्युपदेष्टुमुपधारयितुं वा शक्यन्ते सामग्र्येणापरिसंख्येयत्वात्, न ह्यागमाः सहस्रमप्यपरिच्छिन्नं परिच्छेत्तुमीशते, तदिदानीमस्मिन् शास्त्रे प्रायशो यान्युपयुज्यन्ते यथास्थूलं गणशस्तान्येवोपदिदिक्षुर्द्रव्यसंग्रहणीयं नामाधिकरोति अथात इत्यादिना । इहोपयौगिकानां सौम्यानामाग्नेयानाञ्च द्रव्याणां यथास्थूलं सङ्क्षेपेण प्रतिपादनं द्रव्यसंग्रहणम्; न च सम्पूर्व्वस्य ग्रहेरर्थोऽयमनुपपन्नः "समाहृतिस्तु संग्रहः" इति कोषप्रामाण्याद्, अत्र हि संक्षेपेण गृह्यते प्रतिपाद्यते अनेनेति व्युत्पत्त्या संग्रहशब्दमित्याचार्य्या ब्रुवते । शेषं समानम् ॥ १ ॥

समासेनेत्यादि । विदारिगन्धा शालपर्णी, सहदेवा विश्वदेवा च श्वेतपीतपुष्पभेदाद्बलाद्वयम्, कृष्णसारिवा नामौषधिः "श्यामलता" इत्याख्यायते, जीवकर्षभकयोरभावे गुड़ूची वंशलोचनयोरुपयोगः क्रियते, महासहा माषपर्णी, क्षुद्रसहा मुद्गपर्णी, हंसपादी त्रिदलजवापत्रा लताभेदः

विदारिगन्धादिरयं गणः पित्तानिलापहः ।
शोषगुल्माङ्गमर्द्दोर्द्ध्व श्वासकासविनाशनः ॥ २ ॥

आरग्वध-मदन-गोपघण्टा-कण्टकी-कुटज-पाठा-पाटला-मूर्व्वैन्द्रयव-सप्तपर्ण-निम्ब-कुरुण्टक--दासीकुरुण्टक--गुडूची-चित्रक-शार्ङ्गष्ठा-करञ्जद्वय-पटोल-किराततिक्तकाः सुषवी चेति ।

आरग्वधादिरित्येष गणः श्लेष्मविषापहः ।
मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥ ३ ॥

सालसाराजकर्ण-खदिर-कदर-कालस्कन्ध-क्रमुक-भूर्ज्ज-मेषशृङ्गी-तिनिश-चन्दन-कुचन्दन-शिंशपा-शिरीषासन-धवा-

---

नामतः "गोयालिया" इत्याख्यायते, वृश्चिकाली "विछाति" इति प्रसिद्धा, ऋषभी शूकशिम्बा, अस्याः फले तात्पर्य्यं तत्प्राधान्यात् । गणत्वेनैषामभिधानमुपदेशसौकर्य्यार्थमित्यनुसन्धेयम् ॥ २ ॥

आरग्वधेत्यादि । आरग्वधः "सोनालु" इति प्रसिद्धः, गोपघण्टा क्षुद्रबदरीभेदः "राखालकुल" इत्याख्यायते, कण्टकी विकङ्कतस्य पर्य्यायो "वैँची" इति "व्याफल" इति च प्राकृता भाषन्ते, कुरुण्टक-दासीकुरुण्टकौ पीतनीलपुष्पभेदात् झिण्टीद्वयम्, शार्ङ्गष्ठा काकजङ्घा तदभावे "आध्याल"-इतिसमाख्यस्य क्षुपभेदस्यैव व्यवहारः, किराततिक्तः "चिरता" इति प्रसिद्धः, सुषवी कारवेल्लिका "करेला" इत्याख्यायते । सालेत्यादि । सालस्य सारः सालसारः, अजकर्णः सालभेदः, कदरः "वाब्ला" इति प्रसिद्धः, कालस्कन्धस्तमालः, क्रमुकः पूगः, तिनिशो नामौषधिर्मथुराप्रदेशे "तिनाश" इत्याख्यायते, चन्दनशब्देनेह श्वेतं चन्दनमेव गृह्यते न तु रक्तं कुचन्देनेति पृथ-

ज्र्जुन-ताल-शाक-नक्तमाल-पूतीकाश्वकर्णागुरूणि कालीयक-ञ्चेति ।

सालसारादिरित्येष गणः कुष्ठविनाशनः ।
मेहपाण्डामयहरः कफमेदोविशोषणः ॥ ४ ॥

वरुणार्त्तगल--शिग्रु-मधुशिग्रु-तर्कारी-मेषशृङ्गी-पूतीक-नक्तमाल-मोरटाग्निमन्थ-सैरीयकद्वय--बिम्बी-वसुक-वसिर-चित्रक-शतावरी-बिल्वाजशृङ्गी-दर्भा बृहतीद्वयञ्चेति ।

वरुणादिर्गणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधीन् ॥ ५ ॥

वीरतरु--सहचरद्वय--दर्भ--वृक्षादनी--गुन्द्रा-नल--कुश-

---

शुपादानात्, शिंशपा "शिशु" इति लौकिकाः, असनः पीतसालः, शाकः "शेगुन" इति प्रसिद्धः, पूतीक-नक्तमालौ करञ्जभेदौ, अश्वकर्णः सालभेदः, कालीयकं "कालीया" इति प्रसिद्धं कृष्णचन्दनम् ॥ ३।४ ॥

वरुणेत्यादि । वरुणः प्रसिद्धः क्वचित् "वन्या" इत्याख्यायते, आर्त्तगलो नीलझिण्टी, शिग्रु-मधुशिग्रू श्वेतरक्तपुष्पभेदाद्वौ शोभाञ्जनौ "शजना" इत्यभिधीयेते, तर्कारी जयन्ती, मोरटमङ्कोठपुष्पम्, सैरीयकद्वयं पीतारुणपुष्पभेदात् झिण्टीद्वयम्, बिम्बी "तेलाकुचालता" इति प्रसिद्धा, वसुको वक इति प्रसिद्धः पुष्पप्रधानो वृक्षः, वसिरो गजपिप्पली, अजशृङ्गी "गाड़शिङ्गा" इति प्रसिद्धस्तत्स्थाने मुण्डितिकाव्यवहारः, दर्भा अत्र "कुशाः काशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिताः" इति पारिभाषिकाः, बृहती कण्टकारिका चेति बृहतीद्वयम् । वीरेत्यादि । वीरतरुरर्ज्जुनवृक्षः, सहचरद्वयं पीतनीलपुष्पभेदाज्झिण्टीद्वितयम्, वृक्षादनी जीवन्तीवृक्षोपरिजः क्षुपभेद इति यावत् ।

काशाश्मभेदकाग्निमन्थ-मोरटा-वसुक-वसिर-भल्लूक-कुरुण्टकेन्दीवर-कपोतवङ्काः श्वदंष्ट्रा चेति ।

वीरतर्वादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ ६ ॥

लोध्र-सावरलोध्र-पलाश-कुटन्नटाशोक-फञ्जी-कट्फलैल-वालुक-शल्लकी-जिङ्गिनी-कदम्ब-सालाः कदली चेति ।

एष लोध्रादिरित्युक्तो मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ ७ ॥

अर्कालर्क-करञ्जद्वय-नागदन्ती-मयूरक-भार्गी-रास्नेन्द्र-पुष्पी-क्षुद्रश्वेता-महाश्वेता-वृश्चिकाल्यलवणास्तापसवृक्षश्चेति ।

अर्कादिको गणो ह्येष कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ ८ ॥

---

गुन्द्रा एरका निर्यन्थितृणभेद इति यावत्, मोरटा मूर्वा, भल्लूकः श्योनाकः, कुरुण्टकोऽरुणवर्णा झिण्टी, इन्दीवरं नीलोत्पलम्, कपोतवङ्का ब्राह्मी, श्वदंष्ट्रा गोक्षुरा ॥ ५।६ ॥

लोध्रेत्यादि । सावरलोध्रो लोध्रभेदः, वल्कलत्वग्लोध्र इति यावत् । कुटन्नटः श्योनाकः, फञ्जी भार्गी, कट्फलः "कायफल" इति प्रसिद्धः, एलवालुकं "वालुका" इति प्रसिद्धम्, शल्लकी शिल्लकी, जिङ्गिनी झिङ्गी, कदल्याः पुष्पं कदलीत्याहुः "कदलीमोचकं हृद्यं कफघ्नं क्रिमिनाशनम्" इति कफहरत्वेनोपदेशात्, "पुष्पमूलेषु बहुलम्" इति बाहुलकात्तद्धितलुप् । अर्केत्यादि । अलर्कः श्वेतार्कः, नागदन्ती बहलमूला दन्तीति प्राञ्चः । इन्द्रपुष्पी लाङ्गलिका, क्षुद्रश्वेता अतिविषा, महाश्वेता श्वेतापराजिता, अलवणा हरीतकी, तापसवृक्ष इङ्गुदीतरुः ॥ ७।८ ॥

सुरसा-श्वेतसुरसा-फणिज्झकार्ज्जक-भूस्तृण-सुगन्धक-सुमुख-कालमाल-कासमर्द्द-क्षवक-खरपुष्पा-विडङ्ग-कट्फल-सुरसी-निर्गुण्डी-कुलाहलोन्दुरुकर्णिका-फञ्जी-प्राचीबल-काकमाच्यो विषमुष्टिकश्चेति।

सुरसादिर्गणो ह्येष कफहृत् क्रिमिसूदनः।<br>
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः॥ ९॥

मुष्कक-पलाश-धव-चित्रक-मदन-वृक्षक-शिंशपा-वज्रवृक्षास्त्रिफला चेति।

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत्।<br>
मेहार्शःपाण्डुरोगघ्नः शर्कराश्मरिनाशनः॥ १०॥

---

सुरसेत्यादि। सुरसादयश्चत्वारस्तुलसीभेदास्तत्र सुरसा वृहत्पत्रा, फणिज्झकस्तीक्ष्णगन्धा, अर्जकस्तु "बावर्" इति प्रसिद्धः, भूस्तृणं "छातिया" इति प्रसिद्धम् "भूस्तृणन्तु भवेच्छत्रा मालातृणकमित्यपि" इति कोषान्तरञ्च, सुगन्धकं कत्तृणम्, सुमुखो वनवर्व्वरिका "कृष्णबावर्" इत्याख्यायते। कालमालः कृष्णतुलसी, कासमर्द्दः "कालकासन्दी" इति विख्यायते, क्षवकः क्षवकारकः क्षुपभेदः "हाँचिया" इति विख्यायते। खरपुष्पा वनवर्व्वरिकाभेदः, सुरसी कपित्थपत्रा तुलसी, निर्गुण्डी सिन्धुवारः, कोलाहलः "कुकुरशुङ्गा" इति प्राकृतैरुपदिश्यते, उन्दुरुकर्णिका दन्तीभेदः, प्राचीबलः काकजङ्घेति प्राहुः, विषमुष्टिकः स्वनामप्रसिद्धस्तदभावे "कुचिला" इति प्रसिद्धबीजव्यवहारः॥ ९॥

मुष्ककेत्यादि। मदनः पिण्डीतकः "मयना" इति प्रसिद्धः, वृक्षकः कुटजः, शिंशपा "शिशु" इति प्रसिद्धः, वज्रवृक्षः स्नुही, अश्मरिनाशन इति

पिप्पली-पिप्पलीमूल-चव्य-चित्रक-शृङ्गवेर-मरिच-हस्तिपिप्पली-हरेणुकैलाजमोदेन्द्रयव-पाठा-जीरक-सर्षप-महानिम्ब-फल-हिङ्गु-भार्गी-मधुरसातिविषा-वचा-विडङ्गानि कटुरोहिणी चेति ।

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ ११ ॥

एला-तगर-कुष्ठ-मांसी-ध्यामक-त्वक्-पत्र-नागपुष्प-प्रियङ्गु-हरेणुका-व्याघ्रनख-शुक्ति-चण्डा-स्थौणेयक-श्रीवेष्टक-चोच-चोरक-वालक-गुग्गुलु-सर्जरस-तुरुष्क-कुन्दुरुकाऽगुरु-स्पृक्का-उशीर-भद्रदारु-कुङ्कुमानि पुन्नागकेशरञ्चेति ।

एलादिको वातकफौ निहन्याद्विषमेव च ।
वर्णप्रसादनः कण्डूपिड़काकोठनाशनः ॥ १२ ॥

---

बाहुलकाद्ग्रस्वः । पिप्पलीत्यादि । हरेणुका रेणुका, पाठा "आकनादि" इति प्रसिद्धा, महानिम्बः "घोड़ानिम" इत्याख्यायते, मधुरसा मूर्व्वेति पर्य्यायौ । एलेत्यादि । तगरं तगरपादिका, मांसी जटामांसी, ध्यामकं गन्धतृणम्, त्वग् वराङ्गम् "दारुचिनि" इत्यभिधीयते, नागपुष्पं नागकेशरम्, व्याघ्रनखोऽश्वखुराकारा नखी, शुक्तिस्तु बदरपत्राकारा, चण्डा चोरपुष्पी व्यवहारस्तु "ढोलकल्मी" इति प्रसिद्धस्यापि दृश्यते, स्थौणेयकं ग्रन्थिपर्णम्, श्रीवेष्टकः "नवनीतखोटी" इत्याख्यायते, चोचमत्र वहलत्वग्वराङ्गमेव, चोरकश्चण्डाभेदो वर्त्तुलाकारग्रन्थिपर्णमिति यावत्, वालकं ह्रीवेरम्, तुरुष्कः शिलारसः, कुन्दुरुका "कुन्दुरुखोटी" इत्याभाष्यते, स्पृक्का पिड़का-पुष्पम्, भद्रदारु देवदारु, पुन्नागः स्वनामप्रसिद्धः पार्व्वतीयो वृक्षस्तस्य पुष्प-किञ्जल्कः पुन्नागकेशरम् ॥ १०—१२ ॥

वचा-मुस्तातिविषाभया-भद्रदारूणि नागकेशरञ्चेति ।
हरिद्रा-दारुहरिद्रा-कलशी-कुटजबीजानि मधुकञ्चेति ।

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ।
आमातीसारशमनौ विशेषाद्दोषपाचनौ ॥ १३ ॥

श्यामा-महाश्यामा-त्रिवृद्दन्ती-शङ्खिनी-तिल्वक-कम्पिल्लक-रम्यक-क्रमुक-पुत्रश्रेणी-गवाक्षी-राजवृक्ष-करञ्जद्वय-गुडूची-सप्तला-च्छगलान्त्री-सुधाः सुवर्णक्षीरी चेति ।

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ।
आनाहोदरविड्भेदी तथोदावर्त्तनाशनः ॥ १४ ॥

---

वचेत्यादि । अतिविषा "आतइश" इति विज्ञायते, कलशी पृश्निपर्णी । श्यामेत्यादि । श्यामा श्याममूला त्रिवृत्, महाश्यामा वृद्धदारकः, शङ्खिनीह यवतिक्ता "कालमेघ" इत्याख्यायते, वक्ष्यमाणा सप्तला च चर्म्मसाह्वेत्याहुः "सप्तला चर्म्मसाह्वा च बहुफेनरसा च सा। शङ्खिनी तिक्तला चैव यवतिक्ताक्षिपीडकः। ते गुल्मगरहृद्रोगकण्ठप्लीहोदरादिषु" इत्यात्रेयानुशासनसामञ्जस्यात् । सप्तलाभावे तु "कालादाना" इति समाख्यस्यापि व्यवहारो दृश्यते । तिल्वको लोध्रः, कम्पिल्लकः "कमलागुड़ी" इत्याख्यायते, रम्यकं पटोलमूलम्, क्रमुकं पूगमूलम्, पुत्रश्रेणी दन्तीभेदः "प्रत्यक्श्रेणी सुतश्रेणी दन्ती" इति चरकस्मरणात्, गवाक्षी "शुर्म्मी" इत्यभिधीयते, राजवृक्षः "सोनालु" इति कथ्यते, छगलान्त्री वृद्धदारकभेदः, सुधा स्नुही तस्याः क्षीरमत्र योज्यम्, सुवर्णक्षीरी पीतनिर्य्यासा प्रायेण शारिवासदृशी लता मालवे श्रीहट्टे च दृश्यते, तदभावे "सोनामाखी" इति प्रसिद्धस्यापि व्यवहारः क्रियते ॥ १३।१४ ॥

बृहती-कण्टकारिका-कुटजफल-पाठा मधुकञ्चेति ।

पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ।
कफारोचकहृल्लास-मूत्रकृच्छ्र-रुजापहः ॥ १५ ॥

पटोल-चन्दन-कुचन्दन-मूर्व्वा-गुडूची-पाठाः कटु-रोहिणी चेति ।

पटोलादिर्गणः पित्तकफारोचकनाशनः ।
ज्वरोपशमनो व्रण्यश्छर्द्दिकण्डूविषापहः ॥ १६ ॥

काकोली-क्षीरकाकोली-जीवकर्षभ-मुद्गपर्णी-मेदा-महामेदा-छिन्नरुहा-कर्कटशृङ्गी-तुगाक्षीरी-पद्मक-प्रपौण्ड-रीकर्द्धि-वृद्धि-मृद्वीका-जीवन्त्यो मधुकञ्चेति ।

काकोल्यादिरयं पित्तशोणितानिलनाशनः ।
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ १७ ॥

ऊषक-सैन्धव-शिलाजतु-कासीसद्वय-हिङ्गूनि तुत्थकञ्चेति ।

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ।
अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥ १८ ॥

---

बृहत्यादिः पटोलादिश्चातिरोहितार्थौ । काकोलीत्यादि । काकोली-क्षीरकाकोल्यौ स्वनामप्रसिद्धे, मेदामहामेदयोरभावे यथाक्रममश्वगन्धा शारिवा चोपयुज्येते, छिन्नरुहा गुडूची, कर्कटशृङ्गी "काँकड़ाशृङ्गी" इत्या-ख्यायते, तुगाक्षीरी वंशलोचना, पद्मकं पद्मकाष्ठम्, प्रपौण्डरीकं काष्ठभेदः "पौण्डरीया" इत्याभाष्यते, ऋद्धि-वृद्ध्योरभावे बला महाबलयोरुपयोगः क्रियते, मृद्वीका द्राक्षा, जीवन्ती स्वनामप्रसिद्धा वन्दाभेदः । ऊषकेत्यादि ।

सारिवा-मधुक-चन्दन-कुचन्दन-पद्मक-काश्मरीफल-मधूक-पुष्पाण्युशीरञ्चेति ।

सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ।
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥ १९ ॥

अञ्जन-रसाञ्जन-नागपुष्प-प्रियङ्गु-नीलोत्पल-नलद-नलिनकेशराणि मधुकञ्चेति ।

अञ्जनादिर्गणो ह्येष रक्तपित्तनिवर्हणः ।
विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा ॥ २० ॥

परूषक-द्राक्षा-कट्फल-दाड़िम-राजादन-कतकफल-शाकफलानि त्रिफला चेति ।

परूषकादिरित्येष गणोऽनिलविनाशनः ।
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥ २१ ॥

प्रियङ्गु-समङ्गा-धातकी-पुन्नाग-रक्तचन्दन-कुचन्दन-मोच-

---

तुत्थकः खारमृत्तिका, पुष्पकासीसं धातुकासीसञ्चेति कासीसद्वयम्, "तुँतीया" इत्याख्यातं तुत्थकमुच्यते ॥ १५—१८ ॥

सारिवेत्यादि । काश्मरीफलं गाम्भारीफलम्, मधूको नामौषधिः "मौया" इत्याख्यायते । अञ्जनेत्यादि । अञ्जनं सौवीराञ्जनम्, नलद-मुशीरम्, नलिनकेशरं पद्मकिञ्जल्कः । परूषकेत्यादि । परूषकं "फल्सा" इति प्रसिद्धस्य फलम्, राजादनं पियालफलम्, कतको "निर्म्मली" इति प्रसिद्धः, शाकः "शेगुन" इत्याख्यायते । प्रियङ्ग्वित्यादि । समङ्गा वराह-क्रान्ता, धातकी "धाइफुल" इति विज्ञायते, कुचन्दनं रक्तचन्दनभेदः, मोच-

रस-रसाञ्जन-कुम्भीक-स्रोतोऽञ्जन-पद्मकेशर-योजनवल्ल्यो दीर्घमूला चेति ।

अम्बष्ठा-धातकी-कुसुम-समङ्गा-कट्वङ्ग-मधुक-बिल्वपेशिका-रोध्र-सावररोध्र-पलाश-नन्दीवृक्ष-पद्मकेशराणि चेति ।

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ।

सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ ॥ २२ ॥

न्यग्रोधोदुम्बराश्वत्थ-प्लक्ष-मधुक-कपीतन-ककुभाम्र-कोशाम्र-चोरकपत्र-जम्बूद्वय--पियाल--मधूक--रोहिणी-वञ्जुल-कदम्ब-बदरी-तिन्दुकी-सल्लकी--रोध्र--सावररोध्र-भल्लातक--पलाश-नन्दीवृक्षाश्चेति ।

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ।

रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ २३ ॥

---

रसः शाल्मलीनिर्य्यासः, कुम्भीको वारिपर्णी "पाना" इत्याख्यायते, स्रोतोऽञ्जनं सौवीराञ्जनम्, योजनवल्ली मञ्जिष्ठा, दीर्घमूला शालपर्णी । अम्बष्ठेत्यादि । अम्बष्ठा पाठा, कट्वङ्गः श्योणाकः, बिल्वपेशिका बिल्वशलाटु रामबिल्वमित्यनर्थान्तरम्, नन्दीवृक्षः अश्वत्थाकारः चौरिद्रुमविशेषस्तदभावे "तुँद" इति ख्यातस्य व्यवहारः ॥ १९—२२ ॥

न्यग्रोधेत्यादि । न्यग्रोधो वटः, प्लक्षोऽश्वत्थाकारः "नाकड़ इति प्रसिद्धः, मधुकं "यष्टिमधु" इत्याख्यायते, कपीतनो नामाम्रातकः "आमड़ा" इत्याभाष्यते, ककुभोऽर्जुनः, कोशाम्रः "कोष् आम्" इत्याभाष्यते; व्यवहारस्तु "पेयारा" इति समाख्यातस्य नवपल्लवानामपि दृश्यते, चोरको ग्रन्थिपर्णः, जम्बूद्वयं क्षुद्रबृहदाकारफलौ द्वौ जम्बूवृक्षौ, रोहिणी

गुडूची-निम्ब-कुस्तुम्बुरु-चन्दनानि पद्मकञ्चेति ।

एष सर्व्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ।
हृल्लासारोचकवमी-पिपासादाहनाशनः ॥ २४ ॥

उत्पल-रक्तोत्पल-कुमुद-सौगन्धिक-कुवलय-पुण्डरीकाणि मधुकञ्चेति ।

उत्पलादिरयं दाहपित्तरक्तविनाशनः ।
पिपासाविषहृद्रोगच्छर्द्दिमूर्च्छाहरो गणः ॥ २५ ॥

मुस्ता-हरिद्रा-दारुहरिद्रा-हरीतक्यामलक-विभीतक-कुष्ठ-हैमवती-वचा-पाठा-कटुरोहिणी-शार्ङ्गष्टातिविषा-द्राविड़ी-भल्लातकानि चित्रकञ्चेति ।

एष मुस्तादिको नाम्ना गणः श्लेष्मनिसूदनः ।
योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ २६ ॥

हरीतक्यामलक-विभीतकानि त्रिफला ।

त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ।
चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ २७ ॥

पिप्पली-मरिच-शृङ्गवेराणि त्रिकटुकम् ।

---

-कटुकी, वञ्जुलोऽशोकः, तिन्दुकी "तुँद" इत्याख्यायते, सल्लकी सिल्लकी -शल्लकद्रव इति यावत् । गुडूचीत्यादि । कुस्तुम्बुरु धन्याकम् । उत्-पलेत्यादि । उत्पलं नीलमुत्पलम्, सौगन्धिकं कह्लारं "सुन्धी" इति वि-ज्ञायते, कुवलयमीषन्नीलधवलमुत्पलम्, पुण्डरीकं श्वेतपद्मम् ॥ २३—२५ ॥

त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ।
निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥ २८ ॥

आमलकी-हरीतकी-पिप्पल्यश्चित्रकश्चेति ।

आमलक्यादिरित्येष गणः सर्व्वज्वरापहः ।
चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥ २९ ॥

त्रपु-सीस-ताम्र-रजत-कृष्णलोह-सुवर्णानि लोहमलश्चेति ॥

गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः ।
पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥ ३० ॥

लाक्षारेवत-कुटजाश्वमार-कट्फल-हरिद्राद्वय-निम्ब-सप्त-च्छद-मालत्यस्त्रायमाणा चेति ।

कषायस्तिक्तमधुरः कफपित्तार्त्तिनाशनः ।
कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥ ३१ ॥

पञ्च पञ्चमूलान्यत ऊर्द्धं वक्ष्यामः । तत्र त्रिकण्टक-बृहतीद्वय-पृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ।

कषायतिक्तमधुरं कनीयः पञ्चमूलकम् ।
वातघ्नं पित्तशमनं बृंहणं बलवर्द्धनम् ॥ ३२ ॥

---

मुस्तेत्यादि । हैमवती श्वेतवचा, द्राविड़ी सूक्ष्मैला । त्रप्वित्यादि । त्रपु वङ्गम्, कृष्णलोहं कान्तलोहम्, लोहमलो लोहकिट्टं, स च गुणप्रकर्ष-निकर्षतस्त्रेधा भिद्यत इति निर्णीयते "शताब्दमुत्तमं किट्टं मध्यञ्चाशीति-वार्षिकम् । अधमं षष्टिवर्षीयं ततो हीनं विषोपमम्" इति स्मरणात् । लाक्षेत्यादि । आरेवतः शम्पाकः, अश्वमारः करवीरः, त्रायमाणा नामौ-षधिः "जल्वहला" इत्याख्यायते । पञ्चेत्यादि । त्रिकण्टको गोक्षुरकः,

विल्वाग्निमन्थ-टुण्टुक-पाटला-काश्मर्य्यश्चेति महत्।

सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम्।

मधुरानुरसञ्चैव पञ्चमूलं महत् स्मृतम्॥ ३३॥

अनयोर्द्दशमूलमुच्यते।

गणः श्वासहरो ह्येष कफपित्तानिलापहः।

आमस्य पाचनश्चैव सर्व्वज्वरविनाशनः॥ ३४॥

विदारी-सारिवा-रजनी-गुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः। करमर्द्द-त्रिकण्टक-सैरीयक-शतावरी-गृध्रनख्य इति कण्टकसंज्ञः।

रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ।

सर्व्वमेहहरौ चैव शुक्रदोषविनाशनौ॥ ३५॥

कुश-काश-नल-दर्भ-काण्डेक्षुका इति तृणसंज्ञकः।

मूत्रदोषविकारञ्च रक्तपित्तं तथैव च।

अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत्॥ ३६॥

---

वृहती कण्टकारिका चेति वृहतीद्वयम्, कनीयः क्षुद्रम्। विल्वेत्यादि। टुण्टुकः श्योणाकः, पाटला "पारली" इति प्रसिद्धा, अनयोः कनीयसो महतश्च पञ्चमूलयोर्द्दशमूलमुच्यते समवाय इति शेषः॥ २६—३४॥

विदारीत्यादि। रजनी हरिद्रा। करमर्द्देत्यादि। करमर्द्दः क्षुद्रपाकफलः "करमचा" इत्याख्यायते, सैरीयको झिण्टी, गृध्रनखी नामौषधिः "काँटागड़" इति "कालकौँड़ा" इति चाभाष्यते। कुशेत्यादि। काण्डे-

एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ।
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ ॥ ३७ ॥
समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम् ।
चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम् ॥ ३८ ॥
एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान् ।
प्रविभज्य यथान्यायं कुर्व्वीत मतिमान् भिषक् ॥ ३९ ॥
समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत् ।
पृथङ्मिश्रान् समस्तान् वा गणं वा व्यस्तसंहतम् ॥ ४० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टात्रिंशोऽध्यायः ।

---

सुकः "खागड़" इति विज्ञायते, व्यवहारस्तु शरस्यैव । अन्त्यः कुशादिः, चारेण प्रयुक्तः "द्रव्यादष्टगुणं चीरं चीरात्तोयं चतुर्गुणम् । चीरावशेषः कर्त्तव्यः" इति चीरपाकविधिनोपयुक्त इत्याहुः । एत इति दशमूलस्य, कनीयसो महतश्च पञ्चमूलतो नातिरेकात् सप्तत्रिंशत् विदारीगन्धादय इत्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ ३५—४० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने द्रव्यसंग्रहणीयो नाम अष्टात्रिंशोऽध्यायः ।

# एकोनचत्वारिंशोऽध्यायः ।

अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥१॥

मदन-कुटज-जीमूतकेक्ष्वाकु-धामार्गव-कृतवेधन-सर्षप-विडङ्ग-पिप्पली-करञ्ज-प्रपुन्नाड़-कोविदार-कर्व्वुदारारिष्टा-श्वगन्धा-विदुल-बन्धुजीवक-श्वेता-शणपुष्पी-बिम्बी-वचा-मृगेर्व्वारु-चित्राश्चेत्यूर्द्ध्वभागहराणि। तत्र कोविदारपूर्व्वाणां फलानि। कोविदारादीनां मूलानि ॥ २ ॥

---

उपदेशसौकर्य्यसाम्यात् द्रव्यसङ्ग्रहणीयादनन्तरं संशोधन-संशमनीयं नामाधिकरोति अथात इत्यादिना। संशोधनशब्देनेह वमन-विरेचन-शिरोविरेचनद्रव्याणामेव परिग्रहः क्रियत इति बुभुत्सितव्यम्, अनन्तरं तेषामेवोपादानात्। संशमनञ्च "न शोधयति यद्दोषान्" इत्याद्युक्तलक्षणम्। शेषं समानम् ॥ १ ॥

न च विस्तरस्य प्रमाणमस्ति, न चातिसङ्क्षेपः सर्व्वभिषजां प्रतिपत्तये प्रभवतीति यावद्भ्रलमल्पबुद्धीनां व्यवहाराय, बुद्धिमताञ्चानुक्तज्ञानाय तावदेवोपदेष्टुं क्रमशोऽभीप्सति मदनेत्यादिना। जीमूतको घोषकः, इक्ष्वाकुः कटुकालावुः, धामार्गवः पीतघोषकः, कृतवेधनः श्वेतपुष्पो घोषकः, प्रपुन्नाड़श्चक्रमर्द्दः "चाकुन्दा" इत्याख्यायते, कोविदार-कर्व्वुदारौ रक्त-श्वेतपुष्प-भेदाद्युगपन्नापरपर्य्यायौ "काञ्चन" इत्यभिधीयेते, अरिष्टो निम्बः, विदुलो वेतसः, बन्धुजीवको बन्धूकः "बान्धुली" इत्याभाष्यते, श्वेता श्वेतवचा, शणपुष्पी वन्यशणः, मृगेर्व्वारुर्गौरचकर्कटी, विचित्रफला सैव चित्रेत्युच्यते, ऊर्द्ध्वभागहराणि वमनकराणि ॥ २ ॥

त्रिवृता-श्यामा-दन्ती-द्रवन्ती-सप्तला-शङ्खिनी-विषाणिका-गवाक्षी-छगलान्त्री-स्नुक्-सुवर्णक्षीरी-चित्रक-किणिही-कुश-काश-तिल्वक-कम्पिल्लक-रम्यक-पाटला-पूग-हरीतक्या-मलक-बिभीतक-नीलिनी-चतुरङ्गुलैरण्ड-पूतीक-महावृक्ष-सप्तच्छदार्क-ज्योतिष्मती चेत्यधोभागहराणि। तत्र तिल्वक-पूर्व्वाणां मूलानि। तिल्वकादीनां पाटलान्तानां त्वचः। कम्पिल्लकफलरजः। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां क्षीराणीति॥ ३॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि। एषां स्वरसा इति॥ ४॥

---

त्रिवृतेत्यादि। श्यामा श्याममूला त्रिवृत्, द्रवन्ती दन्तीभेदः, सप्तला-शङ्खिन्यौ व्याहृते, गवाक्षी इन्द्रवारुणीभेदः, छगलान्त्री वृद्धदारकः, स्नुगत्र सुतीक्ष्णाल्पकण्टका स्नुहीति प्रत्येतव्यमनन्तरं महावृक्षोपदेशात्, किणिही अपामार्गः, रम्यकं पटोलमूलम्, नीलिनी "वननील" इत्याख्यायते, चतुरङ्गुल आरग्वधः, महावृक्षो बहुकण्टका स्नुही, पूर्व्वस्मादयमेव प्रधानमित्युन्नेयम् "प्रवरो बहुकण्टकः" इति चरकानुशासनात्। ज्योतिष्मती "नैफुट्की" इत्याभाष्यते, अधोभागहराणि विरेचनानि। अत्राविशेषेऽपि तिल्वकमूलत्वचमेव ग्राहयन्ति "तस्य मूलत्वचं शुष्काम्" इति चरकीयवाक्यत्वात्। कोशातकीत्यादि। कोशातकी देवदाली च घोषकभेदौ, फलमनयोर्व्वमनमित्युक्तमिह तु स्वरसः प्रतिगृह्यत इत्युभयतोभागहरत्वेनाभिधानमविप्रतिषिद्धमित्यनुसन्धेयम्; कारवेल्लिका "क्षुद्रकरेला" इत्याख्यायते॥ ३।४॥

पिप्पली-विडङ्गापामार्ग-शिग्रु-सिद्धार्थक-शिरीष-मरिच-करवीर-बिम्बी-गिरिकर्णिका-किणिही-वचा-ज्योतिष्मती-करञ्जार्कालर्क-लशुनातिविषा-शृङ्गवेर-तालीश-तमाल-सुरसार्ज्जकेङ्गुदी-मेषशृङ्गी-मातुलुङ्गी-मुरङ्गी-पीलु-जाती-शाल-ताल-मधूक-लाक्षा-हिङ्गु-लवण-मद्य-गोशकृद्रस-मूत्राणीति शिरोविरेचनानि। तत्र करवीरपूर्व्वाणां फलानि। करवीरादीनामर्कान्तानां मूलानि। तालीशपूर्व्वाणां कन्दाः। तालीशादीनामर्ज्जकान्तानां पत्राणि। इङ्गुदी मेषशृङ्गी त्वचौ। मातुलुङ्गी-मुरङ्गी-पीलु-जातीनां पुष्पाणि। शालतालमधूकानां साराः। हिङ्गुलाक्षे निर्यासौ। लवणानि पार्थिवविशेषाः। मद्यान्यासवसंयोगाः। गोमूत्रशकृद्रसौ मलाविति ॥ ५ ॥

संशमनान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र भद्रदारु-कुष्ठ-हरिद्रा-वरुण-मेषशृङ्गी-बलातिबलार्त्तगल-कच्छुरा-सल्लकी-कुबे-

---

पिप्पलीत्यादि। गिरिकर्णिका अपराजिता, अलर्कोऽर्कभेदः, सुरसार्ज्जकौ तुलसीभेदौ, क्षुद्रो मातुलुङ्गी मातुलुङ्गी मृणाल्यादित्वादीप्, मुरङ्गी रक्तशोभाञ्जनः, पीलुर्व्याहृतः, हिङ्ग्वादीनान्तत्सम्भवानैवमवयवविशेषाः परिगृह्यन्ते, इत्येव व्याजेनोपदिदिक्षति हिङ्ग्वित्यादिना। हिङ्ग्वादयो हि निर्य्यासादिरूपा अतस्तेषां सर्व्वावयवपरिग्रहः क्रियत इति भावः ॥ ५ ॥

संशमनानीत्यादि। भद्रदारु देवदारु, अतिबला गोरक्षतण्डुला, आर्त्तगलो नीलझिण्टी, कच्छुरा शूकशिम्बी "आलकुशी" इत्याख्यायते,

राक्षी-वीरतरु-सहचराग्निमन्थ-वत्सादन्येरण्डाश्मभेदकालर्क--शतावरी--पुनर्नवा--वसुक--वशिर--काञ्चन--भार्गी--कार्पासी--वृश्चिकाली-पत्तुर-बदर-यव-कोल-कुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥ ६ ॥

चन्दन-कुचन्दन-ह्रीवेरोशीर-मञ्जिष्ठा-पयस्या-विदारी-शतावरी-गुन्द्रा-शैवल--कह्लार-कुमुदोत्पल-कदली--कन्दली-दूर्व्वा-मूर्व्वाप्रभृतीनि काकोल्यादिः सारिवादिरञ्जनादिरुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ७ ॥

कालेयकागुरु-तिलपर्णी-कुष्ठ-हरिद्रा-शीतशिव-शतपुष्पा-सरला--रास्ना-प्रकीर्य्योदकीर्य्येङ्गुदी-सुमनः--काकादनी-लाङ्ग-

---

कुवेराक्षी पाटला "पारुल" इत्यभिधीयते, वीरतरुरर्ज्जुनः, सहचरः पीतझिण्टी, अग्निमन्थो गणकारिका, वत्सादनी गुड़ूची, वसुको वकवृक्षः, वशिरं सामुद्रलवणम्, काञ्चनकः "काञ्चन" इति प्रसिद्धः, कार्पासी कार्पासवृक्षः, वृश्चिकाली "विछाति" इत्याख्यायते, पत्तुरं कुचन्दनम्। चन्दनेत्यादि। पयस्या क्षीरकाकोली, विदारी भूमिकुष्माण्डम्, गुन्द्रा एड़का निर्ग्रन्थितृणभेद इति यावत्। कह्लारं "शुन्धी" इति ख्यातम्, कन्दली पद्मबीजम्। कालेयकेत्यादि। कालेयकं "कालिया" इति प्रसिद्धः पीतवर्णः सुगन्धिकाष्ठविशेषः, तिलपर्णी रक्तचन्दनम्, शीतशिवं सैन्धवम्, सरला सरलकाष्ठम्, प्रकीर्य्योदकीर्य्ये यथाक्रमं नामतः "नाटाकरञ्ज गो-

लवणी-हस्तिकर्ण-मुञ्जातक--लामज्जकप्रभृतीनि वल्लीकण्टक-पञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥ ८ ॥

तत्र सर्व्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात्। तत्र व्याधिबलादधिकमौषधमुपयुक्तं तमुपशमय्य व्याधिं व्याधिमन्यमावहति। अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते। पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति संशमनम्। एवं संशोधनमतिपातयति। हीनमेभ्यो दत्तमकिञ्चित्करं भवति। तस्मात् सममेव विदध्यात् ॥ ९ ॥

भवन्ति चात्र।

रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्ब्बलः।
तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥
चले दोषे मृदौ कोष्ठे नेच्छेतात्र बलं नृणाम्।
अव्याधिदुर्ब्बलस्यापि शोधनं हि तदा भवेत् ॥ १० ॥

---

करञ्ज" इत्यभिधीयेते, काकादनी गुञ्जा, मुञ्जातकाभावे तालमस्तकव्यवहारः, लामज्जकमुशीरम्। वल्लयादिपञ्चमूल्यौ गणभेदौ ॥ ६—८ ॥

शोधनसाध्ये हि व्याधौ दोषदुर्ब्बलस्यापि शोधनमन्तरेण नैव केनचित् दौर्ब्बल्यमपहीयते, नापि च तत्र वीर्य्यवद्भेषजमुपशेते दौर्ब्बल्येनानुगतत्वात्, तदिदं विशिनष्टि रोग इत्यादिना। दोषेण दुर्ब्बलो दोषदुर्ब्बल', मृद्विति वीर्य्यतो मात्रातः संस्कारतो वेत्यवधेयम्, दोषप्रच्यावनं दोषनिर्हरणम्। न च तावद्दोषचाञ्चल्यमभिसमीक्ष्य मृदुकोष्ठोऽपि दुर्ब्बलो निर्हरणेन परिहर्त्तव्य इत्येवोपदिदिक्षति चल इत्यादिना। दोषे चले स्थानात् स्थानान्तरं

स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम् ।
भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥
व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते ।
विडालपदकं चूर्णं देयः कल्कोऽक्षसम्मितः ॥ ११ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने संशोधनसंशमनीयो
नामैकोनचत्वारिंशोऽध्यायः ।

---

भूयिष्ठेऽपि सति कोष्ठे मृदावपि न्यूनं बलं नेक्षेत, नायं दुर्बलो विरेचनं सहिष्यत इत्येवं विचिन्तयेदित्यर्थः । हि यस्मात् तदा दोषबाहुल्यावस्थायामव्याधिदुर्बलस्येति "विकारो धातुवैषम्यम्" इति स्मरणाद्दोषदुर्बलस्य लङ्घनादिभिर्दुर्बलस्यापीति यावत् शोधनं भवेद्धितमिति शेषः । किं पुनर्दोषदुर्बलस्य यो निर्हरणेनैवावाप्तबलो भवतीत्ययमाशयः । अतएव वक्ष्यति च "हरेद्दोषान् चलान् पक्वान् बलिनो दुर्बलस्य च" इति ॥ १० ॥

अर्थान्तरोपन्यासेनार्थमिमं द्रढयन्नाह स्वयमित्यादि । स्वयमित्यादिशोधनसाध्यस्यापि दुर्बलस्य प्रयुक्तं शोधनञ्चेद्व्याधिनाशनं तर्हि बलदोषस्य तस्य कैव कथेत्ययमभिसन्धिः । स्यादेतत् क्वाथाद्यात्मकेषु पृथग्विधेष्वौषधेषु किं नाम प्रमाणं प्रयोज्यमित्यत आह व्याधीत्यादि । आदिग्रहणाद्बलादीनामादेशः । अञ्जलिः पलचतुष्टयं, कर्षापरपर्यायौ अक्षविडालपदकशब्दौ । अत्र मध्येष्विति विशेषणादुत्तमे अधिकं हीने हीनमित्यर्थाक्षिप्तं भवति । एतत्तु यथाकथञ्चिन्मात्राप्रतिपत्त्यर्थमुपदिष्टमिति निश्चीयते "मात्राया नास्त्यवस्थानम्" इत्याद्यनुशासनात् ॥ ११ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ।

# चत्वारिंशोऽध्यायः ।



अथातो द्रव्य-रस-गुण-वीर्य्य-विपाक-विज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानम् । कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयो यथाऽऽमे फले ये रसादयस्ते पक्वे न सन्ति । नित्यत्वाच्च, नित्यं हि

---

भगवन्! संशोधनसंशमनाधिकारे सर्व्वं वाक्यं द्रव्यमाश्रित्योपदिष्टमुपदेक्ष्यते च रसादीनधिकृत्य "मधुराम्ललवणा वातघ्नाः" इत्यादिना ग्रन्थसन्दर्भेण, तदयं संशयः किन्नु खल्वायुर्व्वेदे द्रव्यं प्रधानमुताहो रसा अथवा वीर्य्याख्याहोस्वित् विपाक इति, वदन्ति हि "प्रधानेन व्यपदेशा भवन्ति" इत्येवंवादिनां सुश्रुतप्रायेदानीं द्रव्यादिविज्ञानीयं नामाधिकरोति अथात इत्यादिना । द्रव्यमत्र कार्य्यभूतं भेषजद्रव्यं न तु कारणभूतं पृथिव्यादि, अनुपयोगात् । अत्र गुणग्रहणेनैव रसानामुपलम्भेऽपि पृथगुपादानं प्रपञ्चार्थम् । वीर्य्यं वक्ष्यमाणं द्विविधमष्टविधं वा । विपाकोऽपि वक्ष्यमाणो मधुरः कटुकश्चेति । शेषं समानम् ॥ १ ॥

अत्राभिमतं द्रव्यप्राधान्यं प्रपञ्चेन दिदर्शयिषुः प्रथमं तावत् पृथक् पृथक् द्रव्यादिप्राधान्ये हेतून् प्रदर्श्य स्वस्वपक्षं स्थापयतां भिषजां वादमार्गमुत्थापयति केचिदित्यादिना । द्रव्यं प्रधानं रसादित इति तात्पर्य्यम्, अत्र हेतुर्व्यवस्थितत्वादिति । व्यवस्थितत्वात् स्वस्वगुणाभावेऽप्यवस्थानात् । उक्तमर्थमवगमयति इहेत्यादिना । नन्वेवं द्रव्यप्राधान्यमनुपपन्नम्, य-

द्रव्यमनित्या गुणा यथा कल्कादिप्रविभागः, स एव सम्पन्न-रसगन्धो व्यापन्नरसगन्धो वा भवति ॥ २ ॥

स्वजात्यवस्थानाच्च, यथा हि पार्थिवं द्रव्यमन्यभावं न

---

एव हि रसादय आमे फले दृश्यन्ते कालपरिणामात् पक्के त एवान्यथा-भावमापद्यन्ते, न तु ते विनश्यन्ति अन्ये च उत्पद्यन्त इति निर्णीयते, "अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः । माधुर्य्यं भजते" इत्यादिना पररसादेः पूर्व्वरसादिपरिणामसम्भवत्वेनाभ्युपगमात्, ये त्वेवं प्रत्यवतिष्ठन्ते तान् प्रति हेत्वन्तरमुपन्यस्यति नित्यत्वाच्चेति । द्रव्यं प्रधानमिति पूर्व्वे-णान्वयः । नित्यत्वञ्च द्रव्याणां कालपरिणामेनान्यथाभावेऽपि तदेवेदमिति प्रत्यभिज्ञायमानत्वादवगन्तव्यम् । नित्यत्वाद्द्रव्यस्य प्राधान्यमप्राधान्यञ्च रसा-दीनां दर्शयति नित्यमित्यादिना । परिमाणान्यत्वे द्रव्यान्यत्वमिति येषां दर्शनं, तेषामामपक्कफलयोर्मात्रया परिमाणभेदात् द्रव्यभेदोऽपीति मतानु-रूपं दृष्टान्तमाह कल्कादिप्रविभाग इति । कल्कादिरूपेण प्रविभक्तो द्रव्य-निचयः कल्कादिप्रविभागः । अत्र पूर्व्वापरकालावस्थायिन्यभिन्नपरिमाणे कल्कादिप्रविभागे सत्येव तस्य गन्धरसयोः सत्त्वमसत्त्वञ्चेत्यनियतावस्थायिनो गुणा अनित्या उच्यन्ते, द्रव्यञ्च तदपेक्षया नियतावस्थायि नित्यमाख्यायते इति द्रष्टव्यम् । न चायं कल्कादिप्रविभागो रूपादितो व्यापन्नः सहसा प्रत्यभिज्ञाविषयो भवतीति सम्प्रधार्य्य रसगन्धावेवोपात्तावित्यनुसन्धेयम् ॥२॥

ननु चम्पककुसुमादिद्रव्यनाशेऽपि तद्वासनावासिततैलादौ तद्गन्धो-पलब्धेर्नित्यो गुणो द्रव्यमनित्यमिति वैपरीत्यमापद्यते इति नित्यत्वहेतो-रनैकान्तिकतेत्याह स्वजात्यवस्थानाच्चेति । स्वजात्यवस्थानत्वं विवृणोति यथेति । शेषाणि परिशिष्टान्याप्यादीनि । रसादयस्तु नैवमिति शेषः, ते हि स्वां जातिं परित्यज्य जात्यन्तरमाश्रयन्ते । वक्ष्यति हि "भूम्यम्बुगुण-बाहुल्यान्मधुरः, भूम्यग्निगुणबाहुल्यादम्लः" इत्यादि । नन्विदमप्ययुक्तं मांस-त्वेन परिणतस्याप्यस्यापि शोणितस्य पार्थिवत्वदर्शनादित्येवं विवक्षुनपाचि-

गच्छत्येवं शेषाणि। पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियै-र्गृह्यते द्रव्यं न रसादयः ॥ ३ ॥

आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयो भवन्ति। आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भो यथा विदारिगन्धादि-माहृत्य सङ्क्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भः ॥ ४ ॥

---

कोर्ध्वमत्वन्तरमाश्रयते पञ्चेन्द्रियग्रहणाच्चेति। पञ्चेन्द्रियग्राह्यत्वन्तु द्रव्यस्य पञ्चीकृतत्वात् "भूमौ करकराशब्दो जले बुलुबुलुध्वनिः" इत्यादि वेदान्त-वाक्यान्यनुसन्धायाध्यवसितव्यम्। यद्वा पञ्चेन्द्रियग्राह्यत्वमिह द्रव्यस्य तत्त-द्गुणपुरस्कारेण तत्तदिन्द्रियग्रहणविषयत्वम्। तथाच लोकेऽनुभवः, दीर्घा शष्कुली मया श्रुता दृष्टा स्पृष्टा आघ्राता आस्वादिता चेति ॥ ३ ॥

नन्वेवं पञ्चेन्द्रियग्राह्यत्वं पञ्चीकृतत्वादेव वेदान्तवाक्येनाङ्गीक्रियते वस्तुतस्तु वाग्वस्तुमात्रत्वेनैतत्पथ्यवस्यत्यनुभवेनाविषयीकरणात्, गुणपुरस्कारेण पञ्चेन्द्रियग्राह्यत्वे च गुणानामेव प्राधान्यं स्यात्, किञ्च काणादानां सत्ता-गुणत्वयोः पञ्चेन्द्रियग्राह्यत्वात्प्राधान्यं स्यादित्यर्थान्तरम् किञ्च गुणा एव इन्द्रियग्राह्या न गुणवन्ति द्रव्याणीति येषां दर्शनं तेषां स्वरूपासिद्धो हेतुरर्थान्तरञ्चेत्यत आह आश्रयत्वाच्चेति। आश्रयत्वात् समवायसम्बन्धेन रसादीनामधिष्ठानत्वात्। नन्वाश्रयत्वस्य प्राधान्यं प्रत्यकिञ्चित्करत्वमि-त्युत्पश्यामो युक्त्यभावात्, नियमेन हि रसादीनामेव कार्य्यकरत्वमध्यव-स्यन्ति कुशलाः; न हि भिषजः सहस्रमपि सम्भूय प्रनष्टरसादिकेन केन-चिद्द्रव्येण किञ्चन व्याधिं प्रतिकर्त्तुमीशते, अतएव गुणप्रकर्षमात्रमभिसमीक्ष्य नवं पुराणं वा द्रव्यं ग्राहयितुमिदमुक्तञ्च "विगन्धेनापरामृष्टमव्यापन्नं रसादिभिः। नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्द्दिशेत्" इति; यद्यत्र द्रव्यं परमार्थतः प्रधानमभविष्यत् तर्हि द्रव्यविवेकमप्यकरिष्यदित्येवं विप्रतिप-न्नानपनुदति आरम्भसामर्थ्याच्चेति। आरम्भसामर्थ्यादाहरणादिकर्म्माई-त्वादित्यर्थः ॥ ४ ॥

शास्त्रप्रामाण्याच्च, शास्त्रे हि द्रव्यं प्रधानमुपदेशे हि योगानां यथा मातुलुङ्गाग्निमन्थौ चेति न रसादय उपदिश्यन्ते ॥ ५ ॥

क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि द्रव्यक्रममपेक्षन्ते यथा तरुणे तरुणाः सम्पूर्णे सम्पूर्णा इति। एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते यथा

---

अस्त्वारम्भसामर्थ्यं द्रव्यस्य, किन्त्वन "मधुराम्ललवणा वातं शमयन्ति" इत्याद्यनुशासनात् रसादीनां कर्त्तृत्वमध्यवस्य तेषामेव प्राधान्यं पश्यामो न त्वेव द्रव्यस्येति चेन्नेत्याह शास्त्रप्रामाण्याच्चेति। अन्वयोऽत्र प्राग्वदेव। उक्तमर्थमवगमयति शास्त्र इत्यादिना। हिरेको हेतावपरश्चावधारणार्थः। यस्माद्योगानां मिश्रकाद्युक्तानां भेषजानामुपदेशे यथा "मातुलुङ्गाग्निमन्थौ च" इत्येवंक्रमेण द्रव्यमुपदिश्यत इति शेषः, न तथा रसादय उपदिश्यन्ते ; तस्मात् शास्त्रे द्रव्यमेव प्रधानमिति योजना ॥ ५ ॥

नन्वनया युक्त्या द्रव्यस्य प्राधान्यञ्चेदिष्टं तर्हि रसस्यापि प्राधान्यमनिवार्य्यं स्यात् "लवणानि मनःशिला" इत्यादिना लवणरसद्रव्योपदेशेन परमार्थतो लवणरसस्याप्युपदेशात्, नहि विनष्टरसानि तानि लघीयसामपि व्याधीनामुपशमार्थं कस्मिंश्चिदपि योग उपदिश्यन्त इत्याह क्रमापेक्षितत्वाच्चेति। नन्विदमप्यनुपपन्नं परस्परापेक्षिणामेषां द्रव्यरसादीनां क्रमापेक्षितत्वानुपपत्तेः, वक्ष्यति च "जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम्" इत्येवं शङ्कनस्यामपास्यन्नाह एकदेशसाध्यत्वाच्चेति। रसादीनान्तु निरवयवत्वादेकदेशसाध्यत्वं नोपपद्यते तस्माद्द्रव्यमेव प्रधानमित्ययमभिसन्धिः। स्यादेतत्, किन्नाम तद्द्रव्यम्? इत्यपेक्षायां विनिगमनाविरहात् द्रव्यलक्षणत्रितयमेवोपदिशति द्रव्येत्यादिना। अत्र हि त्रयाणामेव लक्षणानां लक्षणत्वमेकविधं

संहाटत्तथीरेणेति। तस्माद्द्रव्यं प्रधानम्। द्रव्यलक्षणन्तु क्रियागुणवत् समवायिकारणमिति॥ ६॥

नेत्याहुरन्ये। रसास्तु प्रधानम्, कस्मात्? आगमात्, आगमो हि शास्त्रमुच्यते, शास्त्रे हि रसा अधिकृता, यथा रसायत्त आहार इति, तस्मिंश्च प्राणाः। उपदेशाच्च, उपदिश्यन्ते हि रसा यथा मधुराम्ललवणा वातं शमयन्ति। अनुमानाच्च, रसेन ह्यनुमीयते द्रव्यं यथा मधुरमिति॥ ७॥

---

भवतीति "द्रव्यलक्षणम्" इत्येकवचनं नानुपपन्नम्; तथाच, क्रियावत्, गुणवत्, समवायिकारणञ्च द्रव्यमित्यर्थः। क्रियावत्त्वमत्र कर्मावृत्ति-पदार्थविभाजकोपाधिमत्त्वम्। एवमेव गुणवत्त्वं समवायिकारणत्वञ्च व्याख्येयम्; तेन गगनादौ, घटादावुत्पत्तिकाले उत्पन्ने च यथाक्रमं क्रिया-गुणसमवायिकारणत्वाभावेऽपि नाव्याप्तिः॥ ६॥

मतान्तरमवतारयति नेत्यादिना। नेति द्रव्यप्राधान्यप्रतिषेधार्थम्। न खलु द्रव्यं प्रधानमित्यर्थः। किन्तर्हि? इत्याह रसा इति। तुकारेण रसेतरेषां प्राधान्यं निरुणद्धि, रसा एव प्रधानमित्यर्थः। अधिकृताः प्राधान्येनोपदिष्टा इत्यर्थः। उक्तमर्थमुदाहरणेनावगमयति यथेत्यादिना। रसायत्त आहार इत्युक्तानुवादः, इतिशब्दो वाक्यसमाप्त्यर्थः। व्याजेन रसानामेकान्ततः प्राधान्यं प्रदर्शयन्नाहारं स्तौति तस्मिंश्चेति। यस्तु खल्वाहारः प्राणाधिष्ठानमुच्यते सोऽपि यस्माद्रसायत्तस्तस्माद्रसानां प्राधान्यं प्रति मनागपि नाशङ्कितव्यमित्ययमाशयः। नन्विदमयुक्तम्, "रसाः पुनर्द्रव्याश्रयाः" इति द्रव्याणामप्यधिकृतत्वात्तेषामपि प्राधान्यप्रसक्तेरिति चेन्नेत्याह उपदेशाच्चेति। किन्तु खल्वेवमुच्यते "ऊषकादिः कफं हन्ति" इत्यादिना रसादिवद्द्रव्याणामप्यनेकश उपदेशात्; ये त्वेवं विप्रतिपद्यन्ते तानपास्य

ऋषिवचनाच्च, ऋषिवचनं वेदो यथा किञ्चिदिज्यार्थं मधुरमाहरेदिति । तस्माद्रसाः प्रधानं, रसेषु गुणसंज्ञा । रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ ८ ॥

---

न्याह अनुमानाच्चेति, अनुमानादनुमितिसाधनत्वाच्चेत्यर्थः । ननु किमेतदुच्यते "रसेन ह्यनुमीयते द्रव्यम्" इति, न हि द्रव्यमनासाद्य निपुणैरपि कैश्चित् केनचिदप्यंशेन रसः परिच्छिद्यते तदधीनत्वात्, येनानुमितरसे द्रव्यम् ; अथ चेत् प्रागेवासाद्यते द्रव्यं तर्हि ज्ञातमेव तदित्यनुमानमप्रयोजकं स्यादिति चेन्न प्रमाणकूटानां निःसंशयकारत्वेनाभ्युपगमात् क्वचित् प्रत्यक्षपरिच्छिन्नेऽप्यर्थे उत्पन्नाया अनुमित्याया: प्रयोजकत्वेनोपलब्धेः ; अतएव शिरोमणिरपि "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः, न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः, इति वाचस्पतिवचनयोरविरोधोऽनुमित्सातद्विरहाभ्यां तदुपपत्तेः" इति ॥ ७ ॥

नन्विदमनुपपन्नं द्रव्येणापि रसस्यानुमानात्तथाह्युपलब्धाम्लरसफलास्वादस्य पुरुषस्य कालान्तरे तज्जातीयं फलं दृष्ट्वा तत्राप्यम्लरसमनुमिमानस्य तदुगर्हिरवर्त्तितो दन्तोदकाप्लवो दृश्यते । अपिचानुमितिसाधनत्वादेव चेद्रसः प्रधानं स्यात्तर्हि इच्छादिभिरात्मनोऽनुमानात् गुणभूतानामिच्छादीनामप्यात्मतः प्राधान्यं प्रसज्येतेति वचनावसरं सुदूरं परिक्षिपति ऋषिवचनाच्चेति । ऋषिवचनं वेद इति ऋषीणां वेदार्थोपनिबन्धृत्वाद्वेदवत् प्रमितिसाधनं स्मृतिरिति यावत् । अथवा अतीन्द्रियार्थदर्शिन एव ऋषिपदार्थत्वात् परमेश्वरोऽपि ऋषिः, तद्वचनं वेद इति यथाश्रुत एवार्थः । येषामपि वेदराशयो नित्या इति दर्शनं, तेषामपि मन्त्रद्रष्टृभिरेव वेदाः प्रकाशिता इति वेदस्य ऋषिवचनत्वं नानुपपन्नम् । तद्दर्शयति यथेति । मधुररसस्यामूर्त्तत्वेनाहरणासम्भवात् द्रव्यमाक्षिप्य तेनाहरणसम्बन्धो वाच्यः । तेन मधुरं मधुररसप्रधानं द्रव्यमित्यर्थः । अत्र रसप्राधान्येन द्रव्यव्यपदेशाद्रसाः प्रधानमित्ययमभिसन्धिः । उक्तमर्थं निगमयति तस्मादिति । रसप्राधान्य-

नेत्याहुरन्ये। वीर्य्यं प्रधानमिति। कस्मात्? तद्वशेनौषधकर्म्मनिष्पत्तेः। इहौषधकर्म्माण्यूर्द्ध्वाधोभागोभयभाग-संशोधन-संशमन--संग्राहकाग्निदीपन--पीड़न-लेखन-बृंहण-रसायन-वाजीकरण--श्वयथुकर--विलयन-दहन-दारण-मादन--प्राणघ्न--विष-प्रशमनानि वीर्य्यप्राधान्याद्भवन्ति। तच्च वीर्य्यं द्विविधमुष्णं शीतञ्चाग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं गुरु लघु मृदु

---

प्रत्ययकरी हेतुर्गुणप्राधान्येऽपि वुभुत्सितव्यो गुणत्वसाम्यादित्येवोपदिदिक्षू रसस्य गुणसंज्ञां स्मारयति रसेषु गुणसंज्ञा इति। यस्माद्रसानां गुणसंज्ञा, तस्माद्रसप्राधान्यनिरूपणादेव तदितरेषां गुणानामपि प्राधान्यं निरूपितमित्ययमाशयः। न चैतदश्रद्धेयम्, "अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम्" इत्यादिना शीतादीनामधिकरिष्यमाणत्वात्, "द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः" इत्यादिना द्रवादीनामुपदेशात्, "गन्धलक्षणा क्षितिः" इत्यादौ गन्धादिना क्षित्यादेरनुमानात्, "वायव्यं श्वेतमालभेत" इत्यादिवेदप्रामाण्याच्च रसप्राधान्यवदिहापि हेतूपपत्तेः। गुणप्राधान्यहेतवस्त्वेते रसप्राधान्यहेतव इव व्याख्येयाः। रसेत्यादि। अन्यत्रेति रसविशेषविज्ञानीये ॥ ८ ॥

नेत्यादि। न रसाः प्रधानमित्यर्थः। वीर्य्यं नाम तत् येन रसं विपाकञ्चाभिभूय कर्म्म क्रियते इति निश्चीयते "रसं विपाकस्तौ वीर्य्यं प्रभावस्तान्यपोहति" इत्यात्रेयानुशासनात् तदिदमुच्यते तद्वशेनेति। कानि पुनस्तानि कर्म्माणीत्याह इहेत्यादि। संग्राहकमत्र संग्राहित्वम्, यथा "अविवेक्यादेः सिद्धिः" इति सांख्यकारिकायाम् "अविवेकित्वमविवेकि" इति वाचस्पतिमिश्राः। एवमेव प्राणघ्नश्वयथुकरशब्दावपि व्याख्येयौ। तत्र प्राणघ्नत्वं विषादीनां श्वयथुकरत्वञ्च भल्लातकादीनाम्, विलयनं श्वयथुनाशनं,

तीक्ष्णञ्चेति; एतानि खलु वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्व्वन्ति । यथा—तावन्महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयत्युष्णवीर्य्यत्वात्, तथा कुलत्थः कषायः कटुकः पलाण्डुः स्नेहभावाच्च । मधुरश्चेक्षुरसो वातं वर्द्धयति शीतवीर्य्यत्वात् । कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वादम्लमामलकं लवणं सैन्धवञ्च । तिक्ता काकमाची पित्तं वर्द्धयत्युष्णवीर्य्यत्वान्मधुरा मत्स्याश्च । कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात् । अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वान्मधुरं क्षौद्रञ्च । तदेतन्निदर्शनमात्रमुक्तम् ॥ ८ ॥

भवन्ति चात्र ।

ये रसा वातशमना भवन्ति यदि तेषु वै ।<br>
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥<br>
ये रसाः पित्तशमना भवन्ति यदि तेषु वै ।<br>
तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्म्मकारिणः ॥

---

तत्र सिध्मकोठानां मातुलुङ्गादीनां कर्म्मेति वेदितव्यम् । परिशिष्टानि सुखावगम्यानि । केचिदित्यादि । नेह गुरुलघुशब्दापवर्त्तनेन विशदपिच्छिलयोः पाठो न्याय्यः शास्त्रेऽस्मिन् क्वचिदपि तयोर्व्वीर्य्यत्वेनानुपदेशादुपदेशाच्च गुरुलघ्वोः, वक्ष्यति हि "ये रसाः" इत्युपक्रम्य "रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्" इत्यादि । उक्तमर्थमुदाहरणेन स्फोरयति यथेति । कटुका पिप्पलीति पिप्पलीशब्दस्येह पिप्पलीलतायां तात्पर्य्य-

ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै ।
स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते ॥

तस्माद्वीर्य्यं प्रधानमिति ॥ १० ॥

नेत्याहुरन्ये । विपाकः प्रधानमिति । कस्मात् ? सम्य-

मित्याहुः, आत्रेयादिभिरुष्णवीर्य्यत्वेनाभिहितायाः पिप्पल्या मृदुशीतत्वा-नुपपत्तेः । काकमाची पित्तं वर्द्धयतीति काकमाच्याः पित्तवर्द्धकत्वं स्वतन्त्र-पित्ताभिप्रायेणेति लक्षणीयम्, वक्ष्यमाणं त्रिदोषहरत्वन्त्वनुबन्धभूतपित्त-हरत्वेनेति नानुपपत्तिः । कटुकं मूलकमिति मूलकशब्देनेह महन्मूलक-मेवाभिप्रेयत इति वक्तव्यमेव, क्षुद्रमूलकस्य त्रिदोषहरत्वेन विवक्षितत्वात् । न ह्येतावन्त्येव वीर्य्यप्राधान्यप्रत्ययकराणि भवन्ति, तिक्तानामर्कागुरुगुडुची-नामौष्ण्येन पित्तप्रशमकत्वदर्शनात्, तदिदमुच्यते तदेतन्निदर्शनमात्रमुक्त-मिति । परिशिष्टं निगदव्याख्यातम् ॥ ८—१० ॥

वीर्य्यप्राधान्यवादिमतमवमत्य विपाकः प्रधानमेवंवादिनो मतमनुस-न्धत्ते नेत्यादिना । विपाको नाम "जाठरेणाग्निना योगाद्यदुदेति रसा-न्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः" इत्युक्तलक्षणः । सम्यङ्मिथ्याविपाकत्वादिति । सम्यक् मिथ्या वा विपाको येषां तेषां भावस्तस्मात् । सम्यङ्मिथ्याविपाकत्वादेव द्रव्याणां कार्य्यकरत्वात् विपाकः प्रधानमित्येव स्फुटीकृत्यावगमयति इहेत्यादिना । सर्व्वशब्देनेह वमनादे-रितरद्रव्याण्येवाभिप्रेयन्ते विपाकमन्तरेणैव कार्य्यकरत्वात् । अत्र द्रव्य-गुणानुरूपो निष्ठापाकः सम्यग्विपाक उच्यते, तद्विपरीतस्तु मिथ्यावि-पाकः । तयोराद्यः कटुकश्चित्रकः पाकेऽपि कटुक इत्यादौ, द्वितीयस्तु कटुका पिप्पली पाके मधुरा इत्येवमादौ बुभुत्सितव्यः । गुणं दोषं वेति वाशब्दश्चार्थे, सम्यग्विपक्वानि मिथ्याविपक्वानि वा गुणं दोषञ्च जनयन्ती-त्यर्थः । तद्यथा सम्यग्विपक्वश्चित्रकोऽग्निसन्दीपनादिरूपं गुणं, रुद्धमूत्र-त्वादिरूपं दोषञ्च जनयति ; मिथ्याविपक्वा पिप्पली च शुक्रावर्द्धनादिरूपं गुणं, प्रक्लेदजननादिरूपं दोषञ्च जनयति । यदाह चरकः "पिप्पल्यः क-

ङ्मिथ्याविपाकत्वात्। इह सर्व्वद्रव्याण्यभ्यवहृतानि सम्य-ङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति॥ ११॥

तत्राहुरन्ये प्रतिरसं पाक इति। केचित् त्रिविध-मिच्छन्ति मधुरमम्लं कटुकञ्चेति। तत्तु न सम्यक्, भूतगुणा-दागमाच्चाम्लो विपाको नास्ति। पित्तं हि विदग्धमम्लता-

---

टुकाः सत्यो मधुरविपाका गुर्व्व्यो नात्यर्थं स्निग्धोष्णाः प्रक्लेदिन्यः" इति। यद्वा अग्निसाम्यान्न हीनं नापि चाधिकं निष्ठापाकः सम्यग्विपाकः, तदन्य-स्त्वग्निवैषम्यान्मिथ्याविपाकः। तत्र सम्यग्विपाके यथोक्ता गुणाः, मिथ्या-विपाके चामादिदोषाः सम्भवन्तीत्यायुर्व्वेदविदो भाषन्ते, तस्माद्वीर्य्यमपि विपाकाधीनं भवतीति निर्णीयते विपाकविशेषेण तद्विशेषादित्यतः "रसं विपाकस्तौ वीर्य्यम्" इत्यस्यानादरादुपपन्नं भवति "सम्यङ्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति" इति। नातो विपाकप्राधान्यं प्रति न काचिद्वि-प्रतिपत्तिरित्ययमभिसन्धिः॥ ११॥

सम्प्रति स्वाभिमतं विपाकप्रकारद्वयमुपदिदिक्षुः प्रथमन्तावत् षड्विध-विपाकवादिनां त्रिविधविपाकवादिनाञ्च मतमुपन्यस्य दूषयति तत्राहुरन्ये इत्यादिना लवणतामुपैति इत्यन्तेन ग्रन्थसन्दर्भेण। भूतगुणादिति। भूत-शब्देनेह प्रत्यासत्त्या भूम्यग्नी अभिधीयेते, वक्ष्यति हि "भूम्यग्निगुणबाहुल्या-दम्लः" इति; तथाचाम्लगता ह्यग्निगुणा विपाचकाग्निगुणैः सामान्यादभि-वृद्धा, अम्लानां स्थूलसारसान्द्रादीनां विरुद्धानां तत्रस्थानां भूमिगुणाना-मवजया भवन्तीत्यम्लो रसोऽग्निगुणबाहुल्यात् कटु विपच्यते नैवाम्लं, तदिद-मुपपन्नं भवति भूतगुणादिति। न चैवङ्गते "तोयाग्निगुणबाहुल्याल्लवणः" इत्यनागतावेक्षणादनयैव युक्त्या कटुविपाकसर्हो लवणो रसः कथं मधुरं वि-पच्यत इति वाच्यम्, तोयस्याग्न्यवजयस्वभावदर्शनात्। दृढ़प्रतिपत्तये हेत्वन्तरमुपन्यस्यति आगमाच्चेति। आगमस्तावत् "द्रव्येषु पच्यमानेषु" इ-त्यादिर्व्वक्ष्यमाणः। नन्वेतच्चेत्तर्हि कथन्तर्ह्याहारोत्तरकालादौ छर्द्दयतामम्ल-

मुपैति अग्नेर्मन्दत्वात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा हि विदग्धो लवणतामुपैतीति ॥ १२ ॥

मधुरो मधुरस्य, अम्लोऽम्लस्य, एवं सर्व्वेषामिति केचिदाहुः। दृष्टान्तञ्चोपदिशन्ति यथा तावत् क्षीरमुखागतमभिपच्यमानं मधुरमेव स्यात्, तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति। केचिद्वदन्त्यबलवन्तो बलवतां वशमायान्तीत्येवमनवस्थितिस्तस्मादसिद्धान्त एषः ॥ १३ ॥

---

आगच्छेदित्याशङ्क्याह पित्तमित्यादि। हिशब्दोऽवधारणार्थः। एतेन प्रतिरसविपाकवादिनस्त्रिविधविपाकवादिनश्च निरस्यन्ते, तथाविधस्याम्लस्य विपाकत्वानुपपत्तेः। नचैतावतापि त्रिविधविपाकवादिनो निरस्यन्त एकान्तेन यथाकथञ्चित्पाकत्रैविध्यवादिनो हि ते तथाविधामम्लतामादायैव त्रिविधं विपाकमिच्छन्तीत्येवं ये प्रत्यवतिष्ठन्ते तान् निरस्यन्नाह यदीत्यादि। यदीत्यभ्युपगमार्थः। एवमुक्तप्रकारश्चेदम्लः पाक इष्टस्तर्हि लवणोऽपि अन्यश्चतुर्थः पाको भविष्यतीति त्रैविध्यपरिहानिर्दुरपनेयेत्ययमभिसन्धिः ॥ १२ ॥

पुनरपि मतान्तरद्वितयमुपन्यस्य दूषयति मधुर इत्यादिना। अम्लविपाकपरिखण्डनेनैव खण्डिते अर्थेते अन्यथा दूषणाय इहोपात्ते इत्यनुसन्धेयम्। सर्व्वेषामिति संयुक्तासंयुक्तानाम्। उखागतं स्थालीस्थम्। प्रकीर्णा इत्युप्ताः, उत्तरकाले प्ररोहकाले। अबलवन्तोऽणुत्वेन दुर्व्वलाः, बलवतां व्यक्तानाम्, वशमायत्ततामायान्तीति "बलीयसा दुर्व्वलं बाध्यते" इति न्यायादिति भावः। अनवस्थितिरिति रसानुरसकल्पनेन रसानामपरिसंख्येयत्वादित्यवधेयम्। यदाह चरकः "त्रिषष्टिः स्यादसंख्येया रसानुरसकल्पनात्। रसास्तरतमाभ्यान्तु संख्यामतिपतन्ति हि" इति। एष द्विविधो विपाकवादमार्गः ॥ १३ ॥

आगमे हि द्विविध एव पाको मधुरः कटुकश्च। तयोर्मधुराख्यो गुरुः, कटुकाख्यो लघुरिति। तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च, पृथिव्यापश्च गुर्व्व्यः शेषाणि लघूनि। तस्माद्द्विविध एव पाक इति॥ १४॥

भवति चात्र।

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः।
निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु।
निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते॥ १५॥

---

स्यादेतत्परमार्थतस्तु कतिविधः पाक इत्याह आगम इत्यादि। हिशब्दः सिद्धान्तानुसरणार्थः। कुतस्तु खलु गुरुर्लघुश्चेति द्विविधो विपाको भवितुमर्हति, विपाको हि नाम रसपरिणामविशेष इति निश्चीयते "जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्" इत्याद्यनुशासनात्, रसस्त्वाप्यआप्यश्च गुरुरिति विश्वजनीनस्फुटतरा प्रतीतिर्न शक्या वचनसहस्रैरप्यन्यथयितुम्, न ह्यागमाः सहस्रमपि उष्णमग्निं शीतं कर्त्तुमीशत इत्याह तत्रेत्यादि। तत्र विपाकाभिनिर्वृत्तौ पृथिव्यादीनां गुणसाधर्म्याद्गुरुत्वलघुत्वधर्म्मसाम्याद्गुरुता लघुता चेति द्वैविध्यं भवति। साधर्म्यं भागशो दर्शयति पृथिव्यापश्चेत्यादिना। एतेन पृथिव्यपाङ्गुरुत्वं साधर्म्यम्, शेषाणान्तु लघुत्वमित्याविष्कृतं भवति; तस्मात् पृथिव्यादीनां द्वैविध्याद्विपाकोऽपि द्विविध एव भवति, कारणानुरूपं कार्य्यमिति कृत्वेति भावः। उक्तमर्थं स्फुटीकृत्यावगमयति द्रव्येष्वित्यादिना श्लोकद्वितयेन। अतिदीपितार्थमेतत्॥ १४—१५॥

पृथक्त्वदर्शिनामेष वादिनां वादसङ्ग्रहः।
चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः॥ १६॥
तद्‌द्रव्यमात्मना किञ्चित् किञ्चिद्वीर्य्येण सेवितम्।
किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा॥ १७॥

---

द्रव्यादीनां प्राधान्यमाश्रित्य परस्परं विवदमानानां भिषजां मतान्युपसंहरन् स्वमतमुपन्यस्यति पृथक्त्वेत्यादिना। एष सप्रतिवादमुपदिष्टो द्रव्यादिप्राधान्यख्यापको ग्रन्थः पृथक्त्वदर्शिनां विरुद्धैकैकशो द्रव्यादिस्वातन्त्र्यप्रमाणपराणां वादिनां वादानां सङ्ग्रहोऽत्रेति वादसङ्ग्रहः केवलं तर्कनिचय इत्यर्थः। अत्र प्रतीकारविधौ विपश्चितस्तत्त्वार्थदर्शिनो विद्वांसस्तु चतुर्णां द्रव्यरसगुणवीर्य्यविपाकानामेव सामर्थ्यं योग्यतामिच्छन्ति, अतश्चत्वार एव प्रधानानीति भावः। अपिशब्दोऽवधारणार्थः॥ १६॥

चतुर्णां प्राधान्यप्रकारं दर्शयति तदित्यादिना। तत् पचतः प्राधान्येनोपदिष्टं द्रव्यं द्रव्यजातं सेवितमुपयुक्तं सत्, तत्र किञ्चिद्‌द्रव्यम् आत्मना सर्व्वार्थकारिणा भावविशेषेण प्रभावेनेति यावद्दोषं हन्ति करोति वेति परेणान्वयः। एवमुत्तरत्राऽपि व्याख्येयम्। न चात्मशब्दस्यार्थोऽयमनुपपन्नः "गौणश्चेन्नात्मशब्दात्" इति ब्रह्मसूत्रभाष्ये "अचेतनेऽपि प्रधाने भवत्यात्मशब्द आत्मनः सर्व्वार्थकारित्वाद्यथा राज्ञः सर्व्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति" एवं भगवता शङ्कराचार्य्येणाप्युक्तेः। नेह गुणानामनुपादानात्"किञ्चिद्रसेन कुरुते कर्म्म वीर्य्येण चापरम्। द्रव्यं गुणेन पाकेन प्रभावेन च किञ्चन" इति चरकवचनं विप्रतिषिद्धं भवति "रसेषु गुणसंज्ञा" इति प्रागुक्तेरित्यनुसन्धेयम्। नन्वेतावता "मधुराम्ललवणा वातघ्नाः" इत्यादिना रसानां कर्त्तृत्वेन व्यपदेशोऽनुपपन्न इति चेन्न, दात्रं लुनाति इतिवत् करणे एव कर्त्तृत्वव्यपदेशात्॥ १७॥

पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात्।
रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठमतः स्मृतम् ॥ १८ ॥
जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम्।
अन्योन्यापेक्षिकं जन्म यथा स्याद्देहदेहिनोः ॥ १९ ॥
वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः।
रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥ २० ॥
द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः।
श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः ॥ २१ ॥

---

नन्विह किञ्चिन्नैवं भेषजद्रव्यमस्ति यद्रसेन विनाकृतं भवति, तथाच द्रव्याद्विना रसस्याभावाद्द्रव्यञ्चेत् श्रेष्ठं स्यात्तर्हि रसाद्विनापि द्रव्यस्याभावाद्रसस्यापि श्रेष्ठत्वं प्रसज्येत इत्याशङ्क्य परिहरति जन्मेति। देहदेहिनोर्यथा आश्रयाश्रयिभावेनान्योन्यापेक्षिकं जन्म, तथैव द्रव्यरसयोरित्यर्थः। एतेनाश्रयत्वाद्द्रव्यस्य प्राधान्यमिति सूचितं भवति। रसाश्रयत्वेन द्रव्यस्य प्राधान्यं निरूप्य "पाको नास्ति विना वीर्य्यात्" इत्यादिना वीर्य्यरसाधीनत्वेनोपदिष्टयोर्व्विपाकवीर्य्ययोरपि परमार्थतो द्रव्यमेवाश्रय इति कृत्वा द्रव्यस्य प्राधान्यं निरूपयति वीर्य्येत्यादिना श्लोकद्वयेन। द्रव्ये आहारौषधात्मके शालिषष्टिकनागरादौ सम्यगुपयुक्ते सति, द्रव्याणि क्षित्यादीनि विपच्यन्ते रसरूपेण परिणम्य स्वयमेव विशिष्टं पाकमापद्यन्त इत्यर्थः। विपाको हि नाम सम्यक्परिणतरसपरिणामविशेष इत्यवोचाम। हिशब्दो विशेषणार्थः। रसादयस्तु द्रव्यवत् स्वयमेव न विपच्यन्त इत्यर्थः। कुतः? आह शेषा भावास्तदाश्रया इति शेषा द्रव्यातिरिक्ता रसादय इत्यर्थः। अतो द्रव्यं श्रेष्ठं ज्ञेयमिति समन्वयः ॥ १८—२१ ॥

अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः ।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः ॥ २२ ॥
प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः ।
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन ॥ २३ ॥
सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत् ।
तस्मात् तिष्ठेत् तु मतिमानागमे न तु हेतुषु ॥ २४ ॥

इति सुश्रुतसंहितायां द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयो नाम चत्वारिंशोऽध्यायः ।

---

नन्विदमुक्तम् "तद्द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्य्येण सेवितम्" इत्यादि, न चायमस्ति नियमः खल्वेवंजातीयं द्रव्यमेवंजातीयेन साधनेन दोषं हन्ति करोति वेति, दृश्यते हि मधुरोऽयमिक्षुरसः पित्तं शमयति तथाविधाश्च मत्स्याः पुनरेनद्वर्द्धयन्तीति, तद्भूयोऽपि युक्त्या समन्वीय विशदं विज्ञापयतु भगवान्," येन वयं रसवीर्य्यविपाकप्रभावाननुसन्धाय व्यापदः प्रशमार्थं तं तं द्रव्यविशेषं यथावदुपयोक्तुं प्रभविष्याम इत्यत आह अमीमांस्यानीत्यादि । सर्व्वमिदं निगदव्याख्यातम् ॥ २२—२४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयो नाम चत्वारिंशोऽध्यायः ।

---

# एकचत्वारिंशोऽध्यायः ।



अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥१॥

पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिरुत्कर्षस्त्वभिव्यञ्जको भवतीदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति ॥ २ ॥

तत्र स्थूल-सार-सान्द्र-मन्द-स्थिर-खर-गुरु-कठिनं गन्ध-बहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवम् । तत् स्थैर्य-बलसङ्घातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति ॥ ३ ॥

शीत-स्तिमित-स्निग्ध-मन्द-गुरु-सर-सान्द्र-मृदु-पिच्छिलं रसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यम् । तत् स्नेहन-प्रह्लादन-क्लेदन-बन्धन-विष्यन्दनकरमिति ॥ ४ ॥

---

पूर्व्वाध्याये अविभज्योपदिष्टस्य द्रव्यस्य विभज्योपदेशार्थमिदानीं द्रव्यविशेषविज्ञानीयं नामाधिकरोति अथात इत्यादिना । द्रव्याणां पार्थिवत्वादिना प्रभेदा द्रव्यविशेषास्तेषां विज्ञानं द्रव्यविशेषविज्ञानम्, शेषं समानम् । प्रक्रतानुयायित्वात्प्रथमं तावद्द्रव्याभिनिर्वृत्तिप्रकारमुपदिदिक्षति पृथिव्यविति । पृथिव्यप्तेजोवाय्वाकाशानां समुदायादिति "द्विधा विधाय चैकैकं चतुर्धा प्रथमं ततः" इत्यादि वेदान्तवाक्यात् तारतम्येन समुदितेभ्यः सूक्ष्मेभ्य एभ्यो द्रव्याभिनिर्वृत्तिर्भवतीत्यर्थः, तथाचोपपन्नं भवति "उत्कर्षस्त्वभिव्यञ्जकः" इति ॥ १—२ ॥

उष्ण-तीक्ष्ण-सूक्ष्म-रूक्ष-खर-लघु-विशदं रूपगुणबहुल-मीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभाव-मिति तैजसम् । तद्दहन-पचन-दारण-तापन-प्रकाशन-प्रभावर्णकरमिति ॥ ५ ॥

सूक्ष्म-रूक्ष-खर-शिशिर-लघु-विशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयम् । तद्वैशद्य-लाघव-ग्लपन-विरूक्षण-विचारणकरमिति ॥ ६ ॥

श्लक्ष्ण-सूक्ष्म-मृदु-व्यवायि-विशद-विविक्तमव्यक्तरसं शब्द-बहुलमाकाशीयम् । तन्मार्द्दव-शौषिर्य्य-लाघवकरमिति॥७॥

अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्य-मस्तीति कृत्वा तं तं युक्तिविशेषमर्थञ्चाभिसमीक्ष्य स्ववीर्य्य-गुणयुक्तानि द्रव्याणि कर्म्मकराणि भवन्ति । तानि यदा

---

प्रकृतमनुसरति तत्रेति । सारं स्थिरांशं पाकादिभिः क्षयापचयरहित-मित्येतत्, सान्द्रं नीरन्ध्रम्, मन्दमतीक्ष्णवीर्य्यम्, स्थिरं स्वभावादूर्द्ध्वादिगति-रहितम्, खरं खरस्पर्शम् । शीतेत्यादि । स्तिमितमार्द्रम्, ह्लादनं तृप्तिः; विष्यन्दनं विस्रावः । उष्णेत्यादि । खरं खरस्पर्शम्, विशदमपिच्छिलम् । सूक्ष्मेत्यादि । शिशिरं शीतस्पर्शम्, ग्लपनमिति स्वार्थिकोऽयं णिच् हर्षक्षय-इत्यर्थः; विचारणं मनसोऽनेकधा विकल्पनम्, दोषाणां सञ्चारो वा । श्लक्ष्णे-त्यादि । व्यवायि अखिलं देहं व्याप्य पाकाय वर्त्तनम्, वक्ष्यति हि "व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते" इति, विविक्तमसंयुक्तं सच्छिद्रमिति यावत्, अव्यक्तरसं मधुरादिरसविशेषेणानुपलभ्यमानम् ॥ ३—७ ॥

उत्पत्तिमन्तः सर्व्व एव हि क्षित्यादयो भावाः सूक्ष्माणां क्षित्यादीना

कुर्व्वन्ति स कालः, यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयन्ति तत्फलमिति ॥ ८ ॥

तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि, पृथिव्यापो गुर्व्व्यो गुरुत्वादधो गच्छन्ति, तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात्। वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू, लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति, तस्माद्वमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम्। उभयगुणभूयिष्ठमुभयतोभागम्। आकाशगुणभूयिष्ठं संशमनम्। सांग्राहिकमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात्। दीपनमग्निगुणभूयिष्ठम्। लेखनमनिलानलगुणभूयिष्ठम्। बृंहणं पृथिव्यम्बुगुणभूयिष्ठम्। एवमौषधकर्म्माण्यनुमानात्साधयेत् ॥ ९ ॥

---

समुदायाभिनिर्वृत्ततयोक्तलक्षणास्तदिदमुच्यते अनेनेति। निदर्श्यते विज्ञायते द्रव्याणां स्वभावोऽनेनेति निदर्शनं शास्त्रम्। तदयमर्थः—अनेन निदर्शनेन, तत्र स्थूलसारेत्यादिना लाघवकरमित्यन्तेन ग्रन्थेन, जगत्यनौषधीभूतं न किञ्चिद्द्रव्यमस्तीति कृत्वा निश्चितमिति शेषः, तं तमिति बुद्ध्या समाकृष्टतया तत्र विरेचनद्रव्याणीत्यादिना अनन्तरं वक्ष्यमाणं युक्तिविशेषम्, तं तमर्थं विषयं व्याधिविशेषञ्चेति यावत्, अभिसमीक्ष्य प्रयुक्तानि स्ववीर्य्यगुणयुक्तानि गुणवन्ति द्रव्याणि कर्म्मकराणि भवन्तीति योजना। तानीत्यादि स्पष्टम्। तं तं युक्तिविशेषं दर्शयति तत्रेत्यादिना साधयेदित्यन्तेन ग्रन्थेन। अतिरोहितार्थमेतत् ॥ ८—९ ॥

भवन्ति चात्र ।

भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः ।
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् ॥
खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम् ।
वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते ।
वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥ १० ॥
एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितम् ।
द्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचारयेत् ॥ ११ ॥

तत्र य इमे गुणा वीर्य्यसंज्ञकाः शीतोष्ण-स्निग्ध-रूक्ष-गुरु-लघु-मृदु-तीक्ष्णास्तेषां तीक्ष्णोष्णावाग्नेयौ, गुरुशीतौ पृथिव्यम्बु-गुणभूयिष्ठौ, अम्बुगुणभूयिष्ठः स्नेहः, तोयाकाश-गुण-भूयिष्ठं मृदुत्वम्, वायुगुणभूयिष्ठं रौक्ष्यम्, अग्न्याकाश-समीरण-गुणभूयिष्ठं लघुत्वम्; गुरुलघुविपाकावुक्तगुणौ । तत्र गुरूष्ण-स्निग्धा वातघ्नाः, मृदुशीतौ पित्तघ्नौ, लघु-तीक्ष्ण-रूक्षाः श्लेष्मघ्नाः; गुरुपाको वातपित्तघ्नः, लघुपाकः

---

नन्वेषु पृथिव्यम्बुगुणभूयिष्ठादिषु मध्ये कतमत्कतमत् कं नाम दोषं प्रशमयति कं वा वर्द्धयति तद्विशदं विज्ञापयतु भगवान्, यदुपलभ्य विमुक्त-सन्देहा वयमुपस्थितायामापदि यथावदुपयोक्तुं प्रभविष्याम इत्यपेक्षायामाह भूतेज इत्यादि । निगदव्याख्यातम् । सम्प्रति द्रव्यकर्म्माण्युपदिश्य प्रसङ्गात्तद्गतवीर्य्यविपाककर्म्माण्युपदिदिक्षुः प्रथमं तावत् तत्तद्भूतगुणान्युपदिशति

श्लेष्मणः। तेषां शीतोष्ण-स्निग्धाः ह्लादन-पाचन-स्नेहनादिना, रूक्ष-गुरु-लघवो विरूक्षणोपलेप-लेखनादिना, तीक्ष्णो दहन-पचनादिना, मृदुस्तु तद्विपर्यासेनानुमीयते ; गुरुपाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च, लघुर्बद्धविण्मूत्रतया मारुतकोपेन चेति ॥ १२ ॥

तत्र तुल्यगुणेषु भूतेषु रसविशेषमुपलक्षयेत्। तद्यथा—मधुरो गुरुश्च पार्थिवः, मधुरः स्निग्धश्चाप्य इति ॥१३॥

---

तत्रेत्यादिना। गुरुलघुविपाकौ मधुरकटुकविपाकावित्यर्थः, "तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुः" इत्युक्तेः। उक्तगुणौ "पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति" इत्यादिना ग्रन्थेनोक्तभूतगुणावित्यर्थः। तेषामिति वीर्य्यविपाकप्रत्ययसर्गकाम्। केनचिदनवधानपरेणेह "मृदुशीतोष्णाः स्पर्शग्राह्याः, पिच्छिलविशदौ चक्षुःस्पर्शाभ्याम्, स्निग्धरूक्षौ चाक्षुषौ, तीक्ष्णो सुखदुःखोत्पादनेन" इति पठ्यते, व्याख्यायते च तथाविधैष्टीकाडम्बरदार्धसारसचिवैः ; तत्तु न सम्यक् कर्म्मानुमेयानां वीर्य्याणामिन्द्रियग्राह्यत्वानुपपत्तेः, आयुर्व्वेदतन्त्रेषु क्वचिदपि पिच्छिलविशदयोर्व्वीर्य्यत्वेनानुपदेशाच्च ॥ १०—१२ ॥

न खलु मधुररसप्रायत्वेनोपदेशेन पार्थिवमाप्यञ्च विशेषतो विज्ञातं भवति, मधुरो हि रसस्ते प्रति धर्म्मतो विशिष्यते, तदिदानीमवसरवशाद्विशिनष्टि तत्रेत्यादिना। अत्र तुल्यगुणेष्विति गुणशब्दस्य रस एव तात्पर्य्यं सामान्यशब्दस्य विशेषवृत्तित्वात्। तदयमर्थः—तत्र पूर्व्वोक्तेषु तुल्यरसेषु आप्यपार्थिवेषु, भूतेषु भूतारब्धेषु द्रव्येषु, रसविशेषं व्यक्तस्य मधुररसस्य वीर्य्यतो भेदमुपलक्षयेत्, तथा तथा शरीर-स्थिति-वृद्धि-क्षयकारित्वमभिसमीक्ष्य द्रव्यविशेषविज्ञानार्थमिति शेषः। उक्तमर्थं स्फुटीकृत्यावगमयति तद्यथेति। स्यादेतत्कथं नु पुनर्जीववति शरीरे निर्जीवं द्रव्यजातं,

भवति चात्र ।

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा ।
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः ॥ १४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यविशेषविज्ञानीयो नामैकचत्वारिंशोऽध्यायः ।

---

स्थित्यादौ हेतुर्भवतीत्याह गुणा इत्यादि । द्रव्येषु ये गुणा उक्तास्ते गुणाः शरीरेष्वपि तथा, उच्यन्ते भिषग्भिरिति शेषः; तस्माद्देहिनां स्थानवृद्धि-क्षया दोषधात्वग्निसमतावृद्धिक्षयाः द्रव्यहेतुका निर्जीवद्रव्यमूला भवन्ति, यथावदुपयोगादुपयोगतारतम्याच्चेति भावः ॥ १३ । १४ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने द्रव्यविशेषविज्ञानीयो नाम एकचत्वारिंशोऽध्यायः ।

---

# द्वाचत्वारिंशोऽध्यायः।



अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः ॥१॥

आकाश-पवन-दहन-तोय-भूमिषु यथासंख्यमेकोत्तर-परिवृद्धाः शब्द-स्पर्श-रूप-रस-गन्धाः, तस्मादाप्यो रसः।

---

पूर्व्वाध्याये "मधुररसप्रायम्" इत्येवं नाममात्रेणोपन्यस्तो रसशब्दः प्रतिपित्सूनां नैव तद्विशेषप्रत्ययाय प्रभविष्यतीति मन्वानो भगवांस्तन्त्रकार इदानीं रसविशेषविज्ञानीयं नामाधिकरोति अथात इत्यादिना ॥ १ ॥

न खलु कश्चित्तत्त्वतो रसमजानन् केनाप्यंशेन तद्विशेषं विज्ञातुमुत्सहते, तदिमं प्रक्रतानुयायित्वात्प्रथमं तावद्रसं निरूपयति आकाशेत्यादिना। संख्याशब्दो हि वीप्सामन्तरेणाप्यर्थवशाद्वीप्सार्थं गमयतीत्याह भगवान् भाष्यकारः। तथाच उत्तरे भूते परिवृद्धा उत्तरपरिवृद्धाः, एकेन एकैकस्या-काशादेर्गुणेनोत्तरपरिवृद्धा एकोत्तरपरिवृद्धाः; एकैकस्मिन् उत्तरे भूते परिवृद्धाः "आद्याद्यस्य गुणन्त्वेषामवाप्नोति परः परः। यो यो याव-तिथश्चैषां स स तावद्गुणः स्मृतः" इति मनूक्तेः पूर्व्वपूर्व्वभूतगुणेन प्रवृद्धा इति वा वाक्यार्थः। अत्र यावतां पूरणो यावतिथः, वतोरिथुक्। एतेनैतदुक्तं भवति, आकाशे शब्दो गुणः, पवने शब्दस्पर्शौ, दहने शब्द-स्पर्श-रूपाणि,तोये शब्द-स्पर्श-रूप-रसाः, भूमौ शब्द-स्पर्श-रूप-रस-गन्धा भवन्ति पूर्व्वपूर्व्वगुणान्वयेन,मुख्यतस्त्वाकाशादीनां शब्द-स्पर्श-रूप-रस-गन्धा एव गुणा इत्युच्यते तस्मादिति। अपामयमित्याप्यः, एवमपि यत् "रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा" इत्यात्रेयेणोक्तं तत्पूर्व्वपूर्व्वभूतगुणानुप्रवेशेन जाय-मानानां स्थूलानामपां पुनर्गन्धतन्मात्रायां क्षितावनुप्रवेशात्तास्वपि रसो-ऽभिव्यज्यत इत्यभिप्रायेणेति बोध्यम्। अतएव "षड्विधस्तु रसस्तत्र" इति

परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यमस्ति, उत्कर्षापकर्षात्तु ग्रहणम् ॥ २ ॥

स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढ़ा विभ-

---

नैयायिकाः। ननु यद्याप्यो रसस्तत्कथमान्तरीक्षादिषु सर्व्वेष्वेव द्रव्येषु रस उपदिश्यत इत्याह परस्परेत्यादि। परस्परसंसर्गादाकाशादीनां भूम्यन्तानामितरेतरसम्बन्धात्सर्व्वेषु सर्व्वेषां सान्निध्यं मिश्रीभावोऽस्तीत्यर्थः, अत आन्तरीक्षादिष्वपि रस उपदिश्यत इति भावः। ननु परस्परसंसर्गात्सान्निध्याभ्युपगमे आलोकान्धकारयोरपि परस्परसंसर्गोऽस्ति तयोर्व्वध्यघातकत्वात्, तथाचालोके अन्धकारस्य अन्धकारे आलोकस्य सान्निध्यं स्यादित्यत आह परस्परानुग्रहादिति। आलोकान्धकारयोस्तु खलु वध्यघातकत्वमेव न पुनः परस्परानुग्रह इत्यनयोरसान्निध्यम्। ननु तथापि "देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः" इत्यादिस्मरणाद्देवानां मानुषाणाञ्च परस्परानुग्रहोऽस्तीति देवेषु मानुषाणां मानुषेषु च देवानां सान्निध्यं स्यादित्याह परस्परानुप्रवेशादिति। परस्परानुप्रवेशाभावान्न तेषामन्योन्यस्य सान्निध्यमिति भावः; भूतेषु तु पञ्चीकरणेन परस्परानुप्रवेशात्सान्निध्यमस्तीति नानुपपत्तिः। पञ्चीकरणं हि नामाकाशादीनां पञ्चानामंशविशेषेण तेष्वेव परस्परानुप्रवेश इत्यवोचाम "द्विधा विधाय चैकैकम्" इत्यादिवेदान्तवाक्यमभिसमीक्ष्य। ननु यदि सर्व्वेषु सर्व्वेषां सान्निध्यं स्यात् तत्कथमिदमुच्यते आप्यो रस इत्यत आह उत्कर्षेत्यादि। ग्रहणशब्दोऽत्र सविपर्य्यय एव बोद्धव्यः, यथा "स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत्" इत्यत्र प्राधान्यशब्दस्तद्वत्; तथाच उत्कर्षाद्ग्रहणमपकर्षात्त्वग्रहणमित्यर्थः ॥ २ ॥

स इत्यादि। शेषभूतानि तोयव्यतिरिक्तानि चत्वारि भूतानि, तेषां संसर्गात्पञ्चीकरणेन तेषु तोयस्य तोये च तेषामनुप्रवेशस्ततो यः सम्बन्धस्तस्मात् शेषभूतसंसर्गात्, विदग्धः पाकेनावस्थान्तरं गतः, षोढ़ा संयोगशक्ति-

च्यते । तद्यथा—मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय-इति । ते च भूयः परस्परसंसर्गात् त्रिषष्टिधा भिद्यन्ते । तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः । तोयाग्निगुणबाहुल्या-दम्लः । भूम्यग्निगुणबाहुल्याल्लवणः । वाय्वग्निगुणबाहु-ल्यात् कटुकः । वाय्वाकाशगुणबाहुल्यात् तिक्तः । पृथिव्य-निलगुणबाहुल्यात् कषाय इति । तत्र मधुराम्ललवणा वातघ्नाः । मधुरतिक्तकषायाः पित्तघ्नाः । कटुतिक्तकषायाः श्लेष्मघ्नाः ॥ ३ ॥

तत्र वायुरात्मैवात्मा, पित्तमाग्नेयं, श्लेष्मा सौम्य इति ।

---

षड्विधत्वात् षट्प्रकारः सन् विभज्यते विभक्तो भवतीत्यर्थः । एतदेव दर्श-यति तद्यथेति । त्रिषष्टिधा भिद्यन्त इति भेदप्रकारश्चोपरिष्टाद्रसभेदीये स्वय-मेव निवेदयिष्यते । शेषभूतसंसर्गाद्विदग्धप्रकारं निरूपयति तत्रेत्यादिना । भूम्यम्बुगुणेत्यादि । पञ्चीकरणेन परस्परानुप्रविष्टेषु पञ्चसु भूतेषु मध्ये पाकवशादाकाशादीनां त्रयाणां गुणह्रासाद्भूम्यम्बुगुणवृद्धेर्वा रसो मधुरः सम्पद्यते, यथा हरिद्रा-चूर्णसंयोगाल्लौहित्यमम्ल-लवणसंयोगाच्च माधुर्यं, त-दिदमुच्यते भूम्यम्बुगुणबाहुल्यान्मधुर इति । एतेनैव शेषमपि व्याख्यात-प्रायम् । एवमप्यान्तरीक्षे तोये यदम्लक्षारसो दृश्यते, तत्तथाविधसंसर्गाभावा-दित्यनुसन्धेयम् ॥ ३ ॥

निखिलमप्यायुर्वेदमधीत्याज्ञातार्थ एव भवति, यावदर्थतत्त्वं न जाना-तीति मन्वानो भगवानिहोक्तं मधुरादीनां वातादिप्रशमनत्वं प्रागुक्तं कट्वा-दीनां वातादिप्रकोपणत्वञ्च युक्त्या समन्वीयोपदिदिक्षति तत्रेत्यादिना । तत्र रसमूलप्रकोपण-प्रशमनेषु वाय्वादिषु मध्ये, आत्मा आत्मोपकारको वायु-रात्मेव भूतवायुरिवेत्यर्थः । इवार्थोऽयमेवशब्दः । "आत्मा * * * हुता-

त एते रसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च। केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्याश्चाग्नेयाश्च। तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः। मधुराम्ललवणाः स्निग्धा गुरवश्च। कटुतिक्तकषाया रूक्षा लघवश्च। सौम्याः शीता आग्नेयाश्चोष्णाः॥ ४॥

तत्र शैत्य-रौक्ष्य-लाघव-वैशद्य-वैष्टम्भ्यगुणलक्षणो वायुः,

---

श्वने वायौ" इति हेमचन्द्रः। प्रकरणादेतेनैतदुक्तं भवति, भूतवायुर्यथा "एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः" इति श्रुतेराकाशात्सम्भूत इति निश्चीयते तथैवायं शारीरोऽपि वायुरिति, तथाचास्य वायोराकाशयोनिकत्वाल्लघ्वादयो गुणा नैसर्गिका इति तात्पर्य्यम्। कारणगुणा हि कार्य्येषु वर्त्तन्ते। अत्र वायोरात्मोपकारकत्वेन विशेषणं गोबलीवर्द्दन्यायाज्झटित्यवबोधार्थं सुखार्थं वेत्यनुसन्धेयम्। इतिशब्दो वाय्वादीनां प्रकृतिव्याख्यापरिसमाप्त्यर्थः। त एत इत्यादि। ते प्राग्व्रणप्रश्ने दोषप्रकोपणत्वेनोपदिष्टा एते मधुरादयो रसाः स्वयोनिः "भूम्यम्बुगुणबाहुल्यान्मधुरः" इत्यादिस्मरणात् तत्तद्भूम्यम्ब्वादिरिव योनिर्यस्य तस्य वर्द्धनाः स्वयोनिवर्द्धनाः, एतेनैवान्ययोनिप्रशमनाश्चेत्यपि व्याख्यातप्रायम्। अत उपपन्नं भवति मधुरादीनां वातादिप्रशमनत्वं कट्वादीनाञ्च वातादिप्रकोपणत्वं तत्तद्योनिगुणविवेकतो भेदाभेदादित्ययमभिसन्धिः। ये तु रसस्य द्वैविध्यमिच्छन्ति, तन्मतमप्यविप्रतिषिद्धं भवतीति दर्शयन्नाह केचिदित्यादि। न खलु सौम्यत्वेनाग्नेयत्वेन च रसानां वातप्रशमनत्वं वातप्रकोपणत्वञ्च सहसा प्रतीतं भवति वायोस्तथात्वेनानुपदेशात्, तदिदं पुनर्विशिनष्टि मधुराम्ललवणा इत्यादिना लघवश्चेत्यन्तेन॥ ४॥

सम्प्रति सुखप्रतिपत्तये रसानां स्वयोनिवर्द्धनत्वमन्ययोनिप्रशमनत्वञ्चोदाहरणेनावगमयति तत्रेत्यादिना। इदमत्रावधेयम्, "शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन

तस्य समानयोनिः कषायो रसः, सोऽस्य शैत्याच्छैत्यं वर्द्धयति रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्यात् वैशद्यं वैष्टम्भ्याद्वैष्टम्भ्यमिति ॥ ५ ॥

औष्ण्य-तैक्ष्ण्य-रौक्ष्य-लाघव-वैशद्यगुणलक्षणं पित्तं, तस्य समानयोनिः कटुको रसः, सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति तैक्ष्ण्यात् तैक्ष्ण्यं रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यमिति ॥ ६ ॥

माधुर्य्य-स्नेह-गौरव-शैत्य-पैच्छिल्यगुणलक्षणः श्लेष्मा, तस्य समानयोनिर्मधुरो रसः, सोऽस्य माधुर्य्यान्माधुर्य्यं वर्द्धयति स्नेहात् स्नेहं गौरवाद्गौरवं शैत्याच्छैत्यं पैच्छिल्यात् पैच्छिल्यमिति। तस्य पुनरन्ययोनिः कटुको रसः, स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्य्यमभिभवति रौक्ष्यात् स्नेहं लाघवाद्गौरवमौष्ण्याच्छैत्यं वैशद्यात् पैच्छिल्यमिति। तदेतन्निदर्शनमात्रमुक्तम् ॥ ७ ॥

---

प्रतीयमानत्वाद्द्रव्यात्मकता गुणस्य" इति येषां दर्शनं,तन्मतमवलम्ब्येदमुच्यते "सोऽस्य शैत्यात् शैत्यम्" इत्यादि, नातो रसानां गुणत्वेन गुणवत्त्वाभावेऽपि गुणवत्त्वेनायमुपदेशोऽनुपपन्नः ; अतएवोक्तमात्रेयेण "गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक्। विद्याद्द्रव्यगुणान्", इति। तस्य पुनरित्यादि। न तावदेकान्तेन सर्व्वभिषजः स्वयोनिवर्द्धनप्रकारपरिज्ञानादेवान्ययोनिप्रशमनप्रकारमपि विज्ञास्यन्ति, नापि च यथाकथञ्चिदुपदेशगम्य-

रसलक्षणमत ऊर्द्धं वक्ष्यामः । तत्र यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखोपलेपं जनयति श्लेष्माणञ्चाभिवर्द्धयति स मधुरः । यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धाञ्चोत्पादयति सोऽम्लः । यो भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्द्दवञ्चापादयति स लवणः । यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुकः । यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिञ्चापादयति हर्षञ्च स तिक्तः । यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीड़यति च स कषायः ॥ ८ ॥

रसगुणानत ऊर्द्धं वक्ष्यामः । तत्र मधुरो रसो रस-रक्त-मांस-मेदो-ऽस्थि-मज्जौजः-शुक्र-स्तन्यवर्द्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत् सन्धानः शोणित-रस-प्रसादनो बाल-वृद्ध-क्षत-क्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णा-मूर्च्छा-दाह-

---

स्वार्थस्यास्य यथाक्रममुदाहरणचितयेनोपदेशः प्रशस्यत इति सम्प्रधार्य्य श्लेष्मणः सन्निहितत्वात् क्रमं हित्वेदमुच्यते "तस्य पुनरन्ययोनिः" इति । निदर्शनमुदाहरणम् । परिशिष्टं निगदव्याख्यातम् ॥ ५—७ ॥

रसेत्यादि । परितोषं भोजनकाले आनन्दम्, प्रह्लादयति भोजनायोपनीत एव सुखमुत्पादयति, तर्पयति अभ्यवहृतस्तृप्तिमापादयति अन्नेतरेषां भोजनेच्छां निवारयतीति यावत् । चोषं चूषणवद्वेदनाविशेषम्, हर्षं दाहृत्वाप्रशमनेन सन्तोषम् । अतिरोहितार्थमन्यत् ॥ ८ ॥

प्रशमनः षड़िन्द्रियप्रसादनः कृमिकफकरश्चेति। स एवं-गुणोऽप्येक एवात्यर्थमासेव्यमानः कास-श्वासालसक-वमथु-वदनमाधुर्य्य-स्वरोपघात-कृमि-गलगण्डानापादयति तथार्व्वुद-श्लीपद-वस्ति-गुदोपलेपाभिष्यन्दप्रभृतीन् जनयति ॥ ९ ॥

अम्लो जरणः पाचनः पवननिग्रहणोऽनुलोमनः कोष्ठ-विदाही वहिःशीतः क्लेदनः प्रायशो हृद्यश्चेति। स एवं-गुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्ष-नयनसम्मीलन-रोमसंवेजन-कफविलयन-शरीरशैथिल्यान्यापादयति तथा क्षताभिहत-दग्ध--दष्ट--भग्न--शून-रुग्ण-प्रच्युतावमूत्रित-विसर्पित-च्छिन्न-भिन्न-विद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्चेति ॥ १० ॥

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्य-कृदुष्णः सर्व्वरसप्रत्यनीको मार्गविशोधनः सर्व्वशरीरावयव-मार्द्दवकरश्चेति। स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्र-कण्डू-कोठ-शोफ--वैवर्ण्य--पुंस्त्वोपघातेन्द्रियोपतापान् तथा

---

रसगुणानित्यादि। प्रसादनो निर्म्मलीकरणः। अम्ल इत्यादौ रोमसं-वेजनं रोमहर्षः, अभिहतमाहतम्, दष्टं व्याघ्रादिभिः, शूनमभिघातादिना स्फीतम्, रुग्णं तथैव वक्रीभूतम्, "रुग्णं भुग्ने" इत्यमरः। प्रच्युतं विश्लिष्टं भग्नभेदः। अवमूत्रितं मूत्रविषाणां जन्तूनां मूत्रदुष्टम्, विसर्पितं सर्प-विषप्राणिस्पृष्टम्, एतेषां लिङ्गान्यत ऊर्द्ध्वं निवेदयिष्यन्ते। समोपयोगे हि लवण एवाऽभिव्यज्यते, तदिदं लवण इत्यादावुपपन्नं भवति सर्व्वरस-

मुखाक्षिपाकं रक्तपित्त-वातशोणिताम्लीकाप्रभृतीनापादयति ॥ ११ ॥

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्य-कफ-क्रिमि-विष-कुष्ठ-कण्डूपशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्य-शुक्र-मेदसामुपहन्ता चेति । स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रम-मद-गलताल्वोष्ठशोष-दाह-सन्ताप-बलविघात-कम्प-तोद-भेदकृत् कर-चरण-पार्श्व-पृष्ठ-प्रभृतिषु च वातशूलानापादयति ॥ १२ ॥

तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डू-कोठ-तृष्णा-मूर्च्छा-ज्वरप्रशमनः स्तन्यशोधनो विण्मूत्र-क्लेद-मेदो-वसा-पूयोपशोषणश्चेति । स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्दित-शिरःशूल-भ्रम-तोद--भेद--च्छेदा-स्यवैरस्यान्यापादयति ॥ १३ ॥

कषायः सङ्ग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति । स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीड़ास्यशोषोदराध्मान--वाक्य-ग्रह-मन्यास्तम्भ-गात्रस्फुरण--चुमुचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जनयति ॥ १४ ॥

---

प्रत्यनीक इति । कटुक इत्यादौ भेदो विरेचनम् । कषाय इत्यादौ चुमुचुमायनं सर्षपलिप्तस्येव त्वचि वेदनाविशेषः । आक्षेपणं हस्तपदादेर्विक्षेपः ॥ ८—१४ ॥

अतः सर्व्वेषामेव द्रव्याण्युपदेक्ष्यामः। तद्यथा— काकोल्यादिः क्षीर-घृत-वसा-मज्ज-शालि-षष्टिक-यव-गोधूम-माष-शृङ्गाटक-कशेरुक-त्रपुसैर्व्वारुक-कर्कारुकालाबु-कालिन्द-कतक-गिलोड्य-पियाल-पुष्करबीज-काश्मर्य्य-मधुक-द्राक्षा-खर्ज्जूर-राजादन-ताल-नारिकेलेक्षुविकार-बलातिबलात्म-गुप्ता-विदारी-पयस्या-गोक्षुरक-क्षीरमोरट-मधूलिका-कुष्माण्डप्रभृतीनि समासेन मधुरो वर्गः ॥ १५ ॥

दाड़िमामलक-मातुलुङ्गाम्रातक-कपित्थ-करमर्द्द-बदर-कोल-प्राचीनामलक-तिन्तिड़ीक-कोशाम्र-भव्य-पारावत-वेत्र-फल-लकुचाम्लवेतस-दन्तशठ-दधि-तक्र-सुरा-शुक्त-सौवीर-तुषोदक-धान्याम्लप्रभृतीनि समासेनाम्लो वर्गः ॥ १६ ॥

---

अत इत्यादि। सर्व्वेषामिति प्रक्रान्तत्वाद्रसानाम्। शृङ्गाटं "पानिफल" इति प्रसिद्धम्, कशेरुकं "केशड़ुर्" इति विज्ञायते, त्रपुसं "क्षीरा" इति प्रसिद्धम्, एर्व्वारुकं "तरबुँज" इत्याख्यायते, कर्कारुकं कुष्माण्डभेदः उत्कले बहुशो दृश्यते, कालिन्दं भूमिकर्कारु, गिलं मधुजम्बीरफलम्, उद्यं जिज्ञासितव्यम्, पियालं स्वनामप्रसिद्धं फलं, राजादनमत्र वृहत्पियालफलम्, मोरटं प्रसूताया गोः सप्तरात्रात्परमप्रसन्नं क्षीरमिक्षुमूलं वा, मधूलिका मूर्व्वा। दाड़िमेत्यादि। करमर्द्दं "करम्‌जा" इत्याख्यातम्, प्राचीनामलकं पानीयामलकम्, कोशाम्रं "कोशाम्" इति प्रसिद्धम्, भव्यं "चालिता" इत्यभिधीयते, पारावतं तिन्दुकभेदः, लकुचं डहुफलम्, अम्लवेतसं "थैकर" इति प्रसिद्धम्, दन्तशठं जम्बीरफलं, "कामराङ्गा" इति केचित् ॥ १५—१६ ॥

सैन्धव-सौवर्च्चल-विड्-पाक्य-रोमक-सामुद्रक-पक्तिम-यव-क्षारोषप्रसूत-सुवर्च्चिकाप्रभृतीनि समासेन लवणो वर्गः॥१७॥

पिप्पल्यादिः सुरसादिः शिग्रु-मधुशिग्रु-मूलक-लशुन-सुमुख-शीतशिव-कुष्ठ-देवदारु-हरेणुका-ऽवल्गुजफल-चण्डा-गुग्गुलु-मुस्त-लाङ्गलकी-शुकनासा-पीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुको वर्गः ॥ १८ ॥

आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णी-वेत्रकरीर-हरिद्राद्व-येन्द्रयव-वरुण-स्वादुकण्टक-सप्तपर्ण-बृहतीद्वय-शङ्खिनी-द्रवन्ती-त्रिवृत्कृतवेधन-कर्कोटक-कारवेल्लक-वार्त्ताक-करीर-करवीर-सुमनः-शङ्खपुष्प्यपामार्ग-त्रायमाणा-ऽशोक-रोहिणी-वैजयन्ती-

---

सैन्धवेत्यादि । सौवर्च्चलं कृष्णलवणं, पाक्यं विड्लवणभेदः, रोमकं पांशुलवणम्, सामुद्रं "कर्कच्" इत्याख्यायते, पक्तिमं पाकेन निर्वृत्तं, पाकिमक्षार इति यावत्; ऊषप्रसूतं क्षारमृत्तिकाभवं लवणम्, सुवर्चिका सर्जिकाक्षारः; क्षाराणामत्र परिगणनं लवणरसबाहुल्यादित्यनुसन्धेयम् । पिप्पलीत्यादि । शिग्रुमधुशिग्रू श्वेतरक्तपुष्पभेदात् द्वौ शोभाञ्जनौ, सुमुखो नामौषधिः "बावुइर" इत्याख्यायते, शीतशिवमत्र कर्पूरमिति प्राञ्चः, अवल्गुजः सोमराजीभेदः, चण्डा शङ्खपुष्पीभेदः, शुकनासा श्योनाकः ॥ १७—१८ ॥

आरग्वधेत्यादि । मण्डूकपर्णी "थानकुनी" इत्याख्यायते, वेत्रकरीरो वेत्राङ्कुरः, स्वादुकण्टको विकङ्कतः "वैँची" इत्यभिधीयते, शङ्खिनी यवतिक्ताभेदः, द्रवन्ती दन्तीभेदः, कृतवेधनो घोषकः, कर्कोटकं "काँकरोल्"

सुवर्च्चला-पुनर्नवा-वृश्चिकाली--ज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः ॥ १८ ॥

न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादीरोध्रादिस्त्रिफला शल्लकी-जम्ब्वाम्र--वकुल--तिन्दुकफलानि कतक--शाक--पाषाणभेदक-वनस्पतिफलानि सालसारादिश्च प्रायशः, कुरवक-कोविदार-जीवन्ती-चिल्ली-पालङ्क्या-सुनिषण्णकप्रभृतीनि नीवारकादयो मुद्गादयो वैदलाश्च समासेन कषायो वर्गः ॥ २० ॥

तत्रैषां रसानां संयोगास्त्रिषष्टिर्भवन्ति। तद्यथा पञ्चदश द्विका विंशतिस्त्रिकाः पञ्चदश चतुष्काः षट् पञ्चका एकशः षड्रसा एकः षट्क इति। तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥ २१ ॥

---

इत्याभाष्यते, करीरो वंशाङ्कुरः, सुमना जाती, त्रायमाणा "जलवहला" इति प्रसिद्धा, अशोकरोहिणी कटुरोहिणी, वैजयन्ती जयन्ती, सुवर्चला ब्राह्मी, वृश्चिकाली "विछातु" इत्यभिधीयते, ज्योतिष्मती "नैफुट्की" इति प्राकृता भाषन्ते। न्यग्रोधेत्यादि। शल्लकी गजभक्ष्यो लताभेदः, शाकः "शेगुण" इत्याख्यायते, कुरवकोऽरुणवर्णा झिण्टी, चिल्ली वास्तुकम्, पालङ्क्या "पालङ्" इति प्रसिद्धा, सुनिषण्णकः "सूषणी" इति कथ्यते ॥१८।२०॥

तत्रेत्यादि। रसानामिति त्रिषष्टिधा संयोगप्रकाराः कर्म्माणि चैषां प्रपञ्चेन रसभेदविकल्पे स्वयमेव निवेदयिष्यन्त इति, नेह विस्तरं व्याख्यायते। प्रयोजनानि कर्म्माणि। श्रुतञ्चैतदिदानीन्त्वेतदेव भवान् प्रष्टव्यः, कथं नु खल्वत ऊर्द्ध्वं "यवः कषायो मधुरो हिमश्च" इत्येवमनेकरसत्वेन व्याविख्यासितानि द्रव्याणीह मधुरादिवर्गसङ्ग्रहेणोपदिश्यन्त इत्येवं ये प्रत्यव-

भवति चात्र ।

जग्धाः षड़धिगच्छन्ति बलिनो वशतां रसाः ।
यथा प्रकुपिता दोषा वशं यान्ति बलीयसः ॥ २२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने रसविशेषविज्ञानीयो
नाम द्वाचत्वारिंशोऽध्यायः ।

---

तिष्ठन्ते तान् प्रत्याह जग्धा इत्यादि । जग्धा भक्षिता उपयुक्ता इति तात्पर्य्यम् । रसाः षड़ेव बलिनो व्यक्तस्य रसस्य वशतामधिगच्छन्ति । अत्र दृष्टान्तो यथेति । तस्मात् बलिनो रसानधिकृत्य तेन तेन वर्गसंग्रहेण द्रव्याण्युपदिश्यन्त इति नानुपपत्तिः ॥ २१—२२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने रसविशेषविज्ञानीयो नाम द्वाचत्वारिंशोऽध्यायः ।

---

# त्रिचत्वारिंशोऽध्यायः ।

अथातो वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

वमनद्रव्याणां फलादीनां मदनफलानि श्रेष्ठतमानि भवन्ति । तत्र मदनपुष्पाणामातपपरिशुष्काणां चूर्णप्रकुञ्चं

न खलु संशोधन-संशमनीयप्रसङ्गादुपदिष्टेन रसविशेषविज्ञानीयाख्येन ग्रन्थसन्दर्भेण संशोधनार्थाः किञ्चन योगा विज्ञायन्ते, नापि चैते संशमनार्था योगा इव सर्व्वाणि तन्त्राणि विविञ्चन्ति, न चाविदितेषु तेषु पर्य्यवदातश्रुतोऽपि कश्चिद्भिषक् प्रभवति मुमूर्षुमातुरमुत्थापयितुम्, आम्नायते हि "प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः । बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः" इति, तदिदानीं काल्पतः संशोधनसामान्य एव व्याचिख्यासिते सत्यपि क्रमागतत्वात् सूचीकटाहन्यायाद्वा प्रथमं तावत् वमनद्रव्यविकल्पविज्ञानीयं नामाधिकरोति अथात इत्यादिना । विविधो योगो विकल्पः ॥ १ ॥

वमनेत्यादि । फलशब्दोऽयं वमनाधिकारे सपूर्व्वरूपं मदनफलमेव प्रत्याययतीत्यायुर्व्वेदविदो भाषन्ते, अनन्तरं पुष्पादिकल्पक्रमेणोपदेशात्, न चैतदनुपपन्नम् "यदुपक्रमे सन्दिग्धं तच्छेषान्निर्णीयते" इति भगवता शङ्कराचार्य्येणाप्युक्तेः । आदिशब्देन च संशोधन-संशमनीयोक्तानां कुटज-जीमूत-कोष्वाकु-धामार्गव-कृतवेधनानामेव परिग्रहः क्रियते, अनन्तरं चरके च तेषामेव कल्पोपनिषदि प्राधान्येनाप्राधान्येन चेतरेषां तत्रोक्तानां पिप्पल्यादीनामुपदेशात् । मदनफलानि श्रेष्ठतमानीति नानुपपन्नमव्यापत्तिकरत्वादित्यनुसन्धेयं चरकसंवादात्, यदाह "मदनफलानि श्रेष्ठतमान्याचक्षते अनपायित्वात्" इति । प्रकृतमर्थं क्रमशो दर्शयति तत्रेत्यादिना । तत्र सपूर्व्वरूप-मदनफलादिषु मध्ये इत्यर्थः । प्रकुञ्चं पलम् । इयं हि

प्रत्यक्पुष्पी--सदापुष्पी--निम्बकषायाणामन्यतमेनालोड्य मधु-सैन्धवयुक्तां पुष्पचूर्णमात्रां पाययित्वा वामयेत् ॥ २ ॥

मदनशलाटुचूर्णान्येवं वा वकुल-रम्यकोपयुक्तानि मधु-लवणयुक्तान्यभिप्रतप्तानि ; मदनशलाटुचूर्णसिद्धां वा तिल-तण्डुलयवागूम् । निर्वृत्तानां वा नातिहरितपाण्डूनां कुश-मूढ़ावबद्धस्तन्नोमयप्रलिप्तानां यव-तुष-मुद्ग-माष-शाल्यादि-धान्यराशावष्टरात्रोषित-क्लिन्न-भिन्नानां फलानां फल-

---

मध्यमा मात्रेति दोषादिबलमभिसमीक्ष्यावश्यं विपर्यासः कार्य्यः, उक्तञ्च "द्रव्यप्रमाणन्तु यदुक्तमग्रे, मध्येषु तत्कोष्ठवयोबलेषु । तन्मूलमारभ्य भवेद्विकल्पस्तेषां विकल्पो ह्यधिकोनभावः" इति । प्रत्यक्पुष्पी अपामार्गः, सदापुष्पी अर्कः । कषायोऽत्र चूर्णापेक्षया चतुर्गुणो देयः "पातव्यश्च चतुर्गुणः" इत्यनुशासनात्, मधुसैन्धवे च युक्त्या पादिके देये इत्याहुः ॥ २ ॥

मदनेत्यादि । आमं फलं शलाटुः । एवमिति । पूर्व्वोक्तान्यतमकषायेणालोड्य मधुसैन्धवयुक्तान्यविशेषात् प्रकुञ्चमितान्येवेत्यर्थः । वा-शब्देन पक्षान्तरं सूचयति । वकुलरम्यकोपयुक्तानि चतुर्गुणेन वकुलमहानिम्बक्काथेनालोड़ितानि मधुसैन्धवयुक्तानि पादिकमधुसैन्धवेन संसृष्टान्यभिप्रतप्तान्यग्निसन्तप्तानि, प्रकुञ्चमितानि मदनफलशलाटुचूर्णानि पाययित्वा वामयेदिति पूर्व्वेणान्वयः । अत्राभिप्रतप्तत्वे मधुनोऽविरोधो बोद्धव्यः "न चोष्णविरोधो मधुनश्छर्द्दनयोगयुक्तस्यापक्वप्रत्यागमनाद्दोषनिर्हरणाच्च" इति चरकानुशासनात् । मदनशलाटुचूर्णसिद्धां वेत्यविशेषाच्चूर्णमात्रा प्राग्वदेव । तिलतण्डुलयवागूमित्याकण्ठाद्भोजनोपयोगिमात्रया परिदृष्टीतैर्निस्तुषैस्तिलैः कृतां यवागूमित्यर्थः । निर्वृत्तानां पक्वानां, नातिहरितपाण्डूनामित्यनेनाभिमतपक्वावस्थोपदिश्यते । कुशमूढ़ः कुशपुटः, आत्रेयोऽपि "कुशपुटे बद्ध्वा" इत्याह । तथोषितत्वेन क्लिन्नानां यस्तो भिन्नानामिति

पिप्पलीरुद्धृत्यातपे शोषयेत्, तासां दधि-मधु-पललविच्छर्दित-परिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुक-कषाये कोविदारादीनामन्यतमे वा कषाये प्रमृद्य रात्रि-पर्य्युषितं मधु-सैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः प्राङ्मुखमातुरं पाययेदनेन मन्त्रेणाभिमन्त्र्य ॥ ३ ॥

ब्रह्म-दक्षाश्वि-रुद्रेन्द्र-भू-चन्द्रार्कानलानिलाः ।
ऋषयः सौषधीग्रामा भूतसङ्घाश्च पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥

विशेषेण श्लेष्मज्वर-प्रतिश्यायान्तर्विद्रधिषु ॥ ४ ॥

अप्रवर्त्तमाने वा दोषे पिप्पली-वचा-गौरसर्षपकल्को-

---

छिन्नभिन्नानाम्, फलपिप्पलीः फलकणाः । पललं तिलचूर्णम्, अन्तर्नखमुष्टिम् अन्तःस्थितनखेन मुष्टिना यावद्गृह्यते तावन्मानमित्यर्थः, एतेन तोलकमितमित्येव प्रत्येतव्यम्, तथा परिगृहीतं हि प्रायेण तावदेव भवति । अत्र "यावद्वा साधु मन्येत" इत्यप्याहुरात्रेयादयो महर्षयः । कोविदारादीनि संशोधन-संशमनीयोक्तानि । कषायमधुसैन्धवादीनां परिमाणन्तु प्राग्वदेव । आशीर्भिरभिमन्त्रितं विघ्नोपशमार्थं ब्राह्मणद्वारा स्वस्तिवाचनेन संस्कृतम् । ब्रह्मेत्यादिमन्त्रो ब्राह्मणेनैव वाचनीयः । एवमभिमन्त्रणमनन्यफलत्वात्साधारणमपि प्राधान्यादिहोक्तमित्यनुसन्धायेतरत्राप्यूह्यमित्याहुः । अत्र विशिनष्टि विशेषेणेत्यादिना । श्लेष्मज्वरादिषु विशेषेण पुनः पुनरापि त्वागमात्पाययेदित्येव व्याख्येयं चरकैकवाक्यत्वात् ॥ १—४ ॥

पुनर्व्विशिनष्टि अप्रवर्त्तमान इति । वाशब्दो विशेषणार्थः, अप्रवर्त्त-

न्मिश्रैः सलवणैरुष्णाम्बुभिः पुनः पुनः प्रवर्त्तयेदासम्यग्वान्त-लक्षणादिति । मदनफलमज्जचूर्णं वा तत्क्वाथपरिभावितं मदनफलकषायेण । मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां चौद्रयुक्ताम् । मदनफलमज्जसिद्धं वा पयः । मदनफलमज्जसिद्धेन वा पयसा यवागूम्, अधोभागास्रक्पित्त-हृद्दाहयोः । मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेक-च्छर्द्दि-मूर्च्छा-तमकेषु । मदनफलमज्जरसं भल्लातकस्नेहवदादाय फाणितीभूतं लेहयेदातपपरिशुष्कं वा तमेव जीवन्तीकषायेण पित्ते कफस्थानगते । मदनफलमज्जक्वाथं वा पिप्पल्यादिप्रतीवापं तच्चूर्णं वा निम्ब-कूपिका-कषाययोरन्यतरेण सन्तर्पणकफजव्याधिहरं मदनफलमज्जचूर्णं वा मधुक-काश्मर्य्य-द्राक्षाकषायेण । मदनफलविधानमुक्तम् ॥ ५ ॥

---

मानि लिलयर्थः । तत्क्वाथेति तदा मदनफलानां प्रत्यवमर्शः क्रियते । मदनफलकषायेण पाययेदिति पूर्व्वेणान्वयः । सन्तानिका क्षीरसरः । दध्युत्तरं दधिसरः । भल्लातकस्नेहवदादायेति भल्लातकस्नेहादानविधिः "भल्लातकान् वासयेत्तु" इत्यादिना चिकित्सिते वक्ष्यमाणः । फाणितीभूतं पाकेन तन्तुलीभूतमित्यर्थः "फाणितमातन्तुलीभावात्" इत्यनुशासनात् । तमेवेति मदनफलमज्जरसप्रत्यवमर्शार्थम्, वाशब्दः पक्षान्तरसूचनार्थः । पित्ते कफस्थानगते जीवन्तीकषायेण पाययेदिति पूर्व्वेणान्वयः । पिप्पल्यादिर्गणः प्रतीवापः कल्कोऽत्रेति पिप्पल्यादिप्रतीवापः । कूपिकेह श्वेतार्कमूलत्वक् । सन्तर्पणात्कफाच्च जातः सन्तर्पणकफजः । परिशिष्टं निगदव्याख्यातम् ॥ ५ ॥

जीमूतक-कुसुमचूर्णं वा पूर्व्ववदेव क्षीरेण, निर्व्वृत्तेषु क्षीरयवागूं, रोमशेषु सन्तानिकामरोमशेषु च दध्युत्तरं, हरितपाण्डुषु दधि, तत्कषायसंसृष्टां वा सुरां, कफारोचक-कास-श्वास-पाण्डुरोग-यक्ष्मसु, पर्य्यागतेषु मदनफलमज्जवदुपयोगः, तद्वदेव कुटजफलविधानम् । कृतवेधनानामप्येष एव कल्पः । इक्ष्वाकु-कुसुमचूर्णं वा पूर्व्ववदेव क्षीरेण कास-श्वास-च्छर्द्दि-कफरोगेषूपयोगः ॥ ६ ॥

धामार्गवस्यापि मदनफलमज्जवदुपयोगो विशेषतस्तु गर-गुल्मोदर-कास-श्वास-श्लेष्मामयेषु, वायौ वा कफस्थानगते । कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां

---

जीमूतकेत्यादि । वाशब्दः पक्षान्तरसूचनार्थः । अत्र क्षीरेणेति विशेषणात् प्रत्यक्पुष्पीप्रभृतीनां कषायं हित्वा पूर्व्ववदित्यनेन केवलं मदनपुष्पवन्मात्रा मधुसैन्धवे च परिगृह्यन्ते । निर्वृत्तेष्वित्यादिषु चतुर्षु सप्तमीं घटकत्वार्थे पश्यामः, यथा "कासीसे सैन्धवे किण्वे" इति भिषग्वोक्तौ ; पर्य्यागतेष्विति तु षष्ठ्यर्थे ; तथाच निर्वृत्तेषु परिपक्वेषु परिपक्वजीमूतफलघटितामित्यर्थः, क्षीरयवागूमिति समन्वयः । एतेन शेषमपि व्याख्यातप्रायम् । अत्र जीमूतकफलानां प्रकृतिलोमशत्वे सत्यपि लोमशेष्विति विशेषणं नितरां लोमशानां परिग्रहार्थमित्यनुसन्धेयम् । तत्कषायसंसृष्टां जीमूतककषायविमिश्रिताम् सुरां कफारोचकादिषु पाययेदिति पूर्व्वस्मादाक्षिप्यान्वेयम् । पर्य्यागतेषु पाकातिक्रान्तेषु पक्वशुष्काणामिति यावत्, इदमपि कफारोचकादिष्वेवान्वीयते काकाक्षिगोलकन्यायात् ॥ ६ ॥

धामार्गवस्येत्यादि । वमनद्रव्यकषायपरिपीतानां मदनफलादिकषाय-

वङ्गशश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति तच्चनवबद्ध-दोषेषु यवागूमाकण्ठात् पीतवत्सु च विदध्यात् । वमन-विरेचन-शिरोविरेचन-द्रव्याण्येवं वा प्रधानतमानि भवन्ति ॥ ७ ॥

भवतश्चात्र ।

वमनद्रव्ययोगाणां दिगियं सम्प्रकीर्त्तिता ।
तां विभज्य यथाव्याधि कालशक्तिविनिश्चयात् ॥ ८ ॥
कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान् ।
पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥ ९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने वमनद्रव्यविकल्प-विज्ञानीयो नाम त्रिचत्वारिंशोऽध्यायः ।

---

भावितानाम्, चूर्णमुत्पलादिषु दत्तं विकीर्णमित्यर्थः । नचैतन्मृदुवीर्य्यत्वात् शश्वत्कार्य्यकरं भवतीत्यतो विशिनष्टि तदित्यादिना । तत् उत्पलादिषु दत्तं चूर्णम्, चनवबद्धदोषेषु उत्क्लिष्टदोषेष्वित्यर्थः । अत्र जिज्ञास्यं किन्नु खलु भगवन् ! द्रव्यस्वरूपसंयोगं हित्वा तत्कषायेण भावयितुमभीप्सन्त्याचार्य्याः, न हि द्रव्यात्कषायो गुणवत्तर इति यन्नु युक्तमित्याह वमनेत्यादि । वमनादिद्रव्याण्येवं कषायभावनयैव प्रधानतमानि विशेषेण गुणवन्ति भवन्ति, द्रव्यशक्तेरचिन्त्यत्वादिति भावः । वाशब्दोऽवधारणार्थः । तथा-चाह दृढ़बलः "भूयश्चैषां बलाधानं कार्य्यं स्वरसभावनैः । सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्म्मकृत् । स्वरसैस्तुल्यवीर्य्यैर्व्वा तस्माद्द्रव्याणि भावयेत्" इति । दिक् निदर्शनम् । शेषमतिरोहितार्थम् ॥ ७—९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने वमनद्रव्यविकल्पविज्ञानीयो नाम त्रिचत्वारिंशोऽध्यायः ।

---

# चतुश्चत्वारिंशोऽध्यायः ।



अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने ।
प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी ॥
तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका ।
सुधापयः पयःसूक्तमिति प्राधान्यसंग्रहः ॥
तेषां विधानं वक्ष्यामि यथावदनुपूर्व्वशः ॥ २ ॥
वैरेचनद्रव्यरसानुपीतं मूलं महत् त्रैवृतमस्तदोषम् ।
चूर्णीकृतं सैन्धवनागराढ्यमम्लैः पिबेन्मारुतरोगजुष्टः ॥
द्राक्षाविकारैर्मधुरै रसैर्वा तत् पैत्ते गदे क्षीरयुतं पिबेद्वा ।
गुडूच्यरिष्टत्रिफलारसेन सव्योषमूत्रं कफजे पिबेद्वा ॥ ३ ॥

---

क्रमागतत्वादिदानीं विरेचनद्रव्यविकल्पविज्ञानीयं नामाधिकरोति अथात इत्यादिना । समानं पूर्व्वेण ॥ १ ॥

अरुणाभमित्यादि । मूलविरेचने संशोधनसंशमनीयोक्तमूलात्मकविरेचनभेषजसमूहमध्ये अरुणाभं त्रिवृन्मूलं श्रेष्ठमित्यर्थः । तिल्वकं लोध्रमूलवल्कलम्, कारवेल्लिका "करेला" इत्याभाष्यते, सुधापयः स्नुहीक्षीरम् । वैरेचनेत्यादि । वैरेचनद्रव्यरसानुपीतं त्रिवृदादिविरेचनद्रव्यरसपरिभावितम्, महत् गम्भीरभूमिमनुप्राप्तम्, अस्तदोषं कार्कश्यादिदोषरहितम् 'गम्भीरानुगतं श्लक्ष्णम्" इति चरकः । सैन्धवनागराढ्यं पादिकसैन्धवनागरसंयुक्तम्, चूर्णीकृतं त्रैवृतं मूलम् अम्लैर्मातुलुङ्गरसादिभिः पिबेत् मानमान-

त्रिवर्णकत्र्यूषणयुक्तमेतद्गुडेन लिह्यादनवेन चूर्णम् ।
प्रस्थे च तन्मूलरसस्य दत्त्वा तन्मूलकल्कं कुडवप्रमाणम् ॥
कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेतदद्यात् ।
तत्कल्कभागः समहौषधार्द्धः ससैन्धवो मूत्रयुतश्च पेयः ॥ ४ ॥
समाक्षिकं नागरकाभयाः स्युर्भोगार्द्धकं पूगफलं सुपक्कम् ।
विडङ्गसारो मरिचं सदारु योगः ससिन्धूद्भवमूत्रयुक्तः ॥ ५ ॥
विरेचनद्रव्यभवन्तु चूर्णं रसेन तेषां मतिमान् विमृद्य ।
तन्मूलसिद्धेन च सर्पिषाक्तं सेव्यं तदाज्ये गुटिकीकृतञ्च ॥
गुडे च पाकाभिमुखे निधाय चूर्णीकृतं सम्यगिदं विपाच्य ।
शीतं त्रिजातात्तमथो विमृद्य योगानुरूपा गुटिकाः प्रयोज्याः॥६॥

---

मित्येवोपदिशन्ति प्राञ्चः । अनेनैव निदर्शनेन परिशिष्टास्त्रिवृद्योगा-विमृश्य मानतो लक्षणीयाः । इक्षोरित्यादि । इक्षोर्विकारैर्गुडादिभिः, मधुरै रसैः खार्ज्जूररसादिभिश्चेत्यर्थः । अरिष्टो निम्बः, व्योषं त्रिकटुकम् । सामान्ययोगानुपदिशति त्रिवर्णकेति । त्रिवर्णकं त्रिफला, त्र्यूषणं त्रिकटुकम्, पादिकाभ्यां ताभ्यां युक्तं त्रिवर्णकत्र्यूषणयुक्तम्, एतत् त्रैवृतं चूर्णं गुडेन लेहोपयोगितया द्विगुणेनेत्यनुसन्धेयम् । प्रस्थ इत्यादौ तच्छब्दस्त्रिवृतः प्रत्यवमर्शकः, कल्कीकृतं कल्कवन्निष्पादितं सदद्यादिति योजना ॥ २—४ ॥

समा इत्यादि । अत्र विडङ्गसारादीनां पादिकं भागं, गोमूत्रस्य च समुदितचूर्णापेक्षया चतुर्गुणं भागमेवाभीप्सन्ति कुशलाः प्रयोगसाहुख्यात् । विरेचनद्रव्यभवं त्रिवृदादिकृतं, तेषां त्रिवृदादीनां, रसेन विमृद्य भावयित्वा, तन्मूलसिद्धेन त्रिवृन्मूलक्वाथकल्काभ्यां सिद्धेन सर्पिषा आक्तं गुटिकीकृतञ्च तदाज्ये त्रिवृन्मूलसिद्धे आज्ये लेहीभूतं कृत्वा सेव्यमिति योजना । अत्र गुटिकीकृतञ्चेति विशेषणं बलवति पुरुषे मात्रातः कर्षं दातुमिति

वैरेकीयद्रव्यचूर्णस्य भागं सिद्धं सार्द्धं क्वाथभागैश्चतुर्भिः ।
आस्तृणीयात् सर्पिषा तच्छ्रितेन तत्क्वाथोष्मस्वेदितं सामितञ्च॥
पाकप्राप्ते फाणिते चूर्णितं तत् क्षिप्तं पक्वञ्चावतार्य्य प्रयत्नात् ।
शीतीभूतामोदकाहृद्यगन्धाः कार्य्यास्त्वेते भक्ष्यकल्पाः समासात्॥८॥
रसेन तेषां परिभाव्य मुद्गान् यूषः ससिन्धूद्भवसर्पिरिष्टः ।
वैरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद्वमनौषधैश्च ॥ ८ ॥

---

गम्यते "कर्षचूर्णस्य कल्कस्य गुटिकानाञ्च सर्व्वशः" इत्यनुशासनात् । गुड़ इत्यादि । गुड़े मोदकपाकयुक्त्या चूर्णाद्द्विगुणे, पाकाभिमुखे आसन्नपाके, इदं त्रिवृच्चूर्णं, शीतमपचितोष्मत्वेन शीतलमिव मत्वा, त्रिजातात्तं सौगन्ध्यर्थं त्रिवृच्चूर्णादष्टमांशेन त्वगेलापत्र-केशरचूर्णेन मिश्रितम्, अथो अन्यथा अत्रिजातात्तं वेत्यर्थः । वैरेकीयेत्यादि । वैरेकीयद्रव्यचूर्णस्य त्रिवृदादिचूर्णस्य भागमेकं क्वाथभागैश्चतुर्भिः चतुर्गुणैर्वैरेकीयद्रव्यकषायैः, सार्द्धं सह सिद्धं पाकेन पुनश्चूर्णवत् कृतं, तत्क्वाथोष्मस्वेदितं वैरेकीयक्वाथत्रिभागपरिपूर्णपात्रोपरि सपिधाने पात्रान्तरे संस्थाप्य यथावत् पाचितं, समिता एव सामितं गोधूमचूर्णमित्येतत् "गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः । प्रोच्छिताश्च विनिस्तुष्टाश्चालिताः समिताः स्मृताः" इति राजनिर्घण्टः ; तच्छ्रितेन त्रिवृत्पक्वेन सर्पिषा आस्तृणीयात् । पाकप्राप्ते आसन्नपाकमागते फाणिते इति मोदकसाधनत्वाच्चूर्णाद्द्विगुणीभूते,तत्सामितसहितं, चूर्णितं वैरेकीयद्रव्यचूर्णस्य भागं क्षिप्तं पक्वञ्च प्रयत्नादवतार्य्य शीतीभूताः हृद्यगन्धा मोदकाः कार्य्याः । एते भक्ष्यकल्पा गुटिकादयो विरेचनयोगास्तु समासादुक्ताः, एतन्निदर्शनेनान्येऽपि कार्य्या इति भावः ॥ ५—७ ॥

रसेनेत्यादि । तेषां त्रिवृदादिविरेचनद्रव्याणाम्, वैरेचन इति विरेचनमेव वैरेचनं तस्मिन्नित्यर्थः । अन्यैरपि वैदलैर्मसुरादिभिरेवं यूषः स्यात् । प्रसङ्गात् यूषविधिरयं वमनेऽप्यतिदिश्यते विदध्यादित्यादिना । चकार एवंशब्दप्रत्यवमर्शार्थः । वमनौषधैश्च एवं यूषं विदध्यात् वमने कार-

भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा ।
पक्वाञ्च सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम् ॥९॥

सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः ।
लिह्यान्मधुघृताभ्यान्तु तृड्दाहज्वरशान्तये ॥ १० ॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥ ११ ॥
पचेल्लेहं सिताक्षौद्रं पलार्द्धकुडवान्वितम् ।
त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद्विरेचनम् ॥ १२ ॥
त्रिवृच्छ्यामायवक्षारशुण्ठी-पिप्पलीर्मधुनाम् यात् ।
सर्व्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम् ॥ १३ ॥

---

‥यितव्ये इति शेषः। एतेनैतदुक्तं भवति,यथा विरेचने कारयितव्ये वैरेचनिकद्रव्यभावितानां वैदलानां सर्पिःसैन्धवसंस्कृतो यूष इष्टस्तथैव वमने कारयितव्ये वमनौषधभावितानां वैदलानामिति। भित्त्वेत्यादि। त्रिभण्डी त्रिवृत्, तज्जातैस्त्रिभण्डिजातैः "संज्ञाच्छन्दसोर्व्वहुलम्" इति ह्रस्वः। पुटपाकयुक्तिरत्र त्रिवृदादिपत्रवेष्टितस्य घनकर्द्दमलिप्तस्य गोमयाग्नौ ज्वलदङ्गारे वाऽग्निवर्णतावासेर्यावत्संस्थापनरूपा। सितेत्यादि। सिता शर्करा, अजगन्धा वनयमानी, त्वक्क्षीरी वंशलोचना,विदारी भूमिकुष्माण्डः ॥८—१०॥

शर्करेत्यादि। त्वगादीनामंशस्त्रिवृदपेक्षया चतुर्थो भागोऽन्येति त्वक्पत्रमरिचांशकं, रेचनं विरेचनभेषजम्। त्वगत्र गुड़त्वक्, पत्रञ्च तेजपत्रम्। पचेदित्यादि। सितायाः पलं मधुनश्चार्द्धकुड़वोऽत्र द्वैगुण्यप्रतिषेधाद्द्वे पले एवेति निष्कर्षः। त्रिवृन्मूलचूर्णन्तु युक्त्या पलं देयम्। अत्र "पचेल्लेहं सिताक्षौद्रम्" इति सामान्येनोक्तेऽपि सितापलं जलेन द्रवीकृत्य पक्वा तन्तुलीभूते त्रिवृच्चूर्णं प्रक्षिप्यावतार्य्य शीते मधुकुड़वो देय इत्युपदिशन्ति·

वीजाव्यपथ्या-काश्मर्य्य-धात्रीदाड़िमकोलजान् ।
तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत् ॥
घनीभूतं त्रिसौगन्ध्यं त्रिवृत्क्षौद्रसमन्वितम् ।
लेह्यमेतत् कफप्रायैः सुकुमारैर्विरेचनम् ॥ १४ ॥
नीलीतुल्यं त्वगेलञ्च तैस्त्रिवृत् ससितोपला ।
चूर्णं सन्तर्पणं क्षौद्रफलाम्लं सन्निपातनुत् ॥ १५ ॥
त्रिवृच्छ्यामासिताकृष्णा-त्रिफलामाक्षिकैः समैः ।
मोदकाः सन्निपातोर्द्ध-रक्तपित्त-ज्वरापहाः ॥ १६ ॥
त्रिवृद्भागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा ।
क्षारकृष्णाविड़ङ्गानि सञ्चूर्ण्य मधुसर्पिषा ।
लिह्याद्गुड़ेन गुटिकां कृत्वा वाप्यथ भक्षयेत् ॥

---

प्राज्ञः, मधुन उष्णविरोधात् । त्रिवृदित्यादि । श्यामा वृद्धदारकः, क्षारो यवक्षारः, आप्नुयात् लेहार्थं मिश्रीकुर्य्यात् । वीजेत्यादि । वीजाव्यपथ्या प्रवरवीजा हरीतकी, काश्मर्य्यं गाम्भारीफलं, तैलभृष्टानित्यौपयोगिकतया भर्ज्जनविधिना एरण्डतैलसंस्कृतान्, रसान् यथासम्भवं स्वरसकषायान्, अम्लफलैः कल्कीकृतैर्दाड़िमामलकादिभिः सह आवाप्य स्थाल्यां प्रक्षिप्य, साधयेत् विपचेत् । अत्र वीजाव्यपथ्यादीनां रसप्रस्थम् अग्निसन्तप्त एरण्ड-तैलपलचतुष्टये निक्षिप्य अम्लफलादीनां यथालाभं दाड़िमादीनां चतुः-पलं कल्कं दत्त्वा पाकेन घनीभूते चूर्णितं त्रिवृन्मूलं चतुःपलं त्वगेलापत्र-चूर्णञ्च कर्षमितं प्रक्षिप्यावतार्य्य शीते मधुपलद्वयं देयमित्युपदेशः ॥ ११—१४॥

नीलीत्यादि । नीली नीलिनी नामौषधिः "नील" इत्यभिधीयते, तस्या-मूलत्वगिह गृह्यते, तत्तुल्यं मिलितं त्वगेलं, तैर्नीलीप्रभृतिभिस्तुल्या ससितोपला सशर्करा त्रिवृत्, क्षौद्रफलाम्लं मधुदाड़िमरसाभ्यां लेहीभूतम् ।

कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् ।
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥ १७ ॥
चूर्णं श्यामात्रिवृन्नीली कटुकी मुस्ता दुरालभा ।
चव्येन्द्रबीजं त्रिफला सर्पिर्मांसरसाम्बुभिः ।
पीतं विरेचनं तद्धि रुक्षाणामपि शस्यते ॥ १८ ॥
वैरेचनिक-निःक्वाथभागाः शीतास्त्रयो मताः ।
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥
तत्साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत् ।
कलसे कृतसंस्कारे विभज्यर्त्तू हिमाहिमौ ॥
मासादूर्द्ध्वं जातरसमासवं मधुगन्धिकम् ।
पिबेदसावेव विधिः क्षारमूत्रासवेष्वपि ॥ १९ ॥
वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ।
सुधौतांस्तत्कषायेण शालीनाञ्चापि तण्डुलान् ॥

---

चूर्णमित्यादि । चूर्णमिति श्यामादीनां त्रिफलान्तानामेव । कट्वी कटुरोहिणी । वैरेचनिकेत्यादि । अधिश्रयेद्विपचेत्,साधुसिद्धमिति वृद्धोपदेशाद्दर्वप्रदिष्टत्वेन सम्यक्पक्वमित्यर्थः । कृतसंस्कारे घृतालेपनादिनागुरुधूपनादिना च संस्कृते कलसे, हिमाहिमौ ऋतू विभज्य मासादूर्द्ध्वं न्यूनं वेति तात्पर्य्यम्, जातरसमासवं मधुगन्धिकमित्यनन्तरोक्तेः, निधापयेदिति सम्बन्धः । क्षारमूत्रासवेष्विति वैरेचनिकेष्वित्यर्थः । अनेन विधिना क्षारमूत्रासवेषु कर्त्तव्येषु फाणितस्थाने क्षारोदकं मूत्रं वा देयमित्यनुसन्धेयम् ॥ १५—१९ ॥

वैरेचनिकेत्यादि । वैरेचनिकमूलानां त्रिवृदादिमूलानां क्वाथे सुभावितान् "दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत्" इत्याद्युक्तेन विधिना

अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् ।
शालितण्डुलचूर्णञ्च तत्कषायोष्मसाधितम् ॥
तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ।
मण्डोदकार्थे क्वाथञ्च दद्यात् तत्सर्व्वमेकतः ॥
निदध्यात् कलसे तान्तु सुरां जातरसां पिबेत् ।
एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ॥ २० ॥
मूलानि त्रिवृतादीनां प्रथमस्य गणस्य च ।
महतः पञ्चमूलस्य मूर्व्वाशार्ङ्गेष्टयोरपि ॥

---

सप्तरात्रं वासितान् माषान्, तत्कषायेण वैरेचनिकमूलक्वाथेन सुधौतान् हृढोरुदेशात् यामद्वयं सिक्तान् त्रिः प्रक्षालितान् शालीनां तण्डुलांश्च, एकतः ऐकाध्यम् अवक्षुद्य उदूखले सम्पिष्य, पिण्डान् आर्द्रत्वेन संहतांस्तान् शुष्कान् सुचूर्णितांश्च कृत्वा, शालितण्डुलचूर्णञ्च तत्कषायोष्मसाधितं प्रागुक्तमोदकोपात्तसमितास्वेदनविधिना वैरेचनिकमूलक्वाथोष्मणा पृथक् पाचितं, कृत्वेति समन्वयः, तस्य पिष्टस्य समाषशालितण्डुलचूर्णसमूहस्य तत्कषायोष्णसाधितशालितण्डुलचूर्णस्य च, त्रीन् भागान् किण्वभागविमिश्रितान् किण्वैकभागसंयुक्तान्, इहापि कृत्वेति क्रियापदमाक्षिप्यान्वेयम् । किण्वं सुराबीजम् "किण्वादिभ्यो मदशक्तिवत्" इति सांख्याः । मण्डोदकार्थे सुरायामस्यासुदककार्य्यनिमित्तमित्यर्थः, "निमित्तमात्रे सप्तमी मन्तव्या" इति कलापचन्द्रः । "मण्डा सुरा" इति हारावली । क्वाथमिति प्रकृतत्वाद्वैरेचनिकमूलानामेव चतुर्गुणं कषायम् । एष एवेति प्रासङ्गिकम्, एष कल्पो विधिर्वमनेषु वमनद्रव्येषु मदनफलादिष्वपि कीर्त्तितो महर्षिभिर्वमने कारयितव्ये इति शेषः ॥ २० ॥

मूलानीत्यादि । त्रिवृतादयः संशोधनीये प्रागुक्ताः, प्रथमो गणो विदारिगन्धादिः, शार्ङ्गेष्टा मक्काकरञ्जः "काँटाकरञ्जा" इत्याख्यायते, सुधात्

सुधा हैमवती चैव त्रिफलातिविषे वचा ।
संहृत्य तानि भागौ द्वौ कारयेदेकमेतयोः ॥
कुर्य्यान्निःक्वाथमेकस्मिन्नेकस्मिंश्चूर्णमेव तु ।
तुषांस्तस्मिंस्तु निःक्वाथे भावयेद्‌वहुशो यवान् ॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ।
चतुर्थो भाग आवाप्यश्चूर्णानामनु कीर्त्तितम् ॥
प्रक्षेप्यं कलसे सम्यक् समस्तं तदनन्तरम् ।
तेषामेव कषायेण शीतलेन सुयोजितम् ॥
पूर्व्ववत्सन्निदध्यात् तु ज्ञेयं सौवीरकं हि तत् ॥ २१ ॥
पूर्व्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ।
भागं सत्तुष संसृज्य यवान् स्थाल्यामधिश्रयेत् ॥

---

सुहीचीरम्, हैमवती वचा, एतानि शार्ङ्गेष्टान्तानां मूलानि सुधादीनि च संहृत्येति "भागेऽप्यनुक्ते समता विधेया" इति स्मरणात् समांशेनाहृत्य द्वौ भागौ कारयेत् । तयोरेकं भागम् एकस्मिन् एकत्र निःक्वाथं तुकारादेकत्र भागम् एकस्मिन्नेकत्र चूर्णं कुर्य्यादित्यन्वयः । तस्मिन्निःक्वाथे तुषान् कुट्टितान् यवान् बहुश इति वृद्धोपदेशादेकविंशतिकृत्वो भावयेत् प्राग्वत् वासयेत्, शुष्काणां मृदुभृष्टानां तेषां यवानां त्रयो भागा मता ग्राह्या इत्यर्थः । चूर्णानान्तु चतुर्थो भाग आवाप्यस्तेषु यवेषु निक्षेप्य इति तात्पर्य्यम्, अनु पश्चात्, कीर्त्तितं कथितं चूर्णयवात्मकं तत् समस्तं द्रव्यं, सम्यग्-दृढ़े घृतादिसंस्कृतत्वेन प्रशस्ते वा "सम्यग्दृढ़प्रशंसयोः" इति मेदिनी, कलसे निक्षेप्यम्; अनन्तरं तेषां त्रिवृन्मूलादीनामेव शीतलेन कषायेण सुयोजितं यथा स्यात्तथा पूर्व्ववत् आसववत्कृतसंस्कारे कलसे इति यावत् सन्निदध्यादिति निष्कर्षः ॥ २१ ॥

अजशृङ्ग्याः कषायेण तानस्यासिच्य साधयेत् ।
सुसिद्धांश्चावतार्य्यैतानौषधेभ्यो विवेचयेत् ॥
विरूढ़ा सतुषान् सम्यक् ततस्तान् पूर्व्ववन्मितान् ।
पूर्व्वोक्तौषधभागञ्च चूर्णं दत्त्वा तु पूर्व्ववत् ॥
तेनैव सह यूषेण कलसे पूर्व्ववन्न्यसेत् ।
ज्ञात्वा जातरसञ्चापि तत् तुषोदकमादिशेत् ॥ २२ ॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्त्तितः ।
षड्रात्रात्सप्तरात्राद्वा ते च पेये प्रकीर्त्तिते ॥ २३ ॥
वैरेचनेषु द्रव्येषु त्रिवृन्मूलविधिः स्मृतः ॥ २४ ॥
दन्तीद्रवन्त्योर्मूलानि विशेषाद्धस्तुणान्तरे ।
पिप्पलीक्षौद्रयुक्तानि छिन्नान्युद्धृत्य शोषयेत् ।
ततस्त्रिवृद्विधानेन योजयेत् श्लेष्मपित्तयोः ॥ २५ ॥

---

पूर्व्वोक्तमित्यादि । पूर्व्वोक्तं वर्गं त्रिवृन्मूलादिकम्, संक्षुद्य संक्षुद्य, यवानित्यविशेषात्त्रिवृन्मूलादिकेनौषधभागेन सम्मितानित्येव, संसृज्य तेनौषधभागेन संयोज्य, अधिश्रयेत् स्वापयेत् । कषायेणेत्यष्टगुणेन । औषधेभ्यस्त्रिवृन्मूलादिभ्यो विवेचयेत् पृथक् कुर्य्यात् । सतुषान् तुषेणानुगतान् यवान्, पूर्व्ववन्मितानिति पूर्व्वोक्तसौवीरकयववत् भागत्रयेणान्वितान्, चूर्णं पूर्व्ववत् चतुर्थं भागमिति तात्पर्य्यम् । तेन सौषधयवपाकावशिष्टेनाजशृङ्गीकषायात्मकेनैव यूषेण पूर्व्ववत् दृढ़े प्रशस्ते वा कलसे, न्यसेत् सन्निदध्यात् । अत्र षड्रात्रात् सप्तरात्राद्वेति यथाक्रमं तुषाम्बुसौवीरके प्रति लक्षणीयम्, एतत्तु प्रायिकत्वादेवोपात्तमित्यनुसन्धेयम्, सर्व्वर्त्तुषु तावता कालेन जातरसत्वानुपपत्तेः ॥ २२—२४ ॥

दन्तीत्यादि । दन्त्यत्र नागदन्ती, चरकैकवाक्यत्वात् । पिप्पलीक्षौद्र-

तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ।
सर्पिश्च पक्वं वीसर्प-कच्छ्वादाहालजीर्जयेत् ॥ २६ ॥
मेहगुल्मानिलश्लेष्म-विबन्धांस्तैलमेव च ॥ २७ ॥
चतुःस्नेहं शकृच्छुक्र-वातसंरोधजा रुजः ॥ २८ ॥
दन्तीद्रवन्तीमरिच-कनकाह्वयवासकैः ।
विश्वभेषजमृद्वीका-चित्रकैर्मूत्रभावितैः ॥
समांशं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ।
जीर्णे सन्तर्पणं चौद्रं पित्तश्लेष्मरुजापहम् ।
अजीर्णपार्श्वरुक्पाण्डु-प्लीहोदरनिवर्हणम् ॥ २९ ॥
गुड़स्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीचिहतोर्दश ॥

---

युक्तानीति मधुपिष्टपिप्पलीलिप्तानीत्यर्थः; स्विन्नानि पुटपाकविधिना बहिरारक्तवर्णत्वं यावत् पक्वानीत्यर्थः। त्रिवृद्विधानेनेति गुडुच्यरिष्टेत्यादिना, इक्षोर्विकारैरित्यादिना च प्रागुक्तेन विधिनेति गम्यते श्लेष्मपित्तयोरित्युपादानात्। तयोरित्यादि। अत्र उत्सर्गसिद्धस्तैलात् पादिकः कल्कः कषायस्तु चतुर्गुणो देयः। चक्रतैलं चक्रवाकतैलं "कोकश्चक्रश्चक्रवाकः" इत्यमरः। अन्ये तु "चक्रं तैलयन्त्रम्" इत्यमरटीकायां स्वामिसंवादात् वक्ष्यमाणाणुतैलविधिना तिलपीड़नकाष्ठादाहृतं तैलं चक्रतैलमाहुः। सर्पिश्चतुःस्नेहयोः पाकेऽपि कल्ककषायमानमेवमेव। केचिदत्रानुक्तमपि दशमूलकषायं ग्राहयन्ति "तयोः कल्ककषाये च दशमूलरसायुते" इत्यादि चरकस्मरणात् ॥ २५—२८ ॥

दन्तीत्यादि। कनकाह्वो नागकेशरः, यवासको दुरालभा, मृद्वीका द्राक्षा। मूत्रभावितैरेभिः कृतं चूर्णमिति योजना। चौद्रं सन्तर्पण-

छत्वैतान्मोदकानेकं दशमे दशमेऽहनि ।
ततः खादेदुष्णतोयसेवी निर्यन्त्रणाक्षिपे ॥
दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ॥ ३० ॥
व्योषं त्रिजातकं मुस्ता विड़ङ्गामलके तथा ।
नवैतानि समांशानि त्रिष्टदष्टगुणानि वै ॥
कृष्णचूर्णीकृतानीह दन्तीभागद्वयं तथा ।
सर्व्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ॥
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः ।
पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत् ॥
वस्तिरुक्‌तृट्ज्वरच्छर्दि-शोषपाण्डुभ्रमापहम् ।
निर्यन्त्रणमिदं सर्व्वं विषघ्नन्तु विरेचनम् ॥

---

मिति नानुपपन्नं "सक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम्" इति चरकोक्तेः । गुड़स्येत्यादि । यथा विंशतिरित्याकृत्या विंशतिर्हरीतक्यश्चूर्णीकृत्य ग्राह्याः, पलं पलमिति प्रत्येकं पलं दन्तीचित्रकयोः, कार्षाविति पिप्पलीत्रिवृतोर्मिलितयोरेव, मोदकान् मोदकाकारान् दशभागान्, कृत्वेत्युक्तमष्टपलं गुड़ं जलेन संमिश्र्य पाकेन तन्तुलीभूते त्रिवृदन्तानि चूर्णानि प्रक्षिप्येति शेषः । निर्यन्त्रणाः वातातपादिप्रतिषेधनियमरहिता इत्यर्थः । व्योषमित्यादि । व्योषं त्रिकटुकम्, त्रिजातकं त्वगेलापत्रम्, मुस्ता मुस्तकं,एकभागापेक्षया त्रिवृदष्टगुणोऽस्त्विति त्रिवृदष्टगुणानि । गालितानि वस्त्रपूतानि, षड्भिरित्येकभागसपेक्षेति बोध्यम्, ईषत् सैन्धवमाक्षिकैरितीषच्छब्दोऽयं भागैकपादं लक्षयन् केवलं सैन्धवशब्देनान्वेतीत्यायुर्व्वेदविदो भाषन्ते, माक्षिकन्तु पिण्डितत्वसम्पादनयोग्यमेव देयमित्यवसेयं पिण्डितमिति विशेषणात् । आतुराणां प्रीतिप्रकर्षमापादयन्

त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम् ।
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ॥
भक्ष्यरूपसधर्म्मत्वादाद्येष्वेव विधीयते ॥ ३१ ॥
तिल्वकस्य त्वचं शुष्कामन्तर्व्वल्कविवर्ज्जिताम् ।
चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत् ॥
तृतीयं भावितं तेन भागं शुष्कन्तु भावितम् ।
दशमूलकषायेण त्रिवृद्वत् सम्प्रयोजयेत् ॥ ३२ ॥
विधानं त्वचु निर्द्दिष्टं फलानामथ वक्ष्यते ॥ ३३ ॥
हरीतक्याः फलन्त्वस्थिवियुक्तं दोषवर्ज्जितम् ।
योज्यं त्रिवृद्विधानेन सर्व्वव्याधिनिवर्हणम् ।
रसायनं परं मेध्यं दृष्टान्तर्म्मणशोधनम् ॥ ३४ ॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तच्चूर्णं गोमूत्रेण विरेचनम् ॥ ३५ ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ।
सैन्धवं शृङ्गवेरञ्च गोमूत्रेण विरेचनम् ॥ ३६ ॥

---

स्तौति भक्ष्यरूपेत्यादिना । भक्ष्यरूपसधर्म्मत्वात् अपूपाद्यनुरूपत्वादित्यर्थः ॥ २८—३१ ॥

तिल्वकस्येत्यादि । तिल्वकस्य लोध्रमूलस्य, तत्कषायेण तिल्वकमूलक्काथेन, गालयेत् क्काथयेत्, तेन क्काथेन भावितं तृतीयं भागं शुष्कं सन्तं पुनर्दशमूलकषायेण भावितं कृत्वेति शेषः, तुकारः पुनरर्थे, अत्र त्रिवृद्वदित्यनेन "सैन्धवनागराम्लमस्तैः पिवेत्" इत्युपक्रम्य त्रिवृदधिकरणोक्तोक्तादिषूपयोगविधिरतिदिश्यते । हरीतक्या इत्यादि । अत्र त्रिवृद्विधा-

नीलिनीफलचूर्णञ्च नागराभययोस्तथा ।
लिह्याद्गुड़ेन सलिलं पश्चादुष्णं पिबेन्नरः ॥ ३७ ॥
पिप्पल्यादिकषायेण पिबेत् पिष्टां हरीतकीम् ।
सैन्धवोपहितां सद्य एष योगो विरेचयेत् ॥ ३८ ॥
हरीतकी भक्ष्यमाणा नागरेण गुड़ेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ३९ ॥
वातानुलोमनी हृष्या चेन्द्रियाणां प्रसादनी ।
सन्तर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ॥ ४० ॥
शीतमामलकं रूक्षं पित्तमेदःकफापहम् ॥ ४१ ॥
विभीतकमनुष्णन्तु कफपित्तनिवर्हणम् ॥ ४२ ॥
चीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ।
त्रिफला सर्व्वरोगघ्नी त्रिभागघृतमूर्च्छिता ।
वयसः स्थापनञ्चापि कुर्य्यात् सततसेविता ॥ ४३ ॥
हरीतकीविधानेन फलान्येवं प्रयोजयेत् ।
विरेचनानि सर्व्वाणि विशेषाच्चतुरङ्गुलात् ॥ ४४ ॥

---

नेनेत्यनेन वैरेचनद्रव्यरसानुपीतमित्यादिनोक्तो भावनोपयोगविधिरतिदिश्यते। नीलिनी नामौषधिर्नील इति विज्ञायते। पिप्पल्यादिर्गणः प्रागुक्तः, सैन्धवोपहितां समसैन्धवेन संसृष्टाम्। सातत्येन सततोपयोगेन। सन्तर्पणकृतान् दिवास्वप्नादिजनितान् ॥ ३२—४३ ॥

आमलकादिषु हरीतकीविधिरतिदिश्यते हरीतकीत्यादिना। आमलकादीनि सर्व्वाणि विरेचनानि फलानि एवं हरीतकीवत् प्रयोजयेदित्यर्थः। चतुरङ्गुलफले विशेषयति विशेषाच्चेति। चतुरङ्गुलात् शम्याकात्,

फलं काले समुद्धृत्य सिकतायां निधापयेत् ।
सप्ताहमातपे शुष्कं ततो मज्जानमुद्धरेत् ॥ ४५ ॥
तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च ।
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश ॥ ४६ ॥
लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम् ।
सुखोदकञ्चानुपिबेदेष योगो विरेचयेत् ॥ ४७ ॥
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन तु ।
युक्तं पीतं तथा क्षीररसाभ्यान्तु विरेचयेत् ॥ ४८ ॥
बालवृद्धक्षतक्षीण-सुकुमारेषु योजितम् ।
फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत ! ॥ ४९ ॥
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ।
अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्म्मविभ्रमात् ॥ ५० ॥
विजानता प्रयुक्तन्तु महान्तमपि सञ्चयम् ।
भिनत्त्याश्वेव दोषाणां रोगान् हन्ति च दुस्तरान् ॥५१॥
महत्याः पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ।

---

काले परिपक्वावस्थायां, फलं समुद्धृत्य, विशेषात् यत्नतः सिकतायां निधापयेदित्यर्थः; अत्र सिकताया आर्द्रत्वादिदोषपरिहारार्थं विशेषादित्युपात्तमित्यनुसन्धेयम्। एरण्डेत्यादि। रसो मांसरसः। विरेचनानामित्यादि। सौधं पयः स्नुहीक्षीरम्, अत्र सौधमिति सामान्येनोक्तेऽपि बहुकण्टकस्नुहीक्षीरमेव ग्राहयन्ति कुशलाः "प्रवरो बहुकण्टकः" इति चरकानुशासनात्। बृहत्योश्चैकश इति एकैकशो बृहत्योर्बृहत्याः कण्ट-

कषायैः समभागन्तु तदङ्गारैर्विशोषितम् ॥
अम्लादिभिः पूर्व्ववत् तु प्रयोज्यं कोलसम्मितम् ॥ ५२ ॥
महावृक्षपयःपीतैर्यवागूलखण्डुलैः कृता ।
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥ ५३ ॥
लेहो वा साधितः सम्यक् सुक्षीरसिताघृतैः ।
भाविताःस्तु सुक्षीरे पिप्पल्यो लवणान्विताः ।
चूर्णं काम्पिल्लकं वापि तत् पीतं गुटिकीकृतम् ॥ ५४ ॥
सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ।
मूत्रेणाप्लाव्य सप्ताहं सुक्षीरे ततः परम् ॥
कोर्णं तेनैव चूर्णेन माल्यं वसनमेव च ।
आघ्रायाहृत्य वा सम्यङ्मृदुकोष्ठो विरिच्यते ॥ ५५ ॥
क्षीरत्वक्फलमूलानां विधानैः परिकीर्त्तितैः ।
अवेक्ष्य सम्यग्रोगादीन् यथावदुपयोजयेत् ॥ ५६ ॥

---

कार्य्यमित्यर्थः । कषायैः पञ्चमूल्यादिकृतैरेभिस्त्रिभिः पृथक् समभागन्तु तल्लौधचीरम्, अङ्गारैर्व्विशोषितं कृत्वा पूर्व्ववत् त्रिवृच्चूर्णवत्, अम्लादिभिः कोलसम्मितं मानकद्वयं प्रयोज्यं दोषविशेषमभिसमीक्ष्येति बोध्यम् । अत्र कोलसम्मितमिति बलवत्क्रूरकोष्ठाभिप्रायेणोक्तं, यस्त्वद्विरिच्यते हि तस्य तिसृभिश्चतसृभिर्व्वा रक्तिकाभिः ॥ ४४—५२ ॥

योगान्तराण्युपदिदिक्षति महावृक्षेत्यादिना । महावृक्षपयःपीतैः सुक्षीरभावितैः, उत्कारिका "लप्सिका" इति मागधाः । आघ्राया-हृत्य वेति वाशब्दोऽवधारणार्थः । आहृत्य सूक्ष्मवस्त्रेण संहृत्य आघ्रायैवेत्यर्थः ।

त्रिवृच्छ्याणा मितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ।
विड़ङ्गपिप्पलीक्षार-शाणास्तिस्रश्च चूर्णिताः ॥
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुड़ेन वा ।
भक्षयेन्निष्परीहारमेतत् श्रेष्ठविरेचनम् ॥ ५७ ॥
गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥ ५८ ॥
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ।
भक्ष्यावलेह्येषु च तेषु तेषु विरेचनान्यग्र्यमतिर्विदध्यात् ॥५९॥
क्षीरं रसः कल्कमथो कषायः
शृतश्च शीतश्च तथैव चूर्णम् ।
कल्पाः षड़ेते खलु भेषजानां
यथोत्तरं ते लघवः प्रदिष्टाः ॥ ६० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विरेचनद्रव्यविकल्प-
विज्ञानीयो नाम चतुश्चत्वारिंशोऽध्यायः ।

---

त्रिवृदित्यादि । शाणस्यापरपर्य्यायोऽयं शाणाशब्दः । मिताः परिमिताः याथातथ्येन तुलिता इति यावत्, तिस्रस्त्रिवृच्छ्याणा इत्येवमन्वयः । अनुक्त-संग्रहणायाह घृतेष्वित्यादि । परिशिष्टं निगदव्याख्यातम् ॥ ५३—६० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने विरेचनद्रव्यविकल्पविज्ञानीयो नाम
चतुश्चत्वारिंशोऽध्यायः ।

---

# पञ्चचत्वारिंशोऽध्यायः ।



अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥

पानीयमान्तरीक्षमनिर्द्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमघ्नं क्लम–पिपासा-मद-मूर्च्छा-तन्द्रा-निद्रा-दाह-प्रशमनमेकान्ततः पथ्यतमञ्च ॥ २ ॥

---

श्रुतमेतद्भगवतोक्तं विरेचनद्रव्यविकल्पविज्ञानाधिकारे वाक्यजातम्, इदानीमिदमेव तावद्भवान् प्रष्टव्यः किन्नु खलु द्रवसामान्यं हित्वा तेन तेन द्रवविशेषेण तानि तानि विरेचनानि प्रयुञ्जन्ति भिषजः सम्यग्विरेचनगुणेनातुरमुपपादयितुमित्येवं वादिनामवसरं मुष्णन् द्रवद्रव्यविधिमधिकरोति अथात इत्यादिना । रसगुणवीर्य्यविपाकतो द्रवद्रव्याणां विधिः प्रकारोपदेशोऽत्रेति द्रवद्रव्यविधिः । "विधिः प्रकारः" इति हेमचन्द्रः ॥१॥

द्रवेषु पानीयमेव हि सर्व्वप्राणिहितमित्यवोचाम तदिदानीं प्रथमं तावत् तदेवाधिकरोति पानीयमित्यादिना । अन्तरीक्षात् सूर्य्यभूलोकयोर्म्मध्यवर्त्तिन आकाशप्रदेशादागतमान्तरीक्षम्, मधुरादिभेदेन निर्द्देशानर्हो रसोऽत्रेति अनिर्द्देश्यरसम् अव्यक्तरसमित्येतत् । नेह "रस-स्पर्शौ जले मधुर-शीतलौ" इति तर्कविद्याविदुषां मतसम्प्रत्ययमात्रेण विप्रतिषिद्धं भवत्याविस्फुटं मधुररसस्यानुपलब्धेः; नचैतदश्रद्धेयं ब्रवीत्यपि हि "शुक्लमधुरशीता एव रूपरसस्पर्शाः" इति भगवत्प्रशस्तपादभाष्ये न्यायकन्दली "गुड़ादिवदप्रतिभासनन्तु माधुर्य्यातिशयाभावात्" इति । अमृतमित्यमृतमिव, जीवनं प्राणधारणम्, तर्पणं तृप्तिसञ्जननम्, धारणं शरीरस्यैवेति विज्ञेयम्, आश्वासजननं क्लिष्टभीतमूर्च्छितादीनां सुखसञ्जननम् "आश्वासः पुंसि निर्वृतौ" इति मेदिनी, निर्वृतिः सुखमित्यनर्थान्तरम्, एकान्ततः पथ्यतममित्येकान्तहितम् ॥ २ ॥

तदेवावनीपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदी-नद-सरस्तड़ाग-वापी-कूप-चुण्टी-प्रस्रवणोद्भिद-विकिर-केदार-पल्वलादिषु स्थानेष्ववस्थितमिति ॥ ३ ॥

तत्र लोहित-कपिल-पाण्डु-पीत-नील-शुक्लेष्ववनिप्रदेशेषु मधुराम्ल-लवण-कटु-तिक्त-कषायाणि यथासङ्ख्यमुदकानि सम्भवन्तीत्येके भाषन्ते, तत् तु न सम्यक् । तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण । तत्र स्वगुणभूयिष्ठायां भूमावम्लं लवणञ्च । अम्बुगुणभूयिष्ठायां मधुरम् ।

---

उक्तमर्थं पुनर्विशिनष्टि तदेवेत्यादिना । तदेवान्तरीक्षं पानीयमवनीपतितं नद्यादिष्ववस्थितञ्च सत्, स्थानगुणविशेषात् स्थानगुणभेदात्, अन्यतमं मधुराद्येकतमं रसमुपलभत इत्यन्वयः । तड़ागस्तत्र "प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तड़ागः स्यात्" इत्युक्तलक्षणः, अत्र विशेषयति भगवान् वशिष्ठः "शतेन धनुर्भिः पुष्करिणी, त्रिभिर्दीर्घिका, चतुर्भिर्द्रोणः पञ्चभिस्तड़ागः" इति । धनुर्हस्तचतुष्टयमिति जलाशयोत्सर्गतत्त्व-मट्टसम्प्रायाध्यवसितव्यम् । वापी दीर्घिका, चुण्टी इष्टकाचितः कूपः । प्रस्रवणं पर्व्वताद्युन्नतप्रदेशात् शश्वत्स्रवज्जला प्रणाली, जलमुद्भिद्यते अत्रेत्युद्भिदः उदमज्जलाशय इति यावत्, सीताकुण्डादिरिति निष्कर्षः ; स्वतो वालुकोत्क्षेपणेन वा विकीर्य्यते जलमत्रेति विकिरः फल्गुनद्यादिरिति तात्पर्य्यम् । केदार आलवालम् "केदारोऽद्रौ शिवे चेत्रे भूमिभेदालवालयोः" इति मेदिनी, पल्वलं क्षुद्रं सरः ; आदिग्रहणात् ह्रदादीनामादेशः ॥ ३ ॥

तत्रेत्यादि । अन्योन्यानुप्रवेशकृतः पञ्चीकरणाभिनिर्वृत्तः, सलिलरसः सलिलरसभेदो भवत्युत्कर्षापकर्षेण पाकवशाद्व्यक्ताव्यक्तविभागेनेत्यर्थः ; एतदेव विशदयति तत्रेत्यादिना । स्वगुणभूयिष्ठादयः शब्दाः प्राग्व्याख्याता-

तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च। वायुगुणभूयिष्ठायां कषायञ्च। आकाशगुणभूयिष्ठायामव्यक्तरसमव्यक्तं ह्याकाशमित्यतस्तत् प्रधानमव्यक्तरसत्वात्; तत् पेयमान्तरीक्षालाभे॥ ४॥

तत्रान्तरीक्षं चतुर्व्विधम्। तद्यथा—धारं, कारं, तौषारं, हैममिति। तेषां धारं प्रधानं लघुत्वात्। तत् पुनर्द्विविधं गाङ्गं सामुद्रञ्चेति। तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति। तयोर्द्वयोरपि परीक्षणं कुर्व्वीत। शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे वहिष्कुर्व्वीत, स यदि मुहूर्त्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यम्; वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति। गाङ्गं पुनः

---

भूमिप्रविभागीये। कथं नु खल्वाकाशगुणभूयिष्ठायां पतितं नान्यतमं रसमुपलभत इत्यत आह अव्यक्तं ह्याकाशमिति। हि यस्मात् आकाशमव्यक्तमव्यक्तरसम्, इत्यत इति हेतोः, आकाशगुणभूयिष्ठायामव्यक्तरसगुणभूयिष्ठायां पतितं सलिलमव्यक्तरसं भवत्यव्यक्तरससंसर्गादिति भावः। तत् आकाशगुणभूयिष्ठायां पतितं सलिलं प्रधानमितरापेक्षया श्रेष्ठम्, कुतः? अव्यक्तरसत्वात् अव्यक्तस्य अव्यक्तरसस्यान्तरीक्षसलिलस्य रस इव रसोऽस्येति अव्यक्तरसस्तस्य भावस्तस्मात् रसेनान्तरीक्षसलिलसाम्यादिति निष्कर्षः॥४॥

तत् पुनर्व्विशिनष्टि तत्रेत्यादिना। तत्रान्तरीक्षभूमिपतितेषु सलिलेषु मध्ये इत्यर्थः। धारं नाम "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा। * * * भाजने मृन्मये वापि स्थापितं धारमुच्यते" इत्युक्तलक्षणम्, कारं वर्षोपलोद्भवं करकोद्भवमित्येतत् "करो वर्षोपले" इति मेदिनी,

प्रधानं, तदुपादद्दीताश्वयुजे मासि शुचिशुक्लविततपटैकदेश-च्युतमथवा हर्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृन्मये वा पात्रे निदध्यात्, तत् सर्व्वकालमुपयुञ्जीत। तस्यालाभे भौमम्। तच्चाकाशगुणबहुलम्। तत् पुनः सप्तविधम्। तद्यथा—कौपं नादेयं सारसं ताड़ागं प्रास्रवणमौद्भिदं चौण्ट्यमिति। तत्र वर्षास्वान्तरीक्षमौद्भिदं वा सेवेत महागुणत्वात्, शरदि सर्व्वं प्रसन्नत्वात्, हेमन्ते सारसं ताड़ागं वा, वसन्ते कौपं प्रास्रवणं वा, ग्रीष्मेष्वेवं, प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्व्वञ्चेति ॥ ५ ॥

---

तौषारमान्तरीक्षजलकणनिचयजातम् "तुषारः शीकरे हिमे" इति त्रिकाण्डः, शीकरो जलकणा इति पर्य्यायौ ; हैमं हिमसम्भूतम्, हिमम‌त्र हिमत्वसामान्यान्नीहारो हिमानी चेत्याहुः, हिमहिमानीसम्भूतं सलिलमित्येतत्। गाङ्गं सामुद्रञ्चेति पारिभाषिकमित्येव प्रत्येतव्यम्, शाल्योदनेत्यादिना विद्यादित्यन्तेनानन्तरोक्तेन ग्रन्थसन्दर्भेण। रजतभाजनोपहितं रजतभाजनधृतम्, सिक्थच्छेदे विभक्तत्वेन सिक्थच्छेदे जाते इत्यर्थः। आश्वयुजे आश्विने मासि, हर्म्यग्रमिष्टकादिरचितं धवलगृहमित्यरुणदत्तः, निर्म्मलात्तस्मात् परिभ्रष्टं हर्म्यग्रतलपरिभ्रष्टं,स्वरूपापरपर्य्यायोऽयं तलशब्दः, भूतलमितिवत्। अन्यैरित्यसंशयं ताम्रकांस्यादिभाजनसामान्यपरिग्रहार्थम्। नेह सप्तविधमित्ययुक्तमितरेषामेष्वेवान्तर्भावात्। महागुणत्वात् विषजुष्टत्वादिदोषविरहितत्वेन तदात्वे गुणप्रकर्षात्। अनवं वर्षोदकेनासंसृष्टम्, अनभिवृष्टं वृष्टिभिरनाघ्रातम्, परिशिष्टं निगदव्याख्यातम् ॥ ५ ॥

कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् ।
तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥
योऽवगाहेत वर्षासु पिवेद्वापि नवं जलम् ।
स वाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु ॥ ६ ॥

तत्र यत् शैवालपङ्कहठतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात् ॥ ७ ॥

तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् सम्भवन्ति ॥८॥

तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः । पङ्कसिकताशैवालबहुवर्णता रूपदोषाः । व्यक्तरसता रसदोषः । अनिष्टगन्धता गन्धदोषः । यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः । यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोष इति । त एते आन्तरीक्षे न सन्ति ॥ ९ ॥

---

कीटेत्यादि । उत्करो नामाल्पशो विभक्तसुलूपादि "कूंटा" इति विज्ञायते "उत्करः कूटमस्त्रियाम्" इत्यमरः ; तृणग्रहणेनैवास्योपलम्भेऽपि पृथगुपादानं प्रपञ्चार्थम् । वर्षासु नवं जलं योऽवगाहेत पिवेद्वेति समन्वयः । तत्रेत्यादि । तत्रेति बुद्ध्या समाकृष्टतया विप्रकृष्टानामपि तत्तद्भूमिपतितानां जलानां तदा प्रत्यवमर्शः क्रियते, तत्र स्वगुणभूयिष्ठादिभूमिपतितेषु जलेषु मध्ये इत्यर्थः । हठः कुम्भिकेति पर्य्यायो "पाना" इत्याख्यायते, गन्धवर्णरसोपसृष्टं यथास्वगन्धादिविरहितम् । तत्रेत्यादि । खरता सर्षपवाल्कवत् तिग्मस्पर्शता "तिग्मं तीक्ष्णं खरम्" इत्यमरः, दन्तग्राहितेत्यति-

व्यापन्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्टानां वा निर्व्वापणं प्रसादनञ्च कर्त्तव्यं,नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ १० ॥

सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा ।
पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत् ॥
व्यापन्नं वर्ज्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम् ।
दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत् ॥
व्यापन्नं सलिलं यस्तु पिबतीहाप्रसाधितम् ।
श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम् ॥
श्वासकासप्रतिश्याय-शूलगुल्मोदराणि च ।
अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च ॥ ११ ॥

तत्र सप्त कलुषस्य प्रसादनानि भवन्ति। तद्यथा—कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्ता मणिश्चेति। पञ्च निक्षेपणानि भवन्ति। तद्यथा—फलकं त्र्यष्टकं मुञ्जवलय-

शीतत्वेनैव बुभुक्षितव्यम्। पङ्कादिसंसर्गेण तद्वर्णता प्रदुष्टत्वेन नीलपीताद्यनेकवर्णता चेति पङ्कसिकताशैवालबहुवर्णता। व्यापन्नानामित्यादि तप्तेत्यादौ तप्तशब्दः प्रत्येकमभिसम्बध्यते। निर्व्वापणं निक्षेपणं शीतीकरणमित्येतत्। प्रसादनं नैर्म्मल्यम्, अधिवासनं स्थापनं संस्कारो वा। सौवर्ण इत्यादि। पुष्पावतंसं पुष्पाधिवासितम्, भौमे मृन्मये ॥ ६—११ ॥

प्रागुक्तप्रसादनद्रव्याण्युपदिदिक्षति तत्रेत्यादिना। प्रसादनानि निर्म्मलीकरणानि, कतको नामौषधिः "निर्म्मली" इति विज्ञायते, गोमेदकं मणिभेदः, तेजपत्रमित्येके "गोमेदकं पीतमणौ काकोले पत्रकेऽपि च" इति मेदिनी। मणिग्रहणेनैवास्योपलम्भेऽपि पृथगुपादानं गुणप्रकर्षादित्यनुसन्धेयम्।

उदकमञ्चिका शिक्यञ्चेति सप्त शीतीकरणानि भवन्ति ;—
प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं
वालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति ॥ १२ ॥

निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥ १३ ॥

तत्र नद्यः पश्चिमाभिमुखाः पथ्या लघूदकत्वात् । पूर्व्वाभिमुखास्तु न प्रशस्यन्ते गुरूदकत्वात् । दक्षिणाभिमुखा नातिदोषलाः साधारणत्वात् । तत्र सह्यप्रभवाः कुष्ठं जनयन्ति,

---

मृणालस्य ग्रन्थिर्विसग्रन्थिः । पञ्चेत्यादि । निक्षिप्यते स्थाप्यतेऽनेनेति निक्षेपणान्यासनानि । फलकं काष्ठपट्टकं काष्ठपीठमित्येतत् । त्रीणि काष्ठान्यश्नुते "अशू व्याप्तौ संहतौ च" इति धात्वर्थस्मरणात् तात्पर्य्याच्च प्रान्ततस्त्रिकोणाकारेण संहन्यन्तेऽनेनेति वाहुलकादधिकरणे क्तः, त्रीणि काष्ठानि अष्टानि तथैव संहतान्यनेनेति वा त्र्यष्टकं त्रिकोणाकारेण विन्यस्तनिवद्धं त्रिकाष्ठकमित्यर्थः । वलयाकारेण मुञ्जविरचितो गोलो मुञ्जवलयः "विड़ा" इत्यभिधोयते । उदकमञ्चिका उदकपात्रस्थापनार्थं काष्ठादिनिर्म्मितमुच्चस्थानम् "माँचा" इति विज्ञायते, शिक्यं रज्जुनिर्म्मितं दोलायन्त्रम् "छिँका" इति प्रसिद्धम् । सप्तेत्यादि । उदकप्रक्षेपणं शीतोदकमध्ये आग्रीवमुदकपात्रस्थापनम्, अपरशीतोदकप्रक्षेपणं वा, एतेनैव वालुकाप्रक्षेपणमपि व्याख्यातप्रायम्, यष्टिकाभ्रामणं दण्डेनालोड़नम्, व्यजनं तालवृन्तेन संवीजनम्, वस्त्रोद्धरणं द्विस्त्रिर्व्वाऽऽस्तीर्णेनाक्लिष्टेन च घनवस्त्रेण सलिलप्रपूरितपात्रमुखं दृढ़ं बद्धा तत् पात्रमधोमुखं कृत्वा वस्त्रान्तरेणावेष्ट्य संदोलनम् । हृद्यं मनोज्ञम् ॥ १२।१३ ॥

तत्रेत्यादि । नद्यो गङ्गायाः, अत्र नदीग्रहणेनैव शोणादीनां नदानामप्यादेशः क्रियते केवलं संज्ञामात्रेण विशेषात् । सह्यो नाम "पुना"

विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगञ्च, मलयप्रभवाः क्रिमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान् । प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति, पारिपात्रप्रभवाः पथ्या बलारोग्यकर्य्य इति ॥ १४ ॥

नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः ।
गुर्व्व्यः शैवालसञ्छन्नाः कलुषा मन्दगाश्च याः ॥
प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ।
ईषत्कषाया मधुरा लघुपाका बले हिताः ॥ १५ ॥

तत्र सर्व्वेषां भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यञ्चाधिकं भवति, स एव चापां परो गुण इति ॥ १६ ॥

दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ।
अरूक्षमनभिष्यन्दि तत् तुल्यं गगनाम्बुना ॥ १७ ॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥ १८ ॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ।
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥ १९ ॥

---

इति प्रसिद्धदेशसमीपस्थः पर्व्वतविशेषः । प्राच्यावन्तात् पूर्व्वावन्तीप्रदेशस्थितपर्व्वतपादारम्भवाः प्राच्यावन्त्याः, तद्विपरीतास्त्वपरावन्त्याः ; पश्चिमापरपर्य्यायो ह्यपरशब्दः । दिवेत्यादि । गुणविशेषं प्रति पात्रविशेषमपेक्षत इत्येवं पात्रापेक्षित्वं लक्षणीयम् । रक्षोघ्नमिति रक्षोघ्नत्वमस्य संसिद्धं सर्षपादिवत्, चन्द्रकान्तो नाम मणिभेदः, यस्तु खलु चन्द्रसम्पर्कात् सलिलं

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
श्रमक्लमपरीतेषु तमके वमथौ तथा ।
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ २० ॥
पार्श्वशूले प्रतिश्यायै वातरोगे गलग्रहे ।
आध्माते स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ।
हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेत् ॥ २१ ॥
नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ।
तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ २२ ॥
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥ २३ ॥
ताड़ागं वातलं स्वादु कषायं कटुपाकि च ॥ २४ ॥
वातश्लेष्महरं वाप्यं सक्षारं कटुपित्तलम् ॥ २५ ॥
सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥ २६ ॥
चौण्ट्यमग्निकरं रूक्षं मधुरं कफकृन्न च ॥ २७ ॥
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ २८ ॥
मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥ २९ ॥
वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ ३० ॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥ ३१ ॥
तद्वत् पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत् ॥ ३२ ॥
सामुद्रमुदकं विस्रं लवणं सर्व्वदोषकृत् ॥ ३३ ॥

---

पित्तावयतीति ऋषयो भाषन्ते । उष्ण उष्णस्पर्श आतपादिः, मूर्च्छायां

अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम् ॥ ३४ ॥
एभिर्दोषैरसंयुक्तं निरवद्यन्तु जाङ्गलम् ।
पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम् ॥ ३५ ॥
दीपनं स्वादु शीतञ्च तोयं साधारणं लघु ।
कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ॥ ३६ ॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ३७ ॥
यत् क्वाथ्यमानं निर्व्वेगं निष्फेनं निर्म्मलं लघु ।
चतुर्भागावशेषन्तु तत् तोयं गुणवत् स्मृतम् ॥ ३८ ॥
न च पर्य्युषितं देयं कदाचिद्वारि जानता ।
अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे ॥ ३९ ॥
मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा ।
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ॥ ४० ॥
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ।
वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ॥ ४१ ॥
दाहातीसारपित्तास्रङ्मूर्च्छामद्यविषार्त्तिषु ।
शृतशीतं जलं शस्तं तृष्णाच्छर्द्दिभ्रमेषु च ॥ ४२ ॥

---

पित्तादिजन्येषु दाहेषु चेति मूर्च्छापित्तोष्णदाहेषु । अनेकेत्यादि । आनूपमानूपदेशस्थम्, एवमेव जाङ्गलमपि व्याख्येयम्, निरवद्यमनिन्द्यं निर्द्दोषमित्येतत्, जाङ्गलानूपोभयलक्ष[illegible] देशः साधारणस्तत्र भवं साधारणम् । यदित्यादि । यत्तोयं क्वा[illegible]न पच्यमानं सत् निर्व्वेगमनुन्नामित्वेन वेगरहितम्, निष्फेनं निर्म्मलञ्च भवति, चतुर्भागावशेषं तत् गुणवत् स्मृतमित्य-

अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ।
मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ।
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ४३ ॥

इति जलवर्गः ।

गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत् ।
अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत् पयः ॥
तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ।
मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥
सर्व्वप्राणभृतां तस्मात् सात्म्यं चीरमिहोच्यते ॥ ४४ ॥

तच्च सर्व्वमेव चीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात् । वात-पित्त-शोणित-मानस-विकारेष्वविरुद्धम् । जीर्णज्वर-कास-

---

न्वयः । तोयत्वसाम्यादनुक्तमपि नारिकेलोदकमधिकरोति स्निग्धमित्यादिना । दाहेत्यादि । पूर्व्वं मद्यपानोत्थे रोगे शृतशीतं प्रशस्यत इत्युक्तमिदानीन्तु मद्यविप्रार्त्तिषु इत्यनेन मद्योत्थे मदे शस्तमित्युच्यत इति न पौनरुक्त्यम् । परिशिष्टं निगदव्याख्यातम् ॥ १४—४३ ॥

अवसितः पानीयविवेक इदानीन्तु द्रवान्तराण्येव व्याख्यास्याम इत्यभिसन्धाय तेषु प्राधान्यात् प्रथमं तावत् चीरमेवाधिकरोति गव्यमित्यादिना । करेणुर्हस्तिनी । अत्राम्नायते हि "सर्व्वरसाभ्यासो बलकराणां श्रेष्ठतमः" इति, तदिदमुच्यते तत्त्वनेकेत्यादि । औषधिशब्दोऽयमाहारसामान्यमुपलक्षयतीति निश्चीयते गमकत्वात् । तथाच यस्मात् तत् पयोजातमनेकौषधिरसप्रसादं मधुरादिसर्व्वरसाहारप्रसादात्मकं तस्मादेव प्राणदं बलकरं तदुपयोगेनेव सर्व्वरसोपयोगसिद्धेरिति भावः । तुकारोऽवधारणार्थः । बलं प्राण इति पर्य्यायौ । अनन्तरम् आजं पयः संप्रा-

श्वास-शोष-क्षय-गुल्मोन्मादोदर-मूर्च्छा-भ्रम-मद-दाह-पिपासा-हृद्वस्ति-पाण्डुरोग-ग्रहणीदोषार्शः-शूलोदावर्त्तातिसार-प्रवाहिका-योनिरोग-गर्भास्राव-रक्तपित्त-श्रम-क्लम-हरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बाल-वृद्ध-क्षत-क्षीणानां क्षुद्व्यवाय-व्यायाम-कर्शितानाञ्च पथ्यतमम् ॥ ४५ ॥

गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥
जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥ ४६ ॥
गव्यतुल्यगुणत्वाजं विशेषाच्छोषिणां हितम् ॥
दीपनं लघु सङ्ग्राहि श्वासकासास्रपित्तनुत् ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ।
नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः ॥ ४७ ॥

---

क्षीति वक्ष्यमाणे सत्यपि सरमिति नानुपपन्नं "छत्रिणो गच्छन्ति" इतिवत् बाहुल्यानुशयेनोक्तेः। सरमीपद्विरेचकमित्यर्थः। तत्रेत्यादि। जातिसामान्यादाजन्मनः शीलितत्वात्। मानसविकाराः प्रागुक्ताः क्रोधादयः, पाप्मापहं कार्पासजाद्यपहरणजन्यानां पापानां क्षयकरम्, तथाच "कार्पासकीटजोर्णानाम्" इत्युपक्रम्य "त्र्यहञ्चैव पयः" इत्यपहरणप्रायश्चित्ताधिकारे स्मृतिः। आस्थापनं पिच्छिलवस्त्याद्युपयोगित्वेनास्थापनोपगमित्यर्थः। वमनं मदनफलमज्जाद्युपयोगानुशयित्वेन वमनोपगम्। विरेचनमिति पित्तप्रकृतेरेव, वक्ष्यति हि "बहुपित्तो मृदुः स दुग्धेनापि विरिच्यते" इति ॥ ४४—४५ ॥

रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु ।
शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् ॥ ४८ ॥
आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् ।
पथ्यं केवलवातेषु कासे चानिलसम्भवे ॥ ४९ ॥
महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ।
निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु ॥ ५० ॥
उष्णञ्चैकशफं बल्यं शाखावातहरं पयः ।
मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥ ५१ ॥
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ।
नस्याश्चोतनयोः पथ्यं जीवनं लघु दीपनम् ॥ ५२ ॥
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ।
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ॥ ५३ ॥
प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ।
रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥
दिवाकराभितप्तानां व्यायामानिलसेवनात् ।
वातानुलोमि श्रान्तिघ्नं चक्षुष्यञ्चापराह्णिकम् ॥ ५४ ॥

---

गोक्षीरमित्यादि । एकशफाया अश्वायाः क्षीरमैकशफम्, शाखा रक्तादयो धातवस्त्वक् च इत्यात्रेयः, "शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिरः" इत्यनागतावेक्षणात् शाखाशब्देन द्वौ बाहू द्वे च सक्थिनी परिगृह्यन्ते इत्यन्ये, तद्गतो वातः शाखावातः । आश्चोतनशब्देनेह उभे एवाक्षिपूरण-सेचने लक्ष्येते इत्युपदिशन्ति प्राञ्चः । प्रायः प्राभातिकमिति प्रायःशब्देनेह शैशिरं व्यायामशीलोत्पन्नञ्च प्राभातिकं क्षीरं व्यवच्छिनत्तीति गम्यते

पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम् ।
तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ।
वर्ज्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥ ५५ ॥
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ।
तदेवातिशृतं सर्व्वं गुरु वृंहणमुच्यते ॥ ५६ ॥
वर्ज्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥ ५७ ॥

इति क्षीरवर्गः ।

दधि तु मधुरमम्लमत्यम्लञ्चेति । तत् कषायानुरसं स्निग्ध-मुष्णं पीनस-विषमज्वरातिसारारोचक-मूत्रकृच्छ्र-कार्श्यापहं वृष्यं प्राणकरं मङ्गल्यञ्च ॥ ५८ ॥

महाभिष्यन्दि मधुरं कफमेदोविवर्द्धनम् ।
कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥ ५९ ॥
विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत् ॥ ६० ॥
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ।
वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम् ॥ ६१ ॥

---

रावावित्याद्यनन्तरोक्तेः । धारोष्णमित्यादि । अत्र गुणवदित्यतिशायने वतुप्, बहुगुणमित्यर्थः । अत्रातिशृतं गुर्व्विति सामान्येनोक्तेऽपि प्रायः क्षुच्छूलार्त्तेषु लघ्विव प्रतिभातीत्युपदेशः । सलवणं लवणेन सम्मिश्रं, तद्धि शिथिलमांसत्वादिसम्पादनान्नितरां दोषावहमित्याहुरात्रेयादयो महर्षयः । विकृत्या गुम्फितमिवेति विग्रथितं, नष्टमितिरतत् ॥ ४६—५७ ॥

दधीत्यादि । विषमज्वरस्त्वत्र वातोल्वण एव प्रत्येतव्यः,उष्णत्वेन स्निग्ध-

दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ।
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम् ॥ ६२ ॥
विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ।
बलासवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥ ६३ ॥
विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि ।
वातमर्शांसि कुष्ठानि क्रिमीन् हन्त्युदराणि च ॥ ६४ ॥
कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि ।
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ॥ ६५ ॥
दीपनीयमचक्षुष्यं वाड़वं दधि वातलम् ।
रूक्षमुष्णं कषायञ्च कफमूत्रापहञ्च तत् ॥ ६६ ॥
स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु ।
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम् ॥ ६७ ॥
लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम् ।
कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम् ॥ ६८ ॥
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ।
विज्ञेयमेषु सर्व्वेषु गव्यमेव गुणोत्तरम् ॥ ६९ ॥
वातघ्नं कफकृत् स्निग्धं वृंहणं न च पित्तकृत् ।
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम् ॥ ७० ॥

---

त्वेन च पित्तश्लेष्मविरोधात् । मङ्गलाय हितं मङ्गल्यम्, प्रभावाद्यात्रायां मङ्गलसंसूचकमित्येतत् । मन्दजातं न सम्यक् दधिभावमापन्नम्, पवित्रं सृष्टविण्मूत्रतया शरीरविशोधनम् । अर्शोऽपरपर्य्यायोऽयं दुर्नामशब्दः, वाड़व-

शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम्।
वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम्॥ ७१॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः।
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः॥ ७२॥
दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम्।
दीपनीयं लघुतरं सकषायं रुचिप्रदम्॥ ७३॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते॥ ७४॥
तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्।
अम्लं कषायं मधुरमवृष्यं कफवातनुत्॥
प्रह्लादनं प्रीणनञ्च भिनत्त्याशु मलञ्च तत्।
बलमावहते चापि भक्तच्छन्दं करोति च॥ ७५॥

स्वाद्वम्लमत्यम्लकमन्दजातं
तथा शृतक्षीरभवं सरञ्च।
असारमेवं दधि सप्तधास्मिन्
वर्गे स्मृता मस्तुगुणास्तथैव॥ ७६॥

इति दधिवर्गः।

---

माम्लम्। गुणोत्तरं गुणश्रेष्ठम्, सुपरिस्रुतं सम्यक् वस्त्रपरिस्रुतोदकम्, गुणवन्महागुणमतिशायने वतुप्, विधमनो नाशनः, प्रीणनं प्रीतिसञ्जननम्, भक्तच्छन्दं भक्ताभिप्रायम् "अभिप्रायवशौ च्छन्दौ" इत्यमरः। सरो दध्यग्रम्। परिशिष्टं निगदव्याख्यातम्॥ ५८—७६॥

तक्रं मधुरमम्लं कषायानुरसमुष्णवीर्य्यं लघु रूक्षमग्निदीपनं गर-शोफातीसार-ग्रहणी-पाण्डुरोगार्शः-प्लीह-गुल्मारोचक-विषम-ज्वर-तृष्णा-च्छर्द्दि-प्रसेक-शूल-मेदः-श्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्र-स्नेहव्यापत्प्रशमनमवृष्यञ्च ॥ ७७ ॥

मन्थनादिपृथग्भूतस्नेहमर्द्धोदकन्तु यत् ।
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥
यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥
तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्व्वले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ७८ ॥

तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनञ्च, अम्लं वातघ्नं पित्तकरञ्च ॥ ७९ ॥

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
पिबेत् तक्रं कफे चापि व्योषक्षारसमायुतम् ॥ ८० ॥
ग्राहिणी वातला रूक्षा दुर्ज्जरा तक्रकूर्च्चिका ।
तक्राल्लघुतरो मण्डः कूर्च्चिकादधितक्रजः ॥

---

तक्रमित्यादि । तक्रादयो गव्या एव प्रत्येतव्याः, वक्ष्यति हि "विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः" इति । गरं संयोगजं विषम्, तुवरं कषायानुरसम् । उष्णे दुग्धे तक्रयोगेन जाता आमिक्षा तक्रकूर्च्चिका । मण्डस्तूपरिस्थितः स्वच्छो भागः "माँत्" इत्याख्यायते, अस्य विशेषणं

गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः ।
मधुरौ बृंहणौ वृष्यौ तद्वत् पीयूषमोरटौ ॥ ८१ ॥

नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षय-कास-श्वास-व्रणार्शोऽर्दितापहं गुरु कफमेदोविवर्द्धनं बलकरं बृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते । क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहं माधुर्य्ययुक्तमतिशीतं सौकुमार्य्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनञ्च ॥८२॥

सन्तानिका पुनर्वातघ्नी तर्पणी बल्या वृष्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्व्वी च ॥ ८३ ॥

---

कूर्च्चिकादधितक्रज इति. कूर्च्चिकाशब्देनेह "दध्ना सह च यत्पक्वं क्षीरं सा दधिकूर्च्चिका । तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्च्चिका" इत्युक्तलक्षणे द्वे एव कूर्च्चिके परिगृह्येते । किलाटस्तु दधितक्रकूर्च्चिकयोः पिण्ड इत्याहुः, "नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः" इति स्मरणात् । सम्प्रति गुर्व्वादिगुणसाधर्म्यादुपदेशसौकर्य्यमभिसमीक्ष्याप्रकृतावपि पीयूषमोरटावुपदिश्येते तद्वदित्यादिना, तौ च "क्षीरं सद्यः प्रसूतायाः पीयूषमिति संज्ञितम् । सप्तरात्रात् परं क्षीरमप्रसन्नन्तु मोरटः" इत्युक्तलक्षणौ । नवनीतमित्यादि । अत्र सद्यस्कं सद्योभवं लघ्वित्युपदेशेनार्थाक्षिप्तं भवत्यसद्यस्कं गुर्व्विति, उक्तञ्च "सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकोठकारकम् । श्लेष्मलं गुरुमेदस्यं नवनीतं चिरन्तनम्" इति । सुकुमारमतिकोमलं, तत् करोतीति व्युत्पत्त्या णिचि क्वचि च सौकुमार्य्यकृद्वा । पारिशेष्यात् सन्तानिकागुणमभिधत्ते सन्तानिकेति । सन्तानिका क्षीरसरः । सम्प्रत्यविभक्तमिमं तक्रवर्गं गव्यत्वेन प्रविभज्येतरेषां तक्रवर्गाणां यथास्वं क्षीर-

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः ।
विकल्पानवशिष्टांस्तु क्षीरवीर्य्यात् समादिशेत् ॥ ८४ ॥

इति तक्रवर्गः ।

घृतन्तु सौम्यं शीतवीर्य्यं मृदु-मधुरमल्पाभिष्यन्दि-स्नेहन-मुदावर्त्तोन्मादापस्मार-शूल--ज्वरानाह--वातपित्तप्रशमनमग्नि-दीपनं स्मृति-मति-मेधा-कान्ति-स्वर--लावण्य--सौकुमार्य्यौज-स्तेजो-बलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्द्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च ॥ ८५ ॥

---

गुणविमर्षेण गुणा उपदेष्टव्या इत्युपदिशन्नाह विकल्प इत्यादि । दध्यादिरस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिस्तक्रप्रभृतिरिति समासार्थः । अवशिष्टान् परिशिष्टानाजतक्राद्यात्मकान् विकल्पान् तत्तत्क्षीरशक्तिमभिसमीक्ष्येति क्षीरवीर्य्यात् समादिशेत् गुरुलघ्वादित उपदिशेदित्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ ७७—८४ ॥

घृतमित्यादि । सौम्यं सोमगुणबहुलम्, अतएव शीतवीर्य्यम्, मृदु-तीक्ष्णं मधुरञ्चेति योजना । अग्निदीपनमित्यग्निशब्दः सामान्येनोक्तोऽपि वातप्रदुष्टत्वेनावश्यं विशेषणीयः, श्लेष्माभिवर्द्धनत्वेन मन्देऽग्नावेकान्तेनानुपयोगात्, तीक्ष्णे च "अद्यात्तथौदकानूपपिशितानि घृतानि च" इत्यादिना निर्व्वापणत्वेनोपदेशाच्च । लावण्यं नाम "मुक्ताफलेषु च्छायायास्तरलत्व-मिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इत्युक्तलक्षणः शरीर-सौन्दर्य्यभेदः । ओजः शुक्रान्तानां धातूनां यत्परं तेजस्तेजस्तु वसेति दोषादिविज्ञानीयमभिसमीक्ष्याध्यवसितव्यम् । पाप्मालक्ष्मीप्रशमनमिति आहारविशेषस्याऽपि घृतस्य पापप्रशमनत्वं नानुपपन्नं "यस्मात्तेजोमयं ब्रह्म घृतं तच्च व्यवस्थितम् । तेजोऽमृतमयं दिव्यं महापातकनाशनम्" इति प्रायश्चित्ततत्त्वे स्मरणात् । लक्ष्मीः कान्तिस्तद्विपरीता अलक्ष्मीः,

विपाके मधुरं शीतं वातपित्तविषापहम् ।
चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम् ॥ ८६ ॥
आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम् ।
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥ ८७ ॥
मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम् ।
वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ ८८ ॥
औष्ट्रं कटुरसं पाके शोफक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ ८९ ॥
पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम् ।
कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥ ९० ॥
पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम् ।
दीपनं बद्धमूत्रञ्च विद्यादैकशफं घृतम् ॥ ९१ ॥
चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम् ।
वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् ॥ ९२ ॥
कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु ।
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् ॥ ९३ ॥

क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च ॥ ९४ ॥

---

कान्तिकरत्वेनैवालक्ष्मीप्रशमनत्वस्योपलम्भेऽपि पृथगुपादानं प्रपञ्चार्थम् ।: विषघ्नत्वं रक्षोघ्नत्वञ्च सांसिद्धिकं कुष्ठसर्षपादिवत् । क्षीरोत्थं घृतं क्षीरघृतम् ॥ ८५—९४ ॥

सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिप्रपूरणेषूपदिश्यते ॥ ९५ ॥

सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छा-मेद-उन्मादोदर-ज्वर-गर-शोफापस्मार-योनि-श्रोत्राक्षि-शिरःशूलघ्नं दीपनं वस्तिनस्याक्षिपूरणेषूपदिश्यते ॥ ९६ ॥

भवन्ति चात्र ।

पुराणं तिमिरश्वासपीनसज्वरकासनुत् ।
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ ९७ ॥
एकादशशतञ्चैव वत्सरानुषितं घृतम् ।
रक्षोघ्नं कुम्भसर्पिः स्यात्परतस्तु महाघृतम् ॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ।
बल्यं पवित्रं मेध्यञ्च विशेषात् तिमिरापहम् ।
सर्व्वभूतहरञ्चैव घृतमेतत् प्रशस्यते ॥ ९८ ॥

इति घृतवर्गः ।

तैलन्त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं

---

सर्पिरित्यादि। मण्ड उपरिस्थितः स्वच्छो भागः, गरं संयोगजं विषम्। पुराणमित्यादि। भूतैर्मानवैरिति तात्पर्य्यम्। पवित्रं पूतं काल-परिणतत्वेनापगतातिसौम्यांशमित्येतत्, मेधा धारणावती बुद्धिस्तस्यै हितं मेध्यम्, सर्व्वभूतहरं पिशाचाद्याबाधप्रत्यनीकम् ॥ ९५—९८ ॥

तैलमित्यादि। तैलशब्दोऽयं "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदा-हृतम्" इति परिभाषाविशेषेण सार्षपस्नेहादावपि प्रवर्त्तत इत्ययमत्र वक्तव्य-

व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसादनं मेधामार्दवमांसस्थैर्य्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्त-कषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशीतपित्त-जननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनञ्च। तच्च च्छिन्न-भिन्न-विद्धोत्पिष्ट-च्युत-मथित-क्षत-पिच्चित-भग्न-स्फुटित-क्षाराग्निदग्ध-विश्लिष्ट-दारिताभिहत-दुर्भग्न-मृग-व्याल-विदष्ट-प्रभृतिषु परिषेकाभ्यङ्गावगाहेषु च तिलतैलं प्रशस्यते।

तद्वस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे।
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ॥ ६९ ॥

---

मनन्तरं तेषामभ्युपादानात्। व्यवायि "व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते" इति वक्ष्यमाणलक्षणम्। सूक्ष्मं सूक्ष्मानुसारि, विकासि अपरिणतमेव सर्व्वशरीरानुप्रवेशेन धातुबन्धनविश्लेषीत्यर्थः। अनिलबलास-क्षयकरं वातक्षयकरं तदनुगतश्लेष्मक्षयकरञ्चेत्यर्थः। शीतपित्तोत्पत्तिप्रति-बन्धीत्यशीतपित्तजननम्, नञत्रास्य विरोधवाचित्वात्; एतदभ्यञ्जन-शीलानां शीतपित्तं न जायत इति निष्कर्षः। सामान्येनोक्तमर्थं पुनर्यथा-प्रधानं विभज्योपदिदिक्षति तच्चेत्यादिना। तत्र तैलसमूहमध्ये, तिलतैलं छिन्नादिषु प्रभृतिग्रहणाद्वातविकारेषु च, यथायोगं परिषेकादौ चकारात् शिरोवस्त्यादौ च प्रशस्यत इति सम्बन्धः। छिन्नन्त्वत्र द्विधाभूतं, भिन्नं विदारितं, विद्धं सूच्यादिभिः स्फुटितं, उत्पिष्टं चूर्णितं, च्युतं स्थानादपसृतं, मथितं विलोड़ितं, पिच्चितं पृथुतामागतं चिपिटीकृतमित्येतत्, स्फुटित-विश्लिष्ट-दुर्भग्नानि भग्नविशेषाः, तत्र दुश्चिकित्स्यं चूर्णितादि वक्ष्यमाणं भग्नं दुर्भग्नम्, भग्नग्रहणेनैषामुपलम्भेऽपि पृथगुपादानं प्रपञ्चार्थम्। अभिहतं लगुड़ादिभिराहतम्। परिशिष्टं निगदव्याख्यातम् ॥ ६९ ॥

एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्र-विशोधनमारोग्य-मेधा-कान्ति-स्मृति-बल-करं वात-कफ-हर-मधोभागदोषहरञ्च ॥ १०० ॥

निम्बातसी-कुसुम्भ-मूलक-जीमूतक-वृक्षक-कृतवेधनार्क-कम्पिल्लक-हस्तिकर्ण-पृथ्वीका-पीलु-करञ्जेङ्गुदी-शिग्रु-सर्षप-सुवर्चला-विडङ्ग-ज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्ण-वीर्य्याणि कटूनि कटुविपाकानि सराण्यनिल-कफ-कृमि-कुष्ठ-प्रमेह-शिरोरोगहराणि चेति ॥ १०१ ॥

वातघ्नं मधुरं तेषु क्षौमं तैलं बलावहम् ।
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम् ॥ १०२ ॥
कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ।
कफमेदोऽनिलहरं लेखनं कटु दीपनम् ॥ १०३ ॥
कृमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु ।
कुष्ठामयकृमिहरं दृष्टिशुक्रबलापहम् ॥ १०४ ॥
विपाके कटुकं तैलं कौसुम्भं सर्व्वदोषकृत् ।
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥ १०५ ॥

---

एरण्डेत्यादि। अधोभागदोषहरं विरेचनम्। निम्बेत्यादि। अतसी नामौषधिः "तिसी" इत्यभिधीयते, कुसुम्भश्च "कुसुम" इति। वृक्षकः कुटजः, पृथ्वीका कृष्णजीरकम्, सुवर्चला सूर्य्यावर्त्तः। वातघ्नमित्यादि।

किराततिक्तकाऽतिमुक्तक-विभीतक-नारिकेर-कोलाचोड़-जीवन्ती--पियाल--कर्व्वुदार--सूर्य्यवल्ली--त्रपुसैर्व्वारुक--कर्कारु-कुष्माण्डप्रभृतीनां तैलानि मधुराणि मधुरवीर्य्यविपाकानि वातपित्तप्रशमनानि शीतवीर्य्याण्यभिष्यन्दीनि सृष्टविण्मूत्राण्यग्निसादनानि चेति ॥ १०६ ॥

मधूककाश्मर्य्यपलाशतैलानि मधुरकषायाणि कफपित्त-प्रशमनानि ॥ १०७ ॥

तुवरक-भल्लातक-तैले उष्णे मधुरकषाये तिक्तानुरसे वात-कफ-कुष्ठ-मेदो-मेह-क्रिमिहरे उभयतोभागदोषहरे च ॥ १०८ ॥

सरल-देवदारु-गण्डीरी-शिंशपागुरुसारस्नेहास्तिक्त-कटु-कषाया दुष्टव्रणशोधनाः क्रिमिकफकुष्ठानिलहराश्च ॥ १०९ ॥

---

अतस्या इदं चौमम्। किरातेत्यादि। अतिमुक्तकस्य माधवीलतायाः फलमतिमुक्तकं "फले लुक्" इति तद्धितलुक्, आमलकमितिवत्; एवमेवान्यत्रापि यथायोगं व्याख्येयम्। जीवन्तीप्रभृतिषु "हरीतक्यादिभ्यश्च" इत्येव लुप् स्त्रीप्रत्ययश्रवणे विशेषात्। नारिकेरं नारिकेलफलम्, अचोड़ं पार्व्वतीयपीलुफलम् "आखरोड्" इत्याख्यायते। कर्व्वुदारं "काञ्चन" इति प्रसिद्धस्य फलम्, सूर्य्यवल्ली अर्कपुष्पीफलम्। तुवरकेत्यादि। तुवरको नामौषधिः "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः। वृचस्तुवरको नाम पश्चिमार्णवतीरजः" इत्याम्नायते, तस्य फलं तुवरकम्। सरलेत्यादि। गण्डीरी सेहुण्डः "सिज" इत्याभाष्यते, शिंशपा च "शिशु" इत्याख्यायते, सारशब्दस्तु सरलादिभिः सर्व्वैरेव सम्बध्यते ॥ १००—१०९ ॥

तुम्बी--कोशाम्र--दन्ती--द्रवन्ती--श्यामा-सप्तला-नीलिका-कम्पिल्लक-शङ्खिनीस्नेहास्तिक्त-कटु-कषाया अधोभागदोषहराः क्रिमिकफकुष्ठानिलहरा दुष्टव्रणविशोधनाश्च ॥ ११० ॥

यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च ॥ १११ ॥

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्द्धनम् ॥ ११२ ॥

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरञ्च ॥ ११३ ॥

फलोद्भवानि तैलानि यान्यनुक्तानि कानिचित् ।
गुणान् कर्म्म च विज्ञाय फलवत् तानि निर्द्दिशेत् ॥
यावन्तः स्थावराः स्नेहाः समासात् परिकीर्त्तिताः ।
सर्व्वे तैलगुणा ज्ञेयाः सर्व्वे चानिलनाशनाः ॥ ११४ ॥

---

तुम्बीत्यादि। तुम्ब्याः फलं तुम्बी तिक्तालाबुफलमिति यावत्, श्यामा वृद्धदारकफलम्, सप्तला सातलाफलं व्यवहारस्त्विह "कालादाना" इति प्रसिद्धेनैव। नीलिका नीलिनीफलम्। यवेत्यादि। यवतिक्ता "कालमेघ" इति प्रसिद्धस्य फलम्। एकैषिका कृष्णत्रिवृताफलम्। सहकारमाम्रफलम्। रसवदुत्कृष्टरसं, प्रशंसायां वतुप्। अनुक्तार्थसङ्ग्रहणायाह फलोद्भवानीत्यादि। यानि शाम्पाकादीनि। तैलाभावे व्याजेन तत्र तत्र तैलान्तराणामुपयोगमाख्यातुमिदमुच्यते यावन्त इत्यादि। तिलोद्भवस्य स्नेहस्य गुणा इव गुणा एषामिति तैलगुणाः, एतेनैवानिलनाशनत्वे लब्धेऽप्यनिलनाशना इति पृथगुपादानं प्रपञ्चार्थम्। उक्तमर्थं पुनर्व्विशिनष्टि

सर्व्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते ।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ ११५ ॥

ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः, प्रतुदविष्किराणां श्लेष्मघ्नाः ॥ ११६ ॥

तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥ ११७ ॥

इति तैलवर्गः ।

मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्य्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्त-श्लेष्म-मेद-हिक्का-श्वास-कासातिसारच्छर्द्दि-तृष्णा-क्रमि-विषप्रशमनं ह्लादि

---

सर्व्वेभ्य इत्यादि । तैलेभ्यः सार्षपस्नेहादिभ्यः । तिलानां स्नेहस्तिलतैलम् "विकारे स्नेहने तैलच्" इति तैलच् । ये तु पुनः "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्" इति परिभाषाविशेषमनादृत्य, कथं नु खलु तिलस्य विकारः स्नेह इति व्युत्पत्त्या तैलशब्दः सार्षपस्नेहादिषु प्रवर्त्तत इत्येवं प्रत्यवतिष्ठन्ते, तान् प्रत्याह निष्पत्तेरित्यादि । निष्पत्तेस्तैलकर्म्मसंसिद्धेः, तद्गुणत्वात् बाहुल्येन तैलगुणेनानुगतत्वात्, इतरेषु सार्षपस्नेहादिषु तैलत्वमुपदिश्यते "सिंहो माणवकः" इतिवत् । स्निग्धत्वसाम्यात् वसादयोऽभिधीयन्ते ग्राम्येत्यादिना । ग्राम्यजाङ्गलप्रतुदादय उपरिष्टान्निवेदयिष्यन्ते । अतिरोहितार्थमन्यत् ॥ ११०—११७ ॥

मध्वित्यादि । सुकुमारमतिकोमलम्, विषप्रशमनमिति विशेषाद्-

त्रिदोषप्रशमनञ्च । तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधुर्य्यात् कषायभावाच्च वातपित्तघ्नम् ॥ ११८ ॥

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ ११९ ॥
विशेषात्पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात् ।
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥ १२० ॥

---

वरटीविषे प्रत्येतव्यम् । पौत्तिकमित्यादि । पुत्तिका नाम "महत्यः पिङ्गला यास्तु मक्षिकाः पुत्तिकाः स्मृताः" इत्युक्तलक्षणा मक्षिकाः, तत्सम्भूतं मधु पौत्तिकमुच्यते । भ्रमरा बृहदाकारा मक्षिकाः, क्षुद्राकाराश्च क्षुद्रा उच्यन्ते, तदुद्भवे द्वे मधुनी भ्रामरक्षौद्रे अभिधीयेते । माक्षिकं नाम "महत्यः पिङ्गलास्तीक्ष्णविषास्तु मक्षिकाः स्मृताः" इत्युक्तलक्षणा या-मक्षिकास्तत्सम्भूतम्; छात्रन्तु "वरटाः पिङ्गलाः पीताः प्रायो हिमवतो वने । कुर्व्वन्ति च्छत्रकाकारं तज्जं छात्रं मधु स्मृतम्" इत्युक्त[illegible]णम्; आर्घ्यं पुनः "तीक्ष्णतुण्डास्तु याः पीतवर्णाः षट्पदसन्निभाः । [illegible]स्ता मक्षिका ज्ञेया आर्घ्यं तत्कृतमुच्यते" इत्युक्तलक्षणम्; औद्दालकं नाम "प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः । कुर्व्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु" इत्युक्तलक्षणं प्रायः श्रीहट्टदेशादौ दृश्यते; दालञ्च "इन्द्र-नीलदलाकाराः सूक्ष्मा या मक्षिकाः शुभाः । वृक्षकोटरमध्यस्थास्तज्जं दालमुदाहृतम्"इत्युक्तलक्षणम्, अत्र इन्द्रनीलदलाकारा इन्द्रनीलवर्णपक्षाः, इन्द्रनीलस्तु "क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां नयेत् । इन्द्रनील इति ख्यातः" इत्युक्तलक्षणो वर्णभेदः, पान्ना इत्यभिहितमरकतमणिवर्ण इति यावत् । अत्र कानिचित् वर्णतो विशिनष्ट्यात्रेयस्तद्यथा "माक्षिकं तैलवर्णं स्यात् घृतवर्णन्तु पौत्तिकम् । क्षौद्रं कपिलवर्णं स्यात् श्वेतं भ्रामर-मुच्यते" इति ॥ ११८।११९ ॥

विशेषादित्यादि । सविषान्वयात् सविषमक्षिकासम्बन्धित्वात्

पैच्छिल्यात् स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ॥ १२१ ॥
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥ १२२ ॥
तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ।
श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥ १२३ ॥
स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित् ।
श्वित्रमेहकृमिहरं विद्याच्छात्रं गुणोत्तरम् ॥ १२४ ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम् ।
कषायं कटु पाके च वल्यं तिक्तमवातकृत् ॥ १२५ ॥
औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम् ।
कषायमुष्णमम्लञ्च पित्तकृत्कटुपाकि च ॥ १२६ ॥
छर्द्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम् ॥ १२७ ॥
वृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥ १२८ ॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥ १२९ ॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ १३० ॥
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ।
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ १३१ ॥

---

अवातकृदित्यल्पवातकृदित्येवार्थः, कषायत्वात् कटुपाकित्वाच्चेत्यनुसन्धेयम् । कालपरिणामेन कषायानुरसं मधुरं पक्वमुच्यते, आमन्तु तद्विपरीतम् । अम्लमित्यम्लरसं, यत्तु ग्रहणकाले पक्वलक्षणान्वितं सत् कालान्तरेणाम्लता-मुपैति तदसम्यक् पक्वमित्यध्यवसितव्यम् । तदित्यादि । चकारोऽवधारणार्थः । तन्मधु नानाद्रव्यात्मकत्वात् तत्तद्व्याधिप्रत्यनीकनानाविधपुष्परस-

तत्तु नानाविधानां रसगुणवीर्य्यविपाकविरुद्धानां पुष्पाणां रससम्भवत्वात् सविषमक्षिकासम्भवत्वाच्चानुष्णोपचारम् ॥१३२॥

उष्णैर्विरुध्यते सर्व्वं विषान्वयतया मधु ।
उष्णार्त्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम् ॥ १३३ ॥
तत्सौकुमार्य्याच्च तथैव शैत्यान्नानौषधीनां रससम्भवाच्च ।
उष्णैर्विरुध्येत विशेषतश्च तथान्तरीक्षेण जलेन चापि ॥ १३४ ॥
उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ।
अपाकादनवस्थानान्न विरुध्येत पूर्व्ववत् ॥ १३५ ॥
मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते ।
विरुद्धोपक्रमत्वात् तत् सर्व्वं हन्ति यथा विषम् ॥ १३६ ॥
इति मधुवर्गः ।

---

सम्भूतत्वादेव विविधैस्तैस्तैर्व्याधिविपरीतैर्नानाविधैर्योगैर्युक्तं योगेनाहितबलं सत् बह्वनामयान् निहन्यादित्यतः परमत्वर्थं योगवाहि योगेन वहति विशिष्टानि तानि तानि कर्म्माणीत्यर्थः। तत्त्वित्यादि। नहि विरुद्धैरूष्णमुपयोगित इति निर्णीयते, पयसा सह, प्राक् पयसः पयसोऽन्ते वा मात्रावत्स्वपि पनसफलादिष्वभ्यवहृतेषु, तदसात्म्यानामुष्णेनातितरां दुःखागमदर्शनात्तदिदमुपपन्नं भवति रसगुणवीर्य्यविपाकविरुद्धानामिति। तुकारो विशेषणार्थः। न तावदेकान्तेनेदं विरुद्धानां पुष्पाणां रसादेव सम्भवतीति वक्तुं युक्तम्, एकजातीयानामपि पुष्पाणां रसेभ्यः सम्भवदर्शनादित्यतः पुनर्हेत्वन्तरमुपन्यस्यति सविषेत्यादिना ॥ १२०—१३२ ॥

प्राग्वदुक्तमर्थं द्रढयितुमधिकञ्च किञ्चिदभिधातुं श्लोकयति उष्णैरित्यादि। नानौषधीनां परस्परविरुद्धानां नानौषधिपुष्पाणामित्यर्थः। उक्तस्यापवादमाह उष्णेनेत्यादिना। आमं मध्विति मध्वामं राजदन्तादिषु

इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः क्रिमिकफकराश्चेति ॥ १३७ ॥

ते चानेकविधाः । तद्यथा—

पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः ।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् ।
इत्येता जातयः स्थौल्याद्गुणान् वक्ष्याम्यतः परम् ॥१३८॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः ।
अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा ॥
आभ्यां तुल्यगुणः किञ्चित् सक्षारो वंशको मतः ।
वंशवच्छतपोरस्तु किञ्चिदुष्णः स वातहा ॥
कान्तारतापसाविक्षू वंशकानुगुणौ मतौ ।
एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः ॥
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः ।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ।
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ॥ १३९ ॥

---

द्रष्टव्यम् । आमे उष्णमुपचर्य्येते मधुनि चोष्णं नोपशेत इत्युपक्रमविरुद्धत्वं प्रस्फुटमेवेत्यनुसन्धेयम् । परिशिष्टं निगदव्याख्यातम् ॥ १३३—१३६ ॥

इक्षव इत्यादि । पौण्ड्रकादयो यथाक्रमं "तुलाभुँड़ी, तन्नाभुँड़ी, खागड़ी, भुँड़ी, धली, मेँनासुखी, खाल्या, खेरी, नेपाली, बोम्बाइ, काँजला, नटा" इत्येतैर्द्वादशभिः प्राकृतैर्नामभिरभिधीयन्ते । स्थौल्यात्

अतीव मधुरो मूले मध्ये मधुर एव तु ।
अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः ॥ १४० ॥
अविदाही कफकरो वातपित्तनिवारणः ।
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीड़ितो रसः ॥ १४१ ॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः ॥ १४२ ॥
पक्वो गुरुः सरः स्निग्धः सतीक्ष्णः कफवातनुत् ॥ १४३ ॥
फाणितं गुरुमधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषहृच्च॥१४४॥
गुड़ः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकफकरो बल्यो वृष्यश्च ॥ १४५ ॥
पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ।
स पुराणोऽधिकगुणो गुड़ः पथ्यतमः स्मृतः ॥ १४६ ॥
मत्स्यण्डिका-खण्ड-शर्करा-विमलजाता उत्तरोत्तरं शीताः

---

प्राधान्यादित्येता जातय इत्यन्वयः। कोशकारः कोशज्ञात्। यान्त्रिके विशदयति वाग्भटः "मूलाग्रे जन्तुजग्धादिपीड़नान्मलसङ्करात्। किञ्चित्-कालं विधृत्या च विकृतिं याति यान्त्रिकः। विदाही गुरुविष्टम्भी तेनासौ" इति। पक्वस्त्रिपादावशिष्टः। फाणितमर्द्धावशिष्टतया तन्तुली-भूतम्। त्रिदोषहृदिति वातपित्तानुगतश्लेष्महरत्वेनेति प्रत्येतव्यम् "फाणितं गुर्व्वभिष्यन्दि बृंहणं कफशुक्रकृत्। वातपित्तश्रमान् हन्ति मूत्रबस्तिवि-शोधनम्" इति तन्त्रान्तरीयस्मरणात् ॥ १३७—१४६ ॥

मत्स्यण्डिकेत्यादि। पाकोत्तरकालं मलापहरणेन विशुद्धाद्गुड़ाज्जाता मत्स्यण्डीति बोध्यम्। "धौतस्त्वल्पमलो गुड़ः। ततो मत्स्यण्डिका खण्ड-शर्करा विमला परम्" इति चरकानुशासनात्। खण्डं "खाँड़" इति प्रसिद्धम्। उत्तरोत्तरमित्युभयत्रैव सम्बध्यते काकाक्षिगोलकन्यायात्;

स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रसादनास्तृष्णाप्रशमनाश्च ॥ १४७ ॥

यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ।
स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा ॥ १४८ ॥
यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः ।
तेन तेनैव निर्द्देश्यस्तेषां विस्रावणे गुणः ॥ १४९ ॥
सारस्थिता सुविमला निःक्षारा च यथा यथा ।
तथा तथा गुणवती विज्ञेया शर्करा बुधैः ॥ १५० ॥

मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा च्छेदनी प्रह्लादनी कषायमधुरा मधुरविपाका च ॥ १५१ ॥

यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥ १५२ ॥

यावत्यः शर्कराः प्रोक्ताः सर्व्वा दाहप्रणाशनाः ।
रक्तपित्तप्रशमनाश्छर्द्दिमूर्च्छातृषापहाः ॥ १५३ ॥
रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् ।
कफघ्नं मधुरं पाके कषायं वस्तिदूषणम् ॥ १५४ ॥

इतीक्षुवर्गः ।

---

तदयमर्थः, उत्तरोत्तरं विमलजाता विमलत्वेन सम्पन्ना उत्तरोत्तरं शीतादिगुणाश्चेति बुभुत्सितव्यम् । प्राग्वदुक्तमर्थं स्फोरयन्नधिकमपि किञ्चिदुपदिदिक्षति यथेत्यादिना । विस्रावणे विस्रुते रसे । सारस्थिता निर्हृत-

सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम् ।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ।
विकासि सृष्टविण्मूत्रं शृणु तस्य विशेषणम् ॥ १५५ ॥
मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा ।
रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥
मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु ।
लघुपाकि सरं शोषविषमज्वरनाशनम् ॥ १५६ ॥
मार्द्वीकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम् ।
तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ॥
कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ॥ १५७ ॥
कासार्शोग्रहणीदोषमूत्राघातानिलापहा ।
स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥ १५८ ॥

---

मलत्वेन सारमात्रेणावस्थिता, अतएव सुविमला निःचारा चेति । निःचारा चपस्कृतगुड़ानुगचारभावा । परिशिष्टं निगदव्याख्यातम् ॥ १४७—१५४ ॥

सर्व्वमित्यादि । भेदनं पित्तप्रकृतेर्व्विरेचनम्, अनन्तरोक्तं सृष्टविण्मूत्रत्वन्तु सामान्यम्, वस्तिविशोधनं सृष्टमूत्रत्वेन वस्तिसंशोधनम् । इन्द्रियबोधनमिन्द्रियप्रसादनम्, आम्नायते च "बुद्धिस्मृतिप्रीतिकरः सुखश्च" इति । विकासि अपरिपक्वावस्थायां धातुबन्धनशैथिल्यकारीत्यर्थः, वक्ष्यति हि "विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत्" इति । मृद्वीका द्राक्षा तत्कृतं मद्यं मार्द्वीकम्, मधुरान्वयतो मृद्वीकागतमधुररसानुवृत्तेः । सुरा

कासार्शोग्रहणीश्वासप्रतिश्यायविनाशनी ।
श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥ १५९ ॥
छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दिनी ।
प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ॥ १६० ॥
पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपनी ॥ १६१ ॥
विष्टम्भिनी सुरा गुर्व्वी श्लेष्मला तु मधूलिका ॥ १६२ ॥
रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता ॥ १६३ ॥
त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ॥ १६४ ॥
ग्राह्युष्णो जगलः पक्वा रूक्षस्तृट्कफशोफहृत् ।
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ॥ १६५ ॥
वक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ।
दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ॥ १६६ ॥
कषायो मधुरः सीधुर्गौड़ः पाचनदीपनः ॥ १६७ ॥
शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः ।
वातघ्नो मधुरः पाकी हृद्य इन्द्रियबोधनः ॥ १६८ ॥

---

"शालिपिष्टकपिष्टादिकृतं मद्यं सुरा स्मृता" इत्युक्तलक्षणा । श्वेता श्वेतवर्णा, सुरेत्यन्वयः । प्रसन्ना मद्यभेदः, सुराया उपरितनः स्वच्छो भाग इत्यन्ये । यवैः कृतेति शेषः, सुरेति समन्वयः । मधूकफलसम्भूता सुरा मधूलिका, अक्षं विभीतकफलं तत्सम्भूता सुरा आक्षिकी । त्रिदोषं करोतीति त्रिदोषः, णिचि पचाद्यच् । कोहलो मद्यभेदः, यवसक्तुकृतं मद्यमिति यावत् ॥ १५५—१६४ ॥

ग्राह्युष्ण इत्यादि । सकल्कत्वेन सान्द्रं मद्यं जगल इत्युच्यते, वक्कसस्तु

तद्वत्पक्वरसः सीधुर्बलवर्णकरः सरः ।
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः ॥ १६९ ॥
कर्शनः शीतरसिकः श्वयथूदरनाशनः ।
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः ॥ १७० ॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ।
कषायमधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः ॥ १७१ ॥
जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ॥ १७२ ॥
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ।
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥ १७३ ॥
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ।
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ॥ १७४ ॥
तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ।
कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ॥ १७५ ॥

---

सुराकल्पमात्रम् । कषाय इत्यादि । मद्यापरपर्य्यायोऽयं सीधुशब्दः । तद्वदित्यादि । पक्वरसः पक्वेक्षुरसकृतस्तद्विपरीतस्तु शीतरसिकः, तथाच "इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसः स्मृतः । आमैस्तैरेव यः सीधुः स शीतरसिको मतः" इति । तद्वद्गौड़ादिवत्; एतेनैव दीपनत्वादौ लब्धे पृथगुपादानं प्रपञ्चार्थम् । अक्षैर्विभीतकफलैः संसृष्ट आक्षिकः सीधुः पक्वरसः शीतरसिको वा । जम्बूफलकृतः सीधुर्जाम्बवः, बद्धं मूत्रं येनेति बद्धनिस्यन्दः, तुवरः कषायः; सुराकृत आसवः सुरासवः, स्थिरमदश्चिरं मदयतीत्यर्थः, शुद्धं वातमपि नाशयतीत्यनिलनाशनः । मधुकृत आसवो मध्वासवः, छेदी दोषसंशोधनः । तीक्ष्ण इत्यादि । मैरेयो नाम "आसवस्य

बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः ॥ १७६ ॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ।
रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः ॥ १७७ ॥
निर्द्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान् ॥ १७८ ॥
नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ।
अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च ॥ १७९ ॥
सुगन्धि दीपनं हृद्यं रोचिष्णु क्रिमिनाशनम् ।
स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥ १८० ॥
अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ।
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्तविरोधनः ।
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥ १८१ ॥
पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः ॥ १८२ ॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ॥ १८३ ॥

---

सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयान्मैरेयमुभयाश्रयम्” इत्युक्तलक्षणः । मधूको नामौषधिः “मौया” इति विज्ञायते, शीधुशब्दस्येह प्रकरणादासवे तात्पर्य्यम् ॥ १६५—१७८ ॥

नवमित्यादि । स्फुटस्रोतस्करं स्रोतोविकाशम् । अरिष्ट इत्यादि । द्रव्यसंयोगसंस्कारात् मद्यादिसंस्कारापेक्षया विशिष्टात् तत्तच्चित्रकादिद्रव्यसंयोगात्, तैस्तैर्घृतभाजनादिभिर्गुणान्तराधानरूपप्रतियत्नाच्च गुणैरधिक इति मद्यादित इत्येव । पिप्पल्यादिकृतः शर्करामधुसंयोगेन पिप्पल्यादिगण-

अरिष्टासवसीधूनां गुणान् कर्म्माणि चादिशेत् ।
बुद्ध्या यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥ १८४ ॥
सान्द्रं विदाहि दुर्गन्धं विरसं क्रमिलं गुरु ।
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत् ।
तद्वर्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत् ॥ १८५ ॥
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ।
कफप्रकोपि तन्मद्यं दुर्ज्जरञ्च विशेषतः ॥ १८६ ॥
पित्तप्रकोपि बहलं तीक्ष्णमुष्णं विदाहि च ॥ १८७ ॥
अहृद्यं फेनिलं पूति क्रमिलं विरसं गुरु ॥ १८८ ॥
तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम् ॥ १८९ ॥
सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम् ॥ १९० ॥

---

क्वाथक्ततः । सान्द्रमित्यादि । सान्द्रं घनं, विदाहि मधूकपुष्पकृतसीध्वा-दीत्यर्थः, क्रमिलं क्रमियुक्तम्, उष्णमुष्णोदकादिसम्बन्धेनोष्णस्पर्शम्, निन्दितं भाजनं दुर्भाजनम्, मद्यपात्रत्वेन वक्ष्यमाणेभ्यः काचस्फटिकमृन्मयपात्रेभ्यो-ऽन्यन्मलिनत्वादिदूषितञ्चेति तात्पर्य्यम् । तत्र स्थितं दुर्भाजनस्थितं, फेनिल-मिति तात्पर्य्यम्, प्रायस्तस्य तथात्वात् । अल्पौषधं मात्रातः संख्यात-श्चाल्पोपादानम्, पर्य्युषितमबद्धमुखे पात्रे व्युष्टं परित्यक्तं वा, "पर्य्युषितः * * * प्रत्यक्तवस्तुनि" इति मेदिनी । अत्यच्छं जलवदिति तात्पर्य्यम्, किञ्चिच्छेषं पात्राधःप्रदेशे मनागवस्थितम् । तत्रेत्यादि । तत्र सान्द्रादिषु मध्ये, यत् स्तोकसम्भारमल्पौषधम्, तरुणं पिच्छिलं गुरु गुरुत्ववच्च तद्वि-शेषतः कफप्रकोपि दुर्ज्जरञ्चेति समन्वयः । बहलं सान्द्रं, पूति दुर्गन्धं, पर्य्यु-षितञ्चेति चकारादिहानुक्तस्यात्यच्छस्य परिग्रहः क्रियत इति गुणतः सान्द्रा-

चिरस्थितं जातरसं दीपनं कफवातजित् ॥ १९१ ॥
रूच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥ १९२ ॥
तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः ।
सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना ॥
समेत्य हृदयं प्राप्य धमनीरूर्द्धमागतम् ।
विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात् ॥ १९३ ॥
चिरेण श्लैष्मिके पुंसि पानतो जायते मदः ।
अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु ॥ १९४ ॥

---

दीनि सर्व्वाण्यशेषतो व्याख्यातानि भवन्तीत्यनुसन्धेयम् । अत्र गुरुणोऽनिलकोपनत्वं द्रव्यशक्तेरचिन्त्यत्वान्नानुपपन्नम् । सर्व्वदोषैः सान्द्रत्वादिभिः सर्व्वैरित्यर्थः ॥ १७९—१९० ॥

चिरेत्यादि । मदश्च मत्तता मदश्च हर्ष इति मदौ "सरूपाणामेकशेषः" इत्येकशेषः, तावावहतीति मदावहम् "मदो रेतसि कस्तूर्यां गर्व्वे हर्षेभदानयोः" इति मेदिनी । सम्प्रत्येवं मिथो विसदृशानामपि मद्यानामविशेषात् पच्यमानावस्थायां मदजनकत्वं हेतुना समन्वीयोपदिदिक्षति तस्येत्यादिना । रसवीर्य्यतोऽनेकप्रकारस्य तस्य मद्यस्य वीर्य्यं मदशक्तिः वह्निना पाचकेन पित्तेन समेत्य "सर्व्वं वाक्यं सावधारणम्" इति न्यायात् सङ्गत्यैव, सौक्ष्म्यात् स्थूलसूक्ष्मस्रोतोऽनुसारित्वात् हृदयं हृदयगतं सिराधमनीस्रोतोजातं प्राप्य, औष्ण्यादाग्नेयत्वादूर्द्ध्वगतिस्वभावादिति यावत्, ऊर्द्धमित्यव्ययम्, ऊर्द्धगता इत्यर्थः, धमनीः शोणितवर्णनीये व्याहृता दश, आगतं प्राप्तं सत्, तैक्ष्ण्यादिन्द्रियचेतांसि विक्षोभ्य विचाल्य, विकासित्वादपरिणतावस्थायामेव तत्तत्कार्य्यकारित्वाच्च, अचिरात् पच्यमानावस्थायामेव मदयते मानवमिति शेषः । प्रायेण ह्यर्थोऽयं परमतो व्यक्तीभविष्यति पानात्ययप्रतिषेध इति नामधेयः ॥ १९१—१९४ ॥

सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः ।
गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥
राजसे दुःखशीलत्वमात्मत्यागं ससाहसम् ।
कलहं सानुबन्धन्तु करोति पुरुषे मदः ॥
अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः ।
असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः ॥ १९५ ॥
रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम् ।
वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥ १९६ ॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च ।
तद्वत् तदासुतं सर्व्वं रोचनञ्च विशेषतः ॥ १९७ ॥

---

सात्त्विक इत्यादि । दाक्षिण्यमनुकूलता सहायतेति यावत्, मण्डनं भूषा, शौचादिष्वतिशयेच्छा अस्येति शौचदाक्षिण्यहर्षमण्डनलालसः मद इति परेणान्वयः । सुष्ठु यशसे हितं सौभाग्यम् "भगं कीर्त्तिर्यशः" इति पर्य्यायाः, सुरतं रतिः स्त्रीपुंसयोरेव । साहसं नाम "मनुष्यमारणं स्तेयं परदाराभिमर्षणम् । पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्" इति स्मृत्युक्तम्, सहसा अविवेकेन कृतं कर्म्मसामान्यं वा, तेन सहेति ससाहसम्, आत्मत्यागमित्युद्बन्धनादिनैव बोध्यम्, सानुबन्धं मूलविवादानुयायिना विवादेनानुगतं कलहं विवादम् । मात्सर्य्यं परगुणद्वेषः । सन्धानसामान्यात् शुक्तान्यभिधीयन्ते रक्तेत्यादिना । शुक्तं नाम "यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इत्युक्तलक्षणम् । वैस्वर्य्यं स्वरभङ्गकरं तत्करोतीति णिचि अच् । तेन शुक्तेनासुतं कृताभिषवं तदासुतं, तद्वत् शुक्तवदित्यर्थः ॥ १९४—१९७ ॥

गौड़ानि रसशुक्तानि मधुशुक्तानि यानि च ।
यथापूर्व्वं गुरुतराख्यभिष्यन्दकराणि च ॥ १९८ ॥
तुषाम्बु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा ॥ १९९ ॥
धान्याम्लं धान्ययोनित्वाद्दीपनं दाहनाशनम् ।
स्पर्शात् पानात् तु पवनकफतृष्णाहरं लघु ॥
तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात् ।
मुखवैरस्य-दौर्गन्ध्य-मलशोष-क्लमापहम् ॥

---

गौड़ानीत्यादि । गौड़ानि गुड़प्रधानानि "गुड़ाम्बुना सतैलेन संहितं काञ्जिकन्तु यत् । कन्दशाकफलैर्युक्तं गुड़शुक्तं तदुच्यते" इत्याद्युक्तलक्षणानीति यावत् । रसशुक्तानि गुड़शुक्तवदिक्षुरसादिकृतानीत्युपदिशन्ति प्राञ्चः । मधुशुक्तानि तु "जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् । मधुभाण्डे विनिक्षिप्य धान्यराशौ विनिक्षिपेत् । मासेन तज्जातरसं मधुशुक्तमुदाहृतम्" इत्येवं बहुधामनन्त्यायुर्व्वेदविदः । प्रायः शुक्तसाम्यादिदानीं काञ्जिकविशेषानभिधत्ते तुषाम्ब्वित्यादिना । तुषाम्बु तुषोदकम् तच्च "तुषोदकं यवैरामैः सतुषैः शकलीकृतैः" इत्याद्युक्तलक्षणम्, आमैः पक्वैर्वा निस्तुषैस्तैर्गोधूमैर्वा कृतं सौवीरकमुच्यते "सौवीरकं यवैरामैः पक्वैर्वा निस्तुषैः कृतम् । गोधूमैरपि सौवीरमाचार्य्याः केचिदूचिरे" इत्यनुशासनात् । धान्याम्लन्तु "धान्याम्लं शालिचूर्णैश्च कोद्रवादिकृतञ्च यत्" इत्युक्तलक्षणम् । प्रायेण हि शाल्यादीनि धान्यानि लघुपाकीनि पित्तप्रशमनानि च भवन्तीति परमतो व्यक्तीभविष्यत्यन्नपानाध्याये, आम्नायते च "कारणगुणाः कार्य्येषु वर्त्तन्ते" इति, तदिदमुच्यते धान्ययोनित्वादिति । धान्यानि शाल्यादीनि योनिरस्येति धान्ययोनि तस्य भावस्तस्मात्, स्पर्शात् सिञ्चनादित्यर्थः, आयुर्व्वेदे इदमामनन्ति "स्नेहपीतस्य वान्तस्य विरिक्तस्य सुतार्दनः ।

दीपनं जरणं भेदि हितमास्थापनेषु च ।
समुद्रमाश्रितानाञ्च जनानां सात्म्यमुच्यते ॥ २०० ॥

इति मद्यवर्गः ।

गो-महिषाजावि-गज-हय-खरोष्ट्राणां मूत्राणि तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफ-वात-क्रिमि-मेदो-विष-गुल्मार्श-उदर-कुष्ठ-शोफारोचक-पाण्डुरोग-हराणि हृद्यानि दीपनानि च सामान्यतः ॥ २०१ ॥

भवन्ति चात्र ।

तत् सर्व्वं कटुतीक्ष्णोष्णं लवणानुरसं लघु ।
शोधनं कफवातघ्नं क्रिमिमेदोविषापहम् ॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् ।
पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम् ॥ २०२ ॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु ।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ २०३ ॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ।

---

निरूढ़स्य च कायाग्निर्म्मन्दो भवति देहिनः" इति, अनेन तु विरिक्तस्य निरूढ़स्य च कायाग्निर्व्वर्द्धत एवेति व्याजेनावेदयितुमिदमुच्यते दीपनमित्यादि । भेदि विरेचकमप्येतत्, दीपनमग्निवर्द्धनं, जरणं दोषपाचनमतः आस्थापनेष्वपि हितमित्यर्थः ॥ १९८—२०० ॥

आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ २०४ ॥
कासश्वासापहं शोषकामलापाण्डुरोगनुत् ।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २०५ ॥
कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् ।
सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २०६ ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥ २०७ ॥
दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् ।
आश्वं कफहरं मूत्रं क्रिमिदद्रुषु शस्यते ॥ २०८ ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ।
दीपनं गार्द्दभं मूत्रं क्रिमिवातकफापहम् ॥ २०९ ॥
शोफ-कुष्ठोदरोन्माद-मारुत-क्रिमिनाशनम् ।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥ २१० ॥
द्रवद्रव्याणि सर्व्वाणि समासात् कीर्त्तितानि तु ।
कालदेशविभागज्ञो नृपतेर्दातुमर्हति ॥ २११ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रवद्रव्यविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ।

---

गोमहिषेत्यादि । कारभमौष्ट्रं, मानुषन्तु विषापहमिति तु प्रासङ्गिकम् । परिशिष्टं निगदव्याख्यातम् ॥ २०१—२११ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये सूत्रस्थाने द्रवद्रव्यविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ।

# षट्चत्वारिंशोऽध्यायः।



अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः॥ १॥

धन्वन्तरिमभिवाद्य सुश्रुत उवाच प्रागभिहितं प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च। स षट्सु रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयिणः द्रव्य-रस-गुण-वीर्य्य-विपाकनिमित्ते च क्षयवृद्धी दोषधातूनां साम्यञ्च। ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्-

---

पूर्व्वाध्याये तत्तद्भेषजविशेषोपयोगित्वं दर्शयितुं गुणत उपदिष्टान्यपि हि द्रवद्रव्याणि प्रायेणाहारोपयोगीनि भवन्तीत्याहारद्रव्यत्वसाम्यादिदानीं जिज्ञासितत्वेनोपस्थितानामन्नपानानां विधिमधिकरोति अथात इत्यादिना। अन्नपाने विशिष्टे इत्यनयोर्द्वयोरेव ग्रहणे कृते चतुर्णामप्यशिता-दीनां ग्रहणं भवति, प्रधानस्य ग्रहणेनाप्रधानस्यापि ग्रहणात्, किञ्चान्नेन भक्ष्यस्य खद्यस्य अन्नसाधर्म्यात्, पेयेन लेह्यस्य द्रवसाधर्म्यादित्यतोऽशितादीनां चतुर्णामुपदेष्टव्यत्वे सत्यपीह द्वयोरेव ग्रहणं कृतमित्यनुसन्धेयम्। एवमेव स्वयमपि निवेदयिष्यते तन्त्रयुक्त्यध्याये। अन्नपानयोर्व्विधिर्द्रव्यरसादि-प्रकारोपदेशोऽनेनेत्यन्नपानविधिः। "विधिः प्रकारः" इति हेमचन्द्रः॥ १॥

किं पुनरत्र जिज्ञासाकारणम्? आयुर्व्वेदे हि चतुर्णां पादानामेव कर्म्माभिनिर्वृत्तौ हेतुत्वमामनन्ति न त्वाहारस्य, तथाच "वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः। एते पादाश्चिकित्सायाः कर्म्मसाधनहेतवः" इति; ये त्वेवं प्रत्यवतिष्ठन्ते तान् पुनरेकान्तेनापास्यन्नामूलं शिष्यानुमतजिज्ञासा-प्रयोजनप्रकारमुत्थापयति धन्वन्तरिमित्यादिना। साम्यञ्च इत्यन्तेनोक्तमर्थं पुनर्द्रढयन्नाह ब्रह्मादेरिति। ब्रह्मणः प्रथमो लोको ब्रह्मादिर्लोकः, जनो लोक इति निष्कर्षः "षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुन-र्म्मारका यत्र ब्रह्मलोको हि स स्मृतः" इत्युपक्रम्य "जनस्तपस्तथा सत्य-

पत्तिविनाशहेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रिय-प्रसादश्च, तथाहारवैषम्यादस्वास्थ्यम् ॥ २ ॥

तस्याशित-पीत-लीढ़-खादितस्य नानाद्रव्यात्मकस्यानेक-विधविकल्पस्यानेकविधप्रभावस्य पृथक् पृथक् द्रव्य-रस-गुण-वीर्य्य-विपाक-प्रभाव-कर्म्माणीच्छामि ज्ञातुं, न ह्यनवबुद्धस्व-भावा भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्थाः॥ ३ ॥

आहारमूलाश्च सर्व्वप्राणिनो यस्मात् तस्मादन्नपानविधि-मुपदिशतु मे भगवानित्युक्तः प्रोवाच भगवान् धन्वन्तरिः, अथ खलु वत्स सुश्रुत यथाप्रश्नमुच्यमानमुपधारयस्व ॥ ४ ॥

---

मिति चाकृतकं त्रयम्" इति विष्णुपुराणीयस्मरणात्। पञ्चगुणेन द्वादश-कोट्युच्छ्रायेण, अपुनर्म्मारकाः पुनर्मृत्युशून्याः, अकृतकं प्रतिकल्पमकार्य्य-मिति तदर्थः। एवं सर्व्वलोकोत्तमस्यापि जनलोकस्याहारः स्थित्यादि-हेतुराहारादेव देहाभिवृद्ध्यादयः प्रवर्त्तन्ते किं पुनरस्य लोकस्येत्ययमभि-सन्धिः। नेह "भुवनज्ञानं सूर्य्ये संयमात्" इति पातञ्जलसूत्रे "प्रथमे ब्रह्मणो जनलोके चतुर्व्विधो देवनिकायः" इत्यारभ्य "सर्व्वे ते ध्यानाहाराः" इति भाष्योक्तं विप्रतिषिद्धं भवति, स्तुतयो ह्येता आहारस्य, यथा "वन-स्पतयः सत्रमासते" इत्याद्याः श्रुतयः सत्रस्य तद्वदित्यवधेयम् ॥ २ ॥

तस्येत्यादि। अशितं चर्व्वणपुरःसरमभ्यवहृतमोदनादिं, पीतं चर्व्व-णादिना तालुवेगेनाभ्यवहृतमुदकादि, लीढ़ं जिह्वयाकृष्यास्वाद्य चाभ्यवहृतं मध्वादि, खादितमत्र चूर्णं स्वन्यायेनेति निश्चीयते पारिशेष्यात्। न च खादतेश्चूषणार्थोऽनुपपन्नः "स्तन्यं खादति बालकः" इत्यादिप्रयोगदर्शनात् ॥ ३।४ ॥

तत्र लोहितक-शालि-कलम-कर्द्दमक-पाण्डुक-सुगन्धक-शकुनाहृत-पुष्पाण्डक-पुण्डरीक-महाशालि-शीतभीरुक-रोध्र-पुष्पक-दीर्घशूक-काञ्चनक-महिषमस्तक-हायनक-दूषक-महा-दूषक-प्रभृतयः शालयः ॥ ५ ॥

मधुरा वीर्य्यतः शीता लघुपाका बलावहाः ।
पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः ॥ ६ ॥
तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः ।
चक्षुष्यो वर्णबलकृत् स्वर्य्यो हृद्यः श्रमापहः ॥
व्रण्यो ज्वरहरश्चैव सर्व्वदोषविषापहः ।
तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः ॥ ७ ॥

षष्टिक-काङ्गुक-मुकुन्दक-पीतक-प्रमोदक-काकलकासन-पुष्पक-महाषष्टिक-चूर्णक-कुरवक-केदारक-प्रभृतयः षष्टिकाः॥८॥

रसे पाके च मधुराः शमना वातपित्तयोः ।
शालीनाञ्च गुणैस्तुल्या बृंहणाः कफशुक्रलाः ॥ ९ ॥
षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः ।
मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्य्यकृद्बलवर्द्धनः ॥

---

प्रकृतमनुसरति तत्रेत्यादिना । नानादेशप्रसिद्धा ह्येते शाल्यादयो धान्यविशेषा नासर्व्वज्ञेन केनचिदेकेनाकृत्यादिविशेषतः प्रतिपादयितुं शक्यन्ते, शक्यन्ते च तत्तद्देशीयैस्तदलं पल्लवितेनेति वयमिहोदास्महे । मधुरा इत्यादि । स्निग्धत्वे सत्यप्यल्पानिलकफत्वाद्बद्धमल्पं पुरीषमेभिरिति बद्धाल्पवर्च्चसः । पश्यति हि "बहुवातश्लेष्मा क्रूरः स दुर्व्विरेच्यः" इति ।

विपाके मधुरो ग्राही तुल्यो लोहितशालिभिः ।
शेषास्त्वल्पान्तरगुणाः षष्टिकाः क्रमशो गुणैः ॥ १० ॥

कृष्णव्रीहि-शालामुख-जतुमुख-नन्दीमुख-लावाचक-त्वरितक-कुक्कुटाण्डक-पारावतक-पाटल-प्रभृतयो व्रीहयः ॥ ११ ॥

कषायमधुराः पाके मधुरा वीर्य्यतोऽहिमाः ।
अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्च्चसः ॥
कृष्णव्रीहिर्वरस्तेषां काषायानुरसो लघुः ।
तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥ १२ ॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
काषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥ १३ ॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ।
किञ्चित् सतिक्तमधुराः पवनानलवर्द्धनाः ॥ १४ ॥
कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः ।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ १५ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥ १६ ॥

---

तस्माल्लोहितकात् क्रमशोऽल्पान्तरगुणा गुणतोऽल्पतारतम्याः शालयः शाल्याद्याः क्रमशोऽवरा इति समन्वयः काकाक्षिगोलकन्यायात् । षष्टिकेत्यादि । क्रमशो गुणैरवरा इति प्रकरणादूह्यम् ॥ ५—१० ॥

कृष्णेत्यादि । दग्धायामिति पलालाग्निनैव । कैदाराः सजलभूमिभागप्रभवाः । एकत्रोत्पाद्य सकृदेव ये अन्यत्र रोप्यन्ते ते रोप्याः, ये पुन-

शालयश्छिन्नरूढ़ा ये रुक्षास्ते बद्धवर्च्चसः ।
तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफावहाः ॥ १७ ॥
विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ।
तद्वत् कुधान्यमुद्गादिमाषादीनाञ्च वक्ष्यते ॥ १८ ॥
इति शालिवर्गः ।

कोरदूषक-श्यामाक-नीवार-शान्तनु-वरकोद्दालक-प्रियङ्गु-मधूलिका-नान्दीमुखी-कुरुविन्द-गवेधुक-वरुक-तोदपर्णी-मुकुन्दक-वेणुयव-प्रभृतयः कुधान्यविशेषाः ॥ १९ ॥

उष्णाः कषायमधुरा रुक्षाः कटुविपाकिनः ।
श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः ॥ २० ॥
कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः ।
कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः ॥ २१ ॥

---

र्द्विस्त्रिर्वा स्थानात् स्थानान्तरं रोप्यन्ते ते अतिरोप्याः । पूर्वं छिन्नाः पश्चाद्रूढ़ाश्छिन्नरूढ़ाः । उपसंहरति विस्तरेणेति । शाल्यादिर्व्वर्गः शालिवर्गः शाकपार्थिवादिषु द्रष्टव्यः, शालिषष्टिकव्रीहिवर्ग इत्यर्थः । कस्मिंश्चिद्दोषे हितः कस्मिंश्चिच्चाहित इति हिताहितः, विशेषणमिदमातुराभिप्रायेणोक्तमिति स्वस्थानामेकान्तहितत्वेनैषां प्रागुपदेशो नानुपपन्नः, दृश्यते ह्येकोऽप्यनेकशब्दप्रत्ययभाग्भवति कार्य्यान्तराणि कुर्व्वन्निति ॥ ११—१८ ॥

कोरदूषकेत्यादि । कोरदूषकः कोद्रवः, श्यामाकः "श्यामा" इत्यभिधीयते, नीवारो जलजस्थलजभेदाद्द्विविधः "उरी" इत्याख्यायते । प्रियङ्गुः "काँउन्" इति प्रसिद्धः, गवेधुकः "गमा" इति वारेन्द्राः, वेणुयवो वंशबीजम्, परिशिष्टानि देशान्तरेभ्यो जिज्ञासितव्यानि । बद्धनिष्यन्दा बद्ध-

कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ।
यथोत्तरं प्रधानाः स्युरूक्षाः कफहराः स्मृताः ॥ २२ ॥
मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा ।
विशोषी तत्र भूयिष्ठं वरूकः समुकुन्दकः ॥ २३ ॥
रूक्षा वेणुयवा ज्ञेया वीर्य्योष्णाः कटुपाकिनः ।
बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ २४ ॥

मुद्ग-वनमुद्ग--कलाय--मुकुष्ठ-मसूर-मङ्गल्य-चणक-सतीन-त्रिपुटक-हरेण्वाढ़की-प्रभृतयो वैदलाः ॥ २५ ॥

कषायमधुराः शीताः कटुपाका मरुत्कराः ।
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ २६ ॥
नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ।
प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥ २७ ॥
विपाके मधुराः प्रोक्ता मसूरा बद्धवर्च्चसः ।
मुकुष्ठकाः क्रिमिकराः कलायाः प्रचुरानिलाः ॥ २८ ॥
आढ़की कफपित्तघ्नी नातिवातप्रकोपणी ॥ २९ ॥
वातलाः शीतमधुराः सकषाया विरूक्षणाः ।
कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥ ३० ॥

---

सूत्राः । मुद्गेत्यादि । कलायः "मटर" इत्याख्यायते, मुकुष्ठो वनमुद्गभेदः, मङ्गल्यः क्षुद्रमसूरः, सतीनः क्षुद्रकलायः, त्रिपुटकः "खेशारी" इत्यभिधीयते, हरेणुः क्षुद्रतमः कलायः, आढ़की "अड़हर" इत्याख्यायते । प्रभृतिग्रहणान्माषादीनामादेशः । कषायेत्यादि । हरिता हरिद्वर्णाः,

हरेणवः सतीनाश्च विज्ञेया बद्धवर्चसः ॥ ३१ ॥

इति मुद्गमसूराभ्यामन्ये त्वाधानकारकाः ॥ ३२ ॥

माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः ।
सन्तर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥
कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्त्ता ।
स्वादुर्विपाके मधुरोऽलसान्द्रः सन्तर्पणः स्तन्यरुचिप्रदश्च ॥ ३३ ॥
माषैः समानं फलमात्मगुप्तमुक्तञ्च काकाण्डफलं तथैव ॥ ३४ ॥
आरण्यमाषा गुणतः प्रदिष्टा रुक्षाः कषाया अविदाहिनश्च ॥३५॥
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ।
शुक्राश्मरीगुल्मनिसूदनश्च संग्राहकः पीनसकासहारी ॥ ३६ ॥
आनाहमेदोगुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ।
कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ ३७ ॥
ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः ।
तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः ।
दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽथ केश्योऽनिलहा गुरुश्च॥३८
तिलेषु सर्व्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये ॥३९॥

---

वन्या वनभवा वनमुद्गा इति यावत् । अत्र मङ्गल्यत्रिपुटकयोः पृथगनुपदेशात् यथाक्रमं मसूरे सतीने चान्तर्भावो मन्तव्य इत्याहुः ॥ १८—३२ ॥

माष इत्यादि । अलसान्द्रो राजमाषः "बरवटी" इति परिचीयते, आत्मगुप्तायाः शूकशिम्ब्याः फलमात्मगुप्तम्, काकाण्डायाः कोलशिम्ब्याः फलं काकाण्डफलम् "संज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः । कोलशिम्बी

यवः कषायो मधुरो हिमश्च कटुर्विपाकी कफपित्तहारी ।
व्रणेषु पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्च्चाः ॥
स्थैर्य्याग्निमेधास्वरवर्णकृच्च स पिच्छिलः स्थूलविलेखनश्च ।
मेदोमरुत्तृड्हरणोऽतिरुक्षः प्रसादनः शोणितपित्तयोश्च ॥ ४० ॥
एभिर्गुणैर्हीनतरांस्तु किञ्चिद्विद्यादयवेभ्योऽतियवान्विशेषैः ॥४१॥
गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च ।
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता सन्धानकृत्श्लेष्मकरः सरश्च॥४२॥
रुक्षः कषायो विष-शोफ-शुक्र-बलास-दृष्टिक्षयकृद्विदाही ।
कटुर्विपाकी मधुरस्तु शिम्बः प्रभिन्नविण्मारुतपित्तलश्च ॥ ४३ ॥
सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः ।
यथोदितास्ते गुणतः प्रधाना ज्ञेया कटूष्णा रसपाकयोश्च ॥ ४४ ॥
सहाह्वयं मूलकजाश्च शिम्बाः कुशिम्बिवल्लीप्रभवास्तु शिम्बाः ।
ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिवर्हणाश्च ॥ ४५ ॥
विदाहवन्तश्च भृशञ्च रुक्षा विष्टभ्य जीर्य्यन्त्यनिलप्रदाश्च ।
रुचिप्रदाश्चैव सुदुर्ज्जराश्च सर्व्वे स्मृता वैदलिकास्तु शिम्बाः ॥४६॥

---

तु कोलास्थिबीजा कृष्णशिम्बीत्यवधेयम् । यव इत्यादि । स्थूलविलेखनः स्थूलकर्षणः । निःशूका यवा अतियवा उच्यन्ते, विशेषैर्विशिष्टैः, एभिः कषायादिभिः ॥ ३९—४१ ॥

गोधूम इत्यादि । ते सिताद्या यथोदिता यथाक्रमं प्रधाना इत्यर्थः । सहाह्वयं मुद्गमाषपर्ण्यौ, प्रकरणादनयोः शिम्बा इत्यूह्यम् । कुशिम्बिवल्लीप्रभवा आत्मगुप्तालताप्रभवाः, पूर्व्वं हि पक्वमात्मगुप्ताफलमुपदिष्टमिदानीन्त्वामत्वेन शिम्बसंज्ञकं पुनरुपदिश्यत इति न पौनरुक्त्यम् । विदाहवन्तो-

कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः ॥४७॥
उष्णातसी स्वादुरसानिलघ्नी पित्तोल्वणा स्यात्कटुका विपाके॥४८
पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी ।
तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि ॥ ४९ ॥

अनार्त्तवं व्याधिहतमपर्य्यागतमेव च ।
अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥ ५० ॥
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
विदाहि गुरु विष्टम्भि विरूढ़ं दृष्टिदूषणम् ॥ ५१ ॥
शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः ।
कालप्रमाणसंस्कारमात्राः सम्परिकीर्त्तिताः ॥ ५२ ॥

इति कुधान्यवर्गः ।

---

ऽम्लपाकिनः । विष्टस्य जीर्य्यन्ति सवेदनं गुड़ुगुड़ाशब्दं कृत्वा पाकं गच्छन्तीत्यर्थः । वैदलिकाः मुद्गादिसम्बन्धिनः । कुसुम्भशब्देनेह तात्पर्य्यात् "कुसुम" इति समाख्यातस्य वीजमभिप्रेयते । अतसीनामौषधिः "मसिना" इत्याख्यायते । मासान्तेनोक्तमर्थं पुनर्व्विशिनष्टि अनार्त्तवमित्यादिना । अनार्त्तवं न यथाखर्त्तुजम्, व्याधिहतमना हृष्ट्यादिभिराबाधमार्गेन सम्यक्परिपुष्टम्, अपर्य्यागतमसम्यक्परिणतम्, अभूमिजमशस्तभूमिप्रदेशसम्भूतम्, ऊषरादिभूमिसम्भूतमित्येतत् । धान्यशब्देनेह मुद्गाद्यन्तानां सर्व्वेषामेव परिग्रहः क्रियते "शाल्यादेः सर्षपान्तस्य" इत्यनन्तरोक्तेः । विरूढ़मङ्कुरितम्,दृष्टिदूषणमचक्षुष्यम् । स्यादेतदिदानीन्त्विदमेव तावज्जिज्ञास्यं किन्तु कल्केषाकृतवोऽवयवप्रमाणान्युपयोगार्थाः संस्कारा मात्रा वा येष्वविज्ञातेषु नैव गुणवन्तीति वक्तुं नापि च यथावदुपयोक्तुं प्रभविष्याम एवं विवक्षूनपाकरोति शाल्यादेरित्यादिना । भागशः सम्परिकीर्त्तिता विख्याता लोकेष्विति

अत ऊर्द्धं मांसवर्गानुपदेक्ष्यामः । तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गाः । तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः । ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति । तत्र जाङ्गलवर्गोऽष्टविधः । तद्यथा—जङ्घाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा विलेशया ग्राम्याश्चेति । तेषां जङ्घालविष्किरौ प्रधानतमौ, एण-हरिणर्क्ष-कुरङ्ग-कराल-कृतमाल--शरभ--श्वदंष्ट्रा--पृषत--चारुष्कर--मृग-मातृका-प्रभृतयो जङ्घाला मृगाः कषाया मधुरा लघवो वात-पित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥ ५३ ॥

---

शेषः । न च कीर्त्तितशब्दस्यार्थोऽयमनुपपन्नः "भुवनेषु कीर्त्तितः" इत्यादौ तदर्थे प्रयोगदर्शनात् ॥ ४२—५२ ॥

अत इत्यादि । जलेशया मत्स्यादयः, आनूपा जलप्रायदेशवासिनो महिषादयः, ग्राम्या ग्रामवासिनश्छागादयः, क्रव्यभुज आममांसभोजिनो व्याघ्रादयः, एकशफाः खरादयः पञ्च, तथाच श्रीमद्भागवतम् "खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा, एते चैकशफाः" इति । जाङ्गला हरिणादयः, मांसार्थो वर्गः मांसवर्गः । शास्त्रे व्यवहारार्थं संज्ञान्तरेण पुनर्द्वेधा विभजते त इत्यादिना । जङ्घा वेगवत्यः सन्त्येषामिति जङ्घालाः, विकीर्य भक्षयन्तीति विष्किराः, प्रतुद्य भक्षयन्तीति प्रतुदाः, गुहायां शेरत इति गुहाशयाः, प्रसह्य भक्षयन्तीति प्रसहाः, पर्णे मृगयन्त इति पर्णमृगाः, विले गर्त्ते शेरत इति विलेशयाः, ग्रामे भवा ग्राम्याः । ऋक्षो हरिणभेदः, करालः कस्तुरीमृगः, कृतमालः सङ्घालचारी मृगभेदः, शरभो नाम "अष्टपादूर्द्धनयन ऊर्द्धपादचतुष्टयः" इत्युक्तलक्षणो मृगभेदः, श्वदंष्ट्रा चतुर्दन्तो मृगभेदः, पृषतः शुभ्रविन्दुचित्रितो मृगभेदः, चारुष्करः सुरुचिरः क्षुद्रमृगविशेषः, मृगमातृका पृथूदरी गवाकृतिर्ह्रस्वाकारो हरिणभेदः, एण-

कषायो मधुरो हृद्यः पित्तास्रक्कफरोगहा ।
संग्राही रोचको बल्यस्तेषामैणो ज्वरापहः ॥ ५४ ॥
मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः ।
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ५५ ॥
एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ।
न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते ॥ ५६ ॥
शीतासृक्पित्तशमनी विज्ञेया मृगमातृका ।
सन्निपात-क्षय-श्वास-कास-हिक्काऽरुचिप्रणुत् ॥ ५७ ॥

लाव-तित्तिरि-कपिञ्जल-वर्त्तीर-वर्त्तिका-वर्त्तक-नप्तृका-वार्तीक-चकोर-कलविङ्क-मयूर-क्रकरोपचक्र-कुक्कुट-सारङ्ग-शतपत्रक-कुतित्तिरि-कुरवाहुक-यवलक-प्रभृतयस्त्र्याहला विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च ॥ ५८ ॥

---

हरिणकुरङ्गास्त्वनन्तरं निवेदयिष्यन्ते स्वयमेव । प्रभृतिग्रहणात् करभादीनामादेशः ; अतिरोहितार्थमन्यत् ॥ ५३—५७ ॥

लावेत्यादि । लावो नाम पक्षी "लाउयाभाँटा" इत्याभाष्यते, तित्तिरिश्च "तितोर" इति ; कपिञ्जलो गौरतित्तिरिभेदः, वर्त्तीरो नाम "घर्घरा" इत्याख्यायते, वर्त्तिकावर्त्तकावाकारतारतम्येन "वारइ" इति "भारइ" इति च शब्दितौ द्वौ पक्षिणौ, नप्तृका "घुँघु" इति परिचीयते, वार्तीको वर्त्तिचटकः सङ्घातचारी चटकभेदः, चकोरः प्रसिद्धः, कलविङ्कः कालचटकः, क्रकरः "कयार" इत्यभिधीयते, उपचक्रश्चक्रवाकः, सारङ्गश्चातकः, शतपत्रको दार्व्वाघाटः काष्ठकुट्टक इति यावत्, कुतित्तिरिर्गौरतित्तिरिः, कुरवाहुकः कुररकः, यवलकः यवगुड्कः, प्रभृतिग्रहणात् सजातीयानामादेशः । त्रिभिर्नखैराहलन्ति विलिखन्ति भूमिमिति त्र्याहलाः ॥ ५८ ॥

संग्राही दीपनश्चैव कषायमधुरो लघुः ।
लावः कटुविपाकश्च सन्निपाते च पूजितः ॥ ५९ ॥
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः ।
तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः ॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ।
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ।
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ॥ ६० ॥
वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः ।
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥ ६१ ॥
कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः ।
मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ॥ ६२ ॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ।
वृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः ।
वातरोगक्षयवमीविषमज्वरनाशनः ॥ ६३ ॥

कपोत-पारावत-भृङ्गराज-परभृत-कोयष्टिक-कुलिङ्ग-गृह-कुलिङ्ग-गोक्षोरक-डिडिमानक-शतपत्रक-मातृनिन्दक-भेदाशि-

---

कपोतेत्यादि । कपोतपारावतौ "पांयरा" इत्याख्यायेते, तौ च रक्ताऽरक्तलोचनतो भिद्येते । भृङ्गराजो भ्रमरकः, परभृतः कोकिलः, कोयष्टिकः "टिटिपक्षी" इति विज्ञायते, कुलिङ्गो वन्यचटकः, ग्राम्यस्तु गृहकुलिङ्गः, गोक्षीरकः सारसः, डिडिमानक उत्कटडिण्डिमरवः पक्षिभेदः, शतपत्रको राजशुकः, मातृनिन्दकः पुत्तरघ्नकः, भेदाशी भेकाशीति

शुक-सारिकावल्गुली-गिरिशा-लट्वा-लट्टूषक-सुगृही-खञ्जरीटका-हारीत-दात्यूह-प्रभृतयः प्रतुदाः ॥ ६४ ॥

कषायमधुरा रूक्षाः फलाहारा मरुत्कराः ।
पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्च्चसः ॥ ६५ ॥
सर्व्वदोषकरस्तेषां भेदाशी मलदूषकः ॥ ६६ ॥
कषायस्वादुलवणो गुरुः काणकपोतकः ॥ ६७ ॥
रक्तपित्तप्रशमनः कषायविशदोऽपि च ।
विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥ ६८ ॥
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः ।
रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ ६९ ॥

सिंह-व्याघ्र-वृक-तरक्ष्वृक्ष-द्वीपि-मार्ज्जार-शृगाल-मृगेर्व्वारुक-प्रभृतयो गुहाशयाः ॥ ७० ॥

मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः ।
उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७१ ॥

---

पर्य्यायौ, शुकसारिके प्रसिद्धे, अवल्गुलीप्रभृतयस्तयो जिज्ञासितव्याः, सुगृही नाम "मयना" इत्याख्यायते, खञ्जरीटः खञ्जनः, हारीतो हरिद्रावर्णः पक्षिभेदः, दात्यूहस्तु "डाहुक" इत्यभिधीयते, प्रभृतिग्रहणात् गोपापुच्छादीनामादेशः । कषायेत्यादि । काणकपोतः कपोत इत्यनर्थान्तरम् ॥५९-६९॥

सिंहेत्यादि । वृकः कुक्कुराकारो व्याघ्रविशेषः, तरक्षुर्मृगादनः क्षुद्रव्याघ्रः, ऋक्षो भल्लुकः, द्वीपी चित्रव्याघ्रः, मार्ज्जारोऽयमारण्यविड़ालः, मृगेर्व्वारुको हरिणादो व्याघ्रभेदः, प्रभृतिशब्देन बभ्रुप्रभृतीनां परिग्रहः क्रियते, "बभ्रुजम्बुकमार्ज्जारा इत्याद्याः स्युर्गुहाशयाः" इत्युक्तेः, बभ्रुर्नकुल-

काक-कङ्क-कुरर-चाष-भास-शशघात्युलूक-चिल्लि-श्येन-गृध्र-प्रभृतयः प्रसहाः ॥ ७२ ॥

एते सिंहादिभिः सर्व्वे समाना वायसादयः ।
रसवीर्य्यविपाकेषु विशेषाच्छोषिणे हिताः ॥ ७३ ॥

मद्गु-मूषिक-वृक्षशायिका-वकुश-पूतिघास-वानरप्रभृतयः पर्णमृगाः ॥ ७४ ॥

मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः ।
सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ॥ ७५ ॥

श्वाविच्छल्यक-गोधा-शश-वृषदंश-लोपाक-लोमशकर्ण-कदलीमृग-प्रियकाजगर-सर्प-मूषिक-नकुल-महावभ्रुप्रभृतयो विलेशयाः ॥ ७६ ॥

---

भेदः । मधुरा इत्यादि । गुह्यप्रदेशे शिश्नादौ जाता विकारा गुह्यविकारा उपदंशादय इति यावत् । काकेत्यादि । कङ्को नाम पक्षी "हाड़गिला" इत्याभाष्यते, कुररस्तु "कुरुया" इति । चाषः स्वर्णचातकः, भासः प्रसिद्धः, शशघाती नाम "पाजी" इत्याख्यायते, उलूकः पेचकः, चिल्लिस्तु "चिल" इति । श्येनो नाम "वाज" इति प्रसिद्धः, गृध्रस्तु शकुनः, प्रभृतिग्रहणात् धूम्याटादीनामादेशः, धूम्याटो नाम "फिङ्गा" इत्याभाष्यते ॥ ७०—७३ ॥
मद्गुरित्यादि । मद्गुर्जलचरः सर्पभेदः, वृक्षशायिका "काठविड़ाली" इत्याख्यायते, वकुशो गोलाङ्गुलः, वानरत्वेऽप्यस्य पृथगुपादानं प्रपञ्चार्थम्, पूतिघासः "खाटास"इति प्रसिद्धः, प्रभृतिग्रहणात् छकलासादीनामादेशः । श्वाविदित्यादि । श्वाविच्छल्यकौ लोमाकारभेदेन द्वौ "शेजारु" इति प्रसिद्धौ, गोधा च "गोसाप" इति ; वृषदंशलोपाकौ मार्ज्जारशृगालभेदौ,

वर्च्चोमूत्रं संहतं कुर्य्युरेते वीर्य्ये चोष्णाः पूर्व्ववत् स्वादुपाकाः ।
वातं हन्युः श्लेष्मपित्ते च कुर्य्युः स्निग्धाः कासश्वासकार्श्यापहाश्च॥७७

कषायमधुरस्तेषां शशः पित्तकफापहः ।
नातिशीतलवीर्य्यत्वाद्वातसाधारणो मतः ॥ ७८ ॥
गोधा विपाके मधुरा कषायकटुका स्मृता ।
वातपित्तप्रशमनी वृंहणी बलवर्द्धनी ॥ ७९ ॥

---

लोमशकर्णो हृहद्विड़ालसमो व्याघ्राकारः पशुभेदः, कदलीमृगप्रियकाव-जिनयोनिसंज्ञौ मृगविशेषौ, अजगरो ग्रसनशीलो महासर्पः, सर्पास्तु दर्व्वीकरादयः, महावभ्रुर्वृहन्नकुलः, प्रभृतिग्रहणेन भेकादीनामववोधः क्रियते । वर्च्च इत्यादि । पूर्व्ववत् पर्णमृगवत्, सामान्यतो मधुरादिगुणा इति निष्कर्षः । कषायेत्यादि । कषायरसप्रधानो मधुरः कषायमधुरः, शाकपार्थिवादिः, तथाच कफपित्तापह इत्युपपन्नं भवति, कषायो हि रसः पित्तं कफञ्चोपहन्तीति । स्यादेतत् कथन्नु खलु शशगतः प्रवलः कषायो रसोऽणोर्मधुरस्य गुरुत्वं स्निग्धत्वञ्चावजित्य वातं नाप्याययत्याहोस्वित् कुतो वा मधुरस्य स्निग्धत्वं गुरुत्वञ्च सम्भूय कषायगतशैत्यावजयेन तं पुनर्नोपशमयतीत्याशङ्क्याह नातीत्यादि । नातिशीतलवीर्य्यत्वात् कषायरसस्येति शेषः । चरकोऽप्याह "तिक्तात् कषायो मधुरः शीताच्छीततरः परः" इति । तिक्तात् शीतात् कषायः शीततरो नातिशीतलः, परः शीततमो मधुर इति तदर्थः । इदमत्राऽवधेयम्, यदि हि कषायो रसोऽतिशीतलोऽभविष्यत्तर्हि "स्वादुर्गुरुत्वादधिकः" तथा "स्निग्धानां मधुरः परः" इत्याद्यागमे सत्यपीह मधुररसस्याणुत्वेन मनाक् परिहीने तद्गतगुरुत्वस्निग्धत्वे अवजित्य वाताप्यायनमकरिष्यत् ; अथ चेद्गुरुत्वं स्निग्धत्वञ्च तथा परिहीनं नाभविष्यत्तर्हि कषायशैत्यं न्यक्कृत्य नियमेन वातावजयमकरिष्यदित्युपपन्नं भवति वातसाधारण इति । तुल्यबलानि हि तानि नैव सुन्दोपसुन्दवत् परस्परं ध्वंसन्ते सहजसात्म्यत्वात् । वातसाधारणः वाताभिवृद्धौ वातोपशमे च

शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ॥ ८० ॥

प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः ॥ ८१ ॥

दुर्नामानिलदोषघ्नाः कृमिदूषीविषापहाः ।
चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्द्धनाः ॥ ८२ ॥

दर्व्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ।
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ८३ ॥

अश्वाश्वतर-गो-खरोष्ट्र-वस्तोरभ्र-मेदःपुच्छकप्रभृतयो ग्राम्याः ॥८४॥

ग्राम्या वातहराः सर्व्वे बृंहणाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः ॥ ८५ ॥

नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ।
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ ८६ ॥

बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥ ८७ ॥

मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ८८ ॥

श्वासकासप्रतिश्यायविषमज्वरनाशनम् ।
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ ८९ ॥

---

समानः । प्रियक इत्यादि । दूषीविषं स्थावरविषविज्ञानीये वक्ष्यमाणम् । व्युत्क्रमस्त्वत्र सुहृणीयत्वविशेषाल्लक्षणीयः ॥ ७४—८३ ॥

अश्वेत्यादि । अश्वायां गर्द्दभेनोत्पन्नोऽश्वविशेषोऽश्वतरः, खरो गर्द्दभः, वस्तश्छागः, उरभ्रो मेषः, मेदो बाहुल्येन पुच्छे अस्येति मेदःपुच्छकः "दुम्बा" इत्याख्यायते । प्रभृतिग्रहणात् गृहविड़ालादीनामवबोधः क्रियते । पीनसो नासारोगभेदः । श्वासेत्यादिना गव्यमित्यस्य सम्बन्धश्चरकसंवादा-

औरभ्रवत् सलवणं मांसमेकशफोद्भवम् ॥ ९० ॥

अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥ ९१ ॥

दूरे जनान्तनिलया दूरे पानीयगोचराः ।

ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ॥ ९२ ॥

अतीवासन्ननिलयाः समीपोदकगोचराः ।

ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥ ९३ ॥

आनूपवर्गस्तु पञ्चविधः । तद्यथा—कूलचराः प्लवाः कोषस्थाः पादिनो मत्स्याश्चेति । तत्र गज-गवय-महिष-रुरु-

---

दुर्ज्ञेयः, पवित्रं प्रायेण निर्दोषं यज्ञोपयोगि वा । एकशफोद्भवमित्येकशफ-शब्देनेह खराऽश्वाऽश्वतरा एवाभिप्रेयन्ते प्रकृतत्वात् । प्रागुद्दिष्टमष्टविधं जाङ्गलवर्गमुपसंहरति अल्पेत्यादिना । तं पुनर्जाङ्गलवर्गं विशिनष्टि दूरे इत्यादिना । विप्रकृष्टे देशे जनपरिपूर्णत्वेन मनोहराणि भवनानि येभ्यस्ते दूरे जनान्तनिलयाः, अन्तो मनोहर इति पर्य्यायौ, अलुक् छान्दसः । जन-समीपवर्त्तिनो हि मृगपक्षिणस्तदुच्छिष्टैरभिष्यन्दिभिराहारैर्गुरुत्वात्त्वे-नाभिष्यन्दिनो भवन्तीति वचनमिदं नानुपपन्नमित्यनुसन्धेयम् । एवमेव दूरे पानीयगोचरा इत्यपि व्याख्येयम्, पानीयगोचरः पानीयविषयो जला-शय इति यावत् । अतीवासन्ननिलया इति ग्रामादित इत्येव ॥ ८४—९३ ॥ — आनूपेत्यादि । तुकारेण जाङ्गलवर्गं निरस्यति । अनुगता आपो यस्मिन्निति अनूपो जलप्रायो देशस्तत्र भवा आनूपाः । कूले नद्यादितटे चर-न्तीति कूलचराः, प्लवन्ते पानीये तरन्तीति प्लवाः, कोषः सम्पुटस्तत्र तिष्ठन्तीति कोषस्थाः शङ्खादयः, पादिनः पादवन्तः कच्छपादयः, मत्स्याः प्रसिद्धाः । तान् पुनर्भागशो विवृणोति तत्रेत्यादिना । गवयो नाम गोसदृशो गलकम्बलविहीनः पशुभेदः, रुरुः "विकटबहुविषाणः शम्बराकारदेहः, सलिलतटचरत्वात् सम्बरेभ्यो विशिष्टः । त्यजति शरदि शृङ्गं रौत्यतोऽसौ

चमर-सृमर-रोहित-वराह-खड्गि-गोकर्ण-कालपुच्छकोद्र-न्यङ्कु-रण्यगवयप्रभृतयः कूलचराः पशवः ॥ ९४ ॥

वातपित्तहरा वृष्या मधुरा रसपाकयोः ।
शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः ॥ ९५ ॥
विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः ।
स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः ॥ ९६ ॥
गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ।
विपाके मधुरञ्चापि व्यवायस्य तु वर्द्धनम् ॥ ९७ ॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ।
निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांसदार्ढ्यकृत् ॥ ९८ ॥
रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् ॥ ९९ ॥
तथा चमरमांसन्तु स्निग्धं मधुरकासजित् ।
विपाके मधुरञ्चापि वातपित्तप्रणाशनम् ॥ १०० ॥

---

रुरुः स्यात्, पृथुलमृगविशेषः प्रायशश्चेदिदेशे" इत्युक्तलक्षणो मृगभेदः; चमरो महिषाकृतिर्मृगभेदः, सृमरो महाश्वाकारचमरवान् मृगभेदः, रोहितो लोहितवर्णो मृगविशेषः, खड्गी "गण्डार" इति प्रसिद्धः, गोकर्णो मृगविशेषः, कालपुच्छकः "रूपेणैसमः कालपुच्छो मुनिभिरीरितः" इत्युक्तलक्षणो मृगभेदः, उद्रो जलविडालः "उद्" इति प्रसिद्धः, न्यङ्कुर्बहुशृङ्गो मृगभेदः, अरण्यगवयो गवयभेदः । प्रभृतिशब्देन शम्बरादीनामादेशः । परिशिष्टं निगदव्याख्यातम् ॥ ९४—१०० ॥

सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् ॥ १०१ ॥
स्वेदनं वृंहणं वृष्यं शीतलं तर्पणं गुरु ।
स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम् ॥ १०२ ॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥ १०३ ॥
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ।
विपाके मधुरञ्चापि रक्तपित्तविनाशनम् ॥ १०४ ॥

हंस-सारस-क्रौञ्च-चक्रवाक-कुरर-कादम्ब-कारण्डव-जीवञ्जीवक-बलाका-पुण्डरीक-प्लव-शरारीमुख-नन्दीमुख-मद्गू-त्क्रोश-काचाक्ष-मल्लिकाक्ष-शुक्लाक्ष-पुष्करशायिका-कोनालकाम्बुकुक्कुटिका-मेघराव-श्वेतचरणप्रभृतयः प्लवाः सङ्घातचारिणः ॥१०५॥

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ।
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥ १०६ ॥

---

सृमरस्येत्यादि । पित्र्यं श्राद्धहितम् । हंसेत्यादि । क्रौञ्चो नाम पक्षी "कोँचवक्' इत्याख्यायते, कुररस्तु "कुरुया" इति, कादम्बो राजहंसः, कारण्डवो हंसभेदः, जीवञ्जीवकश्चकोरः, बलाका क्षुद्रबकः, पुण्डरीको पुण्डरीकनयनो हंसभेदः, प्लवः कारण्डवभेदः, शरारीमुखोऽत्र सरलभेदः, नन्दीमुखः पत्राटी श्राटीभेदः, मद्गुर्जलकाकः "पानिकाउर" इत्यभिधीयते, उत्क्रोशः कुररभेदः, काचाक्षो हृहकः, मल्लिकाक्षः कृष्णवर्णो लोहितचञ्चुचरणो हंसभेदः, शुक्लाक्षपुष्करशायिके तद्भेदौ, कोनालको नाम "नाड़ीयाल" इत्याख्यायते, अम्बुकुक्कुटिका जलकुक्कुटी, मेघरावश्चातकः, श्वेतचरणो बकभेदः । प्रभृतिग्रहणात् जलचिल्लीप्रभृतीनामादेशः ॥ १०१—१०६ ॥

गुरुष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
वृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः ॥ १०७ ॥

शङ्ख-शङ्खनख-शुक्ति-शम्बूक-भल्लूकप्रभृतयः कोशस्थाः ॥ १०८ ॥

कूर्म्म--कुम्भीर--कर्कटक--कृष्णकर्कटक--शिशुमारप्रभृतयः पादिनः ॥ १०९ ॥

शङ्खकूर्म्मादयः स्वादुरसपाका मरुन्नुदः ।
शीताः स्निग्धा हिताः पित्ते वर्च्चस्याः श्लेष्मवर्द्धनाः ॥ ११० ॥
कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ।
शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥ १११ ॥

मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च । तत्र रोहित-पाठीन--पाटला--राजीव--वर्म्मि--गोमत्स्य-कृष्णमत्स्य-वागुञ्जार-मुरल-सहस्रदंष्ट्रप्रभृतयो नादेयाः ॥ ११२ ॥

---

शङ्खेत्यादि । शङ्खनखः क्षुद्रशङ्खः, शुक्तिर्नाम "झिनुक" इत्याख्यायते, शम्बूकस्तु "शामुक" इति, भल्लूको वराटः, प्रभृतिग्रहणात् क्षुद्रशम्बूकादीनामादेशः । कूर्म्मेत्यादि । कर्कटको नाम "काँकड़ा" इत्यभिधीयते, शिशुमारस्तु "शिशुँ" इति । प्रभृतिग्रहणात् कच्छपादीनामादेशः । वर्च्चस्या हृद्याः "कूर्म्मो वातहरो हृद्यः" इत्यादि तन्त्रान्तरञ्च । मत्स्या इत्यादि । नादेयशब्देनेह समुद्रेतरजाः सर्व्व एवाभिप्रेयन्त इति निर्णीयते, अनन्तरं सरस्तड़ागादिसम्भूतानामप्युपदेशात् । पाठीनो नाम "बोयाल" इति, पाटला "मका" इति, राजीवः "चितल" इति, वर्म्मी "वाइम्" इति, गोमत्स्यः "वाघ आइड़" इति, कृष्णमत्स्यः "शिङ्गी," वागुञ्जारः "मागुर" इति, मुरलश्च "मौरल" इत्याख्यायते, सहस्रदंष्ट्रो महापाठीनः, प्रभृति-

नादेया मधुरा मत्स्या गुरवो मारुतापहाः ।
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्च्चसः ॥ ११३ ॥
कषायानुरसस्तेषां शष्पशैवालभोजनः ।
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ११४ ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ।
दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ ॥ ११५ ॥
मुरलो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ११६ ॥
सरस्तडागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः ॥ ११७ ॥
महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ॥ ११८ ॥

तिमि-तिमिङ्गिल-कुलिश-पाकमत्स्य-निरालक-नन्दिवारलक-मकर-गर्गरक-चन्द्रक-महामीन-राजीवप्रभृतयः सामुद्राः ॥११९॥

सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णा वातहरा वृष्या वर्च्चस्याः श्लेष्मवर्द्धनाः ॥ १२० ॥

---

ग्रहणात् शफरादीनामादेशः । नादेया इत्यादि । अल्पं वर्चः पुरीषमेषां इत्यल्पवर्चसः । पाठीन इत्यादि । अत्र निद्रालुरिति विशेषणेनैतन्मांसशीलानां व्याजेन तथात्वमाविष्कृतं भवत्यनमयत्वाच्छरीरमनसोरित्यनुसन्धेयम् । एतेनैवानन्तरोक्तं बलिनोऽबलाश्चेत्यपि व्याख्यातप्रायम् । पिशिताशनो मांसाशित्वेन पुष्टिकर इति तात्पर्य्यम् । परिशिष्टं निगदव्याख्यातम् ॥ १०७—११८ ॥

तिमीत्यादि । कुलिशः काष्टाष्ठीलस्य पर्य्यायो, नन्दिवारलकः समुद्रशिम्बाकः, मकरो हिंस्रदंष्ट्रकः, गर्गरो नाम मत्स्यो "गागर" इत्याख्यायते, चन्द्रकस्तु "चाँदा" इति, शेषास्तु प्रायेण स्वनामप्रसिद्धाः । किञ्चित्

बलावहा विशेषेण मांसाशित्वात् समुद्रजाः ॥ १२१ ॥

तेभ्यश्चाप्यनिलघ्नत्वाच्चौलूकीप्यौ गुणोत्तरौ ॥ १२२ ॥

स्निग्धत्वात् स्वादुपाकत्वात् ताभ्यां वाप्या गुणोत्तराः ॥१२३॥

नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः।

सरस्तडागजानान्तु विशेषेण शिरो लघु ॥ १२४ ॥

अदूरगोचरा यस्मात् तस्मादुत्सोदपानजाः।

किञ्चिन्मुक्ता शिरोदेशमत्यर्थं गुरवस्तु ते ॥ १२५ ॥

अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः।

उरोविचरणात् तेषां पूर्व्वमङ्गं लघु स्मृतम् ॥ १२६ ॥

इत्यानूपो महाभिष्यन्दिमांसवर्गो व्याख्यातः ॥ १२७ ॥

तत्र शुष्क-पूति-व्याधित-विष-सर्प-व्याधिहत-दिग्धविद्ध-

---

पुनर्व्विभज्योपदिदिक्षति तेभ्य इत्यादिना। तेभ्यः समुद्रजेभ्यः, अपिः समुच्चयार्थत्वात् नादेयेभ्यश्चेत्यर्थः। ताभ्यां चौलूकीप्याभ्याम्, उभयत्र "पञ्चमी विभक्ते" इत्यपेक्षार्थे पञ्चमी। उक्तमर्थं पुनर्धर्म्मान्तरेण विशिनष्टि नादेया इत्यादिना। पुच्छास्यचारिण इति विशेषणीत्यवधेयमतो मध्ये गुरव इत्युपपन्नं भवति व्यायामाल्पत्वेन तद्देशगतस्य श्लेष्मणोऽनपचयात्। अदूरगोचरा अदूरविषयाः स्वल्पदेशप्रचारा इति यावत्। उत्सः प्रस्रवणम्, उदपानं क्षुद्रजलाशयः, तत्र जाता उत्सोदपानजाः। किञ्चित् शिरोदेशं शिरसोऽग्रभागमित्येतत् ॥ ११९—१२७ ॥

पुनर्व्विशिनष्टि तत्रेत्यादिना। तत्र जाङ्गलानूपेषु मध्ये शुष्को मारणानन्तरमातपादिभिर्नीरसीकृतः, पूतिः क्लिन्नतया दुर्गन्धः, विषहतः पानभोजनादावुपयुक्तेन कालकूटादिनोपहतः, सर्पहतश्च दर्व्वीकरादिदंशोपहतः, दिग्धविद्धो विषाक्तवाणविद्धः, पदमिदं सामान्येनोक्तमपि सुहृत्त्वात् पर-

जीर्ण-कृश-बालानामसात्म्यचारिणाञ्च मांस्यान्यभक्ष्याणि यस्मा-द्विगत--व्यापन्नापहृत--परिणताल्पासम्पूर्ण-वीर्य्यत्वाद्दोषकराणि भवन्ति ॥ १२८ ॥

अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम् ।
विषव्याधिहतं मृत्युं वालं छर्द्दिञ्च कोपयेत् ॥ १२९ ॥
कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् ।
क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥
एभ्योऽन्येषामुपादेयं मांसमिति ॥ १३० ॥

स्त्रियश्चतुष्पादेषु, पुमांसो विहङ्गेषु, महाशरीरेष्वल्पशरीराः, अल्पशरीरेषु महाशरीराः प्रधानतमाः, एवमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः ॥ १३१ ॥

---

मित्येवेति विशेषणीयम्, शास्त्रस्यास्य प्रतिषेधार्थत्वात्, वक्ष्यति हि जङ्गम-विषविज्ञानीये "मुहूर्त्तात् तदुपादेयं प्रहारदंशवर्जितम्" इति । जीर्णो वृद्धः, असात्म्यचारिणामनुचितदेशप्रचारिणाम्, अस्वास्थ्यजननाहारशीलानामिति तात्पर्य्यम् । सात्म्यार्थो ह्युपशयार्थः, अत्र विषहतत्वेनैव सर्पहतस्याप्युपलब्धो-ऽपि पृथगुपादानं प्रपञ्चार्थम् । कुतस्तु खल्वभक्ष्याणीत्याह यस्मादिति । इत्येता विगतवीर्य्यत्वादयो भावा विसृश्य शुष्कादिषु यथायोगं लक्ष-णीयाः । उक्तमर्थं स्फोरयन्दोषं दर्शयति अरोचकमित्यादिना । अरो-चकमिति तत् करोतीति णिचि नेयमरोचकजननमित्यर्थः । एतेनैव प्रतिश्यायं त्रिदोषमित्यपि व्याख्यातप्रायम् । नियमेन हि सर्पहता दिग्ध-विद्धाश्च विषदुष्टा भवन्ति असात्म्यचारिणश्च व्याधिता इत्येतेषां विषहते व्याधिदूषिते चान्तर्भावान्न पृथगुपादानमित्यनुसन्धेयम् । मृत्युं छर्द्दिञ्चेति तदारम्भके दोषे तात्पर्य्यम् । क्लिन्नं पूति ॥ १२८—१३० ॥

स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तराः गुरुतरास्तथा सक्थि-स्कन्ध--क्रोड़--शिरः--पाद-कर-कटी-पृष्ठ--चर्म्म--कालेयका-यकृद्दन्त्राणि ॥ १३२ ॥

शिरः स्कन्धं कटी पृष्ठं सक्थिनी चात्तपक्षयोः ।
गुरुपूर्व्वं विजानीयाद्धातवस्तु यथोत्तरम् ॥ १३३ ॥
सर्व्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः ।
पूर्व्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥ १३४ ॥
उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ।
पक्षोत्क्षेपात् समो दिष्टो मध्यभागस्तु पक्षिणाम् ॥ १३५ ॥
अतीव रूक्षं मांसन्तु विहङ्गानां फलाशिनाम् ।
वृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥ १३६ ॥

---

स्त्रिय इत्यादि । महाशरीरेषु गजगवयादिषु मध्ये अल्पशरीराः क्षुद्रशरीराः गजगवयादयः ; अल्पशरीरेषु नकुलमूषिकादिषु मध्ये महाशरीरा अतितरां परिपुष्टशरीरा इत्यर्थः । एकजातीयानामेकप्रकाराणाम् "प्रकारवचने जातीयर्" इति जातीयर्, एकवर्गपरिपठितानामिति निष्कर्षः । स्थानेत्यादि । तथा उत्तरोत्तराणि सक्थ्यादीनि गुरुतराणीत्यर्थः । यकृदपरपर्य्यायेणेह कालेयकशब्देन सन्निहितत्वाद्वुक्कमेवोपदिशन्त्याचार्य्याः । अत्रानुक्तान्यपि गुद-वृषण-मेढ्रान्यूह्यानीत्याहुः "मांसाद्गरीयो वृषणौ मेढ्र-वुक्क-यकृद्गुदम्" इति तन्त्रान्तरीयस्मरणात् । पक्षिणः प्रति पुनर्व्विशिनष्टि शिर इत्यादिना । आत्तपक्षयोर्गृहीतपक्षयोः स्त्री-पुंसभेदेन द्विविधयोः पक्षिणोरित्यर्थः । गुरूणि च गुर्व्वी चेति गुरु "नपुंसकमनपुंसकेन" इति क्लीवशेषः एकवच्च । पूर्व्वमिति गमकत्वाद्यथा-

सत्त्वाग्निनां पित्तकरं वातघ्नं धान्यचारिणाम् ॥ १३७ ॥

जलजानूपजा ग्राम्याः क्रव्यादैकशफास्तथा ।
प्रसहा बिलवासाश्च ये च जङ्गालसंज्ञिताः ॥
प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ।
अल्पाभिष्यन्दिनश्चैव यथापूर्व्वमतोऽन्यथा ॥ १३८ ॥

प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च । सर्व्वप्राणिनां सर्व्वशरीरेषु ये प्रधानतमा भवन्ति यक्कत्प्रदेशवर्त्तिनस्तानाददीत । प्रधानलाभाभावे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति ॥ १३९ ॥

भवति चात्र ।

वयःशरीरावयवाः स्वभावो धातवः क्रियाः ।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्षिताः ॥१४०॥

इति मांसवर्गः ।

---

पूर्व्वमित्यर्थः । धातवो रक्तादयो यथोत्तरं गुरव इति लिङ्गवचनविपर्य्यासेनान्वयः । प्रमाणेत्यादि । प्रमाणाधिका अयथोपचितशरीराः । यक्कत्प्रदेशवर्त्तिनो यक्कद्देशवर्त्तिनः सिरास्नाय्वादयो भावा इत्यर्थः । अत्र यक्कत्प्रदेशवर्त्तिसमुदायो हि यक्कदित्यनन्यभावेऽपि यक्कत्प्रदेशवर्त्तिन इति यक्कद्गतं पित्तकोषं प्रत्याख्यातुमित्यामनन्ति भिषजो बुद्धिमन्तः । न तावदेकान्तेन यक्कतो गुरुत्वेनोपदेशादिहोक्तं प्रधानतमत्वमनुपपन्नं गुरुणोऽपि गवां क्षीरस्यैकान्तहितत्वेन प्रधानतमत्वस्मरणात् । प्रधानलाभाभावे यक्कदभावे, मध्यमवयस्कं तरुणसम्बन्धीयम्, अक्लिष्टं कुथितत्वादिदोषविरहितम्, परिशिष्टं निगदव्याख्यातम् ॥ १३१—१३९ ॥

प्राग्वदुक्तमर्थमुपसंहरति वय इत्यादिना । परीक्षिता गुणदोषविवे-

अत ऊर्द्ध्वं फलवर्गानुपदेक्ष्यामः। तद्‌यथा—दाड़िमामलक-बदर-कोल-कर्कन्धु-सौवीर-शिम्बितिकाफल-कपित्थ-मातुलुङ्गाम्राम्रातक-करमर्द्द-पियाल-लकुच-भव्य-पारावत-वेत्रफल-प्राचीनामलक-तिन्तिड़ीक-नीप-कोशाम्राम्लीका-नारङ्ग-जम्बीर-प्रभृतीनि ॥ १४१ ॥

अम्लानि रसतः पाके गुरूष्णानि वीर्य्यतः।
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥ १४२ ॥

---

केन निरूपिताः, पदमिदं यथायोगं लिङ्गवचनव्यत्यासेनान्वेयम्। वयस्तत्र "कासश्वासकरं हृद्यम्" इत्यादिना परीचितम्; शरीराणि "स्त्रियश्चतुष्पाटेषु" इत्यादिना, अवयवाः "शिरः स्कन्धम्" इत्यादिना, स्वभावः "कषाया मधुरा लघवः" इत्यादिना, धातवः "रक्तादिषु शुक्रान्तेषु" इत्यादिना, क्रिया "वातपित्तहराः" इत्यादिना, लिङ्गं जङ्घालत्यादिना, प्रमाणं शरीरपरिमाणम् तच्च "महाशरीरेष्वल्पशरीराः" इत्यादिना, संस्कारो नामातपादिसम्बन्धेन सतो गुणान्तराधानमुच्यते, स च "गुरु शुष्कं प्रकीर्त्तितम्" इत्यादिना, मात्रा तु पुनः परिमाणमुच्यते, सा च "जाङ्गलवर्गोऽष्टविधः" इत्यादिनेत्यनुसन्धेयम् ॥ १४० ॥

अत इत्यादि। कोल-बदर-कर्कन्धु-सौवीर-शिम्बितिका नाम तारतम्येन पञ्च बदरविशेषाः। मातुलुङ्गाम्रातककरमर्द्दाश्च त्रयो वृक्षविशेषा यथाक्रमं "गोड़ालेबु-आमड़ा-काटाकरमजा" इत्येतैः प्राकृतैर्नामभिरभिधीयन्ते, लकुचभव्यपारावतवेत्राश्च चत्वारः "डौहा-कामराङ्गा-गाव-वेत" इत्येतैश्चतुर्भिः। केचिदत्र भव्यशब्देन "चाल्ता" इति समाख्यातमपि ग्राहयन्ति। प्राचीनामलकं पानीयामलकम्, नीपं कदम्बम्, कोशाम्रं "कोशाम्" इति प्रसिद्धं बहुकीटमाम्रफलमित्येतत्। अम्लीका तिन्तिड़ीभेदः, नारङ्गं नाम "वाताषि जामिर" इति परिचीयते। प्रभृतिग्रहणात्,

कषायानुरसं तेषां दाड़िमं नातिपित्तलम् ।
दीपनीयं रुचिकरं हृद्यं वर्च्चोविबन्धनम् ॥
द्विविधं तत्तु विज्ञेयं मधुरञ्चाम्लमेव च ।
त्रिदोषघ्नञ्च मधुरमम्लं वातकफापहम् ॥ १४३ ॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ।
चक्षुष्यं सर्व्वदोषघ्नं वृष्यमामलकीफलम् ॥
हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः ।
कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकञ्च तत् ॥ १४४ ॥
कर्कन्धुकोलबदरमामं पित्तकफावहम् ।
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ।
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ॥ १४५ ॥
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥ १४६ ॥
कषायं स्वादु संग्राहि शीतं शिम्बितिकाफलम् ॥ १४७ ॥
आमं कपित्थमस्वर्य्यं कफघ्नं ग्राहि वातलम् ।
कफानिलहरं पक्वं मधुराम्लरसं गुरु ॥ १४८ ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ।
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ॥
त्वक्तिक्ता दुर्ज्जरा तस्य वातक्रिमिकफापहा ।
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ॥

ऐरावत-दन्तशठयोरादेशः । ऐरावतन्त्वत्र नारङ्गभेदः, दन्तशठन्तु प्रचुराम्लं जम्बीरफलम् । अम्लानीत्यादि । सर्व्वमेतदतिरोहितार्थम् ॥ १४१—१४८ ॥

मेध्यं शूलानिलच्छर्द्दिकफारोचकनाशनम् ।
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केसरम् ॥
शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते ।
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ॥ १४९ ॥
पित्तानिलकरं वालं पित्तलं बद्धकेसरम् ॥ १५० ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ।
कषायानुरसं स्वादु वातघ्नं वृंहणं गुरु ।
पित्ताविरोधि सम्पक्वमाम्रं शुक्रविवर्द्धनम् ॥ १५१ ॥
वृंहणं मधुरं वल्यं गुरु विष्टभ्य जीर्य्यति ।
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्द्धनम् ॥ १५२ ॥
अम्लं तृष्णापहं रुच्यं पित्तकृत् कारमर्द्दकम् ॥ १५३ ॥
वातपित्तहरं वृष्यं पियालं गुरु शीतलम् ॥ १५४ ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ॥ १५५ ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ।
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥ १५६ ॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत् ॥ १५७ ॥
गरदोषहरं नीपं प्राचीनामलकं तथा ॥ १५८ ॥

---

स्वाभेत्यादि । केसरमत्र रसकोषः "रोया" इत्यभिधीयते, न च केसरशब्दस्यार्थोऽयमनुपपन्नः "मातुलुङ्गफलकेसरो घृतः" इत्यादौ तदर्थे प्रयोगदर्शनात् । बद्धकेसरमपरिणतत्वेन संश्लिष्टरसकोषम् । चेत्रफलस्य तु प्रागुक्तं सामान्यगुणमात्रमुपदेष्टव्यम्, दाड़िमादिवत् विशिष्टगुणानुपदे-

वातापहं तिन्तिड़ीकमामं पित्तवलासकृत् ।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं कफवातनुत् ॥ १५९ ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ॥ १६० ॥
अम्लीकायाः फलं पक्वं तद्वद्भेदि तु केवलम् ॥ १६१ ॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम् ।
वातघ्नं दुर्ज्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ १६२ ॥
तृष्णाशूलकफोत्क्लेशच्छर्द्दिश्वासनिवारणम् ।
वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ॥ १६३ ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १६४ ॥

क्षीरवृक्षफल-जाम्बव-राजादन-तोदन-तिन्दुक-वकुल-धन्वनाश्मन्तकाश्वकर्ण-फल्गु-परूषक-गाङ्गेरुकी-पुष्करवर्त्ति-विल्व-विम्बीप्रभृतीनि ॥ १६५ ॥

---

णात् । एवमेवान्यत्राप्यनुक्तविशिष्टगुण ऊह्यम् । परिशिष्टं निगदव्याख्यातम् ॥ १४९—१६४ ॥

क्षीरेत्यादि । क्षीरवृक्षा नाम "न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसा" इत्यायुर्व्वेदविदो भाषन्ते परिभाषाविशेषात्, व्यवहारस्तु वेतसस्थाने चाम्रातकस्यैव । जाम्बवं जम्बूफलम्, राजादनमत्र क्षीरिणीफलम्, तोदनं रावणाम्लिकेति प्रसिद्धम्, तिन्दुकं तिन्दुकभेदः "मधुरगाव" इति यावत्, धन्वनं "धामनी" इति प्रसिद्धस्य फलम्, अश्मन्तकम् अम्लोटकफलम् "कुकाइ" इति प्रसिद्धस्य फलमित्येतत्, अश्वकर्णं शालविशेषस्य फलम्, फल्गु काकोडुम्बरिकाफलम् "खखसियाडुमुर" इति प्रसिद्धस्य फलमित्येतत्, परूषकं "फल्सा" इति प्रसिद्धस्य फलम्, गाङ्गेरुक्या नागवलायाः फलं गाङ्गेरुकीप्रत्ययलुप् प्रकृतिवद्भावश्च छान्दसः, एवमेव विम्बीत्यपि द्रष्टव्यम् ।

फलान्येतानि शीतानि कफपित्तहराणि च ।
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥ १६६ ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥ १६७ ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥ १६८ ॥
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥ १६९ ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ।
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम् ॥ १७० ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु सम्पक्वं मधुरं कफपित्तजित् ॥ १७१ ॥
मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलम् ।
स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते ॥ १७२ ॥
कषायञ्च हिमं स्वादु धान्वनं कफवातजित् ॥ १७३ ॥
तद्वद्भाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥ १७४ ॥
विष्टम्भि मधुरं स्निग्धं फाल्गुजं तर्पणं गुरु ॥ १७५ ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ।
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिवर्हणम् ।
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥ १७६ ॥

विम्बीनामौषधिः "तेलाकुचा" इत्याख्यायते । पुष्करवर्त्तिस्तु पद्मकर्णिका पद्मफलमित्यनर्थान्तरम् । प्रभृतिग्रहणादौडुम्बरादीनामादेशः ॥१६५—१७६॥

पौष्करं स्वादु विष्टम्भि बल्यं कफकरं गुरु ॥ १७७ ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ।
कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम् ॥
तदेव विद्यात् सम्पक्वं मधुरानुरसं गुरु ।
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥ १७८ ॥
बिम्बीफलं साम्लकषायं स्तन्यकृत् कफपित्तजित् ।
तृड्दाहज्वरपित्तास्रकासश्वासक्षयापहम् ॥ १७९ ॥
ताल-नारिकेल-पनस-मोचप्रभृतीनि ॥ १८० ॥
स्वादुपाकरसान्याहुर्वातपित्तहराणि च ।
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥ १८१ ॥
फलं स्वादुरसं तेषां तालजं गुरु पित्तजित् ।
तद्बीजं स्वादुपाकञ्च मूत्रलं वातपित्तजित् ॥ १८२ ॥
नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ।
बलमांसप्रदं हृद्यं बृंहणं बस्तिशोधनम् ॥ १८३ ॥
पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु ॥ १८४ ॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ १८५ ॥
द्राक्षा-काश्मर्य्य-खर्ज्जूर-मधूकपुष्पप्रभृतीनि ॥ १८६ ॥

पौष्करमित्यादि । पौष्करं पद्मफलम् । पूति-मारुतं दुर्गन्धाधोवायुप्रवर्त्तकमित्यर्थः । तालेत्यादि । मोचं कदलीफलम् । परिशिष्टं निगदव्याख्यातम् ॥ १७७—१८५ ॥

रक्तपित्तहराख्याहुर्गुरूणि मधुराणि च ॥ १८७ ॥
तेषां द्राक्षा सरा स्वर्य्या मधुरा स्निग्धशीतला ।
रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥ १८८ ॥
हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ।
केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते ॥ १८९ ॥
क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ।
रसे पाके च मधुरं खार्ज्जूरं रक्तपित्तजित् ॥ १९० ॥
वृंहणीयमहृद्यञ्च मधूककुसुमं गुरु ।
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥ १९१ ॥

वातामाक्षोड़ाभिषुक–निचुल–पिचु-निकोचकोरुमाण-प्रभृतीनि ॥ १९२ ॥

पित्तश्लेष्महराख्याहुः स्निग्धोष्णानि गुरूणि च ।
वृंहणान्यनिलघ्नानि वल्यानि मधुराणि च ॥ १९३ ॥
कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम् ।
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥ १९४ ॥

---

द्राक्षेत्यादि । काश्मर्य्यं गाम्भारीफलम्, प्रभृतिग्रहणात् मधूकफलादीनामादेशः । फलाधिकारेऽस्मिन् मधूकपुष्पस्योपदेशस्तत्फलगुणसाम्यादित्यनुसन्धेयम् । वृंहणीयमित्यादौ मधूककुसुमं तस्य फलञ्चेति समन्वयः । वातेत्यादि । वातामं नाम "बादाम" इत्याख्यायते, अक्षोड़ं "आखरोड़" इति, आभिषुकन्तु "आङ्गुर" इति ; निचुलं वेतसविशेषफलम्, पिचु पिचुकम् इति पर्य्यायौ "पिच्फल" इत्यभिधीयते, निकोचकम् "पेस्ता" इति प्रसिद्धम्, उरुमाणन्तु "नासाति" इति, प्रभृतिग्रहणात् लवलीफला-

वसिरं शीतपाक्यञ्च सारुष्करनिबन्धनम् ।
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ।
विपाके मधुरञ्चापि रक्तपित्तप्रणाशनम् ॥ १९५ ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ॥ १९६ ॥
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥ १९७ ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ॥ १९८ ॥
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ १९९ ॥
करीराक्षकपीलूनि तृणशून्यफलानि च ।
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ २०० ॥
तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ।
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् ॥ २०१ ॥
आरुष्करं तौवरकं कषायं कटुपाकि च ।
उष्णं कृमिज्वरानाह-मेहोदावर्त्तनाशनम् ॥ २०२ ॥

---

दीनामादेशः । पित्तेत्यादि । लवली नामौषधिः "नोयाड़ि" इति "आता" इति चाख्यायते । वसिरं सूर्य्यावर्त्तफलम्, अरुष्करनिबन्धनं भल्लातकवृन्तं तेन सहेति सारुष्करनिबन्धनम्, प्रासङ्गिकमेतत् । एवमेवेह फलेतरेष्वन्यत्रापि व्याख्येयम् । टङ्कं नीलकपित्थफलम्, ऐङ्गुदमिङ्गुदीफलम्, शमी नामौषधिः "गुयाबाब्ला" इत्याख्यायते ॥ १८६—१८८ ॥

गुर्व्वीत्यादि । श्लेषातकी नामौषधिः "लोना" इति "बौहार" इति चाख्यायते, करीरोऽत्र मरुदेशजः कण्टकीवृक्षः "करील" इति परिचीयते, अक्षकं तिनिशफलम् रुद्राक्षमित्येके, पीलु कोङ्कनदेशप्रसिद्धं गुड़फलम्, तृणशून्यं मल्लिका । एषु पीलुफलं विशिनष्टि तिक्तमित्यादिना । आरु-

कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ।
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥ २०३ ॥
रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ।
तिक्तमीषद्विषहितं विडङ्गं क्रिमिनाशनम् ॥ २०४ ॥
त्रक्ष्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत् ।
कषायं दीपनञ्चाम्लं चक्षुष्यञ्चाभयाफलम् ॥ २०५ ॥
भेदनं लघु रूक्षोष्णं वैस्वर्य्यं क्रिमिनाशनम् ।
चक्षुष्यं स्वादुपाक्यक्षं कषायं कफपित्तजित् ॥ २०६ ॥
कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम् ।
कषायमीषन्मधुरं किञ्चित् पूगफलं सरम् ॥ २०७ ॥
जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ।
कक्कोलकं लवङ्गञ्च तिक्तं कटु कफापहम् ।
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ॥ २०८ ॥
सतिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः ।
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ॥ २०९ ॥
लताकस्तूरिका तद्वच्छीता वस्तिविशोधनी ॥ २१० ॥

---

ष्करं भल्लातकम्, तौवरकं प्रमेहचिकित्सिते वक्ष्यमाणं तुवरकफलम्, करञ्जो नाम "डहरकरञ्ज" इति "गोकरञ्ज" इति चाभिधीयते। किंशुकः पलाशः, अरिष्टो निम्बः, क्रिमिपर्य्यायोऽयं जन्तुशब्दः। अक्षं विभीतकफलम्, जातीकोषः "जइत्री" इति प्रसिद्धः, अत्र लवङ्गकर्पूरजातीकोषाणां फलेतरत्वे सत्यपि गुणसाम्यादुपदेश इत्यनुसन्धेयम्। कटुकः कक्कोलः, कक्को-

पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ २११ ॥

वैभीतको मदकरः कफमारुतनाशनः ॥ २१२ ॥

कषायो मधुरो मज्जा कोलानां पित्तनाशनः ।

तृष्णाच्छर्द्यनिलघ्नश्च तद्वच्चामलकस्य च ॥ २१३ ॥

वीजपूरकशम्पाकमज्जा कोशाम्रसम्भवः ।

स्वादुपाकोऽग्निवलकृत् स्निग्धः पित्तानिलापहः ॥ २१४ ॥

यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।

तस्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत् ॥ २१५ ॥

फलेषु परिपक्वं यद्गुणवत् तदुदाहृतम् ।

विल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ।

ग्राहुरणां दीपनं तद्धि कषायं कटुतिक्तकम् ॥ २१६ ॥

व्याधितं कृमिजुष्टञ्च पाकातीतमकालजम् ।

वर्ज्जनीयं फलं सर्व्वमपर्य्यागतमेव च ॥ २१७ ॥

इति फलवर्गः ।

शाकान्यत ऊर्द्धं वच्यामः ॥ २१८ ॥

---

लवन्तु वृहत्काकोलकफलम्,लताकस्तुरिका प्रसिद्धा, अस्याः फले तात्पर्य्यम् । प्रसङ्गात् केषाञ्चिन्मज्जगुणानाह पियालेत्यादिना । वैभीतको मज्जेत्येव परेणान्वयः । अत्र कोलानामिति बहुवचनं सजातीयानां वदरादीनां परिग्रहार्थम् । वीजपूरको मातुलुङ्गः । अनुक्तसङ्ग्रहणायाह यस्येत्यादि । व्याधितत्वन्तु फलानामाकृतिवैकृत्या लक्षणीयम्, पाकातीतमतिपक्वम्, अपर्य्यागतमपरिपक्वम् । परिशिष्टं निगदव्याख्यातम् ॥ १९९—२१७ ॥

शाकानीत्यादि । शाकानि नाम "मूल-पत्र करीराग्र-फल-काण्डाधि-

तत्र पुष्पफलालावु-कालिन्दकप्रभृतीनि ॥ २१९ ॥

पित्तघ्नान्यनिलं कुर्य्युस्तथा मन्दकफानि च ।
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥ २२० ॥
पित्तघ्नं तेषु कुष्माण्डं वालं मध्यं कफापहम् ।
पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ।
सर्व्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥ २२१ ॥
दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत् ॥ २२२ ॥
अलावूर्भिन्नविट्का तु रुक्षा गुर्व्वतिशीतला ॥ २२३ ॥
तिक्तालावूरहृद्या तु वामनी वातपित्तजित् ॥ २२४ ॥

त्रपुसैर्व्वारु-कर्कारुक-शीर्णवृन्तप्रभृतीनि ॥ २२५ ॥

गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति च ।
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ॥ २२६ ॥
बालं सुनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ।
तत् पाण्डुकफकृज्जीर्णमम्लं वातकफापहम् ॥ २२७ ॥

---

रूढ़कम् । त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम्" इत्युक्तलक्षणानि, मूलन्त्वत्र मूलकादेः, पत्रं पटोलादेः, करीरं वंशादेः, अग्रं वेत्रादेः, फलं कुष्माण्डादेः, काण्डं कदल्यादेः, अधिरूढ़कम् "तालास्थिमज्जेति गौड़ाः" इत्यमरटीकायां रघुनाथः, त्वक् मातुलुङ्गादेः, पुष्पं कोविदारादेः, कवकं छत्रिकेति पर्य्यायौ "छातिया" इत्याख्यायते । तत्रेत्यादि । पुष्पफलम् कुष्माण्डम्, कालिन्दकं कर्कारुभेदः कुष्माण्डाकृति-फलविशेष इति यावत् । अत्र प्रायेणाकृतिसाम्याद्व्युत्क्रमेण कुष्माण्डानन्तरं कालिन्दकव्यपदेशः । त्रपुसेत्यादि । त्रपुसं कर्कटीफलं "खीरा" इत्यभिधीयते, एर्व्वारु "वाङ्गी"

एर्व्वारुकं सकर्कारु सम्पक्वं कफवातकृत् ।
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥ २२८ ॥
सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम् ।
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ २२९ ॥

पिप्पली-मरीच-शृङ्गवेराद्र्रक-हिङ्गु-जीरक-कुस्तुम्बुरु-जम्बीरक-सुमुख-सुरसार्ज्जक-भूस्तृण-सुगन्धक-कासमर्द्दक-कालमाल-कुठेरक-चवक-खरपुष्प-शिग्रु-मधुशिग्रु-फणिज्झक-सर्षप-राजिका-कुलाहल--वेणु--गण्डीर--तिलपर्णिका--वर्षाभू-चित्रक-मूलक-पोतिका-लशुन-पलाण्डु-कलायप्रभृतीनि ॥ २३० ॥

---

इति "काँकड़" इति चाख्यायते, कर्कारु कुष्माण्डभेदः, शीर्णवृन्तं "तरवुज" इति प्रसिद्धम्, अष्ठीलनुदिति च्छन्दोभङ्गभयादाकारलोपः, अष्ठीलेह मूत्राघातविशेषः ॥ २१८—२२९ ॥

पिप्पलीत्यादि । जीरकं पञ्चविधमित्यनन्तरं व्यक्तीभविष्यति । कुस्तुम्बुरु धन्याकम्, जम्बीरकमत्र वन्यजम्बीरभेदः, सुमुखः श्वेतार्जकः "श्वेतवावइर" इत्याख्यायते, सुरसस्तुलसी, अर्जकः "वावइर" इति प्रसिद्धः, भूस्तृणं गन्धतृणभेदः "गन्धखड़" इत्याभाष्यते, सुगन्धको रक्ततुलसी, कासमर्द्दकः "कालकासन्दी" इति प्रसिद्धः, कालमालः कृष्णतुलसी, कठेरकः श्वेततुलसीभेदः,चवकः अपामार्गभेदः, खरपुष्पोऽर्जकभेदः "क्षुद्रवावइर" इत्यभिधीयते, शिग्रुः श्वेतशोभाञ्जनः, मधुशिग्रुः रक्तशोभाञ्जनः, फणिज्झकतुलसीभेदः "रामतुलसी" इति प्रसिद्धः, राजिका "राइसर्षा" इत्याभाष्यते, कुलाहलो भूकदम्बः प्राकृतास्तु "मुण्डेरी" इत्याहुः, वेणुरत्र वंशकरीरः, गण्डीरं "शशा" इति प्रसिद्धम्, तिलपर्णिका रक्तचन्दनम्, वर्षाभूशब्देनेह श्वेतपुनर्नवाया एव परिग्रहः क्रियते अनन्तरं पुनर्नवाशब्देन रक्तायाः परिग्रहात्, मूलकपोतिका बालमूलकम्, पीतः शिग्रुरिति

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ।
कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥ २३१ ॥
तेषां गुर्व्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ।
शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी ॥ २३२ ॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ।
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥ २३३ ॥
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम् ।
गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषतः ॥ २३४ ॥
नागरं कफवातघ्नं विपाके मधुरं कटु ।
वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ २३५ ॥
कफानिलहरं स्वर्य्यं विबन्धानाहशूलनुत् ।
कटूष्णं रोचनं हृद्यं वृष्यञ्चैवार्द्रकं स्मृतम् ॥ २३६ ॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ।
कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥ २३७ ॥

---

पर्य्यायौ । कलायो वर्त्तुलकलायः, "मटर" इत्याख्यायते । प्रभृतिग्रहणात् हरिमूलकादीनामादेशः ॥ २३० ॥

कटूनीत्यादि । कृतान्नेषु कृतान्नवर्गपरिपठितेषु लाजमण्डादिषु संस्कारार्थं गुणाधानार्थमनेकधा क्वाथकल्कादिविभागेन, चकारादुपयोगसौकर्य्यार्थमुपकरणत्वेन चोपयुज्यन्ते इत्यर्थः । तेषामित्यादि । समं पित्तं न वर्द्धयति नापि च ह्रासयतीति पित्ताविरोधिनी, नातः पिप्पली पित्तं शमयतीति द्रव्यादिविज्ञानीयोक्तं विप्रतिषिद्धं भवति, सामपित्तविषयत्वात्

तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् ।
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥ २३८ ॥
कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ।
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥ २३९ ॥
आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी ।
दोषघ्नी कटुका किञ्चित्तिक्ता स्रोतोविशोधनी ॥ २४० ॥
जम्बीरः पाचनस्तीक्ष्णः क्रिमिवातकफापहः ।
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ।
कफानिलविषश्वास-कासदौर्गन्ध्यनाशनः ॥ २४१ ॥
पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ।
तद्वत् तु सुमुखो ज्ञेयो विशेषाद्गरनाशनः ॥ २४२ ॥
कफघ्ना लघवो रूक्षाः स्निग्धोष्णाः पित्तवर्द्धनाः ।
कटुपाकरसाश्चैव सुरसार्ज्जकभूस्तृणाः ॥ २४३ ॥

---

श्लेष्मानुबन्धपित्तविषयत्वाद्वेत्यवधेयम् । सितं मरिचं श्वेतमरिचम्, मरिचेभ्यो मरिचमपेक्ष्येत्यर्थः, गुणवत् प्रशस्तगुणम्, प्रशंसायां वतुप् । जीरकं कृष्णजीरकञ्चेति जीरकद्वयम् । कारवी सूक्ष्मजीरकम्, करवी सूक्ष्मकृष्णजीरकभेदः, उपकुञ्चिका तु "कालीजीरा" इत्यभिधीयते, इत्येवं जीरकशब्देन पञ्चविधं जीरकं प्राप्तं भवति ॥ २३१—२३९ ॥

आर्द्रेत्यादि । शुष्का सा कुस्तुम्बरी किञ्चित् कटुका कटुरसा किञ्चित् तिक्ता चेत्यन्वयः, काकाक्षिगोलकन्यायात् । दोषघ्नी पित्तप्रकृतीनां मनाक्

मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ।
विशेषतः पित्तहरः सतिक्तः कासमर्द्दकः ॥ २४४ ॥
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पित्तलः ।
मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ॥ २४५ ॥
विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च ।
त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ॥ २४६ ॥
चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥ २४७ ॥
वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् ॥ २४८ ॥
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ।
सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ॥ २४९ ॥
महत् तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ।
तदेव स्निग्धसिद्धन्तु पित्तनुत् कफवातजित् ॥ २५० ॥
त्रिदोषशमनं शुष्कं विषदोषहरं लघु ॥ २५१ ॥
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥ २५२ ॥

पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरं ते गुरवः प्रदिष्टाः ।
तेषान्तु पुष्पं कफपित्तहन्तृ फलं निहन्यात्कफमारुतौ च ॥२५३॥

---

स्रंसनीत्यर्थः । विदाहीत्यादि । वेगनाम महाकालफलम् "माखाल-फल" इत्याख्यायते, "वेगो जवे प्रवाहे च महाकालफलेऽपि च" इति मेदिनी । प्रभृतिग्रहणोपात्तमपीदं गुणसाम्यात् क्रमं हित्वेहोपदिष्टमित्यनुसन्धेयम् । कट्वित्यादि । महत्तन्मूलकमित्यर्थः, अत्र वुद्ध्या समाकृष्टतया उपसर्ज्जनीभूतस्यापि मूलकस्य तदा प्रत्यवमर्शः ॥ २४८—२५२ ॥

सामान्येनोक्तमर्थं पुनः सङ्क्षेपेण विभज्योपदिदिक्षति पुष्पमित्यादिना ।

स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसश्च बल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः ॥
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति ॥ २५४ ॥
नात्युष्णवीर्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च ।
बलावहः पित्तकरोऽथ किञ्चित्पलाण्डुरग्निञ्च विवर्द्धयेच्च ॥२५५॥
स्निग्धो रुचिष्यः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिदश्च ।
स्वादुर्गुरुः शोणितपित्तशस्तः स पिच्छिलः चीरपलाण्डुरुक्तः॥२५६

कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु ।
कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥ २५७ ॥

चुञ्चू-यूथिका-तरुणी-जीवन्ती-बिम्बीतिका-नन्दी-भल्लातक-

---

अत्र यत्तदोर्नित्यसम्बन्धादश्रुतत्वाच्च पुष्पादयो ये शाकास्ते यथोत्तरं गुरवः प्रदिष्टा इत्येवं व्याख्येयम् । नेह पुंस्त्वमनुपपन्नम् "अस्त्री शाकम्" इत्यमरानुशासनात् । अत्र लघवः प्रदिष्टा इत्यनाकरः पाठः, "पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात्" इत्यनन्तरोक्तविरोधादनुभवेनाविषयीकरणाच्च । पुनर्व्विशिनष्टि तेषामित्यादिना । तुकारेण पत्रमपि कफपित्तहन्त्रित्युपदिश्यते । शाकावसानात् प्रागयमुपदेशः प्रायेणैषां पुष्पादिशाकत्वमवगमयतीत्यनुसन्धेयम् । स्निग्धेत्यादि । रुचिष्यो रोचनः, "रुचिभुजिभ्यां किष्यन्" इति किष्यन् । चीरवन्मधुरः पलाण्डुः चीरपलाण्डुः, क्षुद्रपलाण्डुरिति यावत् । कन्दप्रधानयोरपि रसोनपलाण्ड्वोः कन्दवर्गे हित्वेहोपदेशो नालकन्दशाकत्वमाख्यातुमित्यवधेयम् । परिशिष्टमतिरोहितार्थम् ॥२५३-२५७॥

चुञ्चित्यादि । अत्र चुञ्चूबिम्बीतिके जिज्ञासितव्ये । यूथिका नामौषधिः "यूँइ" इत्यभिधीयते, तरुणी च "सेँवती" इति, द्वे एव पुष्पप्रधाने ।

छगलान्त्री-वृक्षादनी-फञ्जी-शाल्मली-शेलु-वनस्पतिप्रसव-शण-कर्व्वुदार-कोविदारप्रभृतीनि ॥ २५८ ॥

कषायस्वादुतिक्तानि रक्तपित्तहराणि च ।
कफघ्नान्यनिलं कुर्य्युः संग्राहीणि लघूनि च ॥ २५९ ॥
लघुः पाके च जन्तुघ्नः पिच्छिलो व्रणिनां हितः ।
कषायमधुरो ग्राही चुचूस्तेषां त्रिदोषहा ॥ २६० ॥
चक्षुष्या सर्व्वदोषघ्नी जीवन्ती समुदाहृता ।
वृक्षादनी वातहरा फञ्जी त्वल्पबला मता ॥ २६१ ॥
क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ।
शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥ २६२ ॥

पुनर्नवा-वरुण-तर्कार्य्युरुवूक-वत्सादनी-बिल्वशाकप्रभृतीनि ॥ २६३ ॥

---

जीवन्ती स्वनामप्रसिद्धा, नन्दी नन्दीतरुर्थैव इति पर्य्यायाः, छगलान्त्री वृद्ध-दारकः "विटताड़क" इति परिचीयते, वृक्षादनी वन्दा "परगाछा" इत्याख्यायते। फञ्जी भार्गी, शेलुः श्लेष्मातकः "लोना" इति विज्ञायते ; पूर्व्वं हि फलमस्योपदिष्टमिह तु शाकत्वेन पत्रं पुष्पाणि चोपदिश्यन्त इत्यपौन-रुक्त्यम्। अत्र वनस्पतयो नामोडुम्बरादयः पञ्चक्षीरिवृक्षास्तेषां पल्लवा वन-स्पतिप्रसवाः, कर्व्वुदारः श्वेतकाञ्चन इत्याभाष्यते, कोविदारस्तु रक्तकाञ्चन-इति। प्रभृतिग्रहणादुत्पलादिपल्लवानामादेशः। कषायेत्यादि। अत्रो-त्पलादीनामित्यादिशब्देन पद्मादीनां परिग्रहः क्रियते चरकैकवाक्यत्वात् ॥ २५८—२६२ ॥

पुनर्नवेत्यादि। वरुणः प्रसिद्धः. क्वचित् "बन्ना" इत्याख्यायते। तर्कारी

उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ।
तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥ २६४ ॥

तण्डुलीयकोपोदिकाश्ववला-चिल्ली-पालङ्क्या-वास्तूकप्रभृतीनि ॥ २६५ ॥

सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ।
मन्दवातकफान्याहू रक्तपित्तहराणि च ॥ २६६ ।
मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ।
तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥ २६७ ॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ।
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ २६८ ॥
कटुर्विपाके कृमिहा मेधाग्निबलवर्द्धनः ।
सक्षारः सर्व्वदोषघ्नो वास्तूको रोचकः सरः ॥ २६९ ॥
चिल्ली वास्तूकवज्ज्ञेया पालङ्क्या तण्डुलीयवत् ।
वातलाबद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥ २७० ॥
शाकमाश्ववलं रूक्षं बद्धविण्मूत्रमारुतम् ॥ २७१ ॥

---

जयन्ती, उरुवूकोऽत्र श्वेतैरण्डः, वत्सादनी गुडूची, शाकः "सेगुन" इत्याख्यायते। प्रभृतिग्रहणात् हिंस्रादीनामादेशः। हिंस्रा तु "काटागड़" इति परिचीयते। तण्डुलीयकेत्यादि। तण्डुलीयकः "नट्याशाक" इति प्रसिद्धः, उपोदिका तु "पुँइ" इति, मेथिकाऽपरपर्य्यायोऽयमश्ववलाशब्दः, चिल्लीवास्तुके तारतम्येन द्वे एव "वथुया" इत्यभिधीयेते, पालङ्क्या च "पालङ्क" इति। प्रभृतिग्रहणात् चैत्रपालङ्क्यादीनामादेशः ॥२६१—२७१॥

मण्डूकपर्णी-सप्तला-सुनिषण्णक-सुवर्च्चला-ब्रह्मसुवर्च्चला-पिप्पली-गुडूची-गोजिह्वा-काकमाची-प्रपुन्नाड़ावल्गुज-सतीन-बृहती-कण्टकारिकाफल-पटोल-वार्त्ताकु-कारवेल्लक-कटुका-केवुकोरुवूक-पर्पटक-किराततिक्त-कर्कोटकारिष्ट-कोशातकी-वेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ॥ २७२ ॥

रक्तपित्तहराख्याहुर्हृद्यानि सुलघूनि च ।

कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥ २७३ ॥

कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ।

लघ्वी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥ २७४ ॥

अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ॥ २७५ ॥

अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥ २७६ ॥

ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ॥ २७७ ॥

---

मण्डूकेत्यादि । मण्डूकपर्णी नामौषधिः "थुलकुड़ि" इति "थानकुनी" इति च विज्ञायते, सप्तला चर्म्मसाह्वा, सुनिषण्णकं "सुषणी" इति विज्ञायते, सुवर्च्चला ब्रह्मसुवर्च्चले द्वे भेदेन "सूर्य्यमुखी" इत्युच्येते, पूर्व्वं हि पिप्पल्याः फलं गुडूच्याश्च नालमुपदिष्टमिदानीन्तु शाकत्वेनानयोः पत्राण्युपदिश्यन्त इति न पौनरुक्त्यम् । गोजिह्वा दार्व्वीशाकम्,प्रपुन्नाड़श्चक्रमर्द्द इति पर्य्यायौ । "चाकुन्दा" इति प्राकृता भाषन्ते । अवल्गुजः सोमराजी, सतीनो वर्त्तुल-कलायः, कारवेल्लकं "करेला" इति प्रसिद्धम्, कटुका कटुकी इति पर्य्यायौ, केवुकः "केँउ" इति प्रसिद्धः, उरुवुकोऽत्र रक्तैरण्डः श्वेतो हि पूर्व्वमुपदिष्टः, कर्कोटकं "काक्रोल" इति प्रसिद्धम्, करीर उष्ट्रप्रियो मरुजः कण्टकिद्रुमः, अटरूषको वासकः, अर्कपुष्पी कुटुम्बिनी इति पर्य्यायौ, प्रभृतिग्रहणात्

नाल्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् ॥ २७८ ॥
कण्डूकुष्ठक्रिमिघ्नानि कफवातहराणि च ।
फलानि वृहतीनान्तु कटुतिक्तलघूनि च ॥ २७९ ॥
कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ।
पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥ २८० ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु ।
वार्त्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥ २८१ ॥
तद्वत् कर्कोटकं प्रोक्तं कारवेल्लकमेव च ॥ २८२ ॥
अटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ।
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥ २८३ ॥
कफापहं शाकमुक्तं वरुणप्रपुनाड़योः ।
रुक्षं लघु च शीतञ्च वातपित्तप्रकोपणम् ॥ २८४ ॥
दीपनं कालशाकन्तु गरदोषहरं कटु ॥ २८५ ॥
कौसुम्भं मधुरं रुक्षमुष्णं श्लेष्महरं लघु ॥ २८६ ॥
वातलं नालिकाशाकं पित्तघ्नं मधुरञ्च तत् ॥ २८७ ॥

---

कालशाकादीनामादेशः । कफवातेत्यादि । तिक्तं वार्त्ताकं वार्त्ताकुफलं कफवातहरम्, कटुकं तत् रोचनादिगुणं जीर्णन्तु सक्षारपित्तलं प्रोक्तमित्यन्वयः । अटरूषकादिषु तिक्तस्यापि वेत्राग्रस्य वृष्यत्वमध्यवसितव्यं चरकानुशासनात् । कालशाकं श्राद्धशाकम् "नड़िचा" इति प्रसिद्धम् । कौसुम्भम् "कुसुम" इति प्रसिद्धस्य शाकम्, नालिकाशाकं मिष्टपट्टपत्रकं "नालिता पट्टशाकञ्च मिष्टपत्रे तु नालिका" इति कोषान्तरात् । श्वेतकलम्बीति स्मार्त्ताः ॥ २७२—२८७ ॥

ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता।
उष्णा कषायमधुरा ग्राहिणी चाग्निदीपनी॥ २८८॥

लोणिका-जातुकपर्णिका-पत्तूर-जीवक-सुवर्चला-कुरुवक-कठिञ्जर-कुन्तलिका-कुरण्टिकाप्रभृतीनि॥ २८९॥

स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः।
लवणानुरसा रूक्षाः सक्षारा वातलाः सराः॥ २९०॥

स्वादुतिक्ता कुन्तलिका सकषाया कुरण्टिका॥ २९१॥

संग्राहि शीतलञ्चापि लघु दोषविरोधि च।
राजक्षवकशाकन्तु शटीशाकन्तु तद्विधम्॥ २९२॥

स्वादुपाकरसं शाकं दुर्ज्जरं हरिमन्थजम्॥ २९३॥

भेदनं मधुरं रूक्षं कालायमतिवातलम्।
स्रंसनं कटुकं पाके लघुवातकफापहम्॥ २९४॥

शोषघ्नमुष्णवीर्य्यन्तु पत्रं पूतिकरञ्जजम्॥ २९५॥

---

लोणिकेत्यादि। लोणिका क्षुद्राम्लिकेति राजनिर्घण्टः, जातुकं हिङ्गु तस्येव पर्णमस्या इति जातुकपर्णिका तृणभेदः "नाड़ीहिङ्" इत्याख्यायते, पत्तूरम् "शालिञ्चीशाक" इति प्रसिद्धम्, जीवकनामौषधिपत्रम्, सुवर्चलात्र ब्राह्मीति प्राञ्चः, कुरुवको रक्तझिण्टी, कठिञ्जरस्तुलसीभेदः, कुन्तलिका नीलझिण्टी, कुरण्टिका पीतझिण्टी, प्रभृतिग्रहणात् राजक्षवकशाकादीनामादेशः। स्वादित्यादि। राजक्षवको राजसर्षपः "राइ" इति विज्ञायते, नेह दोषाविरोधीति पाठो न्याय्यः "त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते" इति तन्त्रान्तरीयविरोधात्। चणकापरपर्य्यायोऽयं हरि-

ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ।
सुगन्धि विशदं तिक्तं स्वर्य्यं वातकफापहम् ॥
स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ।
वक्त्रकण्डूमलक्लेद-दौर्गन्ध्यादिविशोधनम् ॥ २९६ ॥

कोविदार-शण-शाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च। वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि। मधुशिग्रु-करीर-कुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च ॥ २९७ ॥

आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ॥ २९८ ॥
रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ।
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ २९९ ॥
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥ ३०० ॥
मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥ ३०१ ॥
तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥ ३०२ ॥
सिन्धुवारं विजानीयाद्धितं पित्तविनाशनम् ॥ ३०३ ॥

---

सन्यशब्दः, पूतिकरञ्जः "नाटाकरञ्ज" इति प्रसिद्धः । परिशिष्टं निगदव्याख्यातम् ॥ २८८—२९६ ॥

कोविदारेत्यादि । वृषो वासकः, अगस्त्यो वकः, करीरोऽत्र मरुजः काष्ठविटपभेदः । रक्तवृक्षो बन्धूकः "बाँधुली" इति विज्ञायते, मुष्ककः "घण्टापारली" इति प्रसिद्धः, असनः पीतशालः, कुमुदं कैरवम्, ह्लादि दाहप्रशमनत्वेनाह्लादजननम् । कुवलयं श्वेतोत्पलम्, उत्पलन्तु नीलं रक्तञ्चेति प्रत्येतव्यमविशेषात् । सिन्धुवारस्य पुष्पं सिन्धुवारम् निर्गुण्डी-

मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥ ३०४ ॥
सुगन्धि विशदं हृद्यं वाकुलं पाटलानि च ॥ ३०५ ॥
श्लेष्मपित्तविषघ्नन्तु नागं तद्वच्च कुङ्कुमम् ॥ ३०६ ॥
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥ ३०७ ॥
किंशुकं कफपित्तघ्नं तद्वदेव कुरुण्टकम् ॥ ३०८ ॥
यथा वृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ॥ ३०९ ॥
मधुशिग्रुकरीराणि कटुश्लेष्महराणि च ॥ ३१० ॥

क्षवक-कुलेचर-वंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्र-पुरीषाणि च ॥ ३११ ॥

---

पुष्पमित्येतत्, मालत्या मल्लिकायाश्च पुष्पे मालतीमल्लिके "पुष्पमूलेषु बहुलम्" इति तद्धितलुप्, सौरभ्यात् सौगन्ध्यात् मृदुत्वादिति तात्पर्य्यम्; वक्ष्यति च "सुगन्धो रोचनो मृदुः" इति । पाटलायाः पुष्पाणि पाटलानि, नागं नागकेशरपुष्पम्, किंशुकं पालाशम्, कुरुण्टकं झिण्टीपुष्पम्, यथायोगमेषु तद्धितलुप् मन्तव्यम् । अनुक्तमर्थमुपसंग्रहीतुमिदमुच्यते यथेति । तथेति समुच्चयार्थः । तथाच पुष्पमनुक्तं पुष्पजातं, वृक्षोचितं वृक्षन्यस्तं स्तवक-कण्टकावरोहादिवस्तुजातञ्च, यथावृक्षं वृक्षानुरूपं जानीयादित्यर्थः । "उचितन्तु भवेन्न्यस्ते" इति मेदिनी । अत्र पुनर्विशिनष्टि मध्विति । वृक्षोचितेषु मध्ये मधुशिग्रुकरीराणि मधुशिग्रोः फलाङ्कुरास्तरुणफलानीति तात्पर्य्यम् । न तावदेकान्तेन करीरशब्दस्याङ्कुरपर्य्यायत्वमनुपपन्नम् "हिमांशुवंशस्य करीरमेव" इति नैषधकाव्यदर्शनात् "वेणोः करीराः" इत्यनन्तरोपात्तप्रयोगदर्शनाच्चेत्यवधेयम् ॥ २९७—३१० ॥

क्षवकेत्यादि । क्षवको राजिका "राइ" इत्याख्यायते तस्य पुष्पं क्षवकम्, कुलेचरो जिज्ञासितव्यः, वंशकरीरो वंशाङ्कुरः, प्रभृतिग्रहणादपा-

यवकं क्षारिणं तेषु स्वादुपाकं सपिच्छिलम् ।

विष्यन्दि वातलं नातिपित्तश्लेष्मकरञ्च तत् ॥ ३१२ ॥

वैणोः करीराः कफला मधुरा रसपाकतः ।

विदाहिनो वातकराः सकषाया विरूक्षणाः ॥ ३१३ ॥

उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि ॥ ३१४ ॥

तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनञ्च ॥३१५॥

इक्षुजं मधुरं कषायानुरसं कटुकं शीतलञ्च ॥ ३१६ ॥

तद्वदेवोष्णं कारीषं कषायं वातकोपनञ्च ॥ ३१७ ॥

वेणुजातं कषायं वातकोपनञ्च ॥ ३१८ ॥

भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥ ३१९ ॥

पिण्याक-तिलकल्कस्थूणिका-शुष्कशाकानि सर्व्वदोषप्रकोपणानि ॥ ३२० ॥

---

सार्गादीनामादेशः । अत्र कफहराणीति सामान्येनोक्तमिति "वैणोः करीराः कफलाः" इत्यनन्तरोक्तमविरुद्धम् । उद्भिदानीत्यादि । पलालः शस्यशून्यः काण्डः, करीषं शुष्कगोमयम्, वेणुशब्दोऽयमजहत्स्वार्थया लक्षणया काष्ठमात्रमप्युपलक्षयतीति निश्चीयते, वेणुजकाष्ठजयोः प्रायेणाविशेषात् । न चैतदश्वत्थमान्येयादिभिः सर्व्वेषामेव गुणसाम्येनोपदेशात् । पलालादिजानि उद्भिदानि उद्भिज्जानि छत्राकाणीति निष्कर्षः। तत्रेत्यादि। भूमितो भूमिगुणविशेषात् अस्य भूमिजस्योद्भिदस्य अनुरसोऽनुरसविशेषश्चकारात् व्यक्तरसविशेषश्च भवतीत्यर्थः ॥ ३११—३१९ ॥

पिण्याकेत्यादि । पिण्याको नाम "खैल" इति प्रसिद्धः, तिलकल्ककृता वर्त्तिका तिलकल्कस्थूणिका "तिलुया" इत्याख्यायते । अत्र शुष्कशाकगुणसाम्यात् शाकेतरयोरपि पिण्याकतिलकल्कस्थूणिकयोरुपदेश

विष्टम्भिनः स्मृताः सर्व्वे वटका वातकोपनाः ॥ ३२१ ॥

सिण्डाकी वातला सान्द्रा रुचिष्यानलदीपनी ॥ ३२२ ॥

विड्भेदि गुरु रुक्षञ्च प्रायो विष्टम्भि दुर्ज्जरम् ।

सकषायञ्च सर्व्वं हि स्वादु शाकमुदाहृतम् ॥ ३२३ ॥

कर्कशं परिजीर्णञ्च क्रिमिजुष्टमदेशजम् ।

वर्ज्जयेत् पत्रशाकं तत् यदकालविरोहि च ॥ ३२४ ॥

कन्दानत ऊर्द्ध्वं वक्ष्यामः ॥ ३२५ ॥

विदारीकन्द-शतावरी-विस-मृणाल-शृङ्गाटक-कशेरुक-पिण्डालुक-मध्वालुक-हस्त्यालुक-काष्ठालुक-शङ्खालुक--रक्तालु-केन्दीवरोत्पलकन्दप्रभृतीनि ॥ ३२६ ॥

---

इत्यनुसन्धेयम् । प्राग्वत् प्रसङ्गादेव वटका सिण्डाकी चोपदिश्येते विष्टम्भिन इत्यादिना । वटका मुद्गादिकृताः पिष्टकभेदाः, सिण्डाकी "सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले" इत्याद्युक्तलक्षणा, विस्तरतस्त्वामवातचिकित्सिते चक्रपाणिसङ्ग्रहे द्रष्टव्या । रुचिष्या "रुचिभुजिभ्यां किष्यन्" इति किष्यन्, रोचते इत्यर्थः । अकालविरोहि अयथास्वकालोत्पन्नम् ॥ ३२०—३२४ ॥

कन्दानित्यादि । विदारीकन्दो नाम "भूमिकुष्माण्ड" इति विख्यायते, विसं सूक्ष्ममृणालम्, तदेव स्थूलं मृणालमभिधीयते, शृङ्गाटकं शृङ्गाटकफलं "पाणिफल" इति विख्यायते । कन्दवर्गेऽस्मिन् शृङ्गाटकफलस्योपदेशो निरङ्कुरत्वेन कशेरुकादिकन्दसाम्याद्गुणसाम्याच्चेति नानुपपत्तिः । कशेरुकश्च "केशुर" इति ; पिण्डालुको गोलालुकः, मध्वालुको मधुरालुकः "मउ आलु" इति श्रीहट्टादावाभाष्यते, हस्त्यालुकश्च "बड़ आलु" इति ; काष्ठालुकः कठिनालुकः, शङ्खालुकः "शाँख् आलु" इति प्रसिद्धः, रक्तालुको

रक्तपित्तहराण्याहुः शीतानि मधुराणि च ।
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥ ३२७ ॥
मधुरो वृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः ।
विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः ॥ ३२८ ॥
वातपित्तहरा वृष्या स्वादुतिक्ता शतावरी ।
महती चैव हृद्या च मेधाग्निबलवर्द्धिनी ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ३२९ ॥
अविदाहि बिसं प्रोक्तं रक्तपित्तप्रसादनम् ।
विष्टम्भि दुर्ज्जरं रुक्षं विरसं मारुतापहम् ॥ ३३० ॥
गुरू विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ॥ ३३१ ॥
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥ ३३२ ॥
कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः ।
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥ ३३३ ॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटुपित्तकृत् ॥ ३३४ ॥
वेणोः करीरा गुरवः कफमारुतकोपनाः ॥ ३३५ ॥

---

वर्णितः शङ्खालुभेदः ; इन्दीवरं नीलोत्पलम्, उत्पलन्तु श्वेतं रक्तञ्चेह प्रत्येतव्यम् । प्रभृतिग्रहणात् सुरेन्द्रकन्दादीनामादेशः । सुरेन्द्रकन्दो वन्यालुकः "वाघहाता" इत्युच्यते । वेणोः करीरा वंशकरीरकन्दा इति प्रकरणप्राप्तोऽर्थः, तथाच न पौनरुक्त्यम् ॥ ३२५—३३५ ॥

स्थूलशूरणमाणकप्रभृतय: कन्दा ईषत्कषाया: कटुका रूचा विष्टम्भिनो गुरव: कफवातला: पित्तहराश्च ॥ ३३६ ॥

माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम् ॥ ३३७ ॥

स्थूलकन्दस्तु नात्युष्ण: शूरणो गुदकीलहा ॥ ३३८ ॥

वाराहकन्द: श्लेष्मघ्न: कटुको रसपाकत: ।

मेहकुष्ठक्रिमिहरो वल्यो वृष्यो रसायन: ॥ ३३९ ॥

ताल-नारिकेल-खर्ज्जूरप्रभृतीनां मस्तकमज्जान: ॥ ३४० ॥

स्वादुपाकरसानाहु रक्तपित्तहरांस्तथा ।

शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि ॥ ३४१ ॥

वालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ।

कन्दं विवर्ज्जयेत् सर्व्वं यो वा सम्यङ्‌ न रोहति ॥ ३४२ ॥

पुष्पं पत्रं फलं नालं कन्दाश्च गुरव: क्रमात् ॥ ३४३ ॥

इति कन्दान्त:शाकवर्ग: ।

---

स्थूलेत्यादि । स्थूल: कन्दो वृहदाकार: शूरणभेद:, स एव क्षुद्र: शूरण इत्युच्यते, उभावेव "श्रोल" इत्याख्यायते । प्रभृतिग्रहणाद्वाराहकन्दादीनामादेश: । वाराहकन्द: स्वनामप्रसिद्धस्तदभावे चर्म्मकारालुकव्यवहार: "वाराहीणामभावे तु चर्म्मकारालुको मत:" इति स्मरणात् । चर्म्मकारालुक: "माणकचुरी" इत्याभाष्यते । तालेत्यादि । प्रभृतिग्रहणात् पूगमज्जादीनामादेश: । अत्र तालेतरमस्तकमज्जामशाकत्वेऽपि सास्यादुपदेश: । वालमित्यादि । सम्यक् न रोहति न सम्यक् प्रादुर्भवतीत्यर्थ: "रुह वीजजन्मप्रादुर्भावे च" इति धात्वर्थस्मरणात् । उपयोगसौकर्य्यार्थमुत्क्रमर्थं कथञ्चिद्विभज्योपदिदिक्षति पुष्पमित्यादिना । नेह पुष्पादीनां

सैन्धव-सामुद्र-विड़-सौवर्च्चल-रोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्व्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥ ३४४ ॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥ ३४५ ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ ३४६ ॥
सक्षारं दीपनं रूक्षं शूलहृद्रोगनाशनम् ।
रोचनं तीक्ष्णमुष्णञ्च विड़ं वातानुलोमनम् ॥ ३४७ ॥
लघु सौवर्च्चलं पाके वीर्य्योष्णं विशदं कटु ।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥ ३४८ ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ।
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥ ३४९ ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ।
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ ३५० ॥

---

त्रयाणामुपदेशः पौनरुक्त्येनासज्यते पुष्पाद्यपेक्षया नालकन्दयोस्तारतम्येन गुरुत्वसंवेदनार्थत्वादित्यनुसन्धेयम् । अत्र कान्दाश्चेति कन्दशब्दो मञ्जानमप्युपलक्षयतीति नानुपपत्तिः ॥ ३३६—३४३ ॥

न तावल्लवणानि विहाय शाकानामुपयोगः सम्भवतीति शाकानन्तरं लवणान्यधिकरोति सैन्धवेत्यादिना । सामुद्रं नाम "करकच" इत्याख्यायते, सौवर्च्चलं कृष्णलवणम्, रोमकं पांशुलवणम्, औद्भिदं साम्भरिलवणम् ।

कफवातक्रिमिहरं लेखनं पित्तकोपनम्।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥ ३५१ ॥
ऊषसूतं वालुकेलं शैलमूलाकरोद्भवम्।
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ ३५२ ॥

यवक्षार-स्वर्जिकाक्षारोषक्षार-पाकिम-टङ्कणक्षाराः ॥ ३५३ ॥

गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशनाः।
क्षारास्तु पाचनाः सर्व्वे रक्तपित्तकराः स्मृताः ॥ ३५४ ॥
ज्ञेयौ वह्निसमौ क्षारौ स्वर्ज्जिकायावशूकजौ।
शुक्रश्लेष्मविवन्धार्शोगुल्मप्लीहविनाशनौ ॥ ३५५ ॥
उष्णोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापहः ॥ ३५६ ॥
मेदोघ्नः पाकिमः क्षारो मूत्रवस्तिविशोधनः ॥ ३५७ ॥

---

प्रभृतिग्रहणात् गुटिकादिलवणानामादेशः। गुटिकालवणं सौवर्च्चलभेदः लोहितसौवर्च्चलमित्येतत्, ऊषः क्षारमृत्तिका ततः सूतमुत्पन्नमूषसूतम् "साजिमाटो" इति प्रसिद्धादुत्पन्नमिति यावत्, वालुकामयी भूमिर्वालुकेला "इला कलत्रे सोम्यस्य धरित्र्यां गवि वाचि च" इति मेदिनी, मरुभूमिरिति निष्कर्षः, तत्र भवं वालुकेलं नाम लवणं योधपुरप्रदेशे "डिडुयाना" इति प्रसिद्धम्, शैलमूलस्थितं खनिजं शैलमूलाकरोद्भवम्। विहितं कृत्रिमिति। विहितमुपयुक्तं सत्कटु, एतेन कटुविपाकीति निष्कर्षः ॥ ३४४—३५२ ॥

प्रायेण गुणसाम्याल्लवणानन्तरं क्षारानधिकरोति यवेत्यादिना। यवशूकोद्भवः क्षारो यवक्षारः, स्वर्जिकाक्षारः "साचिक्षार" इति प्रसिद्धः ऊषक्षारः "साजिमाटी" इत्याख्यायते, पाकेन निर्वृत्तः क्षारः पाकिमक्षारः, क्षारपाकविधावुपदिष्टः पानीयः प्रतिसारणीयश्चेत्यर्थः। टङ्कणो नाम

विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ।
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणक्षार उच्यते ॥ ३५८ ॥
सुवर्णं स्वादु हृद्यञ्च वृंहणीयं रसायनम् ।
दोषत्रयघ्नं शीतञ्च चक्षुष्यं विषसूदनम् ॥ ३५९ ॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ॥ ३६० ॥
ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥ ३६१ ॥
तिक्तं कांस्यं लेखनञ्च चक्षुष्यं कफवातजित् ॥ ३६२ ॥
वातकृच्छीतलं लोहं तृष्णापित्तकफप्रणुत् ॥ ३६३ ॥
कटुक्तसिद्ध्ने लवणे त्रपुसीसे विलेखने ॥ ३६४ ॥
मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादयः ।
चक्षुष्या मणयः शीता लेखना विषसूदनाः ।
पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः ॥ ३६५ ॥

इति लवणादिवर्गः ।

धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात् ।
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ॥३६६॥

---

"सोहागा" इत्यभिधीयते । अत्राम्नायते हि "लवणानि पार्थिवविशेषाः" इति (सू: ३८ अ:), तदिदं पार्थिवत्वसाधर्म्यात्लवणानन्तरमवसरवशा-दिदानीं सुवर्णादयोऽप्युपदिश्यन्ते सुवर्णमित्यादिना । लेखनं व्रणस्येति वि-ज्ञेयम् । त्रपु वङ्गम्, विद्रुमं प्रवालम्, वज्रेन्द्रो हीरकः, वैदुर्य्यं विड़ाल-नेत्राभो मणिभेदः, पाप्मा पापम्, अलक्ष्मीर्निर्ऋतिर्नरकदेवतेति यावत् ॥ ३५२—३६५ ॥

क्रमात्यनुक्तसद्गुणोपायगुरःसरसुत्तैषपयोगसादृश्यात् प्रवराख्युपदिदि-

षष्टिका यवगोधूमा लोहिता ये च शालयः ।
मुद्गाढ़कीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३६७ ॥
लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ।
मयूरवर्म्मिकूर्म्माश्च श्रेष्ठा मांसगणेष्विह ॥ ३६८ ॥
दाड़िमामलकं द्राक्षा खर्ज्जूरं सपरूषकम् ।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥ ३६९ ॥
सतीनो वास्तुकश्चुचूचिल्लीमूलकपोतिकाः ।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ ३७० ॥
गव्यं क्षीरं घृतं श्रेष्ठं सैन्धवं लवणेषु च ।
धात्री दाड़िममम्लेषु पिप्पली नागरं कटौ ॥ ३७१ ॥
तिक्ते पटोलवार्त्ताकि मधुरे घृतमुच्यते ।
क्षौद्रं पूगफलं श्रेष्ठं कषाये सपरूषकम् ॥ ३७२ ॥
शर्करेक्षुविकारेषु पाने मध्वासवौ तथा ।
परिसंवत्सरं धान्यं मांसं वयसि मध्यमे ।
अपर्य्युषितमन्नन्तु संस्कृतं मात्रया शुभम् ॥ ३७३ ॥
फलं पर्य्यागतं शाकमशुष्कं तरुणं नवम् ॥ ३७४ ॥

षष्टिकेति धान्येष्वित्यादिना तरुणं नवमित्यन्तेन ग्रन्थेन । अप्रमेयादपरिसंख्येयत्वादनुक्तमित्यन्वयः । आस्वादतो मधुरादिरसविशेषेण, भूतगुणैर्गुरुत्वादिभिश्च मत्वा तं तं गुणविशेषं निरूप्य आदिशेद्गुणत इति शेषः । धात्रीत्यादि । पूर्व्वं हि दाड़िमामलकयोः फलेषु प्रशस्तत्वमुक्तमिदानीन्तु तयोरेवाम्लेषु प्रशस्तत्वमुपदिश्यते इति फलत्वाम्लत्वविवेचनादेव न पौनरुक्त्य-

अत: परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥ ३७५ ॥
लाजमण्डो विशुद्धानां पथ्य: पाचनदीपन: ।
वातानुलोमनो हृद्य: पिप्पलीनागरायुत: ॥ ३७६ ॥
स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी ।
क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥ ३७७ ॥
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धनी ।
पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ।
वस्तिसंशोधनी वृष्या ज्वरातीसारयोर्हिता ॥ ३७८ ॥
शाकमांसफलैर्युक्ता यवाग्वस्ताश्च दुर्ज्जरा: ॥ ३७९ ॥

---

मित्यनुसन्धेयम् । पर्य्यागतं परिपक्वम् । परिशिष्टं निगदव्याख्यातम् ॥ ३६६—३७४ ॥

अत इत्यादि । पक्कमन्नं कृतान्नम्, पिप्पलीनागरायुत: षड़ङ्गपरिभाषया कल्कविधिना वा कर्षमात्रपिप्पलीनागरयोगेन पक्क इत्यर्थ: "यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत्प्रास्थिकेऽम्भसि । अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ," तथा "कर्षार्द्धं वा कणाशुण्ठ्यो: कल्कद्रव्यस्य वा पलम् । विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम्" इति स्मरणात् । अत्र शृतशीतास्वप्स्विति निमित्तार्थे सप्तमी "निमित्तमात्रे सप्तमी मन्तव्या" इति कालापचन्द्र: । अपरां कल्कसाध्यां यवागूमिति तदर्थ: । यवाग्वस्ताश्चेति । ता: पूर्व्वोक्ता मण्डाद्यात्मका यवाग्व एवेत्यर्थ:, चकारोऽवधारणार्थ: ; न तु ता:, पृथग्यवाग्वश्चेति वाक्यार्थ: ; चरकादिप्वार्षेष्वायुर्व्वेदतन्त्रेषु क्वचिदपि मण्डादिभ्य: पृथग्यवाग्वा अनभिधानात्, परन्त्वार्षेणापामार्गतण्डुलीये पेयायवाग्वो: पर्य्यायत्वेनोपदेशाच्च । न चैवमभ्युपगते "अन्नं पञ्चगुणे साध्यं विलेपी तु चतुर्गुणे । मण्डश्चतुर्दशगुणे

सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ।
यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥ ३८० ॥
विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ॥ ३८१ ॥
कफपित्तकरी बल्या कृशरानिलनाशिनी ॥ ३८२ ॥
धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः ।
स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः ॥ ३८३ ॥

---

यवागूः षड्गुणेऽम्भसि" इति पृथग्यवागूपाकाभिधायकमायुर्व्वेदवचनमण्डमात्रेणापि विप्रतिपिद्धभवति,तत्र पेयायाः पाकविधेरनुपदेशत एव यवागूशब्दस्य तत्परत्वेनोपलम्भात् नापि च "चतुर्व्विधं भवेद्भक्तं जलदानप्रमाणतः । तत्र भक्तं विलेपी च यवागूः पेयया सह" इति केनचिदुक्तं कथञ्चिद्विरुद्धं भवति, यवागूशब्दस्य सहसैव मण्डपरत्वेनाभ्युपगमात् स हि प्रागुपशुज्यत्वेन विशदं व्याहर्त्तव्योऽपि नेहोपदिश्यते गन्धमात्रेण । अतएव निपुणमतिना वाग्भटेन "मण्डपेयाविलेपीनामोदनस्य च लाघवम्"इत्येवंमात्रमुपदिष्टमित्युपपन्नं भवति मण्डादिभ्यो नान्या यवागूरिति ॥ ३७५—३७८ ॥

स्यादेतत् किं पुनरासां लिङ्गानीत्याह सिक्थकैरित्यादि । सिक्थकैरहितो वस्त्रपूतत्वेन निष्पुलाको भागो मण्डो मण्डरूपा यवागूरित्यर्थः; पिच्छिलो द्रवभाग इति निष्कर्षः । सिक्थसमन्विता यवागूः पेयेति संज्ञाबलादर्थाच्चितं भवति बहुद्रवेति ; बहुसिक्था विरलद्रवा च विलेपीति समन्वयः । विष्टम्भीत्यादि । पयसि संस्कृत ओदनः पायसः, तिलकल्कसाता यवागूः कृशरेति वेदविदो भाषन्ते । धौत इत्यादि । स्विन्नः सम्यक्पक्वः सन् धौतः शीतलजलेन प्रक्षालितः,सुप्रस्रुतो निःशेषेण गालितमण्डश्चेत्यर्थः, तुकारः समुच्चयार्थः, अत्र धौतत्वेनैव प्रस्रुतत्वे लब्धे पुनः सुप्रस्रुत इति विशेषणमेकान्तेन मण्डरहितत्वमाख्यातुम् । "सुधौतप्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः" इत्यात्रेयश्च । स्विन्नः सन् आदौ सुधौतः पश्चात् सुप्रस्रुतश्चेति तदर्थः । विमलो धौततण्डुलजत्वेन सर्व्वथा मल-

अधौतोऽप्रस्रुतोऽखिन्नः शीतश्चाप्योदनो गुरुः ॥ ३८४ ॥
लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ॥ ३८५ ॥
स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः ।
गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः ॥ ३८६ ॥
सुखिन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्हितः ॥ ३८७ ॥
खिन्नं निपीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम् ।
अखिन्नं स्नेहरहितमपीड़ितमतोऽन्यथा ॥ ३८८ ॥
मांसं स्वभावतो वृष्यं स्नेहनं बलवर्द्धनम् ।
स्नेहगोरसधान्याम्ल-फलाम्लकटुकैः सह ।
सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु ॥ ३८९ ॥

---

रहितः, शुष्कतुषकेशादिभिर्विनाकृतः, मनोज्ञो मनःप्रियः, समो दार्व्यादिरहितत्वेन तुल्यरूपः, विशदः शुभ्रोऽपिच्छिलो वा। भृष्टतण्डुलजं पुनर्विशेषयति लघुरित्यादिना। भृष्टस्तण्डुलोऽस्येति भृष्टतण्डुलः ईषद्भृष्टतण्डुलज ओदनोऽधौतोऽप्रस्रुतोऽपि लघ्वादिगुण इत्यर्थः। "भृष्टतण्डुलजं खादं लघु वह्निप्रदीपनम्" इति तन्त्रान्तरञ्च ॥ ३८०—३८५ ॥

स्नेहैरित्यादि। अम्लैरम्लवर्गपरिपठितैर्दाड़िममातुलुङ्गेतरैर्द्रव्यजातैरित्याहुः। क्षीरोपसाधिताः क्षीरसंयुताः। सुखिन्न इत्यादि। ईषद्भृष्ट इत्यन्वयः। "निस्तुषं युक्तिभृष्टञ्च सूप्यं लघु विपच्यते" इति तन्त्रान्तरञ्च। निपीड़ितं निपीड़ितरसम्। मांसमित्यादि। अत्र स्वभावत इति विशेषणं संयोगसंस्कारयत्नयनपेक्षित्वमाख्यातुम्। पुनर्विशिनष्टि स्नेहेत्यादिना। गोरसोऽत्र तक्रं दधि वेति प्रत्येतव्यम्। "गोरसो दधि तक्रञ्च" इति हेमचन्द्रः; न त्वेव क्षीरम्। "शाकाम्लफलपिण्याककुलत्थलवणामिषैः। करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते" इति स्मरणात्। पलं मांसम्

तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ।
विद्यात् पित्तकफोद्रेकि बलमांसाग्निवर्द्धनम् ॥ ३९० ॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ।
रोचनं बलमेधाग्निमांसौजःशुक्रवर्द्धनम् ॥ ३९१ ॥
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ॥ ३९२ ॥
परिशुष्कगुणैर्युक्तं वह्नौ पक्वमतो लघु ।
तदेव शूलिकाप्रोतमङ्गारे परिपाचितम् ।
ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरु पाकतः ॥ ३९३ ॥

---

मित्यनर्थान्तरम् । तदेवेत्यादि । सुरभिद्रव्यसंस्कृतमासन्नपाके प्रक्षिप्तत्वगेलादिसुगन्धिद्रव्यजातम्, उपयोगकाले गोरसस्य दध्नस्तक्रस्य वा दानं प्रक्षेपोऽत्रेति गोरसादानम्, समासे पूर्व्वपददीर्घः, आङ्पूर्व्वस्य दयतेर्निष्पन्नमादानमेव वा शब्दः,दधितक्रमिश्रितमित्येतत् ; तत् हितत्वेनोपदिष्टं चेष्टादिभिः सिद्धं मांसमेव पित्तकफोद्रेकि बलमांसाभिवर्द्धनञ्च विद्यादित्यन्वयः ॥ ३८६—३९०, ॥

परीत्यादि । परिशुष्कं नाम "सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु । जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते," इति सूदशास्त्रोक्तलक्षणम्, स्थिरमिति तत्करोतीति णिचि नेयं स्थिरत्वकृदित्यर्थः । तस्यैवावस्थाविशेषे संज्ञान्तरमवगमयति तदेवेत्यादिना । आदावुल्लुप्तमतिच्छिन्नं पश्चात् पिष्टमित्युल्लुप्तपिष्टं तस्य भावस्तस्मादुल्लुप्तपिष्टत्वात् तत्परिशुष्कं मांसमेव पाचका उल्लुप्तं वदन्तीति शेषः, यथा भगगुदबस्तिप्रदेशदारणात् भगन्दर इति तद्वत् । परिशुष्कगुणैर्युक्तं स्थिरत्वादिगुर्व्वन्तगुणमित्यर्थः । तदुल्लुप्तञ्चेज्ज्वलदङ्गारे पुनः स्विन्नं भवति तर्ह्युल्लुप्ताल्लघूल्लुप्तमेयमित्याह वह्नावित्यादि । अतः उल्लुप्तादित्यर्थः । तदेवेत्यादि । तत् शुद्धं मांसमेव न पुनः परिशुष्कमुल्लुप्तं वेत्येवकारेण नियम्यत इति गम्यते, गुरुतरमित्यनन्तरोक्तेः, न हि

उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ।
परिशुष्कं प्रदग्धञ्च शूल्यं यच्चान्यदीदृशम् ।
मांसं यत् तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु ॥ ३८४ ॥
लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् ।
अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ॥ ३८५ ॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः ।
वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ॥
स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् ।
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ॥
आप्यायनः संहननः शुक्रौजोबलवर्द्धनः ।
स दाड़िमयुतो वृष्यः संस्कृतो दोषनाशनः ॥ ३८६ ॥

---

गुरो: पुनः पाके गुरुतरत्वं सहसा बुद्धिविषयमारोहति । क्षुद्रः शूलं शूलिका, सृगाल्यादिषु द्रष्टव्या, तत्र ग्रथितं शूलिकाप्रोतम्, अङ्गारे ज्वलदङ्गारे परिपाचितं सम्यक् स्वेदितं किञ्चित् गुरुतरमिति सम्बन्धः । पुनर्व्विशिनष्टि प्रदिग्धमिति । प्रदिग्धं घृतादिभिर्लिप्तं सत् तथैव परिपाचितं तन्मांसं पाकतो गुर्व्वित्यर्थः ॥ ३८१—३८३ ॥

उक्तानां, प्रसिद्धत्वादनुक्तानाञ्च केषाञ्चिद्गुणविशेषमुपदिदिक्षति उल्लुप्तमित्यादिना । पिष्टं वटकादि, प्रतप्तं "अङ्गारादिषु यत् पक्वं प्रतप्तं तदुदाहृतम्" इत्याद्युक्तलक्षणम्, कन्दुः स्वेदनीति पर्य्यायौ "तुन्दुर" इत्याख्यायते तत्र स्वेदितं कन्दुपाचितम्, अत्र विशेषयति तन्त्रान्तरम् "पिशितं सौरभैर्लिप्तं कन्दुपक्वं मधुप्रभम् । राजिकाकल्कलिप्तञ्च कन्दुपाचितमुच्यते" इति । प्रदग्धमित्यादिकर्म्मणि क्तः, वह्निना दग्धुमारब्धमित्यर्थः । शूल्यं शूलाकृतं शूलिकाप्रोतमित्येतत् । ईदृशमग्निगुणबहुलं यदन्यदतिकटुत्वादिदोष-

यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् ।
विष्टम्भि दुर्ज्जरं रूक्षं विरसं मारुतावहम् ॥ ३९७ ॥
दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः ॥ ३९८ ॥
मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् ।
पिप्पलीशुण्ठिमरिच-गुड़सर्पिःसमन्वितम् ।
एकत्र पाचयेत् सम्यग्वेशवार इति स्मृतः ॥
वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः ।
प्रीणनः सर्व्वधातूनां विशेषान्मुखशोषिणाम् ॥ ३९९ ॥
क्षुत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः ।
कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि ॥ ४०० ॥
ज्ञेयः पथ्यतमश्चाऽपि मुद्गयूषः कृतोऽकृतः ॥ ४०१ ॥
स तु दाड़िममृद्वीकायुक्तः स्याद्रागषाड़वः ॥ ४०२ ॥
रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत् ।
मसूरमुद्गगोधूम-कुलत्थलवणैः कृतः ॥ ४०३ ॥

---

दूषितं,यच्च तैलसिद्धं तैलपक्कं तत्सर्व्वं वीर्य्योष्णं पित्तकृत् गुरु चेति सम्बन्धः ; तुकारः समुच्चयार्थः। आप्यायन इत्यादि। आप्यायनः शरीरपोषणः, संहननो दृढ़त्वसम्पादनः। संस्कृतो घृतभर्जितः, स मांसरसो दाड़िमयुतः सन् वृष्यो दीपनाशनश्चेति समन्वयः। खानिष्कः शुष्कमांसपिष्टमित्याहुः। क्षुदित्यादि। सौरावः स्वर्थ्यः, रसतः स्वादुर्व्वीर्य्यतश्च शीतलः स्वादुशीतलः, शुद्धानां वमितविरिक्तानामपि दीपनो हृद्य इति सम्बन्धः॥ ३९४—४००॥

ज्ञेय इत्यादि। कृतो लवण-स्नेह-कटुकैः संस्कृतोऽकृतश्चासंस्कृत इति वक्ष्यति परिभाषाविशेषेण। स मुद्गयूषः, मृद्वीका द्राक्षा, रागषाड़व-

कफपित्ताविरोधी स्यादामलव्याधौ च शस्यते ।
मृद्वीकादाड़िमैर्युक्तः स एवोक्तोऽनिलार्द्दिते ।
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥ ४०४ ॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ।
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥ ४०५ ॥
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ।
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥ ४०६ ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ।
तूणीप्रतूणीकासार्शोगुल्मोदावर्त्तनाशनः ॥
दाड़िमामलकैर्यूषो हृद्यः संशमनो लघुः ।
प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित् ॥ ४०७ ॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ४०८ ॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥ ४०९ ॥
सर्व्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्द्धनः ॥ ४१० ॥
खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ॥ ४११ ॥
बल्यः कफानिलौ हन्ति दाड़िमाम्लोऽग्निदीपनः ॥ ४१२ ॥
दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः ॥ ४१३ ॥

---

इति व्यवहारोपयोगिकी संज्ञा। रुचिष्यो रोचिष्णुः, "रुचिभुजिभ्यां किष्यन्" इति किष्यन्। सर्व्वेत्यादि। प्रक्रान्तत्वात् सर्व्वैः पुंस्त्वहरेतरैः क्षुधान्यैः कृत. सर्व्वधान्यकृतः। खलः खड़ इति पर्य्यायौ डलयोरेकत्वात्, तत्रार्थे खड्वा नाम "तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः, सुपक्वं

तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥ ४१४ ॥
खड्डाः खड्डयवाग्वश्च षाड्वाः पानकानि च ।
एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥ ४१५ ॥
अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेह-कटुकैः संयुतं कृतम् ॥ ४१६ ॥
अथ गोरसधान्याम्ल-फलाम्लैरन्वितञ्च यत् ।
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥ ४१७ ॥

---

खड्डयूषोऽयम्" इत्युक्तलक्षणः ; काम्बलिकस्त्वनन्तरं वक्ष्यमाणः ॥ ४०१—४१४ ॥

खड्डा इत्यादि । खड्डाः खड्डयूषाः, बहुवचनमत्र तत्तदुपादानभूतानां तक्रादीनां भागविशेषेणानेकविधत्वादित्यनुसन्धेयम् । एवमर्वोत्तरत्रापि द्रष्टव्यम् । खड्डयूषसिद्धा यवाग्वः खड्डयवाग्वः । षाड्वा नाम "स्पष्टाम्लमधुराऽस्पष्टकषायलवणोषणाः । शतिक्ताः षाड्वाः कोलकुलत्थवदरैः कृताः" इत्युक्तलक्षणाः । पानकानि शर्करानिक्षुरसादिकृता द्राक्षाम्रादिकृताश्च पक्वापक्वाः पानीयविशेषाः । अन्यानि सन्धानविशेषेण तैललवणादिषु स्थापितानि जम्बीरकरमर्द्दादीनि, यानि "आचार" इत्यभिधीयन्ते तानीत्यर्थः । एषां वक्ष्यमाणानाञ्च केषाञ्चिदकृतान्नत्वेऽपि प्रसङ्गादिहोपदेशः । सम्प्रति कृताकृतयोः परिभाषामाह अस्नेहेत्यादिना । अतिरोहितार्थमेतत् । सामान्येनोक्तमर्थं पुनर्व्विशिनष्टि अथेत्यादिना । संस्कृतासंस्कृतं कृताकृतं रसं मांसरसम्, अथ गोरसादिभिर्दध्यादिभिरन्वितं चकारात् संस्कृतासंस्कृतञ्च यत्कृतान्नं तत्सर्व्वं यथोत्तरम् अन्वितदध्यादिक्रमेण कृताकृतक्रमेण च लघु हितञ्च विद्यादित्यूह्यम् । अत्र यदिति यदा परामृष्टेन कृतान्नेनैव रसस्याप्युपलम्भेऽपि पृथगुपादानं नितरां तथात्वे गुरुत्वलघुत्वमाख्यातुमिति गम्यते, प्रायेण रुक्प्रतीकारविधौ कृतरसस्यानुपयोग-

दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः ॥ ४१८ ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ।
सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च ॥ ४१९ ॥
तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च ॥ ४२० ॥
लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ।
तृष्णामूर्च्छाभ्रमच्छर्द्दि-श्रमघ्ना रागषाड़वाः ॥ ४२१ ॥
रसाला बृंहणी वल्या स्निग्धा वृष्या च रोचनी ॥ ४२२ ॥
स्नेहनं गुड़संयुक्तं हृद्यं दध्यनिलापहम् ॥ ४२३ ॥
शक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ।
नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ॥ ४२४ ॥
मन्थः सद्योबलकरः पिपासाश्रमनाशनः ॥ ४२५ ॥
साम्लस्नेहगुड़ो मूत्रकृच्छ्रोदावर्त्तनाशनः ।
शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥ ४२६ ॥

---

दर्शनात्, यत्त्वस्मिन्नर्थे आत्रेयेण "अकृतं कृतयूषञ्च तनुसंस्कारिकं रसम् । यूषमम्लमनम्लञ्च गुरु विद्याद्यथोत्तरम्" इति रसयूषमात्रमधिकृतं तदनयोः प्रायोपयोगित्वादित्यनुसन्धेयम् । अत्र गुर्व्वीति यूषशब्दस्य नपुंसकत्वात्तानुपपन्नम्, यूषः्चमसचित्रासौ इत्यमरः ॥ ४१५—४१७ ॥

सम्प्रत्यवसरवशात् प्रागुक्तं काम्बलिकं परिभाषातो निरूपयति दधीत्यादिना । तिलविकृतिस्तिललड्डुकादिः, पिण्याकविकृतिः पिण्याकपिष्टकादिः, विरूढ़कमङ्कुरितं मुद्गादि । सिण्डाकी तु व्याहृता प्रागेव, सा चेह प्रकृतत्वात् पक्वत्वेन विशिष्यत इति न पौनरुक्त्यम् । रसाला नाम "अर्द्धाढ़कः सुचिरपर्य्युषितस्य दध्नः, खण्डस्य षोड़शपलानि शशिप्रभस्य । सर्पिः-

द्राक्षामधूकसंयुक्ताः कफरोगनिवर्हणाः ॥ ४२७ ॥
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥ ४२८ ॥
गौड़मम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ४२९ ॥
तदेव खण्डमृद्वीका-शर्करासहितं पुनः ।
साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥ ४३० ॥
मार्द्वीकन्तु श्रमहरं मूर्च्छादाहतृषापहम् ॥ ४३१ ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ४३२ ॥
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राश्च सर्व्वतः ।
पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ४३३ ॥

इति कृतान्नवर्गः ।

वक्ष्याम्यतः परं भक्ष्यान् रसवीर्य्यविपाकतः ॥ ४३४ ॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ।
अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥ ४३५ ॥

---

पलं मधुपलं मरिचं द्विकर्षम्, शुण्ठ्याः पलार्द्धमपि चार्द्धपलं विड़स्य ॥ सूक्ष्मे घटे सुविमले मृदु पाणिघृष्टा, कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरसा रसाला" इत्याद्युक्तलक्षणा । वर्गेत्यादि । वर्गत्रयेण साम्लेत्यादिनोक्तेन वर्गत्रितयेनोपहितो युक्तः मन्थ इति सम्बन्धः । मल-दोषानुलोमनो मलमूत्रनिःसारणः । सतीक्ष्णं मरिचादितीक्ष्णद्रव्योपहितं सहिमं सकर्पूरम् । अनुक्तमर्थमुपसंग्रहीतुमाह द्रव्येत्यादि । परिशिष्टं निगदव्याख्यातम् ॥ ४१८—४३३ ॥

अत्रो प्रच्युताः स्मः पदवीतः प्रासङ्गिकद्रव्यगुणविवेकेन, तिष्ठत्विदानीं पुनस्तामेव प्रतिपित्सितमर्थं प्रवर्त्तयिष्याम इत्येव मन्वानो भगवान् शिष्या-नुद्बोधयन् पुनः प्रतिजानीते वक्ष्यामीत्यादिना । भक्ष्या अपूपाद्याः । अदा-

तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ।
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥ ४३६ ॥
वृंहणा गौड़िका भक्ष्या गुरवोऽनिलनाशनाः ।
अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः ॥ ४३७ ॥
मधुमस्तकसंयावाः पूपा ह्येते विशेषतः ।
गुरवो वृंहणाश्चैव मोदकास्तु सुदुर्ज्जराः ॥ ४३८ ॥
रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः ।
गुरुर्मृष्टतमश्चैव सट्टकः प्राणवर्द्धनः ॥ ४३९ ॥
हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः ।
वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः ॥ ४४० ॥

---

हिन ईषद्विदाहमञ्जनना: । घृतपूरो नाम "समितां मर्हितां चीरनारि-केलगुड़ादिभिः । अवगाह्य घृते पक्को घृतपूरोऽयमुच्यते" इत्युक्तलक्षणः पिष्टकभेदः । समिता गोधूमचूर्णम् । गुड़ेन संसृष्टाः पूपा गौड़िकाः । मधु-मस्तकसंयावौ नाम "मधुतैलघृतैर्मध्ये वेष्टिताः समिताश्च याः । मधु-मस्तकमुद्दिष्टं तस्याख्या परिमार्ज्जनम्," तथा "संयावस्तु घृतचीरगुड़गोधूम-यावजः" इत्युक्तलक्षणौ द्वौ पिष्टकभेदौ । मोदकाः प्रसिद्धाः । एषु बहुवचनं तत्तदुपादानद्रव्याणां भागतारतम्येनानेकविधत्वान्नानुपपन्नम्; एवमुत्तरत्रापि व्याख्येयम् ॥ ४३४—४३८ ॥

रोचन इत्यादि । सट्टको नाम "लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् । पक्वं दाड़िमसंयुक्तं चन्द्रचूर्णावचूर्णितम् । सट्टकं पाचका प्राहुः" इत्युक्तलक्षणो भक्ष्यभेदः । चन्द्रः कर्पूरः । मृष्टतमो विशेषेण वस्त्र-पूतश्चेत् तर्हि प्राणवर्द्धनः, "शोधितं मृष्टम्" इत्यमरः । विष्यन्दनो नाम "आमगोधूमचूर्णञ्च सर्पिःक्षीरसमन्वितम् । नातिसान्द्रं नातिघनं विष्यन्दो

बृंहणा वातपित्तघ्ना भक्ष्या वल्यास्तु सामिताः।
हृद्याः मध्यतमास्तेषां लघवः फेनकादयः॥ ४४१॥
मुद्गादिवेशवाराणां पूर्णा विष्टम्भिनो मताः।
वेशवारैः सपिशितैः सम्पूर्णा गुरुबृंहणाः॥ ४४२॥
पालला: श्लेष्मजननाः शष्कुल्यः कफपित्तलाः॥ ४४३॥
वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः।
विदाहिनो नातिबला गुरवश्च विशेषतः॥ ४४४॥
वैदला लघवो भक्ष्या कषायाः सृष्टमारुताः।
विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्च्चसः॥ ४४५॥

---

नाम नामतः" इत्युक्तलक्षणः। आमान्नविशेषस्यापि विष्यन्दनस्येहोपदेशो गौड़ादिगुणसाम्यादित्यनुसन्धेयम्। बृंहणा इत्यादि। समिता गोधूमचूर्णम्, तत्कृताः पूपाः सामिताः। फेनकं नाम "विमर्द्य विमलां श्लक्ष्णां समितां नातिशर्कराम्। निर्म्माय पूपिकां सम्यक् खरपाकं घृते पचेत्। पिष्टकं फेनकं नाम फेनवत् शशिसन्निभम्" इत्युक्तलक्षणं—पिष्टकभेदः "ताराखाजा" इत्यभिधीयते। आदिग्रहणात् घृतभृष्टतनुसामितपिष्टादीनामादेशः। मुद्गादिवेशवाराणामिति, करणेऽन्यतरस्यां षष्ठी "करणे पूरणृस्यर्थयोः" इति श्रीपतिः। पूर्णाः प्रपूरितगर्भाः. फेनकादय इति सम्बन्धः। मुद्गादिवेशवाराश्च "एवं खिन्नञ्च पिष्टञ्च मुद्गादि चेद्गुड़ान्वितम्। कणोषणघृतैर्युक्तं वेशवारः स चापरः" इत्युक्तलक्षणाः। एतेनैव वेशवारैरित्याद्यपि व्याख्यातप्रायम्। सपिशिताः वेशवाराः "मांसं निरस्थि" इत्यादिना इहैव प्रागुपदिष्टाः॥ ४३९—४४२॥

पालला इत्यादि। पललं तिलचूर्णम् "पललं तिलचूर्णे च" इति मेदिनी, तत्कृता इति पाललाः, शष्कुल्योऽपूपविशेषाः "पुली" इत्यभिधीयन्ते। पिष्टकं तण्डुलचूर्णम्, तत्र भवाः पैष्टिकाः। वैदलाः कलायादिकृताः।

वल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥ ४४६ ॥
कूर्च्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः ॥ ४४७ ॥
विरूढ़ककृता भक्ष्या गुरवोऽनिलपित्तलाः ।
विदाह्युत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः ॥ ४४८ ॥
हृद्याः सुगन्धिनो वृष्या लघवो घृतपाचिताः ।
वातपित्तहरा वल्या वर्णदृष्टिप्रसादनाः ॥ ४४९ ॥
विदाहिनस्तैलकृता गुरवः कटुपाकिनः ।
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥ ४५० ॥
फलमांसेक्षुविकृति-तिलमाषोपसंस्कृताः ।
भक्ष्या वल्यास्तु गुरवो वृंहणा हृदयप्रियाः ॥ ४५१ ॥
कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ।
सुपक्वास्तनवश्चापि भूयिष्ठं लघवो मताः ॥ ४५२ ॥
सकिलाटादयो भक्ष्या गुरवः कफवर्द्धनाः ॥ ४५३ ॥

---

स्पष्टमारुताः बहुवाताः "स्पष्टो निश्चिते बहुनि" इत्यमरः । पित्तसमा इत्यनेन पित्तवर्द्धकत्वं सूचितं भवति "सामान्यं वृद्धिकारणम्" इति न्यायात्; तैलभृष्टविषयमेतदित्युन्नेयम्, कूर्च्चिका चीरविकृतिः "चीरसा" इत्याख्यायते, सा विकृता अनेति कूर्च्चिकाविकृताः "वाहिताग्न्यादिषु" इति परनिपातः, कूर्च्चिकाविकारजाता इत्यर्थः । विरूढ़ककृता अङ्कुरितमुद्गादिकृताः । कपालः खर्परः, अङ्गारस्तु ज्वलदङ्गारस्तत्र पक्वाः कपालाङ्गारपक्वा भक्ष्या इति सम्बन्धः । किलाटो नाम "नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः" इत्युक्तलक्षणः । आदिग्रहणादामिक्षातक्रकूर्च्चिकादीनामादेशः, तैः सह वर्त्तमानाः सकिलाटादयः, शर्कराकिलाटादियोगेन कृता इति

कुल्माषा वातला रूक्षा गुरवो भिन्नवर्च्चसः ॥ ४५४ ॥
उदावर्त्तहरो वाट्यः कासपीनसमेहनुत् ॥ ४५५ ॥
धानोलुम्बास्तु लघवः कफमेदोविशोषणाः ॥ ४५६ ॥
शक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ।
पीताः सद्यो बलकरा भेदिनः पवनापहाः ॥ ४५७ ॥
गुर्व्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ४५८ ॥
लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥ ४५९ ॥
बल्याः कषायमधुरा लघवस्तृड्मलापहाः ॥ ४६० ॥
तृट्छर्द्दिदाहघर्म्मार्त्तिनुदस्तच्छक्तवो मताः ।
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४६१ ॥
पृथुका गुरवः स्निग्धा बृंहणाः कफवर्द्धनाः ।
बल्याः सक्षीरभावात् तु वातघ्ना भिन्नवर्च्चसः ॥ ४६२ ॥
सुदुर्ज्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥ ४६३ ॥

---

-भिन्नवर्चः । कुल्माषा नाम "अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । कुल्माषा इति कथ्यन्ते" इत्युक्तलक्षणाः । भृष्टयवकृतो भक्ष्यो वाट्यः । धाना भृष्टयवाः, उलुम्बा अग्निपक्वाः कलायादिशिम्बाः । शक्तवस्तु भृष्टयवचूर्णानि ॥ ४४२—४५७ ॥

गुर्व्वीत्यादि । शक्तूनामत्यर्थं खरा कठिना पिण्डी पिण्डिका गुर्व्वी, सैव विपर्य्ययात् नातिखरत्वात् लघ्वी, अवलेहिकेति "संज्ञायाम्" इति क्वुन् अवलेह इत्यर्थः, सा तु मृदुत्वादाशु जीर्य्यतीत्यन्वयः । पृथुकाश्चिपि-

सन्धानकृच्छ्लेष्महरः पुराणस्तण्डुलः स्मृतः ॥ ४६४ ॥
यदा कारणमासाद्य भोक्तॄणां छन्दतोऽपि वा ।
भक्ष्यादयः प्रकल्प्याः स्युस्तदा सुनिपुणो भिषक् ॥
द्रव्य-संयोग-संस्कार-विकारान् समवेक्ष्य तु ।
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्द्दिशेत् ॥ ४६५ ॥
अतः सर्व्वाण्यनुपानान्युपदेक्ष्यामः ॥ ४६६ ॥

अम्लेन केचिद्विहता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति ।
तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥४६७॥

---

टकाः । सचीरभावात् चीरयोगादित्यर्थः । सन्धानकृद्भग्नास्थिसंयोजनः । अनुक्तमर्थमुपसंग्रहीतुमिदमुच्यते यदेत्यादि । अपिवेति निपातसमुदायोऽव्ययं पचान्तरद्योतनार्थौ यद्युवेतिवत् । तदयमर्थः यदा कारणं रुक्प्रतीकाररूपं निमित्तमासाद्य प्राप्य, भोक्तॄणां छन्दतोऽभिलाषतो वा भक्ष्यादयः प्रकल्प्याः स्युस्तदा अनेकद्रव्ययोनित्वात् भक्ष्यादीनामिति शेषः, शास्त्रतः "मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्" इत्यादिशास्त्रद्वारेण द्रव्यसंयोगसंस्कारविकारान् द्रव्याणि तत्संयोगादींश्च समवेक्ष्य गुणकर्म्मतो यथावद्विमृश्य निर्द्दिशेत् गुणत उपदिशेदित्यर्थः । इदमत्रावधेयम्, अनेकान्यपि द्रव्याणि स्वतः संयोगादितश्चासाधारणानि कर्म्माण्यारभन्ते यानि पुनर्नैकशः, तदिदमुपपन्नं भवति अनेकेत्यादि । न चैतदश्रद्धेयम्, दृश्यते हि मानतस्तुल्ये मधुसर्पिषी, यथाकथञ्चित्पयसा संयुक्ता वल्लीफलादयः, कांस्यभाजने दशरात्रं पर्य्युषितत्वेन संस्कृतं सर्पिः, आहितास्त्वत्वेन दधिभावमागतं चीरञ्च यथास्वं प्रकृतेः कर्म्मगुणानि हित्वाऽऽरभन्त एकान्तेनाचिन्त्यानीति ॥ ४५८—४६५ ॥

अत्राम्नायते हि "दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा । यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति" इति, तदिदं कृतान्नोपदेशादनन्तरं

शीतोष्णतोयासवमद्ययूष-फलाम्लधान्याम्लपयोरसानाम् ।
यस्यानुपानन्तु हितं भवेद्यत्तस्मै प्रदेयन्त्विह मात्रया तत् ॥४६८॥

व्याधिञ्च कालञ्च विभाव्य धीरै-
र्द्रव्याणि भोज्यानि च तानि तानि ॥ ४६९ ॥

सर्व्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम् ।
लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्व्वरसाश्च दृष्टाः॥४७०॥

सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतःपरं विस्तरतो विधास्ये ॥४७१॥

उष्णोदकानुपानन्तु स्नेहानामथ शस्यते ।
ऋते भल्लातकस्नेहात् स्नेहात् तौवरकात् तथा ॥ ४७२ ॥

---

व्याधिव्यासितत्वेनोपस्थितमनुपानजातं व्याकर्त्तुं प्रतिजानीते अत इत्यादिना। आहारमनु लक्षीकृत्य पीयन्ते यानि तान्यनुपानानि। अम्लेनेत्यादि। विहता उद्वेजिताः, माधुर्य्ययोगे मधुररसोपयोगविषये, प्रणयीभवन्त्यभिलाषिणो भवन्तीत्यर्थः। मधुरेण त्वसा मधुरेणोद्वेजिततया वीताभिलाषा इत्यर्थः; तेषामम्लविहतानां मधुरत्वमानाञ्च यथेष्टं यथेप्सितं मधुरमम्लञ्चेत्येतत्पथ्यमनुपानं प्रवदन्तीत्यन्वयः। अर्थान्तरमवतारयति शीतेत्यादिना। शीतोष्णतोयादीनां मध्ये यदनुपानं यस्य हितं सात्म्यत्वेन युक्तं भवेत्तत्तु तस्मै इहानुपानाधिकारे मात्रया प्रदेयमिति प्रवदन्तीति पूर्व्वेणान्वयः। पुनरप्यर्थान्तरमुपन्यस्यति व्याधिमित्यादिना। तानि तानि द्रव्याणि भोज्यान्यनुपानत्वेन योज्यानि चेत्यर्थः। सर्व्वेत्यादि। मेध्यं पवित्रं निर्द्दोषमित्येतत्, कुतस्तु खल्वविशेषेण सर्व्वत्रेदमुपयुज्यत इत्यत आह लोकस्येत्यादि। च हेतौ, यस्मादेवम्भूतमम्भस्तस्मात् सर्व्वत्रोपयुज्यत इति भावः। नन्वयमसावतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्पते तदिदमुच्यते अत इत्यादि ॥ ४६६—४७१ ॥

उष्णोदकेत्यादि। भल्लातकतौवरकस्नेहयोरनुपानत्वशङ्कादिचिकि-

अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिके ॥ ४७३ ॥
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्व्वशः ।
दधिपायसमद्यार्त्ति-विषजुष्टे तथैव च ॥ ४७४ ॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ४७५ ॥
पयो मांसरसो वापि शालिमुद्गादिभोजिनाम् ।
युद्धाध्वातपसन्ताप-विषमद्यरुजासु च ॥ ४७६ ॥
माषादेरनुपानन्तु धान्याम्लं दधिमस्तु वा ॥ ४७७ ॥
मद्यं मद्योचितानान्तु सर्व्वमांसेषु पूजितम् ॥ ४७८ ॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥ ४७९ ॥
क्षीरं घर्म्माध्वभाष्यस्त्री-क्लान्तानाममृतोपमम् ॥ ४८० ॥
सुरा कृशानां स्थूलानामनुपानं मधूदकम् ॥ ४८१ ॥
निरामयाणां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम् ॥ ४८२ ॥
स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते ।
अनुपानं हितञ्चापि पित्ते मधुरशीतलम् ॥ ४८३ ॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥ ४८४ ॥

---

त्विति स्वयमेव निवेदयिष्यत इत्यतस्तौ प्रति नेह किञ्चिदुपदिश्यते। युद्धेत्यादि। अध्वा अध्वगमनम्, सन्तापोऽग्नितापः, अत्र चकारेण पयो-मांसरसो वेत्यनुकृष्यते। क्षीरमित्यादि। घर्म्म आतपः, भाष्यमुच्चैर्भाषणं शोकादि। इतः पूर्व्वं पयो मांसरसो वेत्यादिनोक्तानुपानयोरपि घर्म्माध्व-क्लान्तयोः पुनरिहोपदेशस्तौ प्रति मांसात् क्षीरस्य प्रशस्यतरत्वमाख्यातुम्। समांशेन मधुना मिश्रमुदकं मधूदकम्। निरामयाणामनातुराणाम्। चित्रं स्वास्थ्यानुगुणत्वात् स्निग्धरूक्षोष्णमधुरशीतलमुक्तं वक्ष्यमाणञ्च सर्व्वमित्ये-

अर्कशेलुशिरीषाणामासवास्तु विषार्त्तिषु ॥ ४८५ ॥
अतः परन्तु वर्गाणामनुपानं पृथक् पृथक् ।
प्रवक्ष्याम्यानुपूर्व्व्येण सर्व्वेषामेव मे शृणु ॥ ४८६ ॥

तत्र पूर्व्वशस्यजातीनां वदराम्लं वैदलानां धान्याम्लम् । जाङ्गलानां धन्वजानाञ्च पिप्पल्यासवः । विष्किराणां कोलवदरासवः । प्रतुदानां क्षीरवृक्षासवः । गुहाशयानां खर्ज्जूरनारिकेलासवः । प्रसहानामश्वगन्धासवः । पर्णमृगाणां कृष्णगन्धासवः । अनेकशफानां खदिरासवः । कूलचराणां शृङ्गाटककशेरुकासवः । कोशवासिनां पादिनाञ्च स एव । प्लवानामिक्षुरसासवः । नादेयानां मृणालासवः । सामुद्राणां मातुलुङ्गासवः । अम्लानां फलानां पद्मोत्पलकन्दासवः । कषायाणां दाड़िमवेत्रासवः । मधुराणां त्रिकटुकयुक्तः कन्दासवः । तालफलादीनां धान्याम्लम् । कटुकानां दूर्व्वानल-

---

तत् । भक्तमध्ये मध्याहारे, विशेषणमिदं स्वास्थ्यानुवृत्तेरेवोपात्तम्, वक्ष्यति हि "स्थापयेन्मध्यसेवितम्" इति । अर्कोत्यादि । शेलुर्नाम "लोना" इत्याख्यायते । न खलु प्रागुक्तं पयो मांसरस एव वा विषार्त्तिषूपयुज्यते अपि तु अर्काद्यासवा अपीति तुकारार्थः । अत इत्यादि । वर्गाणां शाल्यादीनाम् ॥ ४७२—४८६ ॥

तत्रेत्यादि । पूर्व्वशस्यजातीनां पूर्व्वशस्यसामान्यानां शालिवर्गपरिपठितानामिति निष्कर्षः, पूर्व्वशब्दस्य कुधान्यवर्गव्यावृत्त्यर्थत्वात् । वैदलानां कलायादियूषाणाम् । धन्वजानां मरुदेशजानां मृगाणाम् । क्षीरवृक्षाः न्यग्रोधाः । कृष्णगन्धा शोभाञ्जनः । फलानि दाड़िमादीनि

तदादौ कर्शयेत् पीतं स्थापयेन्मध्यसेवितम् ।
पश्चात् पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥ ४९२ ॥
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ।
भवत्याबाधजननमनुपानमतः पिबेत् ॥ ४९३ ॥
न पिबेच्छ्वासकासार्त्तो रोगी चाप्यूर्द्ध्वजत्रुगे ।
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥ ४९४ ॥
पीत्वाध्वभाष्याध्ययन-गेयस्वप्नान् न शीलयेत् ॥ ४९५ ॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ।
स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद्बहून् ॥ ४९६ ॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्त्तते ।
तथा संस्कारमात्रां न कालांश्चाप्युत्तरोत्तरम् ॥ ४९७ ॥

---

र्व्विशिनष्टि तदित्यादिना। आदाविति भोजनस्यैव। मध्यसेवितं भोजनमध्ये पीतं, स्थापयेदिति तिष्ठतेर्गतिनिवृत्त्यर्थत्वात् न कर्शयति नापि च बृंहयत्यपि तु समत्वेनानुवर्त्तयेदिति निष्कर्षः। प्रसेकी आस्यस्रावी। स्यन्दोऽभिष्यन्दो नेत्ररोगभेद इति यावत्। श्रुतमेतद्भगवतोक्तमनुपानाधिकारे वाक्यजातमिदानीन्त्विदमेव तावदुपदेष्टव्यम्, कथं नु खलु क्वचिद्गुरुत्वेनोपदिष्टान्यपि द्रव्याणि निर्व्विकारं जरां गच्छन्त्येकान्तेन नापिच क्वचिल्लघुत्वेनोपदिष्टान्यपीत्यत आह गुर्व्वित्यादि। स्वभावं नैसर्गिकीं गुर्व्वाद्याहारसात्म्यताम्, नातिवर्त्तते नातिक्रामति, तथा संस्कारमात्रां संस्कारसहितां मात्रां संस्कारं मात्राञ्चेत्यर्थः, उत्तरोत्तरं कालान् वयोऽवस्थाविशेषांश्च न अतिवर्त्तत इति क्रियापदमनुकृष्यान्वयः। एतेनैतदुक्तं भवति गुरुत्वेन लघुत्वेन चोक्तानि द्रव्याणि सात्म्यादितो लघुत्वेन गुरुत्वेन च प्रतिभान्तीति, अतएवात्रेयेणाप्युक्तम् "गुरूणां लाघवं विद्यात् संस्कारात्

मन्दकर्म्मानलारोग्याः सुकुमाराः सुखोचिताः ।
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्तिता ॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ।
कर्म्मनित्याश्च ये तेषां नावश्यं परिकीर्त्त्यते ॥ ४९८ ॥

इति सर्व्वानुपानवर्गः ।

अथाहारविधिं वत्स विस्तरेणाखिलं शृणु ॥ ४९९ ॥
आप्तान्वितमसङ्कीर्णं शुचि कार्य्यं महानसम् ॥ ५०० ॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् ।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ५०१ ॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ।
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ५०२ ॥

---

सविपर्य्ययम् । व्रीहेर्लाजा यथा च स्युः शक्तूनां सिद्धपिण्डिकाः" इत्यादि। एतदेव सङ्क्षेपेण स्फोरयन्नाह मन्देत्यादि । अतिरोहितार्थमेतत् ॥४८८-४९८॥

न ह्यञ्जसा विधिमन्तरेणोपयुक्तान्याहारद्रव्याण्युक्तेन विधिना रसवीर्य्यादिविशेषतो विज्ञातान्यपि बलवर्णसुखायुषा योजयन्त्युपयोक्तारमितीदानीमाहारविधिमधिकरोति अथेत्यादिना। अथेत्ययमानन्तर्य्यार्थः। विधिः क्रम इति पर्य्यायौ । न खल्वविशुद्धेऽनाप्तसङ्कीर्णत्वादिदोषदुष्टे वा देशे संस्कृतान्यन्नान्येकान्तेन विशुद्धानि भवन्तीति वक्तुं युक्तम्, नापि चापातलतो विशुद्धत्वेनानुभूतान्यसंशयं विशुद्धानीतिमन्वानो भगवान् प्रथमं तावदुपोद्घातसङ्गत्या किञ्चिदुपदिदिक्षति आप्तेत्यादिना। आप्ता विश्वस्ताः, असङ्कीर्णमनल्पावकाशं, महानसम्पाकस्थानम्, सुसंगुप्तं सुरक्षितं सर्व्वथा श्वपचादिप्रवेशानर्हमित्येतत् । अत्र विषघ्नैरगदैः स्पृष्टमित्यादिविशेषणं सर्व्वथा विषदुष्टिशङ्कानिरासार्थम्। व्यजनं तालवृन्तं, तदपि विषघ्नभेषजो-

वक्ष्याम्यतः परं कृत्स्नमाहारस्योपकल्पनाम् ।
घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥
फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
कट्वराणि खड़ांश्चैव सर्व्वान् शैलेषु दापयेत् ॥
दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः ।
पानीयं पानकं मद्यं मृन्मयेषु प्रदापयेत् ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ।
दद्याद्वैदूर्य्यपात्रेषु रागषाड़वसट्टकान् ॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥
फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥

---

दर्के: सिक्तमेवेति लक्षणीयं दुन्दुभिस्वनीये वक्ष्यमाणविधिसाहचर्य्यात् । भक्तं सिद्धं निवेदयेत् समर्पयेत् ॥ ४८८—५०२ ॥

सम्प्रति समुपस्थापयेदिति सामान्येनोक्तमर्थं सम्प्रधार्य्य यथाकथञ्चित् समुपस्थापनं कार्य्यमित्येवं कृतनिश्चयानां शिष्याणां मनांस्याक्षेप्तुं पुनः प्रतिजानीते वक्ष्यामीति । उप समीपे रचना उपकल्पना, कल्पना रचना विन्यासश्चेति पर्य्यायाः । कार्ष्णायसे कृष्णलौहमये चेत्यर्थः । वैदलानि "डाला" इत्येवं समाख्यातानि वंशादिरचितानि डल्लकादीनि । कट्वराणीति बहुवचनं "सौवीराम्लं तथाऽत्यम्लं काञ्जिकं कट्वरं विदुः" इति

प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खड़ान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥
सर्व्वान् गुड़विकारांश्च रागषाड़वसट्टकान् ।
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ५०३ ॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ।
भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ ।
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् ॥ ५०४ ॥
विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ।
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥ ५०५ ॥
पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ।
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥ ५०६ ॥
आदौ फलानि भुञ्जीत दाड़िमादीनि बुद्धिमान् ।
ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ।
घनं पूर्व्वं समश्नीयात् केचिदाहुर्विपर्य्ययम् ॥ ५०७ ॥
आदावन्ते च मध्ये च भोजनस्य तु शस्यते ।
निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ५०८ ॥
मृणालविसशालूक-कन्देक्षुप्रभृतीनि च ।
पूर्व्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥ ५०९ ॥

---

पारिभाषिकशब्दरमादातुमित्यवधेयम् । वैदूर्य्यं विड़ालनेत्राभो मणि-भेदः । प्रदेहान् "चाटनी" इति प्रसिद्धान् लेहान् । प्रत्यग्रं सद्यस्कम् ॥ ५०३—५०६ ॥

सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ।
काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम् ।
बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः ॥ ५१० ॥
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते ।
लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥
क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ।
सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च ॥ ५११ ॥
अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ।
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥ ५१२ ॥
येषु चापि भवेयुश्च दिवसा भृशमायताः ।
तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥ ५१३ ॥
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ।
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥ ५१४ ॥

---

प्रकृतमाहारक्रममुपदिदिक्षति पूर्व्वमित्यादिना । अन्नतत्परोऽन्नपरायणः, एतेन जल्पनादीनि व्यवच्छिद्यन्त इति गम्यते "अजल्पन्नहसन् तन्मना भुञ्जीत" इत्यादिस्मरणात् । क्षिप्रं नातिक्षिप्रमित्यर्थः "नातिद्रुतमश्नीयात् तथा नातिविलम्बितमश्नीयात्" इत्यात्रेयानुशासनात् । विदितागमः "गुरूणामर्द्धसौहित्यम्" इत्यादिविदितवेदितव्यः । रजन्य इत्यादि । अत्र समाः प्रायेणेति बोध्यम्, संवत्सरे हि परमार्थतो द्वावेव दिवसौ समौ भवतः । धातुसाम्यमिति धातुशब्देनेह दोषधातुमलानामादेशः, क्रियते शरीरधारकत्वसाम्यात् ॥ ५०७—५१४ ॥

नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ।
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः ।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥
अतीतकाले भुञ्जानो वायुनोपहतेऽनले ।
कृच्छ्राद्विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति ॥
हीनमात्रमसन्तोषं करोति च बलक्षयम् ।
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ ५१५ ॥
तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्ज्जितम् ।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ।
विभज्य कालदोषादीन् कालयोरुभयोरपि ॥ ५१६ ॥
अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्टवत् ।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्ज्जयेत् ॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ।
अशान्तमुपदग्धञ्च तथा स्वादु न लभ्यते ॥ ५१७ ॥
यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम् ॥ ५१८ ॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्म्मुहुः ।
विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्व्ववत् ॥ ५१९ ॥

---

काले सात्म्यमित्यादिना प्रागुक्तेन ग्रन्थेन प्रतिषिद्धत्वेनार्थाच्छिन्नमर्थं पुनर्व्विशदयन्नाह नेत्यादि। अचोक्षमशुचि "चोक्षो गीते शुचौ दक्षे तथा तीक्ष्णमनोज्ञयोः" इति मेदिनी। पाषाणादीनि विद्यन्ते अस्येति पाषाण-

स्वादुना तस्य रसनं प्रथमेनापि तर्पितम् ।
न तथा स्वादयेदन्यत् तस्मात् प्रक्षाल्यमन्तरा ॥ ५२० ॥
सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्य्ययम् ॥ ५२१ ॥
भुक्त्वा च यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥ ५२२ ॥
अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥ ५२३ ॥
दन्तान्तरगतञ्चान्नं शोधनेनाहरेच्छनैः ।
कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ५२४ ॥
जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु ।
भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत् कफम् ॥
धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः ।
पूगकक्कोलकर्पूर-लवङ्गसुमनःफलैः ॥
कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ५२५ ॥

---

तृणलोष्टवत् । द्विष्टं मनःप्रतिघाति । अशान्तमसम्यग्विस्रुतत्वेन न यथावन्निर्द्दोषम् । अपूर्व्ववदाश्चर्य्यवत् ॥ ५१५—५२१ ॥

स्वादुलक्षणमाह भुक्त्वेत्यादि । अशित इत्यादि । अत्र युक्त्येतिपदमुभयत्रैव सम्बध्यते काकाक्षिगोलकन्यायात् । युक्त्या यथा अजीर्णाद्याबाधो न भवति तथा विमृश्येत्यर्थः । भुञ्जानो भक्षयन्नन्तरा भोजनमध्ये चेत्यर्थः । प्रवृद्धो हि कफः सहसैवाग्निमुपशमय्य पश्चाद्बाधमापादयति तदिदमुच्यते तस्मादित्यादि । हरेत् प्रशमयेत्, कथमित्याह धूमेनेत्यादि । अपोह्य वितर्कं परिहृत्य, धूमेन वक्ष्यमाणेन प्रायोगिकेन, हृद्यैरनन्तरोक्तैः

भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ।
ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ॥
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ।
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥
शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः ।
अशुच्यन्नं तथा भुक्तमतिहास्यञ्च वामयेत् ॥
शयनञ्चासनं वापि नेच्छेद्वापि द्रवोत्तरम् ।
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ ५२६ ॥
न चैकरससेवायां प्रसज्येत कदाचन ।
शाकावरान्नभूयिष्ठमम्लञ्च न समाचरेत् ॥
एकैकशः समस्तान् वा नाप्यश्नीयाद्रसान् सदा ।
प्रागभुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥

---

कषायादिभिर्वा । राजवदासीत भद्रासनेनासीतेत्यर्थः "नृपासनं यत्तद्भद्रासनम्" इत्यमरानुशासनात् । भद्रासनन्तु नाम "सीमन्याः पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्चलम् । वृषणाधः पादपार्ष्णी पाणिभ्यां परिबन्धयेत् ॥ भद्रासनं समुद्दिष्टम्" इत्युक्तलक्षणम् । संविशेत् शयीत । अर्थान्तरमवतारयति शयनञ्चेत्यादिना । द्रवोत्तरं द्रवपानात् परमपि अग्न्यातपादीनि शयनादीनि च नेच्छेत्, अपेः समुच्चयार्थत्वात् भोजनात् परमपीत्यर्थः । एतेनार्थाच्चित्रं भवति द्रवपानात् परमपि यावद्द्रवक्लमो गतस्तावद्राजवदासीतेत्यादि ॥ ५२२—५२६ ॥

पुनर्विशिनष्टि नेत्यादिना । शाकं पत्रपुष्पादि, अवरान्नं वेणुयवादि च भूयिष्ठं प्रचुरतरमत्रेति शाकावरान्नभूयिष्ठम्, अम्लञ्चेति तात्पर्य्यादम्लभूयिष्ठमित्यर्थः । पुनरर्थान्तरमुपन्यस्यति एकैकश इत्यादिना । नापि रसान्

पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ।
मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ।
द्विगुणञ्च पिवेत् तोयं सुखं सम्यक् प्रजीर्य्यति ॥ ५२७ ॥
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ५२८ ॥
गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते ॥ ५२९ ॥

---

मधुरादीन् एकैकश एकमेकं कृत्वा, समस्तान् मिलितान् वा सदा अश्नीयात्, अश्नीयात्तु कांश्चित् पृथक् कांश्चित्तु मिलितानेव, यथोक्तं "पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ" इत्यादि । अत्राम्ललवणयोर्मिलितोपयोगो मधुरस्य तु पृथगित्यवधेयम् । अत्र सदेति विशेषणन्तु कदाचित्तथोपयोगस्याकिञ्चित्करत्वमाख्यातुम् । पुनरर्थान्तरमधिकरोति प्रागित्यादिना । तुकारो विशेषणार्थः । प्राग्भुक्ते पूर्व्वं भोजने कृते अग्नौ अविविक्ते अविशुद्धे सति द्वितीयमन्नं हिरसं न समाचरेदश्नीयादित्यर्थः । "विविक्तौ पूतविजनौ" इत्यमरः । एतदेव स्फोरयति पूर्व्वेत्यादिना । मात्रातो गुरुं मात्रागुरुं द्रव्यतस्तु लघुमिति तात्पर्य्यम्, यः पुनस्तण्डुलादिराहारो द्रव्यतो गुरुस्तमपि परिहरेदित्यन्वयः । अत्र पिष्टान्नपदं संस्कारगुरुमात्रमुपलक्षयतीति निर्णीयते "गुरुपिष्टमयं द्रव्यं तण्डुलान् पृथुकानपि । न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः" इति चरकैकवाक्यत्वात् । वाशब्दो नियमार्थः, बुभुक्षित एव मात्रया द्रव्यतो गुरुं पिष्टकादिकञ्च भुञ्जीत न त्वेवाबुभुक्षित इत्यर्थः । पुनर्व्विशिनष्टि द्विगुणञ्चेत्यादिना । वचनमिदमद्रवगुरुविषयमित्यवधेयम्, वक्ष्यति हि "द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते" इति । कुतः पुनर्द्विगुणं तोयं पिवेत् ? आह सुखमित्यादि । प्रजीर्य्यति प्रक्लिन्नत्वादित्यनुसन्धेयम् ॥ ५२७ ॥

द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ।
द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते ॥
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ।
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥ ५३० ॥
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ।
विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥ ५३१ ॥
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ।
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५३२ ॥

---

पेयेत्यादि । सुहितस्य तृप्तस्य भावः सौहित्यम् । द्रवात् क्षीरादेः परो द्रवोत्तरः, द्रवविशेषणमेतत् । शुष्कंन्त्वविशेषाद्गुरु वा लघु वेत्युन्नेयम्, द्रवाढ्यमेव सम्यगुपपद्यते परिणामायेति शेषः, न पुनः द्रवहीनमिति तात्पर्य्यम् । एतदेव स्फोरयन्नाह विशुष्कमिति । पूर्व्वस्मादपिराक्षिप्यते ; अभ्यस्तमप्यन्नं विशुष्कं सत् साधु सम्यक् न पाकं गच्छति द्रवप्राचुर्य्यमन्तरेणेति शेषः । कुतः ? आह पिण्डीत्यादिना । यतः असंक्लिन्नं द्रवाप्रकर्षतो न सम्यक् क्लिन्नतामापन्नमतएव पिण्डीकृतं विदाहं विदग्धतां मनाक् पाकमिति यावत् उपगच्छति प्राप्नोति, तदिदमुपपन्नं भवति न पाकं साधु गच्छतीति भावः । अन्यथा विदग्धपाकं दर्शयति स्रोतसीत्यादिना । अत्र विदाहजनकत्वात् पित्तमपि विदग्धमेव प्रत्येतव्यम्, तदयमर्थः अन्नवहे स्रोतसि आमाशये पक्तौ पित्तधरायां कलायां वा यस्य पित्तं विदग्धं सत् तिष्ठति तस्यापि भुक्तं विदाहि अन्यदविदाहि वा अन्नं विदह्यते इत्यन्वयः । अन्नावहे स्रोतसि पित्तस्यावस्थानं पित्ताशयादुद्गामित्वेनैव लक्षणीयम् । पारिशेष्यात् शुष्कादीनां गुणानभिधत्ते शुष्कमित्यादिना ।

अत्यम्बुपानाद्विषमाशनाद्वा सन्धारणात् स्वप्नविपर्य्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य॥५३३
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीड़ितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥ ५३४ ॥
माधुर्य्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम् ।
किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमाबद्धविरुद्धवातम् ॥ ५३५ ॥
उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य ।
रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५३६ ॥

---

शुष्कं शुष्कशाकादि, विरुद्धं क्षीरमत्स्यादि, विष्टम्भि विरूढ़धान्यादि, वह्नि-व्यापदमग्निवैषम्यादि । कथं नु पुनर्वह्निव्यापदं जानीम इत्यपेक्षायां तस्या अजीर्णानुमेयत्वादजीर्णं विभज्योपदिदिक्षति आममित्यादिना । रसस्य रसवदाहारस्य शेषोऽसम्यक्परिणतत्वेन शिष्टोऽंशो रसशेषस्ततो रसशेषतः ॥ ५२८—५३२ ॥

किन्नु खलु भगवन्नेतावानेवाजीर्णे हेतुरित्यत आह अतीत्यादि । विषमाशनं परमतो निवेदयिष्यते स्वयमेव, सन्धारणं मूत्रपुरीषादीनां सन्निरोधः, स्वप्नविपर्य्ययो दिवास्वप्नादिः, लघु चापीत्यपिना स्निग्धोष्णादीनां समुच्चयः क्रियते । ईर्ष्या परोत्कर्षासहिष्णुता, ईर्ष्यादिभिः परिपीड़ित-ईर्ष्याभयक्रोधपरिक्षतः । दैन्यं दुःखं शोकादि । वाग्भटेनोपदिष्टान्या-मादीनि लक्षणतो निरूपयति माधुर्य्यमित्यादिना । माधुर्य्यं मधुरभावं गतमन्नम् आमसंज्ञम्, अम्लभावं गतं विदग्धसंज्ञम्, किञ्चिद्विपक्वादिलिङ्गं विष्टब्धं विष्टब्धसंज्ञम्, अस्य विशेषणमाबद्धेत्यादि । वैगुण्यादधःप्रतिबद्धः प्रतिलोमेन प्रहृतश्च वातोऽस्येति आबद्धविरुद्धवातम् । सप्रसेकं सास्य-स्रवणम् ॥ ५३३—५३६ ॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः।
उपद्रवा भवन्त्येते मरणं वाप्यजीर्णतः ॥ ५३७ ॥
तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम्।
विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥ ५३८ ॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना।
कार्य्यश्चानशनं तावद्यावन्न प्रकृतिं भजेत् ॥ ५३९ ॥
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत्।
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ ५४० ॥

---

मूर्च्छेत्यादि। मरणं वाऽप्यजीर्णत इत्यतिप्रवृद्धाजीर्णविषयम्। आम्ना-म्नायते हि "स्वल्पे गदे महत्कार्य्यं क्रिया लघ्वी महागदे। द्वयमेतदयुक्तं स्यादयुक्तान्तु स्यादतोऽन्यथा" इति, तदिदं विभज्योपदेष्टुं दुर्व्वलमासादित-मधिकृत्याभिधत्ते तत्रेत्यादि। वचनस्यास्यावलाजीर्णविषयत्वमनन्तरोक्तस्य वलवद्विषयत्वादेवाध्यवसितव्यम्। रसशेषे रसशेषाजीर्णे, चकारादामादिषु च शयीतासुक्तवान् मुहूर्त्तमित्येवेत्युपदेष्टव्यम् गर्भव्याकरणं नाम शारीरं वाग्भटवचनञ्चानुसन्धाय। स्यादेतत् किं पुनर्वलवत्स्वामादिषूपदिशन्त्या-चार्य्या इत्यत आह वामयेदिति। तस्मात् वलप्रकर्षतो मूर्च्छादि-भयात्, तं रसशेषातुरमामाद्यातुरञ्च उष्णेन लवणाम्बुना आश्वेव वामये-दित्यर्थः, सर्व्वं वाक्यं सावधारणमिति न्यायात्। अतएव निपुणमतिना वाग्भटेनाप्युक्तम् "लङ्घनं कार्य्यमामे तु विष्टब्धे स्वेदनं हितम्। विदग्धे वमनं यद्वा यथावस्थं हितं भवेत्" इति; अत्र यथावस्थमिति विशेषणं तत्तदवस्थाविशेषात् लङ्घनादिषु मध्ये यद्यस्मै हितत्वेन प्रतीतं भवति तत्तस्मै देयमित्याख्यातुम्। कार्य्यश्चानशनमिति तु व्यवसायाभिद्वये पुनरिहोपात्तमित्यनुसन्धेयम् "प्रागुक्ते त्वविविक्तेऽग्नौ" इत्यादिनार्थस्यास्य प्रागेवोपलम्भात्। ततः किं कार्य्यमित्याह लघ्विति। अतो वमनादितो,

हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ।
बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् ॥
साजीर्णे भुज्यते यत् तु तदध्यशनमुच्यते ।
त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति वा ॥ ५४१ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात्॥५४२॥
विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कण्ठगलञ्च यस्य ।
द्राक्षाभयां माक्षिकसम्प्रयुक्तां लीढ्वाभयां वा स सुखं लभेत॥५४३॥

---

लघुकायं सन्धुचिताग्नित्वेन परिहीनगौरवम्, एनमातुरं लङ्घनैर्लघुभोजनैः समुपाचरेत्। कियन्तं कालं समुपाचरेत्? आह यावदिति। प्राणतो बलतः। न केवलमाहारेष्वेकमेव विषमाशनमजीर्णे हेतुरित्याह हितेत्यादि। एवमपि यदाहारेषु प्राग्विषमाशनमात्रमजीर्णहेतुत्वेनोपन्यस्तं तन्मतान्तराभिप्रायेणेति नानुपपत्तिः। अजीर्णेनाजरणेन सह वर्त्तमानमन्नं साजीर्णम्, सप्तमीयं भावे। अतिरोहितार्थमन्यत् ॥ ५३७—५४१ ॥

अन्नमित्यादि। नेह "तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्। दोषच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम्" इत्यणुमात्रेणापि विप्रतिषिद्धं भवति, अमुन इह पाकमनपेक्ष्य केवलं शैत्यादितोऽधोनयनमात्रेण प्रतीकारोपदेशात्; यद्वा विदग्धमिति सामान्येनोक्तमप्यवश्यं मनागिति विशेषणीयम्, अजीर्णे हि बलवत्येवाग्नेर्दोषपिहितत्वेन पक्तृत्वमपास्तमित्यध्यवस्य भेषजं प्रतिषिध्यत एकान्तेनेति निश्चीयते तीव्रार्त्तिरित्यादिनायुर्व्वेदवचनेन। अत्र तु दुष्ट इत्यनभिधाय दोषच्छन्न इतिपदं बलीयसाजीर्णेनाग्नेस्तिरस्कृतपक्तृत्वमाख्यातुमिति गम्यते, तथाच भेषजमत्रोपपन्नं भवति अजीर्णस्यास्याबलीयस्त्वादिति निष्कर्षः। विदह्यत इत्यादि। अत्र माक्षिकसम्प्रयुक्तामित्युभयत्रैव सम्बध्यते वाशब्देन समाकृष्टत्वात्। लीढ्वा

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
प्रातः स शुण्ठीमभयामशङ्को भुञ्जीत सम्प्राश्य हितं हितार्थी॥५४४
स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति ।
भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति ॥५४५॥

अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम् ।
कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ ५४६ ॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ।
उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः ॥

---

प्रातरेवेत्युक्तं भवति "वीर्य्याधिकं भवति भेषजमन्नहीनम्" इति स्मरणात् । भवेदित्यादि । अजीर्णं प्रति शङ्केह स्तिमितकोष्ठत्वादिनेत्यध्यवसितव्यम् "आमप्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तामाशयं स्तिमितकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषपाचनार्थमौषधमग्निसन्धुक्षणार्थञ्च न त्वेवाजीर्णाशनम्" इत्यात्रेयानुशासनात् । शुण्ठीमभयाञ्च सम्प्राश्य हितार्थी हितं भुञ्जीतेति समन्वयः । एवमेतेषु यथावदुपपन्नेष्वपि कश्चित् वचनचितयमेतदनार्षं केनाप्यन्येन कल्पितमजीर्णे भेषजप्रतिषेधादित्येवमाख्यापयन्, स्वस्थैवान्धत्वमाख्यापयतीत्येवं ब्रूमः । स्यादेतत् किन्तु खलु बुभुक्षायां जातायां विधिवद्भुक्तमप्यन्नं क्वचिद्विकाराय सम्पद्यत इत्यत आह स्वल्पमित्यादि । दोषविबद्धं दोषैरेकान्ततः सम्मिश्रम्, लीनं स्रोतःसु संश्लिष्टम्, तेजःपथमग्निपथं पित्तनिःसरणमार्गमित्येतत् ॥ ५४२—५४५ ॥

न ह्यञ्जसा भिषग्विद्यायां विपुलप्रज्ञोऽपि कश्चिदयथोपदेशं द्रवद्रव्यविभिन्नपानविधिं वाधिगम्य द्रव्याणां तांस्तान् शैत्यौष्ण्यादिकान् भावान् युक्त्या समन्वीयोपदेष्टुमुपधारयितुं वा प्रभवत्यनायासेन कर्म्मानुमेयत्वात्, तदिदानीं पूर्व्वाचार्य्यप्रसिद्धेन क्रमेण द्वेधा विभज्य कर्म्मतः शीतादीन् गुणानुपदिदिक्षति अत इत्यादिना । ह्लादन उष्णार्त्तानां सुखसञ्जननः, स्तम्भनः

स्नेहमार्द्दवकृत् स्निग्धो बलवर्णकरस्तथा ।
रुचस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः ॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ।
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥
दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा ।
सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः ।
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥ ५४७ ॥
दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्म्मविशेषणैः ।
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान् निबोध मे ॥ ५४८ ॥
द्रवः प्रक्लेदनः, सान्द्रः स्थूलः स्याद्बन्धकारकः ।
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा ॥

---

शोणितादीनां गतिमतां सन्निरोधनः । विशेषतः प्राचुर्य्येण पाचन इति सम्बन्धः, उष्णो ह्यग्निगुणबहुल इत्ययमाशयः । रुच इत्यादि । स्तम्भनो मलमूत्रादीनामप्रवर्त्तनः, खरं कर्कशं करोतीति खरः, णिचि पचाद्यच् । गुरुश्चिरपाकी, क्लेदसंशोषणो व्रणरोपणश्चेति क्लेदाचूषणरोपणः । यथा-विभागमर्थमिमं विभज्य शिष्टानर्थानधिकरोति दशेत्यादिना । तेषां व्याचिख्यासितानां गुणानां मध्ये आद्याः पूर्व्वाचार्य्यैरादावुपदिष्टाः शीतोष्ण-स्निग्ध-रुच-पिच्छिल-विशद-तीक्ष्ण-मृदु गुरु-लघु-समाख्याता दश गुणाः कर्म्मतः प्रोक्ताः इदानीन्तु कर्म्मविशेषणैः कर्म्मविशेषैरुक्तेतरैः कर्म्मभिरिति यावत्, दशैवान्यान् द्रवादीन् प्रवक्ष्यामि, तान् मे मत्तो निबोधेति योजना ॥ ५४६—५४८ ॥

द्रव इत्यादि । स्थूलं करोतीति स्थूलः सान्द्रविशेषणमेतत् । ये त्वत्र सान्द्रादनन्तरं श्लक्ष्णकर्कशयोः पाठात् सूक्ष्मान्ता द्रवादयो द्वादशैव भवन्ति

सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ।
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥
सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः ।
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥
विकासी विकसन्नेवं धातुबन्धान् विमोचयेत् ।
आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ।
गुणा विंशतिरित्येवं यथावत् परिकीर्त्तिताः ॥ ५४८ ॥
सम्यग्वक्ष्याम्यतश्चोर्द्ध्वमाहारगतिनिश्चयम् ।
पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः ।
विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेत् ॥

---

नत्वेव दशेत्येवं विप्रतिपद्यन्ते तान् पुनः कटाक्षयन्नाह स्निग्ध इति । अय-मभिसन्धिः, संख्येयं कर्म्मविशेषमाश्रित्योपदिश्यते, श्लक्ष्णकर्कशौ तु पि-च्छिलविशदसाम्यादुक्तगुणौ नातो द्वादशत्वापत्तिर्गन्धमात्रेणाप्युपलभ्यत-इति । कस्मात् सुगन्धदुर्गन्धगुणावुपदिश्येते सुखेत्यादिना श्लोकेन । मन्दो मन्दाख्यो गुणः, यात्राकरः कालक्षेपकरः "यात्रा स्याद्यापने गतौ" इत्य-मरः । विकासीत्यादि । एवमित्यखिलं देहं व्याप्येत्यर्थः । उक्तमर्थ-मुपसंहरति गुणा इत्यादिना । विंशतिरिति शीतादिभिर्द्रव-सान्द्र-सुगन्ध-दुर्गन्ध-सर--मन्द--व्यवायि-विकास्याशुकारि--सूक्ष्मगुणानुगमादित्यनुसन्धेयम् ॥ ५४८ ॥

सम्यग्वक्ष्यामीत्यादि । आह्रियते रसोऽस्मादित्याहारोऽन्नपानं तस्य गतिः कर्म्मेत्याहारगतिः । पञ्चधा स्वान् गुणान् अभिवर्द्धयेदित्यन्वयः । एतेनैतदुक्तं भवति पार्थिव आहारः पार्थिवान् गुणान् गुरु-खर-कठिना-

अविदग्धः कफं पित्तं विदग्धः पवनं पुनः ।
सम्यग्विपक्वो निःसार आहारः परिबृंहयेत् ॥
विण्मूत्रमाहारमलः सारः प्रागीरितो रसः ।
स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् प्रतर्पयेत् ॥ ५५० ॥
कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥ ५५१ ॥
दिवा विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ।
अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥
हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः ।
क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५५२ ॥

---

दीन् अभिवर्द्धयेत्,आप्यादयस्त्वाहारा यथास्वं द्रवौष्ण्यप्रभृतीन् गुणानिति । चरकेऽप्युक्तम् "यथास्वैरेव पुष्यन्ते देहे द्रव्यगुणाः पृथक् । पार्थिवाः पार्थिवान्येवं शेषाः शेषांश्च कृत्स्नशः" इति । निःसारो नीरसो मलमात्रेणावस्थित इति यावत् । वक्ष्यति हि "सारः प्रागीरितो रसः" इति प्रागिति शोणितवर्णनीये । कफ इत्यादि । खेषु कर्णादिच्छिद्रेषु मलः कर्णगूथादिः,नखरोमेति समाहारो दर्शितेभ्योऽन्यत्र नियमस्याभावान्नानुपपन्नः । नेत्रविट् नेत्रमलः, धातूनां रसादीनामिति विभक्त्यन्तेन निर्दिष्टाः कफादयः क्रमशो मला इत्यर्थः । नन्विदमुक्तम् अध्यशनमाश्विव निहन्ति वह्नन् व्याधीन् करोति वेति, दृश्यते च तदिष्टमनिष्टं वापादयत्यनियमेन ; कुत एतत् ? इत्याह[ दिवेत्यादि । धातुशब्देनेह धारणपोषणहेतुत्वाद्रसादयः पुरीषादयो वातादयश्चोच्यन्त इत्याहुः । तदयमर्थः, दिवाजाग्रतः पुरुषस्य पुण्डरीकवत् हृदये विबुद्धे रविकिरणजुष्टत्वेन सक्रियत्वेन च श्लेष्मणोऽपचयात् परिस्फुटान्तःशुषिरे सति, अक्लिन्नधातुत्वात् क्लेदेनाननुगतदोषधातुमल-

इमं विधिं योऽनुमतं महामुने-
र्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ।
स भूमिपालाय विधातुमौषधं
महात्मनाञ्चार्हति सूरिसत्तमः ॥ ५५२ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽन्नपानविधिर्नाम
षट्चत्वारिंशोऽध्यायः ।

इति श्रीसुश्रुताचार्य्यविरचिते आयुर्व्वेदशास्त्रे सुश्रुतसंहितायां
सूत्रस्थानं समाप्तम् ।

---

त्वात्, अजीर्णेऽप्यन्नं निशि हितमित्यर्थः । अत्राक्लिन्नधातुत्वादिति विशेषणं यथाकथञ्चित् क्लिन्नशरीरत्वे रात्रावपि तदात्वे भोजनप्रतिषेधार्थम् । अत एवाक्लिन्नत्वकारिणि मनागजीर्ण एवास्य विधेर्व्विषय इत्यामनन्त्याचार्य्याः । एतद्विपर्य्यासेन शेषं व्याख्येयम् । तत्र तु विस्रस्तत्वं शैथिल्यादेव लक्षणीयम् । सम्प्रति शिष्याणां प्रीत्यभिवृद्धये सामग्रेण सूत्रस्थानोपदिष्टानर्थान् श्लोकेन स्तौति इममित्यादिना । अनुमतं सम्मतम् । परिशिष्टं निगदव्याख्यातम् ॥ ५५०—५५२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
सूत्रस्थाने अन्नपानविधिर्नाम षट्चत्वारिंशोऽध्यायः ।

समाप्तञ्चेदं सूत्रस्थानभाष्यम् ।

# सुश्रुतसंहिता।

## निदानस्थानम्।

रामपुरबोयालिया-प्रवासि-

श्रीहाराणचन्द्र-चक्रवर्त्ति-कविराज-

विरचित-सुश्रुतार्थसन्दीपनभाष्य-समेतम्।

भूतपूर्व्व-राजकीयसंस्कृतविद्यालयाध्यापक-पूज्यपाद-

सर्व्वतन्त्रस्वतन्त्र-तर्कालङ्कारपदाङ्कित-महामहोपाध्यायः

श्रीलचन्द्रकान्त-भट्टाचार्य्य-

प्रमुखैः संशोधितम्।


कलिकाताराजधान्याम्

गिरिश-विद्यारत्न-वर्त्मनि चतुर्व्विंश-संख्यक-सद्मनि

गिरिश-विद्यारत्न-यन्त्रे

श्रीशशिभूषण-स्मृतिरत्न-भट्टाचार्य्येण मुद्रितम्

एम्,-बि,-उपाधिधारिणा श्रीमत्-सुरेशचन्द्र-चक्रवर्त्तिना

रामपुरबोयालियातः प्रकाशितञ्च।

शकाब्दाः १८३०।

सुश्रुतसंहिताया निदानस्थानस्य

## सूचीपत्रम् ।

---

सुश्रुतसंहितायाः निदानस्थानस्य

## शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पंक्त्यङ्कः |
|---|---|---|---|
| परमाणत्वं | परमाणत्वं | २ | ११ |
| धमनीव्याकरणी | धमनीव्याकरणे | ३२ | १० |
| अश्मरी वैकृतं | आश्मरिवैकृतं | ३२ | १७ |
| मलाधारः ; किट्टा- | मलाधारः किट्टा- | ३३ | २१ |
| ह्यङ्गुलोपपादानं | ह्यङ्गुलोपादानं | ३९ | १९ |
| भेदप्रभृतयः | भेदःप्रभृतयः | ५० | २३ |
| स्रुता | स्मृता | ५४ | ११ |
| अल्पशस्तुप- | अल्पशस्तूप- | ६० | १८ |
| स्नाताः | स्मृताः | ६७ | १२ |
| क्षतोषाः | क्षतोषा | ६८ | २ |
| आयसीवादि | आमो वा यदि | ६९ | ११ |
| गुल्मस्यापि च पच्यते | गुल्मस्यापि न पच्यते | ७१ | ५ |
| प्रतिकारयितं | प्रतिकारयितुं | ७५ | १३ |
| अन्यतर | अन्यतर | ८९ | १७ |
| कार्णीपदि | कर्णौ यदि | ९१ | १७ |

---

# सुश्रुतसंहिता।

## निदानस्थानम्।

### प्रथमोऽध्यायः।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥ १ ॥

धन्वन्तरिं धर्म्मभृतां वरिष्ठममृतोद्भवम्।
चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥
वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः।
स्थानं कर्म्म च रोगांश्च वद मे वदतां वर ॥ २ ॥

---

न ह्यञ्जसा स्वलक्षणतो विकारजातमजानन् विदितवेदितव्योऽपि कश्चिद्भिषक् प्रभवति कञ्चिदप्यातुरमुत्थापयितुं भैषज्योपयोगेन, तदिदानीमेतच्छास्त्रानुसरणोपायभूतं सूत्रस्थानं व्याख्यायैव व्याचिख्यासितानि विकारलक्षणानि व्याचिख्यासुः क्रमप्राप्तं पूर्व्वाचार्य्यप्रसिद्धमपर्य्यासित्वेन निदर्शनस्वरूपं षोड़शाध्यायं निदानस्थानमारिप्समानो भगवांस्तन्त्रकारो दोषेषु वातस्य प्रवर्त्तकत्वेन प्राधान्यात् तथैव निरूपितत्वाद्वा प्रथमं तावद्वातव्याधिनिदानमधिकरोति अथात इत्यादिना। नेह वातजो व्याधिर्व्वातव्याधिर्नापि च "दोषा ह्यपि रोगशब्दं लभन्ते" इति स्मरणात् वात एव व्याधिरिति वाक्यार्थः, ज्वरादावविकारिणि वाते चातिव्याप्तेः; किन्तर्हि? वातजोऽसाधारणो व्याधिर्व्वातव्याधिरुच्यते अनन्तरं तथैवोपदेशात्। निदानशब्दस्त्वर्थतो व्याहृतः प्रागेव ॥ १ ॥

नन्विदमामनन्ति। "नापृष्टः कस्यचित् किञ्चित् ब्रूयात्" इत्यतः

तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः ।
स्वयम्भुरेष भगवान् वायुरित्यभिशब्दितः ॥
स्वातन्त्र्यान्नित्यभावाच्च सर्व्वगत्वात् तथैव च ।
सर्व्वेषामेव सर्व्वात्मा सर्व्वलोकनमस्कृतः ॥ ३ ॥
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ।
अव्यक्तो व्यक्तकर्म्मा च रूक्षः शीतो लघुः खरः ॥
तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च ।

---

गशेव पृच्छाप्रकारं निवेदयति धन्वन्तरिमित्यादिना । आम्नायते हि " द तिष्ठत्" इत्यारभ्य "अमृतापूर्णकलसं बिभ्रद्वलयभूषितः" इति [भागवतम् यदिदमुच्यते अमृतोद्भवमिति । अमृतस्योद्भव गाहूतत्वेनाविर्भावो यस्मा तथोक्तम् । विशेषणमिदं विष्णोरंशांशसम्भूतत्वं स्मारयति परमात्म स्मृतिपथमानेतुम् । प्रकोपणैर्व्रणप्रश्ने व्याहृतेः । स्मर्य्यते हि "वायोर्यथाय गतिरपि भवत्यारोग्याय" इत्यतो भिषग्विद्यायामिदमुच्यते स्वयम्भुरिति स्वातन्त्र्यात् स्वाधीनत्वात्, नित्यभावात् "वायुर्ह्येवैतान् सर्व्वान् संहङ्क्ते [छां ४।३।२] इति श्रुतेः प्रलयेऽप्यवस्थानात्, तथैव सर्व्वगत्वात् सर्व्व संयोगित्वात् स्वयम्भुः परमात्मैव एष वायुरित्यभिशब्दितः सर्व्वलोकन स्कृतो भगवान् सर्व्वेषामेव प्राणिनां सर्व्वात्मा सर्व्वप्रयत्नाश्रयः, आत्मा चेति पर्य्यायौ । न चैतदश्रद्धेयं सुषुप्त्यवस्थायां हि प्रयत्नकर्त्तृणीन्द्रिया वायुमेवाश्रित्यावतिष्ठन्ते, तथाच "वायुर्व्वाव संवर्ग" इत्युपक्रम्य "अथा प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति" [छां ४।३। इत्यादिश्रुतयः । पुनर्व्विशिनष्टि स्थितौति । स्थितौ कतिचित् का स्थाने, उत्पत्तौ स्वकारणसमवाये, विनाशे प्रध्वंसे च भूतानां चराच मेष वायुः कारणमित्यविशेषात् समवायिनिमित्तं वेत्यर्थः । अव्यक्तोऽनुभू रूपः, व्यक्तकर्म्मा प्राणनादिक्रियोपलभ्यः, तिर्य्यग इति सामान्यत एवो

अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट् ।
आशुकारी मुहुश्चारी पक्वाधानगुदालयः ।
देहे विचरतस्तस्य लक्षणानि निबोध मे ॥ ४ ॥
दोषधात्वग्निसमतां सम्प्राप्तिं विषयेषु च ।
क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिलः ॥ ५ ॥
यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः ।
भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः ॥
प्राणोदानौ समानश्च व्यानश्चापान एव च ।
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥ ६ ॥

---

शरीरे हि चरतः प्राणापानात्मकत्वेनोर्द्ध्वाधोगतिकत्वमप्युपलभ्यते, द्विगुणः शब्दस्पर्शगुणो द्व्यात्मकत्वात्, रजोबहुल एव चेति प्रवर्त्तकत्वादुपदिश्यते, तथाच सांख्याः "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः" इति, अतएवोक्तमचिन्त्येत्यादि। मुहुरेकविधमनेकविधं वा चरितुं शीलमस्येति मुहुश्चारी। पक्वाधानं पक्वाशयः ॥ २—४ ॥

दोषेत्यादि। धातुशब्देनेह शरीरधारणात् रसादयः पुरीषादयश्चोच्यन्ते पारिशेष्यात्। समतां यथास्वमानताम्। विषयेषु शब्दस्पर्शादिषु सम्प्राप्तिं समनस्कानामिन्द्रियाणामभिसम्बन्धम्। क्रियाणां वचनादीनामानुलोम्यमनुकूलत्वं यथास्वभावमिति यावत्। पञ्चधा भिन्न इति व्रणप्रश्ने पाचकत्वादिभेदेनेति शेषः। नामेत्यादावामयशब्दो हिक्कादीनेव लक्षयतीति निश्चीयते अनन्तरं तेषामेवोपादानात्। सङ्क्षेपेणोक्तमर्थं स्फुटीकृत्यावगमयति प्राणेत्यादिना। प्रागनितीति प्राणः, आपादतलादारभ्योर्द्ध्वमुत्क्रमणादुत्कर्षार्थञ्च कर्म्म कुर्व्वन् अनितीत्युदानः, अशितपीते समं नयतीति समानः, वीर्य्यवत् कर्म्म कुर्व्वन् विगृह्य वा प्राणापानौ नाना वा अनितीति व्यानः, मूत्रपुरीषाद्यपनयन् अधोऽनितीत्यपानः। स्थानस्था अविकृताः

वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक् ।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ।
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ ७ ॥
उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः ।
तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते ।
ऊर्द्ध्वजत्रुगतान् रोगान् करोति च विशेषतः ॥ ८ ॥
आमपक्वाशयचरः समानो वह्निसङ्गतः ।
सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि ।
गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान् ॥ ९ ॥

---

इति तात्पर्य्यम्, विज्ञातानामेव हि स्थाननियमो नास्तीति । यापयन्ति परिपालयन्ति । यापकत्वेनैव देहधृक्त्वे लब्धे पुनर्द्देहधृगिति विशेषणं विशिषेणास्य धारित्वमाख्यातुम् । श्रूयते हि "कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठितेऽहं प्रतिष्ठास्यामीति स प्राणमसृजत" इति । प्राणा गर्भव्याकरणे वक्ष्यमाणा अग्नीषोमादयः ॥ ५—७ ॥

उदान इत्यादि । ऊर्द्ध्वशब्देनेह नाभ्युरःकण्ठस्य, भाषितेत्यादावादिशब्देन च प्रयत्नादीनां परिग्रहः क्रियते "उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च । वाक्प्रवृत्तिप्रयत्नौजोबलवर्णादि कर्म्म च" इति चरकैकवाक्यत्वात् । विशेषस्त्वत्र प्रतिपुरुषं भाषितादीनामेवेत्युन्नेयं सन्निहितत्वात् । न तावदेवं विशेषे हेतुः सहसा बुद्धिविषयमधिरोहतीति युक्तमुक्तं पवनोत्तम इति । पवनेष्वेवं विशेषकत्वेनानिर्व्वचनीयत्वादुत्तमः पवनोत्तमः । आमेत्यादि । वह्नेः पार्श्वे मिलितो वह्निसङ्गतः "अन्तरग्नेश्च पार्श्वस्थः समानः" इत्यात्रेयश्च । तज्जान् अन्नजान्, विशेषान् रसकिट्टसमाख्यातान् विशिष्टान् भावान्, विविनक्ति पृथक्करोति । रसवहधमनीषु रसस्य सम्यक्

कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः।
स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि।
क्रुद्धश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान्॥ १०॥
पक्वाधानालयोऽपानः काले कर्षति चाप्ययम्।
समीरणः शकृन्मूत्र-शुक्रगर्भार्त्तवान्यधः।
क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्॥ ११॥
शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः।
युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम्॥ १२॥
अत ऊर्द्धं प्रवक्ष्यामि नानास्थानान्तराश्रितः।
वहुशः कुपितो वायुर्विकारान् कुरुते हि यान्॥ १३॥
वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते गदान्।
मोहं मूर्च्छां पिपासाञ्च हृद्ग्रहं पार्श्ववेदनाम्॥ १४॥

---

प्रेरणे प्रवृत्तो रससंवहनोद्यतः। प्राग्व्यानेनाकुञ्चिता अर्व्वाक् च प्रसारिता हि स्वेदवाहिन्यो धमन्यः सिराधमनीस्रोतांसि च वेगविशेषेण यथाक्रमं स्वेदमसृगभिवहन्ति सत्यदृष्टहेतुकेन तेन तेन भावेन शस्त्राद्युपहतत्वेन वा यदा विवृतमुखत्वादिभिस्तैस्तैर्भावविशेषैः संयुज्यन्ते तदा स्वेदमसृक् च विस्रावयतीति विस्रावे व्यानस्य प्रयोजकत्वमध्यवस्येदमुच्यते स्वेदासृक्स्रावण इति। पञ्चधेत्युत्क्षेपणमवक्षेपणं प्रसारणमाकुञ्चनं गमनमित्येभिः पञ्चविधैः कर्म्मभिरित्यर्थः; चरकेऽप्युक्तम् "गतिप्रसारणाक्षेपनिमेषादिक्रियः सदा" इति। परिशिष्टं निगदव्याख्यातम्॥ ८—१२॥

अत इत्यादि। गौरवादिना हृदयस्य बन्धनमिव वेदनाविशेषो हृद्-

पक्वाशयस्थोऽन्त्रकूजं शूलं नाभौ करोति च ।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ १५ ॥
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः ॥ १६ ॥
वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमचुमायनम् ।
त्वक्स्थो निस्तोदनं कुर्य्यात् त्वग्भेदं परिपोटनम् ॥ १७ ॥
व्रणांश्च रक्तगो ग्रन्थीन् सशूलान् मांससंश्रितः ।
तथा मेदःश्रितः कुर्य्याद्ग्रन्थीन् मन्दरुजो व्रणान् ।
कुर्य्याच्छिरागतः शूलं शिराकुञ्चनपूरणम् ॥ १८ ॥
स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा ॥ १९ ॥
हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ॥ २० ॥
अस्थिशोषञ्च भेदञ्च कुर्य्याच्छूलञ्च तत्स्थितः ॥ २१ ॥
तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ॥ २२ ॥
अप्रवृत्तिः प्रवृत्तिर्वा विकृतिः शुक्रगेऽनिले ॥ २३ ॥
हस्तपादशिरोधातूंस्तथा सञ्चरति क्रमात् ।
व्याप्नुयाद्वाखिलं देहं वायुः सर्व्वगतो नृणाम् ॥ २४ ॥

---

अहः । अन्त्रे गुड़्गुड़ाद्यव्यक्तध्वनिरन्त्रकूजनम् । आनाहो नाम रोगविशेषो विसूचिकाप्रतिषेधे वक्ष्यमाणः, चुमचुमायनं सर्षपकल्कलिप्तवद्वेदनाविशेषः । त्वग्भेदोऽत्र विरलं त्वचामवदरणम्, परिपोटनन्तु तासामेव विचूर्णनम् । अप्रवृत्तिरित्यादि । अत्र न्याय्यत्वात् स्त्रिया सह संयोगे शुक्रस्यैकान्ततोऽमोक्षोऽप्रवृत्तिः, यथाकालं मोक्षः प्रवृत्तिः ; विकृतिस्तु शुक्रशोणितशुद्धौ शारीरे स्वयमेव निवेदयिष्यते । सम्प्रत्यवसरवशात् कृत्स्नदेहचरो व्यान इत्यपरिस्फुटमर्थं स्फुटयति हस्तेत्यादिना । वाशब्दः पक्षान्तरद्योतनार्थः ।

स्तम्भनाक्षेपणस्वाप-शोफशूलानि सर्व्वगः ।
स्थानेषूक्तेषु मिश्रश्च संमिश्राः कुरुते रुजः ॥ २५ ॥
कुर्य्यादवयवप्राप्तो मारुतस्त्वभि तान् गदान् ॥ २६ ॥
दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ।
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥ २७ ॥
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता ।
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ॥ २८ ॥
प्राणे पित्तावृते छर्द्दिर्दाहश्चैवोपजायते ॥ २९ ॥
दौर्व्बल्यं सदनं तन्द्रा वैवर्ण्यञ्च कफावृते ॥ ३० ॥
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥ ३१ ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतस्तम्भौ कफावृते ॥ ३२ ॥
समाने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥ ३३ ॥
कफाधिकञ्च विण्मूत्रं रोमहर्षः कफावृते ॥ ३४ ॥
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्दरः ॥ ३५ ॥

---

व्याप्नुयाद्वा युगपदिति शेषः। स्तम्भनं जड़ीभावः, स्वापः सुप्तिरित्यनर्थान्तरम्। उक्तेष्वामाशयादिषु, मिश्रः पित्तादिसङ्गतः। संमिश्रा यथायोगं पित्तादीनां वेदनाभिः समन्विताः। तान् अवयवान्, अभि लक्ष्यीकृत्येत्यर्थः॥ १३—२६ ॥

पित्तादिभिरावृतं पुनर्व्वातं सामान्येनाधिकरोति दाहेत्यादिना। पित्तसमन्वित इत्यावृतत्वेनैवेत्यवधेयम्, कफावृत इत्यनन्तरोक्तसाहचर्य्यात्। एवमुत्तरत्रापि यथायोगमुन्नेयम्। सामान्येनोक्तमर्थं पुनर्व्विभज्योपदिदिक्षति प्राण इत्यादिना। कफाधिकं कफगुणबहुलं कफप्रायञ्चेत्यर्थः।

अधःकाये गुरुत्वञ्च तस्मिन्नेव कफावृते ॥ ३६ ॥

व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ३७ ॥

गुरूणि सर्व्वगात्राणि स्तम्भनञ्चास्थिपर्व्वणाम् ।

लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥ ३८ ॥

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।

शोकाच्च प्रमदामद्य-व्यायामैश्चाग्निपीड़नात् ॥

ऋतुसात्म्यविपर्य्यासात् स्नेहादीनाञ्च विभ्रमात् ।

अव्यवाये तथा स्थूले वातरक्तं प्रकुप्यति ॥ ३९ ॥

हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं यातः कारणैः सेवितैः स्वैः ।

तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः सन्तापाद्यैर्भूयसा सेवितैश्च ॥

असृग्दरः प्रदरः। गात्रविक्षेपणं यदृच्छया गात्रस्येतस्ततः सञ्चलनम् । अस्थ्नां पर्व्वणाञ्चेत्यस्थिपर्व्वणाम् । ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्सा जिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा, तत्रासामर्थ्यं चेष्टास्तम्भः ॥ ३७—३८ ॥

निदानविशेषेण प्रदुष्टो हि वातस्तथैव प्रदुष्टेन शोणितेनावृतो वातरक्तेति संज्ञामवाप्य तैस्तैर्व्विकारजातैरुपतापयत्यातुरविशेषं तदिदानीं क्रमागतत्वेन व्याचिख्यासितं शोणितावृतं नाम वातमामूलमुपदेष्टुमिदमुच्यते प्रायश इत्यादि। ऋतावुपशेते यत्तदृतुसात्म्यं तद्विपर्य्ययादृतुसात्म्यविपर्य्यासात्, ऋतुविपर्य्यासात् सात्म्यविपर्य्यासाद्वेत्यर्थः। स्नेहादीनां स्नेहस्वेदप्रभृतीनां पञ्चकर्म्मणाम्, विभ्रमादयोगातियोगमिथ्यायोगतः। अव्यवाये अवैधव्यवायशीले इत्यर्थः, नञो ह्यत्राप्राशंस्यमर्थः; "भजतां विधिहीनञ्च स्वप्नजागरमैथुनम्" इति तन्त्रान्तरञ्च। वातरक्तं प्रदुष्टवातसंसृष्टं रक्तमित्यनन्तरं व्यक्तीभविष्यति। हस्तीत्यादि। अन्यैः सङ्क्रोभिभिः खरादिभिरित्यर्थः। स्वैर्लघुरूक्षादिभिरिति निष्कर्षः। यातो गच्छतो वायो-

क्षिप्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्ध्याशु यातः।
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु।
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम्॥ ४० ॥
तद्वत् पित्तं दूषितेनासृजाक्तं श्लेष्मा दुष्टो दूषितेनासृजाक्तः ॥४१॥
स्पर्शोद्विग्नौ तोदभेदप्रशोष-स्वापोपेतौ वातरक्तेन पादौ।
पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोफौ मृदू च।
कण्डूमन्तौ श्वेतशीतौ सशोफौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥४२॥
सर्व्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं रूपं पादयोर्दर्शयन्ति॥४३॥
प्राग्रूपे शिथिलौ खिन्नौ शीतलौ सविपर्य्ययौ।
वैवर्ण्यतोदसुप्तत्व-गुरुत्वोषसमन्वितौ ॥

---

³ रिति सम्बन्धः। अतिदूषयेदित्यन्वयः। दूषितेन वायुना सम्पृक्तं मिलितं तद्रक्तं तत्प्राबल्यात् द्वयोर्दुष्टत्वेऽपि दोषत्वेन वातस्य प्राधान्यात् वातरक्तमुच्यते न तु रक्तवातं वातानुगतं रक्तमिति व्युत्पत्त्येति तात्पर्य्यम्। तद्वदित्यादि। अक्तं संयुक्तम् "अञ्जु व्यक्तिम्रक्षणकान्तिगतिषु" इति धात्वर्थस्मरणात्। अत्र तद्वदित्यनेन "वायोर्म्मार्गं संरुणद्धि" इत्यादि सर्व्वमतिदिश्यते; तथा चैतदपि वातप्राबल्यात् वातरक्तमुच्यते इति निष्कर्षः।
⁴ संज्ञायामस्यां मुख्यत्वेनोपदिष्टस्य पित्तस्य हानमुपसर्ज्जनीभूतस्यासृजश्चोपादानमसृगनाक्तत्वे पित्तस्यास्य व्याध्यभिनिर्वृत्तावकिञ्चित्करत्वेनाभ्युपगमादित्यनुसन्धेयम्। एतेनैव श्लेष्मा दुष्ट इत्यपि व्याख्यातप्रायम्॥ ३९—४१ ॥

किं पुनरेषां लिङ्गानीत्याह स्पर्शेत्यादि। स्पर्शोऽयं शीत एव प्रत्येतव्यः "शीतप्रद्वेषश्चानिलोत्तरे" इति चरकैकवाक्यत्वात्; तेनोद्विग्नावुद्वेगयुक्तौ। स्वापः सुप्तिः स्पर्शानभिज्ञत्वमिति निष्कर्षः, लक्षणमिदं बलवद्वातरक्तविषयमित्याहुः। स्वं स्वं रूपं शीतप्रद्वेषादित्रिदोषलिङ्गम्। प्रागित्यादि।

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥
आजानु स्फुटितं यच्च प्रभिन्नं प्रस्रुतञ्च यत् ।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ।
शोणितं तदसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥ ४४ ॥
यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः ।
तदाक्षिपत्याशु मुहुर्म्मुहुर्देहं मुहुश्चरः ।
मुहुर्म्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ ४५ ॥

सविपर्य्ययौ मुहुर्व्विपर्य्यस्तशैथिल्यादिकावित्यर्थः । "स्वादः स्पर्शं गताः इत्युपक्रम्य "भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च" इति तन्त्रान्तरञ्च । ओषो दाहः । अत्र पूर्व्वस्मात् पादावित्यनुषज्यते । पादयोरित्यादि । मूलमिव मूलं तलमित्यर्थः । तदयमर्थः, तद्वातरक्तं पादयो कदाचिद्धस्तयोरपि मूलं तलमास्थाय "सर्व्वं वाक्यं सावधारणम्" इति न्यायात् क्रुद्धमेव आखोर्व्विषमिवेति "जायन्ते ग्रन्थयः शोफाः" इत्यादि मूषिककल्पानुसरणात् ग्रन्थ्यादिपुरःसरमित्यर्थः देहमनुसर्पतीति । अकुपितत्वेनोपदिष्टस्यापि वातरक्तस्य पुनः क्रुद्धमिति विशेषणं नितकुपितत्वमाख्यातुमिति गम्यते ; तथाचातिकुपितस्यैवमनुसर्पणमियमाम्नाति कुपितन्तु ग्रन्थ्याद्यन्तरेणैवानुसर्पतीत्यर्थाक्षिप्तं भवति । आजानु जानुपर्य्यन्तं स्फुटितादिविशेषणमेतत्, न पुनर्जानुपर्य्यन्तगतमसाध्यमिति केनचिदुक्तं युक्तं अस्मदेव तथाविधस्य सम्यक् प्रतीकारफलदर्शनात् । स्फुत्वचि किञ्चिद्विदलितं, प्रभिन्नन्तु गाढं विदीर्णमित्ययं विशेषः । प्राणमांसक्षयादिभिर्व्वक्ष्यमाणैरित्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ ४२—४४ ॥

अर्थान्तरमवतारयति यदेत्यादिना । मुहुश्चरो मारुत इति सम्बन्धः । सर्व्वा उक्ता वक्ष्यमाणाश्च चतुर्व्विंशतिमित्यर्थः । आक्षिपति आकुञ्चन-

सोऽपतानकसंज्ञो यः पातयत्यन्तरान्तरा।
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति॥ ४६॥
स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः।
हनुग्रहस्तदात्यर्थं सोऽन्नं कृच्छ्रान्निषेवते॥ ४७॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः।
अङ्गुलीगुल्फजठर-हृद्वक्षोगलसंश्रितः॥
स्नायुप्रतानमनिलो यदाक्षिपति वेगवान्।
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्॥ ४८॥
अभ्यन्तरं धनुरिव यदा नमति मानवः।
तदा सोऽभ्यन्तरायामं कुरुते मारुतो वली।
वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च॥ ४९॥

---

प्रसारणविशेषेण योजयति। स इत्यादि। य आक्षेपकोऽन्तरान्तरा मध्ये मध्ये पातयति मोहयति सोऽपतानकसंज्ञः। तं पुनरपतानकं प्रकृत्यन्तरभेदेन चतुर्धा विभज्योपदिदिक्षति कफान्वित इत्यादिनाऽभिघातजमित्यन्तेन ग्रन्थसन्दर्भेण। भृशं कफान्वितो मनाक् च पित्तेनानुविद्ध इत्यर्थः। तासु सर्व्वासु धमनीष्वित्यर्थः। नेह "दण्डकः सोऽनुपक्रमः" इत्यात्रेयानुशासनमणुमात्रेणापि विप्रतिषिद्धं भवति तस्य शुद्धवातजविषयत्वात्। तत्रान्तरायाम-वहिरायाम समाख्ययोरपतानकयोः सामान्यतो लक्षणमुपदिशति धनुरित्यादिना। उक्तमर्थं पुनः प्रपञ्चेनावगमयत्यङ्गुलीत्यादिना। स्नायुप्रतानमिति स्नायुशब्देनेह सिरादीनामप्यादेशः क्रियते "सिराः सस्नायुकण्डराः" इत्यादितन्त्रान्तरीयानुस्मरणात्; तथाच स्नाय्वादिजालमित्यर्थः। विष्टब्धाक्षो निश्चलनेत्रः, स्तब्धहनुरिति विवृताननत्वेन संवृताननत्वेन वेत्यवधेयम्, वेदनाभिः परीततया भग्ने इव पार्श्वे अस्येति भग्नपार्श्वः, वमन्निति

तमसाध्यं बुधाः प्राहुर्वक्षःकक्ष्यूरुभञ्जनम् ॥ ५० ॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः ।
कुर्य्यादाक्षेपकान्त्वन्यं चतुर्थमभिघातजम् ॥ ५१ ॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ ५२ ॥
अधोगमाः सतिर्य्यग्गा धमनीरूर्द्ध्वदेहगाः ।
यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते ॥
तदान्यतरपक्षस्य सन्धिबन्धान् विमोचयन् ।
हन्ति पक्षं तमाहुर्हि पक्षाघातं भिषग्वराः ॥ ५३ ॥
यस्य कृत्स्नं शरीरार्द्धमकर्म्मण्यमचेतनम् ।
ततः पतत्यसून् वापि जहात्यनिलपीड़ितः ॥ ५४ ॥

---

वातेन जठरादिपीड़नादेव छर्द्दिवेगमन्तरेणोद्गिरन् । अन्तरं क्रोड़देश मभिलक्षीकृत्येत्यभ्यन्तरम् । वाह्येत्यादि । वाह्यायामं पृष्ठेन नतम् "चाप वन्नम्यमानस्य पृष्ठतो नीयते शिरः" इत्यात्रेयश्च । वक्षःप्रभृतीनां भञ्जन- मनेनेति वक्षःकक्ष्यूरुभञ्जनम्, तमपतानकं बुधा असाध्यं प्राहुः । एतेनार्था- पन्नं भवति इतरं साध्यं प्राहुरिति ॥ ४५—५२ ॥

अध इत्यादि । अत्र धमनीशब्देनैव सिरास्नाय्वोरपि परिग्रहः क्रियते तदन्तरेणासां किञ्चिदपि कर्त्तृत्वेनानभ्युपगमात् । ताश्च पुनरर्द्धदेहस्था एवेह लक्ष्यन्ते इति निश्चीयते "हन्ति पक्षम्" इत्याद्यनन्तरोक्तेः । पक्षो ह्यर्द्ध- नारोश्वरवत् बाहुपार्श्वोरुजङ्घादिविभागेनार्द्धशरीरमुच्यते "गृहीत्वार्द्धं शरी- रस्य सिरास्नायू विशोष्य च" इत्यात्रेयश्च । अत्र सिरास्नायुव्यपदेशेनैव धम- नीनां व्यपदेशान्न कश्चिद्विप्रतिषेधः । उक्तमर्थं पुनः स्फोरयन्नाह यस्येत्यादि । शरीरार्द्धमिति समप्रविभागवृत्तिनाऽप्यर्द्धशब्देन षष्ठीसमासोऽभिधानात्

शुद्धवातहतं पचं क्रच्छ्रसाध्यतमं विदुः।
साध्यमन्येन संसृष्टमसाध्यं चयहेतुकम्॥ ५५॥
वायुरूर्द्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः।
शङ्खौ च पीड़यत्यङ्गान्याचिपेन्नमयेच्च सः॥
निमीलिताचो निश्चेष्टः स्तब्धाचो वापि कूजति।
निरुच्छ्वासोऽथ वा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः॥
स्वस्थः स्याद्धृदये मुक्ते आवृते च प्रमुह्यति।
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः॥ ५६॥
दिवास्वप्नासमस्थान-विकृतोर्द्ध्वनिरीक्षणैः।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः॥ ५७॥
गर्भिणीसूतिकाबाल-वृद्धक्षीणेष्वसृक्चये।
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च॥
हसतो जृम्भतो भाराद्विषमाच्छयनादपि।
शिरोनासौष्ठचिवुक-ललाटेक्षणसन्धिगः॥

---

पिप्पल्यर्द्धमितिवत्। अकर्मण्यं कर्मण्ययोग्यम्, अचेतनं स्पर्शानभिज्ञम्, भवतीति शेषः। ततस्तस्मात् पतति शय्याशायी भवतीत्यर्थः। शुद्धोऽन्येनासंसृष्टः। चयहेतुकं धातुचयकुपितवातजम्। दिवेत्यादि। असमे उपधानादौ शिरसः स्थितिरसमस्थानं, विकृतनिरीक्षणं तिर्य्यक् प्रेक्षणम्। स वात एव॥ ५३—५७॥

गर्भिणीत्यादि। क्षीणेष्विति सप्तमीयं षष्ठ्यर्थे, तदयमर्थः असृक्क्षये असृजि क्षीणलक्षणलक्षिते सति, गर्भिण्यादीनाम्, उच्चैर्व्याहरतो वदतः, अत्यर्थं कठिनानि खादतः, अत्यर्थं हसतः, जृम्भतश्च; भारात् शिरसा भार-

अर्द्दयित्वाऽनिलो वक्त्रमर्द्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ।
ग्रीवाचिवुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥
यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ।
वायुरूर्द्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ।
तमर्द्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ।
न सिध्यत्यर्द्दितं वाढ़ं त्रिवर्षं वेपनस्य च ॥ ५८ ॥

---

वहनात्, विषमान्नतोन्नताद्वाऽऽननाद्वा शयनादुपधानादित्यर्थः "विषमादुपधानाच्च" इत्यष्टाङ्गहृदयञ्च । अर्दयित्वा पीड़यित्वा । अर्द्दितं जनयतीति सम्बन्धः । किंलक्षणोऽयमित्याह अत इति । अतोऽर्द्दिते वक्रीभवतीत्यादि वैकृतान्तं लिङ्गजातं भवति । अत्र नेत्रादीनामित्यादिशब्देन भ्रूगण्डादीनामादेशः । तुकारः समुच्चयार्थः, यस्मिन् पार्श्वे अर्द्दितं तस्मिन् पार्श्वे ग्रीवादीनां वेदना च भवतीत्यर्थः । अस्य पुनः पूर्व्वरूपं व्याचष्टे यस्येति । यस्य व्याधेरग्रजो नितरां सन्निकृष्टः पूर्व्वरूपो रोमहर्षादिर्हनुग्रहान्तो लक्षणनिचयस्तं व्याधिमर्द्दितं प्राहुरित्यन्वयः । अत्र ऊर्द्ध्वमित्यव्ययम्, ऊर्द्ध्वग इत्यर्थः, वातविशेषणमेतत् । स्वापः सुप्तिः, तोदोऽर्द्दितावकाशे नानाविधा वातवेदना, मन्याहनुग्रहो मन्याहनुस्तम्भः । इतिशब्दोऽर्द्दितव्याख्यापरिसमाप्त्यर्थः । क्षीणस्येत्यादि । प्रकर्षेणावद्धमपरिस्फुटञ्च भाषितुं शीलमस्येति प्रसक्ताव्यक्तभाषी । वाढ़ं गाढ़ं प्रबलमिति यावत् । त्रिवर्षं त्रिवार्षिकम् "वर्षाल्लुक् च" इति ठञ् तस्य लुक् च ॥ ५८ ॥

पार्ष्णिं प्रत्यङ्गुलीनान्तु कण्डरा यानिलार्द्दिता ।
सक्थ्नः क्षेपं निगृह्णीयाद्गृध्रसीति हि सा स्मृता ॥ ५८ ॥
तलं प्रत्यङ्गुलीनान्तु कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्म्मक्षयकरी विश्वाचीति हि सा स्मृता ॥ ६० ॥
वातशोणितजः शोथो जानुमध्ये महारुजः ।
शिरः क्रोष्टुकपूर्व्वन्तु स्थूलः क्रोष्टुकमूर्द्धवत् ॥ ६१ ॥
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ६२ ॥
प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ६३ ॥

---

पार्ष्णीत्यादि । पार्ष्णिं प्रति पार्ष्णिभागे गुल्फाधोभागे इति यावत् । अङ्गुलीनां कण्डरा अङ्गुल्यनुषङ्गिणी स्थूला स्नायुः, सक्थ्नः क्षेपं पादन्यासप्रवर्त्तकं शक्तिसञ्चारं निगृह्णीयात् तिरस्कुर्य्यात्; इतिशब्दो गृध्रसीव्याख्यापरिसमाप्त्यर्थः । अत्राविशेषेऽपि गृध्रसी प्राक् स्फिचमेव स्तम्भरुक्तोदैर्गृह्णातीत्यवगन्तव्यम् "स्फिक्पूर्व्वा" इत्युपक्रम्य "गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति" इति तन्त्रान्तरीयस्मरणात् । तलमित्यादि । बाहुपृष्ठमधिकृत्येति बाहुपृष्ठतः । अङ्गुलीनां तलं प्रति तलभागे या कण्डरा वर्त्तते इति शेषः, सा बाह्वोः कर्म्मक्षयकरी विक्षतत्वेनाकुञ्चनप्रसारणाद्यात्मकबाहुकर्म्मप्रध्वंसिनी सती विश्वाची स्मृता ; इतिशब्दः प्राग्वद्व्याख्येयः । वातेत्यादि । वातशोणिताभ्यां जातो वातशोणितजः न पुनर्व्वातशोणितसमाख्याद्व्याधेरेव जातस्तदन्तरेणाऽप्यस्योत्पत्तिदर्शनात्; महारुजः क्रोष्टुकमूर्द्धवत् शृगालशीर्षवत् स्थूलः शोथः क्रोष्टुकपूर्व्वं शिरः क्रोष्टुकशिर उच्यते इति शेषः । खञ्जो विकलगतिकः "खजि गतिवैकल्ये" इति धातुः ।

न्यस्ते तु विषमे पादे रुजः कुर्य्यात् समीरणः ।
वातकण्टक इत्येष विज्ञेयः खुड़काश्रितः ॥ ६४ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ६५ ॥
हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत् ।
पादहर्षः स विज्ञेयः कफवातप्रकोपजः ॥ ६६ ॥
अंसदेशस्थितो वायुः शोषयित्वांसबन्धनम् ।
शिराश्चाकुच्य तत्रस्थो जनयत्यववाहुकम् ॥ ६७ ॥
यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति ।
शुद्धः श्लेष्मान्वितो वापि वाधिर्य्यं तेन जायते ॥ ६८ ॥
हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः ।
कर्णयोः कुरुते शूलं कर्णशूलं तदुच्यते ॥ ६९ ॥

---

प्रक्रामन्नित्यादि। अत्र प्रशब्द आदिकर्मद्योतकः, प्रक्रामन् गमनमारभमाणो वेपते, खञ्जन् वेपनेन गतिं विकलयन्निव च गच्छतीत्यर्थः "कम्पते गमनारम्भे" इति तन्त्रान्तरञ्च। मुक्तसन्धिप्रबन्धनं शिथिलीकृतसन्धिबन्धनम्। न्यस्त इत्यादि। न्यस्ते पादे विषमे सतीत्यन्वयः, विषमन्यस्तपादे इति निष्कर्षः। खुड़काश्रितः पार्ष्णिसंश्रयः, समीरणविशेषणमेतत् ॥ ५९—६५ ॥

हृष्यत इत्यादि। हृष्यतो हृष्टरोमाणौ "सिरसिरि" इत्येवं वेदनायुक्तौ वा भवत इत्यर्थः। अंसो भुजसन्धिः। यदेत्यादि। स्रोतोऽत्र कर्णशष्कुल्यवच्छिन्नो नभोभागः, वक्ष्यति हि "मूलात् खादन्तरं देहे प्रसृत-

आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः।
नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान् ॥ ७० ॥
अधो या वेदना याति वर्च्चोमूत्राशयोत्थिता।
भिन्दतीव गुदोपस्थं सा तूणीत्युपदिश्यते ॥ ७१ ॥
गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी।
वेगैः पक्काशयं याति प्रतितूणी तु सा स्मृता ॥ ७२ ॥
साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्।
आध्मानमिति जानीयाद्घोरं वातनिरोधजम् ॥ ७३ ॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ॥ ७४ ॥
अष्ठीलावद्घनं ग्रन्थिमूर्द्ध्वमायतमुन्नतम्।
वाताष्ठीलां विजानीयाद्बहिर्म्मार्गावरोधिनीम् ॥ ७५ ॥

---

न्यभिवाहि यत् स्रोतस्तत्" इति। आवृत्येत्यादि। शब्दवाहिन्यो धमन्यो धमनीव्याकरणे वक्ष्यन्ते अक्रियकान् क्रियासु न सम्यक् समर्था-नित्यर्थः नञत्रयमीषदर्थे। मिन्मिनः सानुनासिकवाक्, गद्गदो विवद्धा-परिस्फुटवचनः; एषु च मूकस्य वाक्शक्तिविनाशकत्वे सत्यप्यव्यक्तं शब्दना-देरीषत्क्रियकत्वमध्यवसितव्यम्, स हि तेन किमपि बोधयन् मौनाद्वि-शिष्यत इत्यवश्यं वक्तव्यम्। अध इत्यादि। वर्च्चोमूत्राशयोत्थिता पक्काशय-मूत्राशयोत्थिता। उपस्थो भगं शिश्नश्च। आटोपो गुड़गुड़ाशब्दः। आध्मातं वातपूर्णदृतिवदन्तःप्रपूरितवातम्। विमुक्तेत्यादि। आमाशय-सन्निहितत्वेन पार्श्वहृदययोर्व्वेदनादिशङ्कां निरुणद्धि विमुक्तेति। वेदना-दिभिः परित्यक्तं पार्श्वहृदयमनेनेति विमुक्तपार्श्वहृदयम्। कफव्याकुलि-तानिलं कफावृतवातम्। अष्ठीला कूटोऽयोघन इत्यनर्थान्तरम् कर्म्म-

एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम् ॥ ७६ ॥

इति सुश्रुतसंहितायां निदानस्थाने वातव्याधिनिदानं
नाम प्रथमोऽध्यायः ।

---

धाराणां "नेहार" इत्याख्यायते ; तथाविधपाषाणभेदो वा । ऊर्द्धमत्य- र्थम्, आयतमुन्नतञ्च ग्रन्थिं ग्रन्थ्याकारं वृत्तोन्नतं शोफमिति निष्कर्षः । पश्चिमार्गावरोधिनीं वातमूत्रपुरीषावरोधिनीमिति तात्पर्य्यम् । एतेने- यास्याः सरुजताऽपि सूचिता भवति वातादिनिरोधनियतत्वाद्रुजायाः । एतामित्यादि । तिर्य्यगुत्थिता तिर्य्यगायता । अत्र एतामित्यनेनैव सरु- जत्वादेरुपलम्भेऽपि पुनरुपादानं नितरां तथात्वमाख्यातुम् ॥ ६६—७६ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने वातव्याधिनिदानं नाम प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

---

अथातोऽर्शसां निदानं व्याख्यास्यामः ॥ १ ॥

षड़र्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सह-जानि चेति ॥ २ ॥

तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गो-त्कटकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा

---

इदमत्रामनन्ति "पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् । सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे" इति पूर्व्वाध्याये च वातनिचयकृता व्याधयो व्याख्यातास्तदिदानीं यथाकथञ्चित् वातपञ्चकाऽभिनिर्वृत्तत्व-साम्यादर्शोनिदानमधिकरोति अथात इत्यादिना ॥ १ ॥

षड़ित्यादि । अत्र सहजानामपि वाताद्यनुशयित्वे सत्यपि पृथगुपा-दानं सहजत्वधर्म्मभेदादित्यनुसन्धेयम् । सन्निपातशब्द इह व्यामिश्रत्व-साधर्म्यात् द्वन्द्वादीनपि लक्षयतीत्यवश्यं वक्तव्यम्, अनन्तरं "यथोक्तं प्रसृताः" इत्यनेन पञ्चदशधा प्रसृतानामेव दोषाणां हेतुत्वेन परिग्रहात्; तथाच सन्निपातानामनेकविधत्वे सत्यपि सन्निपातत्वमेकविधं भवतीति सम्प्रधार्य्य संक्षेपतः षड़र्शांसीत्युपदेशो नानुपपन्नः । शोणितमत्र दोषदूषितमित्येवाव-सेयम्, दूष्यं हि तस्मैव दोषसम्बन्धमन्तरेण किमपि कर्त्तुमर्हतीति । वातादि-शब्दानान्त्वेषां तज्जेषु तात्पर्य्यम् । सहजानि बलारम्भकवीजोपतापात् शरीरेण सह जातानीत्यर्थः ॥ २ ॥

निदानादिविशेषेण विदितेषु हि विकारेषु न किञ्चित्प्रतीकारगौरवं भवतीति निर्णीयते "सङ्क्षेपतः क्रियायोगो निदानपरिवर्ज्जनम्" इत्याद्यनु-शासनात्; तदिदानीमदृष्टवशादन्तर्गर्भ एव जातत्वेनापरिहार्य्यनिदानान्यस-

एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याधो गत्वा गुदमागम्य प्रदूष्य वलीर्मांस-प्ररोहान् जनयन्ति विशेषतो मन्दाग्नेः, तथा तृणकाष्ठोपल-लोष्टवस्त्रादिसङ्घर्षणादभीक्ष्णं शीतोदकसंस्पर्शनाद्वा कन्दान् परिवृद्धानुत्पादयन्ति तान्यर्शांसीत्याचक्षते ॥ ३ ॥

तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुः। तस्मिन् वलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरभूताः प्रवाहणी विसर्ज्जनी संवरणी चेति। चतुरङ्गुलायताः सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः ॥ ४ ॥

---

ववुद्धमरणि नाम सहजान्यर्शांस्यपास्य जातोत्तरकालजान्येव निदानादि-विशेषेणोपदेष्टुमिदमुच्यते तत्रेति। तत्र तेषु प्रागुक्तेषु कर्मपथेषु मध्ये अनात्मवतां सहजत्वात् स्वास्थ्यानुवर्त्तनकालप्रयत्नशून्यानामित्यर्थः। आत्मा प्रयत्न इति पर्य्यायौ, अनात्मनामिति वक्तव्ये मत्वर्थीयः प्रयत्नाभावस्य नित्ययोगमाख्यातुम्। यथोक्तैर्गणशश्चोक्तैरित्यर्थः। उन्नतः पादमात्रेण कल्पित-तया उन्नतः काटः श्रोणिफलकं यत्र तदुत्कटकं तदेवासनमित्युत्कटका-सनम्, किरान्वयश्रोणिफलकत्वेन पादाश्रयमुपवेशनमित्येतत्। आदि-ग्रहणात् जागरणादीनामादेशः। विशेषैर्व्विशिष्टैर्व्बलवत्तरैरिति यावत्। प्रणष्टस्नेहमनतिक्रम्येति यथोक्तं पञ्चदशधेति निष्कर्षः। एकश इत्यादि-नैवार्थस्याख्योपलम्भोऽपि यथोक्तमिति विशेषणं स्पष्टार्थम्। प्रसृताः प्रसर्पं गताः। प्रधानधमन्योऽत्राधोगामिन्यो दश धमन्यः। अन्यथार्शसामुत्पत्तिं व्याचष्टे तथेति। कन्दान् स्थूलमूलान् मांसाङ्कुरान् ॥ ३ ॥

गुदं वलीश्च विशिनष्टि तत्रेत्यादिना। तत्र गुदवलिषु मध्ये इत्यर्थः। अर्द्धेनोनं पञ्चाङ्गुलमर्द्धपञ्चाङ्गुलं शाकपार्थिवादिषु द्रष्टव्यम्। अध्यर्द्धाङ्गु-लान्तरभूताः सार्द्धाङ्गुलान्तरिता इत्यर्थः। अत्र चतुरङ्गुलायता इति सङ्कु-चितावस्थायामित्येवावधेयमन्यथा पुंसां नारीणाञ्च यथाक्रममुपदेक्ष्यमाणं

शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः ।
गजतालुनिभाश्चापि वर्णतः संप्रकीर्त्तिताः ॥ ५ ॥
रोमान्तेभ्यो यवाध्यर्द्धो गुदौष्ठः परिकीर्त्तितः ॥ ६ ॥

प्रथमा तु गुदौष्ठादङ्गुलमात्रे । तेषान्तु भविष्यतां पूर्व्वरूपाण्यन्ने न श्रद्धा कृच्छ्रात् पक्तिरम्लीका सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोश्च श्वयथुरन्त्रकूजनं गुदपरिकर्त्तनमाशङ्का पाण्डुरोगग्रहणीदोषोदराणां कासश्वासौ भ्रमस्तन्द्रानिद्रेन्द्रियदौर्व्बल्यञ्च । जातेष्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति ॥ ७ ॥

तत्र मारुतात् परिशुष्कारुणवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाड़ीमुखसूचीमुखाकृतीनि च भवन्ति ।

---

पञ्चषड़ङ्गुलपरिणाहमर्शोयन्त्रमनुपपन्नं स्यात् स्रोतःप्रमाणापेक्षया स्थूलतरत्वात् । सामान्येनोक्तं तिर्य्यक्त्वमासां दृष्टान्तेनावगमयति शङ्खेत्यादिना । कुतः पुनरेता आरभ्यन्त इत्यपेक्षायां प्रथमं तावदुपयोगितया गुदौष्ठं लक्षयति रोमेत्यादिना । रोमप्रान्तानधिकृत्येति रोमान्तेभ्यः । यवाध्यर्द्धः सार्द्धयवपरिमितो देशः । प्रथमेत्यादि । अत्र प्रथमाव्याख्यानेनैवेतरे अपि द्वे व्याख्याते, अध्यर्द्धाङ्गुलान्तरिता इति प्रागुक्तेः, नातस्ते प्रति किञ्चिदुपदिश्यते । अम्लीका अम्लोद्गिरणम्, सक्थिसदनं जङ्घावसादः, आटोपः कुक्षेः सवेदनो गुड़गुड़ाशब्दः, गुदपरिकर्त्तनं गुदे कर्त्तनवद्वेदनाविशेषः । पाण्डुरोगादेराशङ्का तत्र तत्रोपदेक्ष्यमाणानामेतत्सजातीयानां पूर्व्वरूपाणां बाहुल्येन प्रादुर्भावादित्येव ॥ ४—७ ॥

तत्रेत्यादि । तत्रार्शःसु मध्ये इत्यर्थः ; परिशुष्कता निरास्रावता, विषममध्यता निम्नोन्नतमध्यता, तुण्डिकेरीनाम तालुरोगभेदः, नाड़ीमुखता

तैरुपहतः सशूलं संहतमुपवेश्यते कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ८ ॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति। तैरुपहतः सदाहं सरुधिरमतिसार्य्यते, ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ९ ॥

श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति। तैरुपहतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्य्यते शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति, शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १० ॥

---

चैषां वक्रमुखत्वादिनैत्युन्नेयम् "वक्रास्तीक्ष्णा विस्फुरिताननाः" इति तन्त्रान्तरीयैकवाक्यत्वात्। तैरर्शोभिरुपहत आर्त्तः सशूलं संहतं कठिनमुपवेश्यते पुरीषं त्याज्यते इत्यर्थः। अत्रोपहत इत्यस्योक्तत्वं विहितादन्यत्र नियमस्याभावात्, यथा "मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ॥ ॥ ॥ यास्त्वत्कुचः" इति ३५, उः, मेघदूते, तद्वत्। एवमुत्तरत्रापि यथायोगं व्याख्येयम्। तनूनि कृशानि "कृशं तनु" इत्यमरः। विसर्पीणि

रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्तलक्षणानि च यदावगाढ़पुरीषप्रपीड़ितानि भवन्ति तदास्यर्थं दुष्टमनल्पमसृक् सहसा विसृजन्ति। तस्यैवातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ ११ ॥

सन्निपातजानि सर्व्वदोषलक्षणयुक्तानि ॥ १२ ॥

सहजानि दुष्टशोणितशुक्रनिमित्तानि तेषां दोषत एव प्रसाधनं कर्त्तव्यम्। विशेषतश्चात्र दुर्द्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्म्मुखाणि तैरुपद्रुतः कृशोऽल्पभुक् शिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवणरोगवान् सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥ १३ ॥

भवति चात्र।

बाह्यमध्यवलिस्थानां प्रतिकुर्य्याद्भिषग्वरः।
अन्तर्व्वलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम् ॥ १४ ॥

---

अपाकित्वात् परिसर्पीणि, यवमध्यानि स्थूलोदराणि। श्लेष्मजानीत्यादि। करीरो वंशाङ्कुरः, गवां स्तनो गोस्तनः ॥ ८—१० ॥

रक्तजानीत्यादि। प्ररोहोऽङ्कुरः। विद्रुमः प्रवालः, काकणन्तिका गुञ्जा, पित्तलक्षणानि पित्तार्शोलिङ्गानि। सहजानीत्यादि। प्रसाधनं लिङ्गतः प्रभेदसाधनमिति तात्पर्य्यम्, चरकेऽप्युक्तं "तानि यथास्वं दोषानुबन्धवर्णानि" इति; तानि यथास्वं दोषानुबन्धतो वर्ण्यन्त इति तदर्थः। दुर्द्दर्शनान्यतिदीर्घत्वादितो भयङ्कराणि "सहजान्यर्शांसि कानिचिदणूनि कानिचिन्महान्ति कानिचिद्दीर्घाणि च" इत्यात्रेयः। परुषाणि कर्क्कशानि,

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति, ततः कण्डूयनात् क्षतं समुपजायते, तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्च्चिनोऽभ्यन्तरमुपरिष्टाद्वा। ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वम्, योनिमभिप्रपन्नास्तु सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीरान् जनयन्ति। त एवोर्द्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिर्व्वर्त्तयन्ति। तत्र कर्णजेषु वाधिर्य्यं शूलं पूतिकर्णता च। नेत्रजेषु वर्त्मावरोधो वेदनास्रावो दर्शननाशश्च। घ्राणजेषु प्रतिश्यायोऽतिमात्रं

---

दारुणान्यतिकठिनत्वादितो भीषणानि। अन्तर्मुखानीत्यन्तर्व्वलिसंस्थितत्वादभ्यन्तर्मुखानि। हृदयोपलेपो हृदयस्य श्लेष्माद्यावृतत्वेनावबोधाक्षमणीयः। वाह्येत्यादि प्रत्याख्याय नैतानि प्रायः साध्यन्ते यथेष्टं कुरुष्वेति निराकृत्येत्यर्थः॥ ११—१४॥

इदानीन्तावन्मांसप्ररोहत्वसाम्यादर्थान्तरमवतारयति प्रकुपिता इत्यादिना। तुकारः पूर्व्वस्माद्विशेषणार्थः। मेढ्रं मेहनमभिप्रपन्नाः प्राप्तास्तु दोषा इत्यर्थः। तस्मिन्नित्यादि। अभ्यन्तरं मणेरुपरि, उपरिष्टात् त्वगुपरि वा कूर्च्चिनः शूकरादिरोमवत् दृढसूक्ष्माङ्कुरानुविद्धाः प्ररोहाः इति समन्वयः कूर्च्चकं कठिनरोमेत्यनर्थान्तरम्। अङ्कुरापरपर्य्यायोऽयं प्ररोहशब्दः। योनिमभिप्रपन्नास्तु दोषा इत्येव। इहापि मांसशोणिते प्रदूष्येत्यनुषज्यते। करीरोऽङ्कुर इति पर्य्यायौ "हिमांशुवंशस्य करीरमेव" इति नैषधञ्च; करीरान् मांसाङ्कुरान् अर्शोविशेषानिति यावत्। जनयन्ति योनिमुपघ्नन्तुमित्युन्नेयं, शेफो विनाशयन्तीति प्रागुक्तसाहचर्य्यात्। पुनरर्थान्तरमवतारयति त एवेति। त एव दोषाः, उपनिर्व्वर्त्तयन्त्युत्पादयन्तीत्यर्थः। पूतिकर्णो नाम रोगोऽस्यास्तीति पूतिकर्णः मत्वर्थीय-

क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्च । वर्त्मजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति । व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य बहिःस्थिराणि कीलवदर्शांसि निर्व्वर्त्तयन्ति तानि चर्म्मकीलान्यर्शांसीत्याचक्षते ॥ १५ ॥

भवन्ति चात्र ।

तेषु कीलेषु निस्तोदो मारुतेनोपजायते ।
श्लेष्मणा तु सवर्णत्वं ग्रन्थित्वञ्च विनिर्द्दिशेत् ॥
पित्तशोणितजं कृष्णरक्तत्वं स्निग्धता तथा ।
समुदीर्णखरत्वञ्च चर्म्मकीलस्य लक्षणम् ॥ १६ ॥
अर्शसां लक्षणं व्यासादुक्तं सामान्यतस्तु यत् ।
तत् सर्व्वं प्राग्विनिर्द्दिष्टात् साधयेद्भिषजां वरः ॥ १७ ॥

---

स्तस्य भावः पूतिकर्णता । वर्त्मावरोधो निमीलितनेत्रता, पूतिनस्यं नासारोगभेदः, सानुनासिकवाक्यत्वं नासिकानुगतवाक्यता, शिरोदुःखं शिरःशूलम् । वर्त्मजेष्वित्यादि । तैरर्शोभिरित्यर्थः । गद्गदवाक्यता विबद्धापरिस्फुटवाक्यता । व्यान इत्यादि । अत्रानुक्तमपि पित्तशोणितमुन्नेयमेव, वक्ष्यति हि "पित्तशोणितजं कृष्णरक्तत्वम्" इति । बहिरिति त्वचामेव "त्वचो बहिः" इति तन्त्रान्तरञ्च । कीलवत् शङ्कुवत् । एतानि तु गुदौष्ठ एव प्रादुर्भवन्तीति केचित् ॥ १५ ॥

उक्तमर्थं पुनर्लक्षणतः स्फुटीकृत्यावगमयति तेष्वित्यादिना । सवर्णत्वं त्वक्समानवर्णता । न तावदेतान्येवास्य लिङ्गानीत्याह स्निग्धतेति । चकारोऽप्यर्थे, स्निग्धता तथा समुदीर्णखरत्वमुद्रिक्तं पारुष्य— चर्म्मकीलस्य

अर्शःसु दृश्यते रूपं यदा दोषद्वयस्य तु ।
संसर्गं तं विजानीयात् संसर्गः स च षड्विधः ॥
त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्दिशेत् ।
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ।
सन्निपातसमुत्थानि सहजानि तु वर्जयेत् ॥ १८ ॥

---

लक्षणमित्यर्थः । अत्र स्निग्धताखरत्वयोर्दोषविशेषेणानुपदेशेऽपि श्लेष्मणा स्निग्धता वातेन च खरत्वमित्यामनन्त्यायुर्व्वेदविदः । तथाच "वातेन तोद-पारुष्यं पित्तादसितरक्तता । श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता" इति । खरत्वं पारुष्यञ्चानर्थान्तरम् । नेह शोणितस्यानुपादानं विप्रति-पिद्धं भवति प्रायः पित्तधर्म्मत्वेनास्य तद्ग्रहणेन ग्रहणात् । सम्प्रति साम-र्थ्यगोक्तमर्थमुपसंहरन्नपरिस्फुटमर्थजातं स्फोरयति अर्शसामित्यादिना । अर्शसां लक्षणं व्यासादुक्तं तत्र वातेत्यादिना ग्रन्थसन्दर्भेणेति शेषः; सामा-न्यतस्तु तं तं दोषविशेषमननुसन्धाय यदुक्तं "जातैर्येतानि रूपाणि प्रव्यक्त-तराणि भवन्ति" तथा "कुपितास्तु" इत्यादिना ग्रन्थेन, प्राग्विनिर्दिष्टं दोषादिविज्ञानीयं व्रणप्रश्नादिकञ्चाभिसमीक्ष्येति प्राग्विनिर्दिष्टात् साधयेत् इदमस्माज्जातमिदञ्चास्मादित्येवं दोषतो निरूपयेदित्यर्थः ॥ १६—१७ ॥

इह हि "दोषा एकशः" इत्युपक्रम्य "यथोक्तं प्रसृताः" इत्यादिना प्राक्प्रसरभेदादर्शांसि पञ्चदशधा समुद्दिष्टानि, तदिदानीं परिशिष्टानि संसर्गजादीनि दशाभिधत्ते अर्शःस्वित्यादिना । दोषद्वयस्येति दोषशब्दो दोषातिदिष्टं शोणितमपि लक्षयतीत्यवश्यं वक्तव्यम्; षोढ़ा हि संसर्गो द्विशो दोषैरेवैकशो दोषशोणितैश्च भवतीति निश्चीयते व्रणप्रश्नोक्तं प्रसर-प्रकारमभिसमीक्ष्येति साम्प्रतमेतत्; तथा चकारस्यानुक्तसमुच्चयार्थत्वात् तत्र शोणितेन सह दोषद्वयस्य त्रयस्य वा रूपं दृश्यते तमन्यथा सन्निपातं

सर्व्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः।
तैस्तु प्रतिहतो वायुरपानः सन्निवर्त्तते।
ततो व्यानेन सङ्गम्य ज्योतिर्मृद्नाति देहिनाम्॥ १९॥

इति सुश्रुतसंहितायां निदानस्थानेऽर्शोनिदानं नाम
द्वितीयोऽध्यायः।

---

विजानीयादित्युन्नेयम्। स पुनश्चतुर्व्विधो भवतीत्युपपन्नं भवति पञ्चदशार्शांसीति, सहजानामेष्वेवान्तर्भावादित्यवधेयम्। परिगतोऽतिक्रान्तः संवत्सरो यैस्तानि परिसंवत्सराणि। सन्निपातेत्यादि। सन्निपातसमुत्थानीति सामान्येनोक्तमपि बहुलिङ्गानीति विशेषणीयं प्रागल्पलिङ्गानां याप्यत्वेनोपदेशात्। अत्र विशेषयति भगवानात्रेयः "शेषत्वादायुषस्तानि चतुष्पादसमन्विते। याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा" इति। दुर्नामभिरर्शोभिः, ज्योतिरग्निं मृद्नाति नाशयतीत्यर्थः। परिशिष्टं निगदव्याख्यातम्॥ १८—१९॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने अर्शोनिदानं नाम द्वितीयोऽध्यायः।

---

# तृतीयोऽध्यायः।

अथातोऽश्मरीणां निदानं व्याख्यास्यामः ॥ १ ॥

चतस्रोऽश्मर्य्यो भवन्ति श्लेष्माधिष्ठानाः। तद्यथा—श्लेष्मणा वातेन पित्तेन शुक्रेण चेति ॥ २ ॥

तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य वस्तिमश्मरीर्जनयति ॥ ३ ॥

तासां पूर्व्वरूपाणि वस्तिपीड़ारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्राज्ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति ॥ ४ ॥

---

समानसंश्रयौ हि गुदवस्ती इत्यनन्तरं निवेदयिष्यते "वस्तिर्व्वस्तिशिरश्चैव" इत्यादिना ग्रन्थसन्दर्भेण, तदिह गुदवस्त्योरेकाधिकरणत्वात् तज्जानामपि व्याधीनां यथाकथञ्चित् सजातीयत्वमस्तीति सम्प्रधार्य्यार्शोनिदानानन्तरमश्मरीनिदानमधिकरोति अथात इत्यादिना ॥ १ ॥

किमुपादानाः कति नाम वाश्मर्य्यः? इत्याह चतस्र इत्यादि। श्लेष्माधिष्ठानाः श्लेष्मसमवायिकारणाः। तत्रेत्यादि। अपथ्यकारिणो यथास्वं निदानसेविनः। वचनमिदं दोषजाश्मरीत्रितयसम्प्राप्तिविषयमिति निश्चीयते, पृथक्त्वेन शुक्रजाश्मरीसम्प्राप्तेर्व्वक्ष्यमाणत्वात्; तदिह श्लेष्मा शुद्धः पित्तेन वातेन वानुविद्धश्चेत्युन्नेयम् अनन्तरं तथैवोपदेशात्। मूत्रसम्पृक्तो मूत्रसंसृष्टः। तासामित्यादि। तासां चतसृणामित्यर्थः, न पुनः सन्निहितत्वात्तिसृणामिति, तन्त्रान्तरे "अथासां पूर्व्वलक्षणम्" इत्यादिनाविशेषेणैतासामेव लिङ्गानामश्मरीसामान्यपूर्व्वरूपत्वेनोपदेशात्। वस्तिपीड़ाऽत्र वस्त्याध्मानमित्याहुः। कृच्छ्रान्मूत्रकृच्छ्रादेतौर्वस्तिशिरःप्रभृतीनां वेदनेति।

यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम् ।
पूर्व्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥ ५ ॥

अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदकप्रकाशमनाविलं ससिकतं विसृजति धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति ॥ ६ ॥

तत्रात्यर्थं श्लेष्मलमन्नमभ्यवहरतः श्लेष्मा सङ्घातमुपगम्य

---

सम्बन्धः । तत्र वस्तिशिरसी नाम कटिसन्निविष्टौ वस्तेरूर्द्ध्वावयवभेदौ यत्र मूत्रमुत्पद्यत इत्युपरिष्टाद्व्यक्तीभविष्यति । मुष्कोऽण्डकोषः । शेफः शिश्नो मेहनमित्यनर्थान्तरम् । छागस्येव गन्धोऽस्येति वस्तगन्धि ॥ २—४ ॥

यथास्वमित्यादि । यथास्वं यथादोषं वेदनावर्णमित्यकारो मत्वर्थीयः, वेदनावर्णवदित्यर्थः । सान्द्रं घनम्, आविलं कलुषम्, अश्मनोऽश्मरीसमूहस्येत्यर्थः । अथासां सामान्यलिङ्गानि व्याचष्टे अथेत्यादिना । मूत्रधारासङ्गः सरुधिरमूत्रता चेति लक्षणद्वयमश्मरीनिरुद्धमार्गविषयम् । मूत्रविकिरणं सुखेन मूत्रप्रवृत्तिः, एतत्तु मार्गादपगताश्मरीकविषयम्, गोमेदको लोहितमणिविशेषः, तन्त्रान्तरेऽप्युक्तम् "विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने । तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् । तत् संक्षोभात् क्षतं सास्रम्" इति । ससिकतं सिकताकारेणाश्मर्य्यंशेनानुगतम् । वक्ष्यति हि "शर्करासिकतामेहो भस्माख्योऽश्मरिवैकृतम्" इति । धावनं शीघ्रगमनम्, लङ्घनं गर्त्तादीनामुत्प्लवेनातिक्रमणम्, प्लवनं सन्तरणम् ॥ ५—६ ॥

सम्प्रति तत्रासंशोधनशीलस्येत्यादिना प्रागुक्तमर्थं स्फोरयन् क्रमेणासां लिङ्गान्युपदिदिक्षति तत्रेत्यादिना । तत्रासंशोधनशीलापथ्यकारिषु मध्ये अत्यर्थं श्लेष्मलमन्नमभ्यवहरत इति समन्वयः । संघातमुपगम्येति मनाग्वातपित्तसंश्रयेणेत्यवधेयम्, वक्ष्यति हि "तद्वद्बलासं वस्तिस्थमुष्मा संहन्ति

यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति। तां श्लैष्मिकीमिति विद्यात् ॥ ७ ॥

पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतीघाताद्दूष्यते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति। तां पैत्तिकीमिति विद्यात् ॥ ८ ॥

वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतीघातात् तीव्रवेदना भवति, तथात्यर्थं पीड्यमानो दन्तान् खादति, नाभिं पीडयति, मेढ्रं मृद्नाति, पायुं स्पृशति, विशर्द्धते, वि-

---

सानिलः" इति। अनन्तरोक्तानां लिङ्गानामनतिक्रमो यथोक्तं तद्विद्यते यस्या इत्यचि यथोक्ता तां तथोक्ताम्, अनतिक्रान्तश्वेतादिलिङ्गामित्यर्थः। एवमुत्तरत्रापि व्याख्येयम्। दाल्यते कुठारेणेव दीर्य्यते भिद्यते आरयेव स्फोत्यते, निस्तुद्यते व्यथ्यते ॥ ७ ॥

पित्तेत्यादि। अत्र तुकारेणात्यर्थं श्लेष्मलमन्नमभ्यवहरत इत्याक्षेपाल्लभ्यते। चूष्यते समीपस्थेनेव वह्निना दह्यते। दह्यते अग्निना भस्मसादिव क्रियते। पच्यते क्षारेणेव दह्यते। उष्णवातो नाम रोगो मूत्राघातभेदः। वातेत्यादि। विशर्द्धते आर्त्तनादं करोतीत्यर्थः "शृधुङ् शब्दकुत्सायाम्"

दहति, वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति। अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत् कण्टकाचिता भवति। तां वातिकीमिति विद्यात्॥ ९॥

प्रायेणैतास्तिस्रोऽश्मर्य्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति। तेषामेवाल्पबस्तिकायत्वादनुपचितमांसत्वाच्च बस्तेः सुखग्रहणाहरणा भवन्ति॥ १०॥

महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति॥ ११॥

मैथुनाभिघातादतिमैथुनाद्वा शुक्रं चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति, संहृत्य चोपशोषयति; सा मूत्रमार्गमावृणोति, मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीड़ितमात्रे च

---

इति धात्वर्थस्मरणात्। विदहति बिन्दुशो निष्पन्देन परितपतीत्यर्थः "मुहुर्मेहति बिन्दुशः" इति तन्त्रान्तरञ्च। शेषं समानम्॥ ८—१०॥

महतामित्यादि तुकारो विशेषणार्थः। शुक्रनिमित्ता इति समवायिकारणापरपर्य्यायोऽयं निमित्तशब्दः; न चैतदप्रसिद्धम् "सर्व्वसरास्तु वातपित्तकफशोणितनिमित्ताः" इत्यादौ तदर्थे भूरिप्रयोगदर्शनात्। मैथुनेत्यादि। इदमत्रावधेयम् विहते हि शुक्रवेगे अतिक्षते च संसर्गे वातवैगुण्यात् दौर्व्वल्याच्च प्रवृत्तमपि शुक्रं न सम्यक् निर्गच्छति, तदिदमुच्यते मैथुनाभिघातादित्यादि। मैथुनाभिघातात् स्मरणाद्यष्टविधे मैथुने शुक्रस्य वेगप्रतीघातादित्यर्थः। "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गम्" इति स्मृतिः। अतिमैथुनात् मैथुनप्राचुर्य्यात्। विमार्गगमनात् विकृतत्वादित्यर्थः। अभित-

तस्मिन्नेव प्रदेशे प्रविलयमापद्यते। तां शुक्राश्मरीमिति विद्यात् ॥ १२ ॥

भवति चात्र।

शर्करा-सिकता-मेहो भस्माख्योऽश्मरिवैकृतम्।
अश्मर्य्या शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥
पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः।
सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते ॥
हृत्पीड़ासक्थिसदनं कुक्षिशूलः सवेपथुः।
तृष्णोर्द्ध्वगोऽनिलः कार्ष्ण्यं दौर्ब्बल्यं पाण्डुगात्रता ॥

---

उभयपार्श्वतो धमनीव्याकरणो वक्ष्यमाणस्रोतोद्वयत इति निष्कर्षः। संहरति राशीकरोति प्रविलयमापद्यत इत्यचिरजाताश्मरीविषयम्, "तस्यासुत्पन्नमात्रायां शुक्रमेति विलीयते" इत्यादि तन्त्रान्तरञ्च ॥ ११—१२ ॥

शर्करेत्यादि। न ह्यविशेषविद्रोगाणामौषधविदपि भिषक् प्रभवति काञ्चिदप्यातुरमुत्थापयितुं, तदिदं विशिनष्टि अश्मर्य्येत्यादिना। अश्मर्य्या तुल्यव्यञ्जनवेदना अश्मरीसमानवर्णशूलादिलिङ्गा। अल्पा क्षुद्रा, सा शर्करा, विशेषतो बाहुल्येनेत्यर्थः। प्रतिलोमे तु पवने क्वचिदिति शेषः। स्यादेतत् कुतस्तु खल्वियमश्मरी वैकृतमुच्यत इत्याह सेत्यादि। "सर्व्वं वाक्यं सावधारणम्" इति न्यायात्, सा अश्मर्य्येव वातेन भिन्नमूर्त्तिः "अणुशो वायुना भिन्ना" इत्यादि तन्त्रान्तरीयैकवाक्यत्वात् कणशो भिन्ना सती शर्करेत्यभिधीयते, उपलखण्डसाम्यादित्ययमभिसन्धिः। शर्करा उपलखण्डश्चेत्यनर्थान्तरम्। शर्कराया उपद्रवमाह हृदित्यादि। प्रतिरोहिसार्थमेतत्। सिकता मेहो भस्माख्यश्च यथाक्रमं प्रमेहमूत्राघातयोर्हि निवेदयिष्यते तदिह तौ प्रति न किञ्चिदुपदिश्यते। भस्माख्यस्तत्र मूलशुक्रेति प्रसिद्धः। न ह्यविशेषेणोपदिष्टोऽर्थः प्रतिपिरसूनां किमपि प्रति-

अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च ।
मूत्रमार्गप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान् ॥
दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम् ।
पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीड़नं वमिम् ॥
नाभिपृष्ठकटीमुष्क-गुदवङ्क्षणशेफसाम् ।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः ।
अलाव्वा इव रूपेण शिरास्नायुपरिग्रहः ॥
वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम् ।
एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः ॥ १३ ॥
मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ।
पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः ।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥

---

पिसितमर्थं प्रतिपादयतीति प्राङ्नाममात्रेणाभिहितं पुनर्व्वस्तिं लक्षणतो निरूपयति नाभीत्यादिना। नाभिप्रभृतीनां मध्ये इति समन्वयः। तन्वी त्वगस्येति तनुत्वकः। अलाव्वा इव रूपेणेति नातिसञ्चितमूत्रविषयम्; अतिसञ्चिते हि मूत्रे हंसडिम्बाकारतामापद्यते। शिरास्नायू अवलम्बनमस्येति सिरास्नायुपरिग्रहः, एतेन निर्म्मांसताऽपि सूचिता भवति। वस्तीत्यादि। पुरुषस्य प्रागुक्तस्य स्त्रीपुंसात्मकस्येदं पौरुषं भगं शिश्नश्च। एते वस्त्यादयो भावा एकसम्बन्धिनः समानसंश्रयाः, हि यस्मात् गुदास्थिविवरस्थिताः गुदास्थीनि तद्विवराणि चास्थिता इत्यर्थः ॥ १३ ॥

पुनर्व्विशिनष्टि मूत्रेति। मूत्राशयो नाम मलाधारः; किट्टाधारोऽपि

सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः ॥
नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात् ।
जाग्रतः स्वपतश्चैव स निष्यन्देन पूर्य्यते ॥
आ मुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः ।
घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते ॥ १४ ॥
एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा ।
मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥

---

सन् उत्तमं प्राणायतनमग्नीषोमादीनामाश्रय उच्यत इति शेषः; तत एव हि विक्लेदकत्वेनोपदिष्टस्य मूत्रस्यास्रावादक्षिन्ना धातवो नियमेन परिपालयन्त्यग्नीषोमादीनीत्ययमभिसन्धिः। स्यादेतदिदानीन्त्विदमेव तावन्नवान् प्रष्टव्यः, कुतः के नाम तत्र मूत्रमभिवहन्तीत्याह पक्वेत्यादि। पक्वाशयशब्देनेह वस्तिशिरसी एवोच्येते उपचारात् "गङ्गायां घोषः" इतिवदित्यवश्यं वक्तव्यम् स्वार्थे तात्पर्य्यानुपपत्तेः, दृश्यते हि तद्गता एव स्यन्दयन्त्यः सूक्ष्माः सहस्रशो नाड्यो हंसपक्षनाडीमनुकुर्व्वता मूत्राशयसंसक्तेन स्रोतोद्वितयेन मूत्राशयं प्रपूरयन्त्यहरहो मूत्रंनिष्यन्देनेति नानुपपत्तिः। आसां वस्तिशिरोगतानां नाडीनामित्यर्थः। तच्च मूत्रमाहाररसोत्पन्नत्वेनामाशयादेवागच्छति, तदिदमुपपन्नं भवति नाडीभिरित्यादि। निष्यन्देन मन्दं मन्दं क्षरणेन। निष्यन्दतः पूरणप्रकारं दृष्टान्तेन स्फुटीकृत्यावगमयति आमुखादित्यादिना। उत्तालचणो घटो यथा पार्श्वेभ्यश्चतुष्पार्श्वगतच्छिद्रेभ्यो नवस्तत्र पूर्य्यते निष्यन्देन सलिलेनेति शेषः, तथा मूत्रवहनाडीभ्यो वस्तिः पूर्य्यते मूत्रेण निष्यन्देनेति विद्धीति योजना ॥ १४ ॥

एवमित्यादि। एवं मूत्रवदेव प्रविश्यते अनेनेति व्युत्पत्त्या प्रवेशेन प्रकृतत्वात् सूक्ष्मेण छिद्रनिचयेनेत्यर्थः, उपस्नेहात् स्नेहेनोपमितत्वात् घटादौ स्नेहानुप्रवेशन्यायादिति यावत्। ये पुनरत्र स्वच्छेन मूत्रेण निर्म्मले वस्ता-

अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे घटे।
कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा॥
संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः।
तद्वद्बलासं वस्तिस्थमूष्मा संहन्ति सानिलः॥
मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते।
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि॥
मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च।
मूत्रदोषाश्च ये केचिद्वस्तावेव भवन्ति हि॥ १५॥

इति सुश्रुतसंहितायां निदानस्थानेऽश्मरीनिदानं
नाम तृतीयोऽध्यायः।

---

वश्मर्य्युत्पत्तिं प्रति विप्रतिपद्यन्ते तान् प्रत्याह अप्स्वित्यादि। स्वच्छास्वा-पाततो निर्म्मलत्वेन प्रतीयमानास्वित्येवार्थः, यथावन्निर्म्मलास्वान्तरीक्ष्यासु तथाविधास्वन्यासु चाप्सु सुचिरेणापि पङ्कानुत्पत्तिदर्शनात्। अत्र नव इति विशेषणं नितरां निर्म्मलत्वमाविष्कर्त्तुम्। ऊष्मा पित्तम्। शेषोक्तः श्लोकः प्रासङ्गिकः। परिशिष्टं निगदव्याख्यातम्॥ १५॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने अश्मरीनिदानं नाम तृतीयोऽध्यायः।

# चतुर्थोऽध्यायः ।

अथातो भगन्दराणां निदानं व्याख्यास्यामः ॥ १ ॥

वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीव-परिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्यु-च्यन्ते । अपक्वाः पिड़काः, पक्वास्तु भगन्दराः । तेषान्तु पूर्व्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति ॥ २ ॥

तत्रापथ्यसेविनो वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिड़कां जनयति । सास्य तोदादीन् वेदनाविशेषान् जन-यति; अप्रतिक्रियमाणा च पाकमुपैति मूत्राशयाभ्यासगत-

---

अश्मरीभगन्दरौ हि वस्तिगुदे अधितिष्ठतस्ते च गुदास्थिविवराख्यायत-इत्यासनन्त्यायुर्व्वेदे तदिदमधिष्ठानाधिकरणसाम्यादश्मर्य्यनन्तरं व्याचिख्या-सितत्वेनोपस्थितं भगन्दरनिदानं नामाधिकरोति अथात इत्यादिना ॥ १ ॥

वातेत्यादि । संक्षेपेण रोगस्यास्य स्वरूपं विजिज्ञापयिषुर्भगवानिदानीं भगन्दरशब्दं निर्व्वक्ति त इत्यादिना । भगादिविदारणात् भगन्दरशब्दः पृषोदरादिषु द्रष्टव्यः । तत्रेत्यादि । तत्र वातादिषु मध्ये इत्यर्थः । सन्निवृत्तः स्वकार्म्मविरतः, अतएव स्थिरीभूतो निश्चल इत्यर्थः । गुदमभितो गुदचतुष्पार्श्वतः । द्वावङ्गुलौ परिमाणमस्येति द्व्यङ्गुलो द्व्यङ्गुलपरिमितो देशः, एतेनैवाङ्गुलपरिमितस्याप्युपलम्भे अङ्गुल इति विशेषणं प्रायस्तत्रैव

त्वाच्च व्रणः प्रक्लिन्नः शतपोनकवद्गणुमुखैश्छिद्रैरापूर्य्यते, तानि च छिद्राण्यजस्रं फेनानुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते गुदञ्चावदीर्य्यते उपेक्षितश्च वातमूत्रपुरीषरेतसामप्यागमश्च तैरेव च्छिद्रैर्भवति । तं भगन्दरं शतपोनकमित्याचक्षते ॥ ३ ॥

पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्व्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति । सा च चोषादीन् वेदनाविशेषान् जनयति ; अप्रतिक्रियमाणा च पाकमुपैति व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवति ; उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति । तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ४ ॥

---

जनयतीत्यावेदयितुम् । मूत्राशयसन्निकृष्टे हि देशे सञ्जाता मांसानुसारिणी वातानुविद्धा पिड़का व्रणो वा शोफसङ्कोचादिभिर्व्विशेषैर्मूत्रमवश्यं मनाक् सर्व्वशो वा निरुणद्धि, निरुद्धञ्च तन्मूत्रं मांसपेशीरनुप्रविश्य परितस्तदासन्नं देशं क्लेदयतीति निश्चीयते तदिदमुच्यते मूत्राशयाभ्यासगतत्वाच्चेति । अभ्यासः आसन्नो देशः । शतपोनकवत् चालनिकावत्, आपूर्य्यते युज्यत इति तात्पर्य्यम् । फेनानुविद्धं फेनानुगतम्, ताड्यते दण्डेनेवाहन्यते, भिद्यते कुठारेणेव विदीर्य्यते, छिद्यते दात्रेणेव द्विधा क्रियते । गुदञ्चावदीर्य्यते व्रणानां परस्परसंश्लेषेणेति शेषः । शतपोनक इति तत्साम्यात् व्यपदेशः ॥ २—३ ॥

पित्तमित्यादि । पूर्व्ववदवस्थितं स्थिरीभूतमित्यर्थः, उच्छ्रितामुन्नताम्, उष्ट्रग्रीवाकारां मध्ये वक्रामिति तात्पर्य्यम् । जनयति गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्येत्युन्नेयं प्रागुक्तसाहचर्य्यात् । एवमेवो-

श्लेष्मा तु प्रकुपितः समीरणेनाधः प्रेरितः पूर्व्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिड़कां जनयति। सास्य कण्ड्वादीन् वेदनाविशेषान् जनयति ; अप्रतिक्रियमाणा च पाकमुपैति व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति ; उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति। तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ५ ॥

वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्व्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्व्वलिङ्गां पिड़कां जनयति। सास्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयति ; अप्रतिक्रियमाणा च पाकमुपैति व्रणश्च नानाविधवर्णास्रावं स्रवति ; पूर्णनदीशम्बूकावर्त्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः तं भगन्दरं शम्बूकावर्त्तमित्याचक्षते ॥ ६ ॥

सूढ़ेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदावगाढ़पुरीषोन्मिश्रमपानेनाधः प्रेरितमसम्यगागतं गुदं चि-

न्तरणाऽपि व्याख्येयम्। श्लेष्मेत्यादि। संरम्भी निरन्तरवेदनः। वायुरित्यादि। वेदनाविशेषाः पूर्णनद्या आवर्त्तवत् चक्राकारेण, शम्बूकावर्त्तवत् रेखाविशेषमवलम्ब्य क्रमशस्तिर्य्यगूर्द्धगामित्वेन वेति पूर्णनदीशम्बूकावर्त्तवत्, समुत्तिष्ठन्ति प्रवर्त्तन्त इत्यर्थः। परिशिष्टं निगदव्याख्यातम् ॥ ४—६ ॥

सूढ़ेनेत्यादि। अत्रावगाढ़पुरीषोन्मिश्रमित्यनेन शल्यस्य ऋजुभावापवर्त्तनानर्हत्वं प्रतिपाद्य नियमेन चतकारित्वं विज्ञापितमित्यवधेयम्।

णोति तत्र क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्ते। ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तैर्मार्गैः क्रिमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्ति। तं भगन्दरमुन्मार्गिणमित्याचक्षते॥ ७॥

भवन्ति चात्र।

उत्पद्यतेऽल्परुक्शोफा क्षिप्रञ्चाप्युपशाम्यति।
पाय्वन्तदेशे पिड़का सा ज्ञेयान्या भगन्दरात्॥
भागन्दरी तु विज्ञेया पिड़काऽतो विपर्य्ययात्।
पायोः स्याद्द्व्यङ्गुले देशे गूढ़मूला सरुग्ज्वरा॥ ८॥
यानयानान्मलोत्सर्गात् कण्डूरुग्दाहशोफवान्।
पायुर्भवेद्रुजः कट्यां पूर्व्वरूपं भगन्दरे॥ ९॥

---

असम्यगागतं तिर्य्यगागतम्। कोथः पूतिभावः। पूयरुधिराभ्यामवकीर्णे मांसकोथोऽत्रेति पूयरुधिरावकीर्णमांसकोथं तस्मिन् तथोक्ते क्षतविशेषणमेतत्। उन्मार्गो विमार्गः प्रकृतत्वात् क्रिमिकृतमार्ग इति निष्कर्षः, सोऽस्यास्तीत्युन्मार्गी, निन्दायामिन्। न तावत् भगन्दराणां दुःखत्वेन विवक्षितत्वात् सर्व्वासामेव गुदान्तप्रदेशगतानां तदाकृतीनां पिड़कानां दुःखत्वसध्ववस्य भागन्दरित्वमाशङ्कितव्यमित्याह उत्पद्यत इत्यादि। पूर्व्वं द्व्यङ्गुल इत्युक्तेऽपि पुनरिह द्व्यङ्गुलोपपादानं भागन्दरी पिड़का क्वचिदपि द्व्यङ्गुलं नातिक्रामतीति नियमार्थम्, अन्या तु न तथेति स्थानतो विपर्य्ययः प्रदर्शितो भवति। निदानव्याख्याप्रसङ्गात् पूर्व्वरूपाण्यनुवर्दति यानेत्यादिना। पूर्व्वं हि सोपद्रवाणामसाध्यत्वमवाच्यमपि व्याहृतं तदिदानीं पारि-

घोराः साधयितुं दुःखाः सर्व्वं एव भगन्दराः ।
तेष्वसाध्यस्त्रिदोषोत्थः चतजश्च भगन्दरः ॥ १० ॥
इति सुश्रुतसंहितायां निदानस्थाने भगन्दरनिदानं
नाम चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥

मिथ्याहाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्म्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाभीक्ष्णमश्नतः, यो वा सज्ज-

---

शेषादिदमुच्यते त्रिदोषोत्थः चतजश्चेत्यनुसन्धेयम् । परिशिष्टं निगदव्याख्यातम् ॥ ७—१० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने भगन्दरनिदानं नाम चतुर्थोऽध्यायः ।

---

दुःसाध्यत्वसामान्याद्भगन्दरनिदानानन्तरं कुष्ठनिदानमधिकरोति अथात इत्यादिना ॥ १ ॥

आयुर्व्वेदे हि मुख्यया हत्याहितसमाख्याते अन्नपानादौ अन्वायुक्ते स्नानाचमनादौ चाहाराचारशब्दौ प्रवर्त्तेते इतरत्र तु भक्त्या अतस्मिंस्तद्व्यपदेशेनेति गम्यते "प्राणिनां पुनर्मूलमाहारः" तथा "रक्तप्रसादनश्चापि [illegible] अनुशासनात्; अतोऽस्मिंश्च तद्व्यपदेशो नामा-

त्यसू प्राभितप्तः सहसा छर्द्दिं प्रतिहन्ति तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृत्तस्तिर्य्यग्गाः शिराः सम्प्रतिपद्य सन्दूष्य वाह्यं मार्गं प्रति समन्ताद्विक्षिपति। यत्र यत्र च दोषो विक्षिप्तो निःसरति तत्र तत्र मण्डलानि प्रादुर्भवन्त्येव-मुत्पन्नस्त्वचि दोषस्तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्य-न्तरं प्रतिपद्यते धातून् दूषयन् ॥ २ ॥

तस्य पूर्व्वरूपाणि त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः

---

ध्यास उच्यते, स च मिथ्येति पण्डिता मन्यन्ते, तदिहाविशेषात् वैकारि-काहाराचारशीलं लक्षयितुमिदमुच्यते मिथ्येत्यादि। मिथ्याहाराचारस्या-हिताचारविहारस्येत्यर्थः। सामान्येनोक्तमर्थं पुनरव्यभिचारित्वादिधर्म्म-मनुसन्धाय विशिनष्टि विशेषादित्यादिना। विरुद्धानि हिताहितीये प्रागुपदिष्टानि। स्नेहेत्यादिपदद्वयं व्यायामेत्यादिना योजनीयम्। ग्राम्य-धर्म्मो मैथुनम्, उष्मणा अग्न्यातपादिना अभितप्त उष्माभितप्तः। प्रति-हन्ति निगृह्णाति। तिर्य्यग्गा इति तिर्य्यग्गमनस्वभावात् प्रतानभूताः सिराः, प्रतिपद्य प्राप्य, सन्दूष्येति "सिराः प्रपद्य तिर्य्यग्गास्त्वग्लसीकासृगा-मिषम्। दूषयन्ति" इति तन्त्रान्तरीयस्मरणात् त्वगादींश्चतुर इति शेषः। अम्बुपर्य्यायोऽयं लसीकाशब्दः। वाह्यं मार्गमिति "रक्तादयो धातवस्त्वक् च वाह्यो रोगमार्गः" इत्यागमे सत्यपि सामान्यशब्दस्य विशेषवृत्तित्वात् "एवमुत्पन्नस्त्वचि" इत्यनन्तरोक्तेश्च वाह्यां त्वचं प्रति लक्षीकृत्य समन्तात् सर्व्वतो विक्षिपतीत्येवं प्रत्येतव्यम्। एवं त्वचि उत्पन्नो मण्डलरूपेण परिणतो वातादिरप्रतिक्रियमाणः सन् तत्र तत्र परिवृद्धिं प्राप्य धातून् दूषयन् अभ्यन्तरमाभ्यन्तरं रोगमार्गं "महास्रोतः शरीरमध्यं महानिम्न-मामाशयश्चेति स रोगमार्ग आभ्यन्तरः" इति स्मरणात् महास्रोत आदिकं प्रतिपद्यत इत्यर्थः ॥ २ ॥

स्वेदबाहुल्यमस्वेदनं वाङ्गप्रदेशानां स्वापः चतविसर्पणमसृजः कृष्णता चेति ॥ ३ ॥

तत्र सप्त महाकुष्ठान्येकादश चुद्रकुष्ठान्येवमष्टादश कुष्ठानि भवन्ति। तत्र महाकुष्ठान्यरुणौडुम्बरर्ष्यजिह्व-कपाल-काकणक-पुण्डरीक-दद्रुकुष्ठानीति। चुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्म्मदलं विसर्पः परिसर्पः सिध्म विचर्च्चिका किटिभं पामा रकसा चेति ॥ ४ ॥

सर्व्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युत्सन्नतस्तु दोषग्रहणमभिभवात् ॥ ५ ॥

तत्र वातेनारुणं, पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणकानि, श्लेष्मणा पौण्डरीकं दद्रुकुष्ठञ्चेति। तेषान्तु महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशादसाध्यत्वञ्चेति ॥ ६ ॥

तत्र वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि। पित्तेन पक्वौडुम्बरफलाकृतिवर्णान्यौडुम्ब-

---

तस्येत्यादि। तस्येति प्रकृतत्वात् कुष्ठसामान्यस्येत्यर्थः। चतविसर्पणं चतप्रसारः। तत्रेत्यादि। तत्र कुष्ठसामान्यमध्ये इत्यर्थः। सर्व्वाणीत्यादि। नन्वेवं त्रिदोषजानि चेदेतानि तत्कथमिदमुपदेक्ष्यते वातेनारुणमित्यादि ये त्वेवं प्रत्यवतिष्ठन्ते तान् प्रत्याह उत्सन्नत इति। उत्सन्नत उत्कर्षत एव दोषग्रहणं क्रियत इति शेषः। तुकारोऽवधारणार्थः। अत्र हेतुः अभिभवात् शास्त्रे प्रायो बलावकृष्टानामनादरादित्यर्थः, नातो वातेनारुणमित्यादि वच्यमाणवचनमनुपपन्नमित्ययमभिसन्धिः ॥ ३—६ ॥

तानि पुनर्व्विभज्य लक्षणतो निरूपयति तत्रेत्यादिना। अरुणानि

राणि; ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि; कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि; काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि। तेषां चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि ॥ ७ ॥

पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि; अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिड़कावन्ति च दद्रुकुष्ठानि। तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वञ्चेति सामान्यरूपाणि ॥ ८ ॥

क्षुद्रकुष्ठान्यत ऊर्द्ध्वं वक्ष्यामः ॥ ९ ॥

स्थूलानि सन्धिष्वतिदारुणानि स्थूलारूंषि स्युः कठिनान्यरूंषि।
त्वक्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्व्वयुते भवन्ति ॥

---

अरुणनामानि कुष्ठानि। ऋष्यः खरजिह्वो हरिणभेदः। कृष्णकपालिका कृष्णकपालखण्डम्। काकणन्तिका गुञ्जा, रक्तकृष्णानीति मध्ये कृष्णान्यन्ते रक्तानि, विपर्य्यस्तानि वा। तेषामित्यौडुम्बरादीनां काकणकान्तानाम्, समानान्येव सामान्यानि। पुण्डरीकेत्यादि। पुण्डरीकं पद्मम्, अत्र विशिनष्ट्यात्रेयः "सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम्। सोत्सेधञ्च सरागञ्च पुण्डरीकं तदुच्यते" इति। अतसी नामौषधिः "तिसि" इति विज्ञायते, विशेषणमिदं नीलकृष्णत्वमाख्यातुम् ॥ ७।८ ॥

क्षुद्रेत्यादि। स्थूलारूंषि स्थूलारुष्कसंज्ञके कुष्ठे, अरूंषि व्रणाः। त्वचां सङ्कोचः स्फुटनं सुप्तिश्चेति त्वक्कोचभेदस्वपनानि, तानि चाङ्गसादाश्चेति

हस्ताग्रतणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यम्।
स्पर्शेन काण्डूव्यथलौषचोषास्तलेषु तच्चर्मदलं वदन्ति॥
विसर्पवत् सर्पति सर्व्वतो यस्त्वग्रक्तमांसान्यभिभूय शीघ्रम्।
मूर्च्छाविदाहारतितोदपाकान् कृत्वा विसर्पः स भवेद्विकारः॥
शनैः शरीरे पिड़काः स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः।
कण्ड्वन्वितं श्वेतमपायि सिध्म विद्यात् तनु प्रायश ऊर्द्धकाये॥
राज्योऽतिकण्डूर्त्तिरुजः सुरूक्षा भवन्ति गात्रेषु विचर्च्चिकायाम्।
काण्डूमती दाहरुजोपपन्ना विपादिका पादगतेयमेव॥
यत् स्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं किटिभं वदन्ति।
सास्रावकण्डूपरिदाहवद्भिः पामाणुकाभिः पिड़काभिरुक्ता॥
स्फोटैः सदाहैरति सैव कच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्या।
कण्ड्वन्विता या पिड़का शरीरे संस्रावहीना रकसोच्यते सा॥१०॥

हस्तः। सहतपूर्व्वयुते कुष्ठे महाकुष्ठसमाख्याते कुष्ठे इत्यर्थः। एककुष्ठमेककुष्ठसमाख्यं कुष्ठम्। तलेष्विति हस्तपादस्यैव। विसर्पवदित्यादि। शीघ्रमितरकुष्ठवन्नातिविलम्बितम्, अभिभूय प्रदूष्येत्यर्थः। विसर्पाख्यमिदं कुष्ठं नियतदोषचितयानुबन्धित्वादिभिश्चिरकारित्वादिभिश्च विशेषैः प्रसिद्धात् विसर्पाख्याद्रोगान्नितरां भिद्यते नातः किमपि निर्णयानुपपत्तिः। कण्ड्वित्यादि। अपायि शीतर्त्तौ विनाशीत्यर्थः। तनु क्षुद्राकारम्। ऊर्द्धकाय इति सामान्येनोक्तेऽप्युरस्येव प्रायेण भवतीत्यवगन्तव्यम् "प्रायश्चोरसि तत् सिध्म" इति चरकसंवादात्। राज्यस्त्वंगवदरणकृता वक्रा रेखाः। वृत्तं प्रायेण गोलम्, घनं स्पर्शतः कठिनम्, स्निग्धकृष्णम् उज्ज्वलकृष्णम्। सास्रावेत्यादिपदं पिड़काविशेषणम्, अत्र स्त्रीप्रत्ययाभावस्त्वार्षः। पामा ऊह्या लक्षणीया। सम्प्रत्यप्रस्तुतमपि कञ्चिदर्थं प्रसङ्गाद्वक्तुमभिप्रैति

अरुः ससिध्मं रकसा महच्च
यच्चैककुष्ठं कफजान्यमूनि।
वायोः प्रकोपात् परिसर्पमेकं
शेषाणि पित्तप्रभवाणि विद्यात्॥ ११॥

किलासमपि कुष्ठविकल्प एव। तत् त्रिविधं—वातेन पित्तेन श्लेष्मणा चेति। कुष्ठकिलासयोरन्तरं—त्वग्गतमेव किलासमपरिस्रावि च। तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च, पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहञ्च; श्लेष्मणा च श्वेतं स्निग्धं बहलं कण्डूमच्च। तेषु सम्बद्धमण्डलमन्ते जातं रक्तरोम चासाध्यमग्निदग्धञ्च॥ १२॥

कुष्ठेषु रुक्-त्वक्सङ्कोच-स्वाप-स्वेद-शोफ-भेद-कौण्य-स्वरोप-

---

स्फोटैरित्यादिना। सैव पामा सदाहैः स्फिगादिप्रभवैः अतिमहद्भिः स्फोटैः कच्छुर्निरूप्येति सम्बन्धः; तन्त्रान्तरेऽप्युक्तम् "सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च" इति। अरुरित्यादि। अरुः स्थूलारुष्कं, महत् महाकुष्ठं नाम कुष्ठम्॥ ८—११॥

किलासमित्यादि। अन्तरं भेदः। तदिति किलासप्रत्यवमर्शकम्। परुषं खरस्पर्शम्। परिध्वंसि प्रायेण रोमापहारि। बहलं गाढ़म्। सम्बद्धमण्डलं मिथः संश्लिष्टमण्डलम्। अन्ते हस्तपादतलगुह्यौष्ठे इत्यर्थः, उक्तञ्चान्यत्र "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्। वर्ज्जनीयं विशेषेण किलासम्" इति। पाणिग्रहणेनैवेह पादयोरप्यादेशः क्रियते उपादानसाम्यादित्यनुसन्धेयम्। अत्र रक्तरोमेति पाठे सत्यपि शुक्लरोमबहुलमप्यसाध्यमित्यवगन्तव्यम्, साध्यलक्षणे वाग्भटेन "अशुक्लरोमबहुलम्" इत्युक्तेः। कुष्ठेष्वित्यादि। कुणिभावः कौण्यं करवैकल्यमित्येतत् "कुकरे कुणिः"

याता वातेन; पाकावदरणाङ्गुलिपतन-कर्ण-नासाभङ्गाक्षिराग-सत्त्वोत्पत्तयः पित्तेन; कण्डू-वर्णभेद-शोफास्राव-गौरवाणि श्लेष्मणा। तत्रादिबलप्रवृत्तं पौण्डरीकं काकणञ्चासाध्यम् ॥१३॥

भवन्ति चात्र।

यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्।
अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्द्धितैः॥
एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः।
क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः ॥ १४ ॥
स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते।
वैवर्ण्यं रूक्षभावश्च कुष्ठे त्वचि समाश्रिते ॥ १५ ॥
त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्।
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ १६ ॥
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिड़कोद्गमः।
तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते ॥ १७ ॥

---

इत्यमरः। अङ्गुलिपतनं पाकप्राबल्येनाङ्गुलिस्रंसनम्। सत्त्वः क्रिमिरिति पर्य्यायौ। वर्णभेदो विवर्णता स चेह श्वैत्येनैव कल्पनीयः श्लेष्मणः श्वेतगुणयोगात् "श्वैत्यम्" इति चरकैकवाक्यत्वाच्च। तत्रेत्यादि। तत्र कुष्ठेषु मध्ये, आदिबलप्रवृत्तं शुक्रशोणितदोषान्वयम्। चकारः समुच्चयार्थः। त्रितयमेतदसाध्यमिति निष्कर्षः ॥ १२।१३ ॥

यथेत्यादि। धातून् रक्तादीन्। विकृतः पूयो विपूयकः पूतिगन्धिः पूय इति निष्कर्षः। बाहुल्यं कुष्ठमण्डलानां प्राचुर्य्यम्। स्फोटः स्फोटा-

दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा ।
गात्राणां भेदनञ्चापि कुष्ठे मेदःसमाश्रिते ॥ १८ ॥
नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसम्भवः ।
भवेत् स्वरोपघातश्च अस्थिमज्जसमाश्रिते ॥ १९ ॥
कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ।
शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ २० ॥
स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २१ ॥
कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम् ।
मेदोगतं भवेद्याप्यमसाध्यमत उत्तरम् ॥ २२ ॥
ब्रह्मस्त्रीसज्जनवध-परस्वहरणादिभिः ।
कर्म्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम् ॥ २३ ॥
म्रियते यदि कुष्ठेन पुनर्जातेऽपि गच्छति ।
नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्त्तितम् ॥ २४ ॥

---

कारः क्षुद्रो व्रणभेदः । दौर्गन्ध्यमित्यादि । उपदेहः प्रलिप्तता । अत्र कौण्यादीन्यपि लक्षणीयानि "कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि" इति तन्त्रान्तरीयस्मरणात् । स्त्रीपुंसावित्यदन्तं निपात्यते, "अचतुर" इत्यादिषु पाठात् । कुष्ठं जातमस्येति कुष्ठितम् । आत्मवतो बुद्धिमतः समीक्ष्यकारिण इति निष्कर्षः, आत्मा बुद्धिरित्यनर्थान्तरम् ॥ १४—२२ ॥

भवति च पापविशेषादपि कुष्ठमित्याह ब्रह्मेति । पापमूलको रोगः पापरोगः, शाकपार्थिवादिः । पूर्व्वस्मादेतत् पुनर्व्विशेषयन्नाह म्रियत इति । कुष्ठेनेति प्रकृतत्वात् पापमूलकेनेति गम्यते । पुनर्जाते पुनर्जन्मनि,

आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम् ।
औषधीनां विशिष्टानां तपसश्च निषेवणात् ।
यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात् ॥ २५ ॥
प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात् सहभोजनात् ।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥

---

जायन्ते तत्तद्दुरदृष्टवशादित्ययमभिसन्धिः । अतो जन्मान्तरानुसारित्वात् कष्टतरः सुचिरं क्लेशकरो रोगो नान्योऽस्तीति शेषः । न्यक्कारार्थमिदमुक्तमित्यनुसन्धेयम्, सर्व्वेषामेवानुपशान्तानामेवंविधानां तथात्वात् । ततो निष्कृत्युपायफलं व्याचष्टे आहारेत्यादिना । क्रिया सम्प्रधारणं विचारणेति पर्य्यायाः । तदयमर्थः, आहाराचारयोर्वक्ष्यमाणयोः प्रोक्तामन्नपानादावुपदिष्टां महतीं क्रियां विपुलां विचारणामास्थायावलम्ब्य विशिष्टानाम् "प्रशस्तदेशसम्भूतम्" इत्याद्युक्तलक्षणानामौषधीनां निषेवणात् तपसश्चान्द्रायणादेश्च निषेवणात् यस्तेन पापजेन कुष्ठेन मुच्यते, स पुण्यां निष्पापत्वात् शुभां गतिं व्यवहार्य्यतां लोकान्तरे च कुष्ठविनाकृतां दशामिति यावत् । नेह "कर्म्मक्षयात् कर्म्मकृता दोषजाः स्वस्वभेषजैः । कर्म्मदोषोद्भवा यान्ति कर्म्मदोषक्षयात् क्षयम्" इति स्मृतेस्तपश्चरणतः पापक्षयादेव तद्भूयितानां कुष्ठारम्भकाणां दोषाणां क्षयसम्भवादाहाराचारयोर्विचारणा भैषज्योपयोगश्चापार्थको भवतीति विप्रतिपत्तव्यम्; यथाहि पतितं पुरुषं समर्थमुत्थानायान्यो बलमस्यादध्यात् त्वरितमुत्थापयितुं तद्वदेव पापक्षयादुपशमोन्मुखानां तेषां दोषाणां झटित्युपशमार्थत्वेन सार्थकत्वात्, "यथाशास्त्रं विनिर्णीतो यथाविधिचिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः" इत्यादि स्मरणात् कर्म्मजदोषजोभयजानां त्रयाणां कुष्ठानां प्रतीकारात् प्राक् विभज्य विज्ञानानुपपत्तेर्वेति सुधियो मन्यन्ते । अत्र हि दोषजस्य कर्म्मजस्य च कुष्ठस्योपदेशेनैवोभयजमप्युपदिष्टं भवति प्रायेणेति पृथक्त्वेन तन्नोपदिश्यत इत्यवधेयम् । निदानसमाख्यातेऽस्मिन् ग्रन्थे प्रतीकारोपदेशः

कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ २६ ॥

इति सुश्रुतसंहितायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ।

---

प्रासङ्गिकः । प्रसङ्गादित्यादि । प्रसङ्गो मैथुनम्, नार्थोऽयमनुपपन्नः "प्रसङ्गनित्यद्रुतपृष्ठयानात्" इत्यादौ तदर्थे प्रयोगदर्शनात् । औपसर्गिकरोगा मसूरिकाद्याः, तथाच "मसूरिकाश्च रोमान्त्यो ग्रन्थिवीसर्प एव च । उपदंशश्च कच्छ्वाद्या औपसर्गिकसंज्ञकाः" इति । परिशिष्टं निगदव्याख्यातम् ॥ २३—२६ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥

दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ २ ॥

---

यथा हि कुष्ठानि त्रिदोषजानि सन्ति प्रकर्षादेकैकदोषजानीत्युपदिश्यते तद्वदेव प्रमेहाश्चेति परमतो व्यक्तीभविष्यतीति तदंशे दोषतः साम्यमभिसमीक्ष्य कुष्ठादनन्तरं प्रमेहनिदानमधिकरोति अथात इत्यादिना ॥ १ ॥

दिवेत्यादि । मिदेर्ण्यत् मेद्यं, मेदुरं मेदोऽभिवर्द्धकमित्येतत् ।

तस्य चैवं प्रवृत्तस्यापरिपक्का एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा वस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति ॥ ३ ॥

तेषान्तु पूर्व्वरूपाणि हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धः श्वासश्च तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ४ ॥

तत्राविलप्रभूतमूत्रलक्षणाः सर्व्व एव प्रमेहाः सर्व्व एव सर्व्वदोषसमुत्थाः सह पिड़काभिः ॥ ५ ॥

तत्र कफादुदकेक्षु-सुरा-सिकता-शनैर्लवण-पिष्ट-सान्द्र-शुक्र-फेनमेहा दश साध्या दोषदूष्याणां समक्रियत्वात् ॥ ६ ॥

---

तस्येत्यादि । एवं दिवास्वप्नादौ प्रवृत्तस्य तस्य प्रमेहित्वेन सम्भावितस्येत्यर्थः । अपरिपक्का आमा इवेत्यर्थः, इवार्थोऽयमेवशब्दः । मूत्रवाहीनि वस्तिशिरोगतानि स्रोतांसि मूत्रवाहिस्रोतांसि । निर्भिद्यन्ते "दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः । मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते" इति स्मरणात् संयोगविशेषात् विशिष्यन्ते स्वयमेवेत्यर्थः । प्रमेहान् उदकमेहादिसमाख्यातान् ॥ २।३ ॥

तेषामित्यादि । दुर्गन्धस्तु गात्राणामेवेत्यवगन्तव्यं चरकसंवादात् । तत्रेत्यादि । अस्वच्छं प्रचुरञ्च मूत्रं लक्षणमेषामित्याविलप्रभूतमूत्रलक्षणाः अत्र सहपिड़काभिरित्यनेन पिड़कानामपि त्रिदोषसमुत्थत्वं सूचितं भवति । तत्रेत्यादि । तत्र सर्व्वदोषसमुत्थेषु प्रमेहेषु मध्ये, कफात् कफप्रकर्षात् उदकेत्यादिनोक्ताः दश मेहाः साध्याः । अत्र हेतुः, दोषेति । दोषस्तत्र कफो दूष्याश्च मेदःप्रभृतयस्तेषां समक्रियत्वात् रूक्षोष्णादिसाध्यत्वेनाभिन्न-

पित्तान्नील-हरिद्राम्ल-चार-मञ्जिष्ठा-शोणितमेहाः षट् याप्या दोषदूष्याणां विषमक्रियत्वात् ॥ ७ ॥

वातात् सर्पि-र्वसा-चौद्र-हस्तिमेहांश्चत्वारोऽसाध्यतमा महात्ययिकत्वात् ॥ ८ ॥

तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥ ९ ॥

तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति ; इक्षुरसतुल्यमिक्षुमेही, सुरामेही सुरातुल्यं, सरुजं सिकतानुविद्धं

---

क्रियत्वादित्यर्थः । न चैषां वातादिसम्बन्धित्वेन भिन्नक्रियत्वमभ्युपगन्तव्यम् "विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वम्" इति जैमिनिस्मरणात् । पित्तादित्यादि । अत्र दोषः पित्तं शीतादिसाध्यं दूष्याश्च मेदःप्रभृतय-उष्णादिसाध्या इत्युपपन्नं भवति दोषदूष्याणां विषमक्रियत्वादिति । वातादित्यादि । महात्ययोऽतिशयेन धातुक्षयः प्रयोजनमस्येति महात्ययिकः "प्रयोजनम्" इति ठञ्, तस्य भावस्तस्मात्, आप्यायनार्हप्रचुरतरधातुक्षयकारित्वादिति यावत् ॥ ४—८ ॥

तत्रेत्यादि । अत्रार्थे चरके मांसादीनां दूष्यत्वेन व्यपदेशेऽपीह मेदोमात्रग्रहणं बाहुल्यानुशयादित्यनुसन्धेयम् ; यदाह "स विसर्पन् सर्व्वशरीरे मेदसैवादितो मिश्रीभावं गच्छति मेदसो बहुबद्धत्वात्" इति । एतेन शेषं व्याख्यातम् । स श्लेष्मेति तदर्थः । सामान्येनोक्तमर्थं स्वलक्षणतो विभज्य प्रपञ्चेनोपदिदिक्षुः प्रथमं तावत् कफजानेव व्याचष्टे तत्रेत्यादिना । अवेदनं दाहादिभिर्व्विनाकृतम् । उदकसदृशमुदकवदच्छादिगुणयुक्तम् ; इक्षुरसतुल्यं काण्डेक्षुरसवत् माधुर्य्यादिगुणानुविद्धम् ; सुरातुल्यमित्याकृत्या गन्धतश्चेत्येव ; सिकता बालुकेव विकृतिमापन्नः कफः सिकतोच्यते उपचारात्

सिकतामेही, शनैः सकफं सूत्रं शनैर्मेही, विशदं लवणतुल्यं लवणमेही, हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही, आविलं सान्द्रं सान्द्रमेही, शुक्रतुल्यं शुक्रमेही, स्तोकं स्तोकं सफेनं फेनमेही मेहति ॥ १० ॥

अत ऊर्द्ध्वं पित्तनिमित्तान् वक्ष्यामः। सफेनमच्छं नीलं नीलमेही मेहति ; सदाहं हरिद्राभं हरिद्रामेही, अम्लरसगन्धमम्लमेही, स्रुतक्षारप्रतिमं क्षारमेही, मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही, शोणितप्रकाशं शोणितमेही मेहति ॥ ११ ॥

अत ऊर्द्ध्वं वातनिमित्तान् वक्ष्यामः। सर्पिःप्रकाशं सर्पिर्मेही मेहति ; वसाप्रकाशं वसामेही, क्षौद्ररसवर्णं क्षौद्रमेही, मत्तमातङ्गवदनुप्रबद्धं हस्तिमेही मेहति ॥ १२ ॥

मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्या-

---

तेन युक्तं सिकतानुविद्धम् ; शनैर्मन्दं मन्दं, सूरसं पिच्छिलमित्यनर्थान्तरम्, "सृत् सूरसञ्च" इत्योजोलक्षणञ्च ; लवणं लवणरसम् ; पिष्टरसतुल्यं तण्डुलचूर्णमिश्रोदकसदृशम् "रसो गन्धरसे जले" इति मेदिनी ; सान्द्रं घनम्, अत्र विशेषयति तन्त्रान्तरम् "यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने। पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम्" इति ॥ ८।१० ॥

अत इत्यादि। नीलमेहे मूत्रस्य नीलत्वमविशुद्धशोणितान्वयाद्भवतीत्यध्यवसितव्यम् ; अनुप्रबद्धमित्यानुपूर्व्येऽव्ययीभावः, तदयमर्थः मत्तमातङ्गो यथा प्रबद्धवेगानुपूर्व्या अजस्रं मेहति तद्वदेवायमिति ; एतेनैतदुक्तं भवति प्रथमं वेगेन ततोऽजस्रमवेगं मेहतीति। मक्षिकेत्यादि। मक्षिकोपसर्पणं शरीरमाधुर्य्यात् स्नातानुलिप्तस्यापि शरीरे बहुशो मक्षिकानुसरणम्।

रोचकाविपाकाः कफप्रसेकच्छर्द्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः ॥ १३ ॥

वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदिशूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूमायमानं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रत्वञ्चेति पैत्तिकानाम् ॥ १४ ॥

हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वञ्चेति वातजानाम् ॥ १५ ॥

एवमेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः ॥ १६ ॥

तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिड़का जायन्ते । तद्यथा—शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्त्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति ॥ १७ ॥

---

मांसोपचय इत्ययुथेत्येवाववेयमुपद्रवपरिपठितत्वात् । वृषणयोरवदरणमित्यवाप्तपाकत्वेन । परिधूमायनमौष्ण्याद्धूमोद्गिरणमिव भावविशेषः । लौल्यं सर्व्वरसलोलुपत्वम् । सोपद्रवा द्विव्रणीये वक्ष्यमाणव्रणवर्णितोपद्रवानुविद्धास्तृड़ादियुक्ताश्चेत्यर्थः "ढट्कासमांससङ्कोथमोहहिक्कामदज्वराः । वीसर्पमर्म्मसंरोधाः पिड़कानामुपद्रवाः" इति चरकोक्तेः ॥ ११—१६ ॥

तत्रेत्यादि । अभिपन्नशरीरस्य व्यापन्नशरीरस्य "अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि" इत्यमरः । अत्र प्रमेहिण इति सामान्येनोक्तेऽपि पिड़कास्त्वेता बाहुल्येन मधुमेहिन एव प्रादुर्भवन्तीति निश्चीयते, कियन्तः,

शरावमाना तद्रूपा निम्नमध्या शराविका ॥ १८ ॥
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ १९ ॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ २० ॥
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ २१ ॥
महती पिड़का नीला पिड़का विनता स्मृता ॥ २२ ॥
महत्यल्पाचिता ज्ञेया पिड़का सा तु पुत्त्रिणी ॥ २३ ॥
मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥ २४ ॥
रक्तासिता स्फोटवती दारुणा त्वलजी भवेत् ॥ २५ ॥
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ २६ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥ २७ ॥
ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥ २८ ॥
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मणि चोत्थिताः ।
सोपद्रवा दुर्ब्बलस्य पिड़काः परिवर्ज्जयेत् ॥ २९ ॥
कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ।
अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः ॥ ३० ॥

---

शिरसीये भगवतात्रेयेण तमेवाधिकृत्यासामुपदेशात् । शरावेत्यादि । क्षुद्राभिः पिड़काभिर्ग्रथिता अल्पाचिता । वातजाः पुनर्व्विशिनष्टि कृत्स्नमित्यादिना । तुकारो विशेषणार्थः । तदयमर्थः—निष्पीड्य स्नेहजातमाहर्त्तुम् अन्नरसाहरणन्यायेनानववुद्धं प्रपीड्य, मेदोमज्जवसायुतः आहृतैर्मेदःप्रभृतिभिर्नितरामन्वितो वायुर्यतः अधोऽधःशरीरे प्रक्रमते गौरवात् प्रसृताः पिड़का आरभते, तेन मेद आद्यन्वयेन वातजास्ता असाध्या एकान्तेनेति तुकारेणाविष्क्रियते ॥ १७—३० ॥

प्रमेहपूर्व्वरूपाणामाकृतिर्यत्र दृश्यते ।
किञ्चिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत् ॥ ३१ ॥
कृत्स्नान्यर्द्धानि वा यस्मिन् पूर्व्वरूपाणि मानवे ।
प्रवृत्तमूत्रमत्यर्थं तं प्रमेहिणमादिशेत् ॥ ३२ ॥
पिड़कापीड़ितं गाढ़मुपसृष्टमुपद्रवैः ।
मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः ॥ ३३ ॥
स चापि गमनात् स्थानं स्थानादासनमिच्छति ।
आसनाद्वृणुते शय्यां शयनात् स्वप्नमिच्छति ॥ ३४ ॥

यथाहि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवल-वभ्रु-कपिल-कपोत-मेचकादीनां वर्णानामनेकेषामुत्पत्ति-

---

पूर्व्वरूपे हि व्याधयः सुखसाध्या भवन्ति तदिदमुच्यते प्रमेहेति । प्रमेह-पूर्व्वरूपाणां हस्तपादतलदाहादीनाम्, आकृतिराकारः, अत्राविशेषेऽपि "खदिरतरूणां वनम्" इतिवत् कथञ्चिद्भेदविवक्षया षष्ठी । नन्विदमुक्तम् "आविलप्रभूतमूत्रलक्षणाः सर्व्व एव प्रमेहाः" इति, पूर्व्वञ्च मूत्रवृद्धिमधिकृत्य "मूत्रं मुहुर्मुहुः प्रवृत्तिम्" इत्यभिहितम्, तदिदानीं जिज्ञास्यं पुनरापन्नं कथं नु खलु प्रभूतमूत्रमभिसमीक्ष्य किमयं प्रमेही मूत्रवृद्धिर्वेति संशयमपनेष्याम इत्येवमाक्षिपन्तं परिक्षिपति प्रमेहेति । आकृतिराकारो लेशमात्रेणाऽभिव्यक्तिरिति तात्पर्य्यम् । कृत्स्नानीत्यादि । वचनमिदं प्रपञ्चार्थमित्यवधेयम्, पूर्व्वेणैवार्थस्यास्यार्थाक्षिप्तत्वात् । स एव पुनरवाप्तपूर्व्वरूपावस्थः प्रमेही क्वचिन्मधुमेहीति संज्ञां लभत इत्याह पिड़केति । उपद्रवैर्वृद्धहादिभिरित्यर्थः । मधुमेहिनमाचष्टे तत्तद्गुणसम्बन्धात् यथा क्रौर्य्य-शौर्य्यादिगुणयोगान्माणवकं सिंहं ब्रूते तद्वदित्ययमभिसन्धिः । यथेत्यादि । आदिमाः पञ्च वर्णा जिज्ञासितव्याः, शवलः कर्व्वुरवर्णो मिश्रवर्णो वा

भवति एवमेव दोष-धातु-मलाहार-विशेषेणोत्कर्षापकर्षकृतेन सयोगविशेषेण प्रमेहाणां नाना कारणं भवति ॥ ३५ ॥

भवति चात्र ।

सर्व्व एव प्रमेहास्तु कालेनाप्रतिकारिणः ।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ ३६ ॥

इति सुश्रुतसंहितायां निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः ।

---

"शबला मिश्रकर्व्वुराः" इति हलायुधः । बभ्रुः पिङ्गलवर्णः, कपिल उज्ज्वल-पिङ्गलः, कपोतः पारावतवर्णः, मेचकस्तु श्यामवर्ण उच्यते । परिशिष्टं निगदव्याख्यातम् ॥ ३१—३६ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः ।

---

# सप्तमोऽध्यायः ।

अथात उदराणां निदानं व्याख्यास्यामः ॥ १ ॥

धन्वन्तरिर्धर्म्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमो बभूव ।
ब्रह्मर्षिपुत्त्रं विनयोपपन्नं शिष्यं शुभं सुश्रुतमन्वशात् सः ॥ २ ॥

---

प्रमेहवदुदराण्यप्यचिरजातान्येव साध्यतामुपयान्तीति सामान्यादिदानीमुदराणां निदानमधिकरोति अथात इत्यादिना ॥ १ ॥

धन्वन्तरिरित्यादि । राजा ऋषिरिव संयतत्वात् श्रेष्ठत्वाच्चेति राजर्षिः,

पृथक्समस्तैरपि चेह दोषैः प्लीहोदरं बद्धगुदं तथैव।
आगन्तुकं सप्तममष्टमञ्च दकोदरञ्चेति वदन्ति तानि॥ ३॥
सुदुर्ब्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद्वा।
स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः॥ ४॥
गुल्माकृतिव्यञ्जितलक्षणानि कुर्व्वन्ति घोराण्युदराणि दोषाः।
कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः।
त्वचः समुन्नम्य शनैः समन्ताद्विवर्द्धमानो जठरं करोति॥ ५॥

---

इन्द्रप्रतिम इन्द्रसदृशः एतेनास्य अजेयवाक्त्वमायुर्व्वेदवैशारद्यञ्चाख्यातम्, इन्द्रो ह्यायुर्व्वेदपूर्व्वाचार्य्य उच्यते। ब्रह्मर्षिशब्देनेह विश्वामित्र एवाऽभिप्रेयते "वैश्वामित्रं शमासाद्य" इत्यनागतावेक्षणात्। राजर्षेरप्यस्य ब्रह्मर्षित्वं तपोलब्धमित्याहुः पौराणिकाः, नातो व्याख्यानमिदमनुपपन्नम्। वेदसर्त्तृत्वाच्चतुर्मुखतुल्यो विप्र ऋषिः ब्रह्मर्षिः। स्नेहादिमिथ्याचरणात् स्नेहस्वेदादिविभ्रमात्। कोष्ठोऽन्नामपित्तपक्वाशया एवेत्याहुर्वृद्धा समाम्नातत्वात्, एकवचनन्तु कोष्ठत्वस्यैकविधत्वादित्यनुसन्धेयम्। अभिर्लक्षणार्थः। प्रपन्ना आश्रिताः॥ २—४॥

गुल्मेत्यादि। गुल्माकृतिव्यञ्जितलक्षणान्यापाततो गुल्मसमलिङ्गानि। कथं कुर्व्वन्तीत्याह कोष्ठादिति। दुष्टः सामोऽनिलवेगनुन्नः प्रदुष्टाभ्यां प्राणापानाभ्यामीरितोऽन्नसारोऽन्नरसः उपासन्नं देशं स्नेहयतीत्युपस्नेहस्तैलादिपात्रनिःसन्नः स्नेह इति निष्कर्षः स इवेत्युपस्नेहवत् कोष्ठात् तत्तत्कोष्ठगतसूक्ष्मच्छिद्रेभ्यो निःसृत्य वहिरावरणाभ्यन्तरे निर्गम्य त्वचः समुन्नम्येति "आध्माप्य कुक्षिमुदरम्" इति तन्त्रान्तरीयस्मरणात् तत्तदाशयवहिरावरणाभ्यन्तरावस्थितत्वेनाध्माप्य समन्तात् शनैर्विवर्द्धमानः सन् जठरं करोतीत्यर्थः। न तावद्दोषकर्त्तृत्वेनोपदिष्टस्यान्नरसकर्त्तृत्वमनुपपन्नं दोष-

तत्पूर्व्वरूपं बलवर्णकाङ्क्षावलीविनाशो जठरे हि राज्यः ।
जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोफः ॥ ६ ॥
संरुह्य पार्श्वोदरपृष्ठनाभीर्यद्वर्द्धते कृष्णशिरावनद्धम् ।
सशूलसानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तत् ॥ ७ ॥
यच्चोषतृष्णाज्वरदाहयुक्तं पीतं शिरा यत्र भवन्ति पीताः ।
पीताक्षिविण्मूत्रनखाननस्य पित्तोदरं तत् त्वचिराभिवृद्धि ॥ ८ ॥
यच्छीतलं शुक्लशिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य ।
स्निग्धं महच्छोफयुतं ससादं कफोदरं तच्च चिराभिवृद्धि ॥ ९ ॥
स्त्रियोऽन्नपानं नखरोममूत्र-विड़ार्त्तवैर्युक्तमसाधुवृत्ताः ।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्व्वन्ति घोरं जठरं त्रिलिङ्गम् ।
तच्छीतवाते भृशदुर्द्दिने च विशेषतः कुप्यति दह्यते च ॥

---

दुष्टस्यैवास्य कर्त्तृत्वेनाभ्युपगमात् । तदित्यादि । वली ग्रथचर्म्मात्मको-दरावयवविशेषः । राज्योऽत्र जठरस्याध्मातत्वेनोद्भासिताः सिरात्मिका रेखाः । जीर्णापरिज्ञानं जीर्णाजीर्णानभिज्ञत्वम् विदाहो भुक्तानां तदुभय-वत्यो रुजो वेदनाविशेषाः ॥ ५।६ ॥

विशिष्टलिङ्गान्युपदिदिक्षति संरुह्येत्यादिना । यदित्युदरंप्रत्यवमर्शकम् आनाहो नासातङ्को विसूचिकाप्रतिषेधे निवेदयिष्यते । स्त्रिय इत्यादि । स्त्रिय इत्यविवेकिजनोपलक्षणम्, स्त्रियः पापात्मानो जनाः चकारो वार्थे अरयो वा गरान् संयोगजानि विषाणि यस्मै प्रयच्छन्ति तस्य तेनेति "नपुं-सकमनपुंसकेन" इत्यादिनैकत्वं, तेन नखादियुक्तेनान्नपानेन गरैश्चेत्यर्थः । हेत्वन्तरमुपन्यस्यति दुष्टेति । दूषीविषन्तु परिभाषाविशेषेण स्थावरविष-

स चातुरो मूर्च्छति सम्प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च ।
प्रकीर्त्तितं दूष्युदरन्तु घोरं——————————॥ १० ॥
——————————प्लीहोदरं कीर्त्तयतो निबोध ।
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च ।
प्लीहाभिवृद्धिं सततं करोति प्लीहोदरं तत्प्रवदन्ति तज्ज्ञाः ॥
वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥ ११ ॥
सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १२ ॥
यस्यान्त्रमन्नैरुपलेपिभिर्वा वालाश्मभिर्वा पिहितं यथावत् ।
सञ्चीयते तत्र मलः सदोषः क्रमेण नाड्यामिव सङ्करो हि ॥
निरुध्यते चास्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ।
हृन्नाभिमध्ये परिवृद्धिमेति यच्चोदरं विट्समगन्धिकञ्च ।
प्रच्छर्द्दयन् बद्धगुदी विभाव्यः——————————॥ १३ ॥

---

विज्ञानीय उपदेक्ष्यते सम्प्रसक्तं निरन्तरम् दूष्यं दुष्प्रतीकारत्वान्निन्दनीयमुदरं दूष्युदरम् छन्दोऽनुरोधादकारलोपः । विदाहीत्यादि कफपित्तलिङ्गैरिति पित्तलिङ्गता रक्तान्वयाल्लक्षणीया । प्रवृद्धं ह्येतदुदरं यकृदपि दालयतीति यकृद्दाल्यी उदरेऽस्मिन् प्लीहोदरलिङ्गातिदेशं कुर्व्वन्नाह तदेवेति । तत् प्लीहोदरमिवेदमित्यर्थः । इवार्थोऽयमेवशब्दः । एतेनानयोरविशेषेणाभ्युपगमात् प्रागुक्तमुदराणामष्टविधत्वं नानुपपन्नम् ॥ ७—१२ ॥

यस्येत्यादि । उपलेपिभिः पिच्छिलैः केवुकादिभिः पिहितं निरुद्धं मलः पुरीषं सदोषो वातादिदोषानुविद्धः नाड्यां गृहमलनिःसारणे श्वभ्रे सङ्करः सम्मार्ज्जन्यादिभिः क्षिप्तं रजः । परिवृद्धिरियमाध्मानरूपेत्युन्नेयम् ।

ततः परिस्राव्युदरं निबोध ।
शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा ।
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च ।
एतत् परिस्राव्युदरं प्रदिष्टं———————॥ १४ ॥
———————दकोदरं कीर्त्तयतो निबोध ।
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः।

---

प्रच्छर्द्दयन् मलप्रसारितान्त्रत्वेनामाशयपीड़नात् छर्द्दिं कुर्व्वन्नित्यर्थः। मल-निरुद्धं गुदमस्यास्तीति बद्धगुदी; अत्र बद्धगुद इति वक्तव्ये मत्वर्थीयो गुदस्य बद्धताया नित्ययोगमाख्यातुम्। अन्त्रे हि यथाकथञ्चिद्भिन्ने विदग्धं शोणितमुदकसाङ्कर्य्यान्नैर्म्मल्यादासिनान्नरसेन मिश्रीभूय तदन्तर्व्वहिश्चोप-स्नेहन्यायेन स्यन्दते, तत्रान्तःसन्नमुदकं शैथिल्याद्गुदतो निःसरति, बहिः-सन्नन्तु द्वारविरहात्तदन्त्रावरणमाध्माप्याधोगामिस्वभावान्नाभेरधस्तादारभ्य तारतम्येन सर्व्वमेवोदरं परिवर्द्धयतीत्याशयेनाह शल्यमिति। यस्य यद-न्नोपहितम् अन्नसंयुक्तं शल्यं मत्स्यकण्टकादि, अन्यथा यथायस्तं तद्विपर्य्या-सेन तिर्य्यग्भाविनेति यावत्, आगतमुपस्थितं भवति, तत् शल्यं; वाशब्दा-च्चरकैकवाक्यतया अत्यशनं वा यदन्त्रं भिनत्ति तस्मादन्त्रात् स्रुतः सलिल-प्रकाशः स्रावो भूयोऽत्यर्थं गुदतः स्रवेदल्पशस्तूपस्नेहन्यायेनान्तःप्रविशतीति गम्यते, भूय इति विशेषणादनुभवेन विषयीकरणाच्च। न तावदेतावदेव लिङ्गमित्याह नाभेरिति। अत्रातीवेति सर्व्वत्र समन्वयादर्थाच्चित्रं भवन्ति नाभेरूर्द्धमपि मनाक् विवर्द्धत इति ॥ १३।१४ ॥

दकोदरमित्यादि। दकोदरमुदकोदरम्, दकमुदकमित्यनर्थान्तरम्। स्नेहः पीतो येनेति स्नेहपीतः "वाऽऽहिताग्न्यादिषु" इति परनिपातः; शान्तप्रत्यादिषु सकर्म्मकत्वेन कर्त्तरि क्तस्यासम्भवादकारो मत्वर्थीयो वक्तव्यः।

पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्व्ववदभ्युपैति ।
स्निग्धं महत् सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च ।
यथा दृतिः चुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥ १५

आध्मानं गमनेऽशक्तिर्दौर्व्वल्यं दुर्व्वलाग्निता ।
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तृष्णा च सर्व्वेषु जठरेषु भवन्ति हि ॥ १६ ॥
अन्ते सलिलभावन्तु भजन्ते जठराणि तु ।
सर्व्वाण्येव परीपाकात् तदा तानि विवर्ज्जयेत् ॥ १७ ॥

इति सुश्रुतसंहितायां निदानस्थाने उदरनिदानं नाम सप्तमोऽध्यायः ।

---

तद्वहानि उदकवहानि । पूर्व्ववदिति परिस्राव्युदरवदुपस्नेहन्यायेनेत्यर्थः । उदराभिवृद्धिहेतोः प्रायेणातीतैव नाभिरत्रेति सम्परिवृत्तनाभि "वृत्तोऽभीतेऽतीते" इति मेदिनी । दृतिश्चर्म्मनिर्म्मितोदकपात्रम् "भिस्ति" इति विख्यायते, तस्य च जलपूर्णत्वेनेह तात्पर्य्यम् । शब्दायते गुड़ुगुड़ाशब्दं करोतीत्यर्थः । आध्मानमित्यादि । परीपाकात् कालपरिणामात् । विवर्ज्जयेत् प्रायेणेत्यूह्यम् "प्रायो भवत्यभावाय" इति चरकैकवाक्यत्वात् । परिशिष्टमतिरोहितार्थम् ॥ १५—१७ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने उदरनिदानं नाम सप्तमोऽध्यायः ।

---

# अष्टमोऽध्यायः ।

अथातो मूढ़गर्भनिदानं व्याख्यास्यामः ॥ १ ॥

ग्राम्यधर्म्म-यान-वाहनाध्वगमन-प्रस्खलन-प्रपतन-प्रपीड़न-धावनाभिघात-विषम-शयनासनोपवास-वेगाभिघातातिरूक्ष-कटु-तिक्त-भोजन-शाकातिक्षार-सेवनातिसार-वमन-विरेचन-प्रेङ्खोलनाजीर्ण-गर्भशातन-प्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनादभिघातविशेषैः ॥ २ ॥

स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति । तस्या जठरसङ्क्षोभाद्वायुरपानो मूढ़ः पार्श्व-वस्ति-शीर्षोदर-योनिशूलानाह-मूत्र-

---

उक्लेषसामान्यादिदानीं मूढ़गर्भमधिकरोति अथात इत्यादिना । अनन्तरं वक्ष्यमाणलक्षणो गर्भो मूढ़गर्भः । ग्राम्यधर्म्मो मैथुनम् । यानग्रहणेनैव वाहनानामुपलब्धेऽपि पृथगुपादानमात्ययिकत्वमाख्यातुम् । स्खलनमकस्मात् प्रभ्रंशः पादापसरणं वा, प्रेङ्खोलनं दोलनम्, गर्भशातनं गर्भपातनं चित्रकादि, बन्धनान्नाभिनाड़ीबन्धात् ॥ १।२ ॥

स गर्भः, गर्भाशयं गर्भशय्याम्, अतिक्रम्यातीत्य, यकृत्प्लीहान्त्रविवरैरिति गर्भाभिहतया निरुद्धाधोगतिकत्वादुन्नतेन वायुना उत्क्षिप्तानां यकृदादीनां विवराणि विलान्यवकाशा इति यावत् तैः सह अव स्रंसमानोऽधः परिपतन्, कोष्ठसङ्क्षोभं गर्भिण्या मलमूत्राशयसम्पीड़ामित्यर्थः । अत्र यकृदादिविवराणामाकाशविशेषत्वेनावस्रंसनानर्हत्वेऽपि यकृदाद्यवस्रंसनाद्विवराणामवस्रस्तत्वमध्यस्योच्यते यकृत्प्लीहान्त्रविवरैरित्यवधेयम् । तस्या इति बुद्ध्या समाकृष्टत्वात् गर्भिण्या इत्यर्थः । मूढ़ो जड़ इवेति मूढ़ः, निरुद्धगतिकत्वेन-

सङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण। तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसम्मोहितं गर्भं मूढ़गर्भं इत्याचक्षते ॥ ३ ॥

ततः स कीलः प्रतिखुरो वीजकः परिघ इति। तत्र ऊर्द्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः; निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः; यो निर्गच्छत्येकशिरोभुजः स वीजकः; यस्तु परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघ इति चतुर्व्विधो भवतीत्येके भाषन्ते। तत्तु न सम्यक्। कस्मात्? स यदा विगुणानिलप्रपीड़ितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते। तत्र कश्चिद्द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते; कश्चिदा-

---

स्वकार्य्यानङ्गे इति निष्कर्षः। तरुणमजातसारम्। प्रासङ्गिकमर्थमुपदिश्य प्रकृतमनुसरति तमेवेत्यादिना। विवृद्धं जातसारम्, कदाचित् असम्यक् विकृत्या आगतम्, अपत्यपथं योन्याः प्रथमं द्वितीयं वा आवर्त्तमनुप्राप्तम्, अनिरस्यमानं संसन्यमानम्, अपानवैगुण्यसम्मोहितमपानवैगुण्यावष्टब्धं तमेव बन्धनान्मुक्तं गर्भं मूढ़गर्भमाचक्षत इत्यन्वयः ॥ ३ ॥

तत इत्यादि। ततोऽपानवैगुण्यादित्यर्थः; अत्र उपसर्ज्जनस्यापि तदा प्रत्यवमर्षः क्रियते बुद्ध्या समाकृष्टत्वात्। स मूढ़गर्भः, इत्येवं चतुर्व्विधो भवतीति शेषः। उक्तमर्थं पुनर्व्विवृणोति तत्रेत्यादिना। तत्र कीलादिषु मध्ये इत्यर्थः। कीलः शङ्कुरिति पर्य्यायौ, परिघस्तु मुद्गर उच्यते। कुटिलीभूतमेकं सक्थ्यस्येत्याभुग्नैकसक्थिः। एकेनेति प्रकृतत्वात् सक्थ्न-

भुग्नेकसक्थिरेकेन ; कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्य्यगागतः ; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना; कश्चिदाभुग्नशिरा बाहुद्वयेन ; कश्चिदाभुग्नमध्यो हस्तपाद-शिरोभिः ; कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्टविधा मूढ़गर्भगतिरुद्दिष्टा समासेन। तत्र द्वाव-न्त्यावसाध्यौ मूढ़गर्भौ। शेषानपि विपरीतेन्द्रियार्थाक्षेपक-योनिभ्रंश-संवरण-मक्कल्ल-श्वास-कास-भ्रम-निपीड़ितान् परि-हरेत् ॥ ४ ॥

भवन्ति चात्र।

कालस्य परिणामेन मुक्तं वृन्ताद्यथा फलम्।
प्रपद्येत स्वभावेन नान्यथा पतितुं भुवम्॥
एवं कालप्रकर्षेण मुक्तो नाड़ीविबन्धनात्।
गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ ५ ॥

---

त्यवश्रेयम्। स्फिग्देशेन कटिमांसपिण्डद्वितयेनेत्यर्थः। पार्श्वयोरन्त-रित्यन्तःपार्श्वे पराङ्मुखीभूतं शिरोऽस्येत्यन्तःपार्श्वापवृत्तशिराः। वैपरीत्ये-नानुभूताः शब्दादयो विपरीतेन्द्रियार्थाः। योनिभ्रंशो योन्या बहिर्नि-र्गमनम्। संवरणं सङ्कोचः। मक्कल्लो नाम शूलभेदो गर्भिणीव्याकरणे निवेदयिष्यते ॥ ४ ॥

किन्नु खलु बन्धनमुक्तेरविशेषेऽपि कालस्य परिणामेन विमुक्तबन्धनं गर्भं हित्वा केवलं तैस्तैर्हेतुभिर्बन्धनान्मुक्त एव गर्भो मूढ़ो भवतीति ब्रवीषीत्येवं ये प्रत्यवतिष्ठन्ते तान् प्रत्याह कालस्येति। उत्पन्नवृन्तं फलं यथा स्वभावेन

क्रमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ।
पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः ॥ ६ ॥
आ चतुर्थात् ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ ७ ॥
प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ।
नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥ ८ ॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।
भवत्युच्छ्वासपूतित्वं शूनतान्तर्मृते शिशौ ॥ ९ ॥

---

स्वकीयेन गौरवेण अन्यथा तिर्य्यगादिभिर्गतिविशेषैर्ध्रुवं पतितुं न प्रपद्येत, प्रपद्येत च ऋज्व्येव गत्वेत्यर्थः। एवमिति तथार्थः। स गर्भो जननाय सुखेन प्रसवाय प्रपद्यत इति योजना। वक्ष्यति च "स योनिं शिरसा याति स्वभावात् प्रसवं प्रति" इति ॥ ५।६ ॥

आ चतुर्थादित्यादि। अत्र गर्भविद्रव इति वाहुल्यानुशयादुपदिश्यत इत्यनुसन्धेयम्, नातः "चतुर्थे अङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति" इति वक्ष्यमाणवचनं विप्रतिपिद्धं भवति। पञ्चमषष्ठयोरिति चतुर्थमासाधिककालोपलक्षणम्। उभयोरेव गर्भगर्भिण्योरसाध्यत्वमुपदिदिक्षति प्रेत्यादिना। शिरः प्रविध्यति लोठयतीत्यर्थः, निरपत्रपा लज्जाशून्या ज्ञानविरहादित्ययमभिसन्धिः। नीलोद्धतसिरात्वमस्याः कुक्ष्यंश एव वेदितव्यम्। गर्भेत्यादि। आवी प्रसववेदना। शूनता गर्भाशयावच्छेदे शोथेनानुगतता। न तावदेतावन्त्येव लिङ्गानि पर्य्याप्तानीति गम्यते "तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः शूलमधिकमुपजायते, न चाव्यः प्रादुर्भवन्ति, योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतः, ताम्यति, व्यथते, भ्रमति, श्वसित्यरतिबहुला च भवति, न चास्या वेगप्रादुर्भावो वा यथावदुपलभ्यते इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात्"

मानसागन्तुभिर्मातुरुपतापैः प्रपीड़ितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीड़ितः ॥ १० ॥
वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् ॥ ११ ॥

इति सुश्रुतसंहितायां निदानस्थाने मूढ़गर्भनिदानं नामाष्टमोऽध्यायः ।

---

इति चरकस्मरणात् । मृताया अपि जीवति गर्भे तदुद्धरणक्रममुपदिशति वस्तीत्यादिना । जन्मकाले उपस्थिते प्रसवकाले विपन्नाया मृताया यदि कुक्षिः प्रस्पन्दते, तर्हि तत्क्षणात् वस्तिद्वारे वस्तिं द्वारञ्च पाटयित्वा भिषक् तं गर्भमुद्धरेदित्यर्थः ॥ ७—११ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने मूढ़गर्भनिदानं नामाष्टमोऽध्यायः ।

---

# नवमोऽध्यायः ।

अथातो विद्रधीनां निदानं व्याख्यास्यामः ॥ १ ॥
सर्व्वाभिसरगुरुः श्रीमान् निमित्तान्तरभूमिपः ।
शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम् ॥ २ ॥

---

उत्सेधसामान्यादिदानीं विद्रधिनिदानमधिकरोति अथात इत्यादिना । सर्व्वेत्यादि । गुरुः पूज्यः । विष्णुपर्य्यायोऽयं श्रीमच्छब्दः "श्रीमान् विष्णुः" इति रत्नावली । निमित्तान्तरभूमिप इति । "काशीराजगोत्रे अवतीर्य्य

त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ।
दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ ३ ॥
महामूलं रुजावन्तं वृत्तञ्चाप्यथवायतम् ।
तमाहुर्विद्रधिं धीरा विज्ञेयः षड्विधः स च ॥
पृथग्दोषैः समस्तैश्च च्तेनाप्यसृजा तथा ।
षस्सामपि हि तेषान्तु लक्षणं सम्प्रवच्यते ॥ ४ ॥
कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः ।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः ॥ ५ ॥
पक्वोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ॥ ६ ॥
शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च सकण्डुश्च कफोत्थितः ॥ ७ ॥
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ।
नानारूपरुजास्रावो घाटालो विषमो महान् ।
विषमं पच्यते वापि विद्रधिः सान्निपातिकः ॥ ८ ॥

---

सम्यगायुर्व्वेदं करिष्यति" इत्यादि विष्णुपुराणीयस्मरणात् आयुर्व्वेदोपदेश-निमित्तं भूमिपतित्वमापन्न इत्यर्थः। भूमिपो ह्यप्रतिहतमनोरथतया सुदुष्करमपि कर्म्म साधयितुमर्हत्यनायासेनेति वचनमिदं नानुपपन्नम् । एतेनास्य यथावदायुर्व्वेदोपदेश एव प्रधानं कर्म्मेत्यपि सूचितं भवति ॥ १।२ ॥

त्वगित्यादि । घोरमात्ययिकं दुष्करप्रतीकारत्वादसाध्यत्वाच्च । उच्छ्रिताः परिवृद्धाः । महामूलमिति गम्भीरधात्वनुप्रवेशित्वात् । रुजावन्त-मित्यतिशायने वतुप्, महारुजमित्यर्थः । शीघ्रं विदहतीति विद्रधिः "स

तैस्तैर्भावैरभिहते क्षते चापथ्यसेविनः।
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः।
एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः ॥ ९ ॥
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥ १० ॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्व्वजः ॥ ११ ॥
आभ्यन्तरानतस्तूर्द्धं विद्रधीन् परिचक्षते ॥ १२ ॥
गुर्व्वसात्म्यविरुद्धान्न-शुष्कसंक्लिन्नभोजनात्।
अतिव्यवायव्यायाम-वेगाघातविदाहिभिः ॥
पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम्।
वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् ॥ १३ ॥
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा।

---

वै शीघ्रविदाहित्वात् विद्रधीत्यभिधीयते” इति तन्त्रान्तरञ्च। वायोर्विषमक्रियत्वेनानेकप्रकारावुन्नवप्रपाकावस्येति चित्रोत्थानप्रपाकः। नानेत्यादि। घाटा कृकाटिकेवोच्छ्रितपार्श्वोऽस्यास्तीति घाटालः, उन्नतपर्य्यन्त इति निष्कर्षः। विषमो दारुणः क्लेशजनकत्वादसाध्यत्वाच्च। विषमं पच्यत इति सम्बन्धः ॥ ३—८ ॥

तैरित्यादि। वायुविसृतो वायुविक्षिप्तः। कृष्णेत्यादि। अत्र पित्तविद्रधिलिङ्गातिदेशेनैव श्यावत्वे लब्धे पृथगुपादानं श्यावप्रायताभिव्यञ्जनार्थम्। आभ्यन्तरानित्यादि। समुन्नद्धं सम्यगुन्नतम्। अन्तः शरीराभ्यन्तरे। अन्तरिति सामान्येनोक्तमर्थं स्फोरयति गुद इत्यादिना।

वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा।
तेषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः॥ १४॥
आमपक्वैषणीयेन पक्वापक्वं विनिर्द्दिशेत्॥ १५॥
अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः॥ १६॥
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम्॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ।
वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम्॥
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च दारुणः।
श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका॥ १७॥
आमो वा यदि वा पक्वो महान् वा यदि चेतरः।
सर्व्वो मर्म्मोत्थितश्चापि विद्रधिः कष्ट उच्यते॥ १८॥
नाभेरुपरिजाः पक्वा यान्त्यूर्द्ध्वमितरे त्वधः।
जीवत्यधो निस्रुतेषु स्रुतेषूर्द्ध्वं न जीवति॥

---

नाभिशब्देनेह बृहत्यादिमर्म्मसङ्कुलो नाभिसन्निहितो देश एवाभिप्रेयते उपचारात्, न तु वक्ष्यमाणा सिराप्रभवा नाभिः, तस्या गर्भमात्रविषयत्वात्; नापि च जठरत्वक्प्राचाश्रिता छिन्नशुष्का नाभिस्तस्या मर्म्मेतरत्वेन तत्र जातस्य हि विद्रधेरुपदेक्ष्यमाणमसाध्यत्वं नोपपत्स्यते। कुक्षिशब्देन च पक्वाशय एवाभिप्रेयत इति निश्चीयते, "कुक्षौ मारुतकोपनम्" इत्यनन्तरोक्तेः। वृक्कौ नाम द्वे हृदयावरणे, क्लोम च पिपासास्थानम्, एतच्च गर्भिण्याव्याकरणे व्यक्तीभविष्यति। आमपक्वैषणीयेन प्रागुक्तेन॥ ९—१६॥

नाभेरित्यादि। यान्ति स्रवन्तीत्यर्थः। ऊर्द्ध्वमित्यव्ययम्, मुखादिति

स्तनाभिवस्तिवर्ज्जा ये तेषु भिन्नेषु वाह्यतः ।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥ १९ ॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ।
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ।
अपि सम्यक्प्रजातानामसृक् कायादनिःसृतम् ॥ २० ॥
रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कल्लसंज्ञितम् ।
सप्ताहान्नोपशान्तश्चेत् ततोऽसौ सम्प्रपच्यते ॥ २१ ॥
विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः ॥ २२ ॥
तुल्यदोषसमुत्थानाद्विद्रधेर्गुल्मकस्य च ।
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च ॥ २३ ॥
गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते ।
विवरानुचरो ग्रन्थिरप्सु बुद्बुदको यथा ॥

---

त्पर्य्यम् । इतरे नाभेरधोजाः कुक्षिवस्तिवङ्क्षणजा इति यावत् । अधो गुदतो यान्तीति सम्बन्धः ; नाभिजस्तूभयभागित्वादुभयत इत्यूह्यम्, उक्तञ्च "नाभेरूर्द्धं मुखात् पक्वाः प्रस्रवन्त्यधरे गुदात् । उभाभ्यां नाभिजः" इति । अधरे नाभेरधोवर्त्तिन इति तदर्थः । स्त्रीणामित्यादि । अपप्रजातानां पतितगर्भाणां निर्हृतमूढ़गर्भाणाञ्चेत्यर्थः । प्रजातानां यथाकालं सुखं प्रसूतानाम् । अहितै रक्तपित्तप्रकोपिभिराहारविहारैः । विशेषमित्यादि । न तावदपार्थकोऽयमारम्भ इत्यावेदयितुं विवादिनां प्रश्नमुपन्यस्यति तुल्ये-त्यादिना । शास्त्रे अस्मिन् शोणितमपि दोषवद्व्यपदिश्यत इत्यवोचाम, तदिदमुपपन्नं भवति तुल्येति । तुल्यदोषसमुत्थानात् विद्रधेर्गुल्मकस्य च दोषतो लिङ्गतश्च साम्यात् कस्मादित्यादिना परेणान्वयः ॥ १९—२३ ॥

उत्तरयति गुल्मेत्यादिना । दोषा वातादयो दोषातिदिष्टत्वाच्छोणि-

एवम्प्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति ।
मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः ॥
मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छति ।
गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ।
विद्रधिः पच्यते तस्माद्गुल्मश्चापि च पच्यते ॥ २४ ॥
हृन्नाभिवस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः ॥ २५ ॥
अथ मज्जपरीपाको घोरः समुपजायते ।
सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा ॥
ततः स व्याधिना तेन ज्वलनेनेव दह्यते ।
अस्थिमज्जोष्मणा तेन शीर्य्यते दह्यमानवत् ॥

---

तच्च मांसशोणिते आश्रित्य स्वयं गुल्माकाराः सन्तो विद्रधिर्भवन्तीति योजना। अत्र दूष्यत्वेन परिपठितानां त्वगादीनां सर्व्वेषामेवोपदेष्टव्यत्वे सत्यपि मांसशोणितयोरुपयोगः पाकानुयोगित्वात्; स्वयमिति विशेषणञ्च "न रोगोऽप्येकदोषजः" इत्यागमे सत्यपि विद्रध्यभिनिर्वृत्तौ प्रत्येकशो दोषाणामनन्यदोषसहायतेत्याख्यातुमित्यनुसन्धेयम्। विद्रधितो गुल्मं विशिनष्टि विवरेति। विवरं विलमाकाशमित्येतत्। गुल्मापरपर्य्यायोऽयं ग्रन्थिशब्दः, वक्ष्यति च "हृद्वस्त्योरन्तरे ग्रन्थिः * * * स गुल्म इति कीर्त्तितः" इति। अप्स्विति सप्तमीयं षष्ठ्यर्थे। तदयमर्थः अपां बुद्बुदको यथा विवरमाकाशमनु लक्ष्यीकृत्य चरतीति विवरानुचरः, तथैव ग्रन्थिर्गुल्मः "पञ्चगुल्माश्रया नृणां पार्श्वे हृन्नाभिवस्तयः" इत्यनागतावेक्षणात् पार्श्वादि-विवरानुचर इति निष्कर्षः। स्यादेतत् किन्तेनेत्याह एवमिति। यस्मा-देवम्प्रकारो विवरानुचर इत्यर्थः। एवमित्यादिनोक्तमपरिस्फुटमर्थं स्फोर-यति मांसशोणितहीनत्वादिति। उक्तमर्थं स्फुटीकृत्योपसंहरति गुल्म इति।

विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम् ॥
अथास्य कर्म्मणा व्याधिर्द्वारन्तु लभते यदा ।
ततो स्रेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु ॥
भिन्नेऽस्थ्नि निस्रवेत् पूयमेतमस्थिगतं विदुः ।
विद्रधिं शास्त्रकुशलाः सर्व्वदोषरुजावहम् ॥ २६ ॥
इति सुश्रुतसंहितायां निदानस्थाने विद्रधिनिदानं
नाम नवमोऽध्यायः ।

---

अत्र स्वे दोष इत्यनेन पाकसम्भावनानिरासार्थं पाकानुयोगिमांसशोणित-सम्बन्धं निरस्यति । अथेत्यादि । अथ पाकानन्तरमित्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ २४—२६ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने विद्रधिनिदानं नाम नवमोऽध्यायः ।

---

# दशमोऽध्यायः ।

अथातो विसर्पनाड़ीस्तनरोगनिदानं व्याख्यास्यामः ॥ १ ॥

---

शोफपाकादिसाम्यादिदानीं विसर्पादिनिदानमधिकरोति अथात इत्यादिना । नेह "विद्रध्यः परिसर्पणम्" इत्यध्ययनसम्प्रदानीये विद्रधि-निदानानन्तरं नाड़ीस्तनरोगौ हित्वा केवलं विसर्पस्य परिगणनं विप्रतिषिद्धं भवति, तत्र विसर्पग्रहणेनानयोरपि ग्रहणात् । त्रयाणामेषां युगपदिहा-भिधानन्तु प्रपाकित्वादिना सजातीयेषु मध्ये तत्तत्स्थलाचराभिधानत्व-साधर्म्यादित्यनुसन्धेयम् । एवमुत्तरत्रापि यथायोगं द्रष्टव्यम् ॥ १ ॥

त्वङ्मांसशोणितगताः कुपितास्तु दोषाः
सर्व्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ।
कुर्व्वन्ति यं विस्तृतमुन्नतमाशु शोफं
तं सर्व्वतो विसरणाच्च विसर्पमाहुः ॥ २ ॥
वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द्द-
सम्भेदतोदपवनंज्वरलिङ्गयुक्तः ।
गण्डैर्यदा तु विषमैरतिदूषितत्वाद्-
युक्तः स एव कथितः खलु वर्ज्जनीयः ॥ ३ ॥

---

त्वङ्मांसेत्यादि । अत्र त्वग्ग्रहणेन तदाश्रिता लसीकापि गृहीता भवति, आश्रयग्रहणेनाश्रितस्यापि ग्रहणात्, नातः "रक्तं लसीका त्वङ्मांसं दूष्यम्" इति चरकवचनं विरुध्यते । कुपितास्त्विति तुकारः स्तुत्यर्थोऽत्यर्थं कुपिता इति निष्कर्षः । दोषास्त्वत्र मिलिता एव बोध्याः सर्व्वेषामेव विसर्पाणां सप्तधातुकत्वेन व्यपदेशात् ; तथाहि चरकः "स च सप्तविधो दोषैर्व्विज्ञेयः सप्तधातुकः" इति । वहिरन्तरुभयतो वा अवयवशः सर्व्वमङ्गं सर्त्तुं शीलमस्येति सर्व्वाङ्गसारी ; उक्तञ्च "वहिःश्रितः श्रितश्चान्तस्तथा-चोभयसंश्रितः । विसर्पो बलमेषान्तु ज्ञेयं गुरु यथोत्तरम्" इति । इह उत्पत्तिभूमौ अस्थितमनिश्चलम् । एतेनायं तस्मिंस्तस्मिन् गात्रप्रदेशेऽङ्कुरितो भूत्वा विसर्पतीति सूचितं भवति । आत्मलिङ्गं व्यस्तसमस्तवातादिलिङ्गम् । विस्तृतं विस्तीर्णम् । उन्नतं महान्तम् । विसरणाद्विसर्प इति पृषोदरादिषु द्रष्टव्यम् । कुष्ठवत् सप्तधातुकस्याप्यस्य विसर्पणादयो विशेषा नानुपपन्नाः संयोगशक्तेरचिन्त्यत्वात् ॥ २ ॥

त्रिदोषजत्वेनोपलब्धमपि वीसर्पं प्रतीकारसुकरत्वाय दोषप्राधान्येन निरूपयति वातेत्यादिना । परुषः कठोरः । विषमैर्दारुणैर्ज्वरैर्व्वा,

पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-
स्फोटप्रभेदबहुलः क्षतजप्रकाशः ।
दोषप्रवृद्धिहतमांसशिरो यदा स्यात्
स्रोतोजकर्द्दमनिभो न तदा स सिध्येत् ॥ ४ ॥
श्लेष्मात्मकः सरति मन्दमतीव्रपाकः
स्निग्धः सितः श्वयथुरल्परुगुग्रकण्डूः ॥ ५ ॥
सर्व्वात्मकस्त्रिविधवर्णरुजोऽवगाढः
पक्को न सिध्यति च मांसशिराप्रणाशात् ॥ ६ ॥
सद्यः क्षतव्रणमुपेत्य नरस्य पित्तं
रक्तञ्च दोषबहुलस्य करोति शोफम् ।
श्यावं सलोहितमतिज्वरदाहपाकं
स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥ ७ ॥
सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्व्वात्मकः क्षतकृतश्च न सिद्धिमेति ।
पैत्तानिलावपि च दर्शितपूर्व्वलिङ्गौ
सर्व्वे च मर्म्मसु भवन्ति हि कृच्छ्रसाध्याः ॥ ८ ॥

---

गण्डैः कुथितमांसादिगुड़कैः। दोषाभिवृद्धा विनष्टा मांसशिरा यत्रेति दोषप्रवृद्धिहतमांसशिरः। स्रोतोजं सौवीराञ्जनम्। व्यवसायाभिवृद्धये प्रागुक्तं साध्यासाध्यत्वं संगृहीतुमनुक्तञ्च किञ्चिदभिधातुमिदमुच्यते सिध्यन्तीति। दर्शितपूर्व्वलिङ्गौ गण्डैर्यदेत्यादिना दोषप्रवृद्धीत्यादिना चोक्तलिङ्गावित्यर्थः। परिशिष्टं निगदव्याख्यातम् ॥ ३—८ ॥

शोफो न पक्व इति पक्वमुपेक्षते यो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि ततः स पूयः ॥
तस्यातिमात्रगमनाद्गतिरित्यतश्च
नाड़ीव यद्वहति तेन मता तु नाड़ी ॥ ९ ॥
दोषैस्त्रिभिर्भवति साऽपृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ १० ॥
तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपायाम् ॥ ११ ॥
तृट्तापतोदसदनज्वरभेदहेतुः
पीतं स्रवत्यधिकमुष्णमहःसु पित्तात् ॥ १२ ॥

---

क्रमागतत्वान्नाड़ीरभिधत्ते शोफ इत्यादिना । उपेक्षते प्रतिकारयितुं नोत्सहते । असाधुवृत्तोऽनुचितकर्म्मतत्परः । तत उपेक्षणात्, तस्यातुरस्य पूर्व्वविहितानि व्रणास्रावविज्ञानीये निर्द्दिष्टानि, स्थानानि त्वगादीनि । प्रविदार्य्य स पूयः अभ्यन्तरमन्तःशरीरं प्रविशतीत्यन्वयः । सपर्य्यायं नाड़ीशब्दं निर्व्वक्ति तस्येति । तस्य पूयस्येत्यर्थः । अतोऽतिमात्रगमनादेव चेत्यर्थः । नाड़ी सिरेति पर्य्यायौ ॥ ९ ॥

दोषैरित्यादि । सा नाड़ी संमूर्च्छितैः प्रवृद्धैः "मूर्च्छितो रूढ़वृद्धयोः" इत्यजयः । अपृथक् मिलितैः; एकशः पृथक् च त्रिभिर्द्दोषैर्भवतीति समन्वयः । तत्रेत्यादि । फेनानुविद्धं फेनेनानुगतम् । स्रवति स्रावयतीत्यर्थः, एवमुत्तरत्रापि व्याख्येयमकर्म्मकत्वात् । क्षपायामधिकस्रुतिरत्रानिलस्य

ज्ञेया कफाद्बहुघनार्ज्जुनपिच्छिलास्रा

रात्रिस्रुतिः स्तिमितरुक् कठिना सकण्डूः ॥ १३ ॥

दोषद्वयाभिहितलक्षणदर्शनेन

तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १४ ॥

दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा

यस्यां भवन्त्यभिहितानि च लक्षणानि ।

तामादिशेत् पवनपित्तकफप्रकोपाद्-

घोरामसुक्षयकरीमिव कालरात्रिम् ॥ १५ ॥

नष्टं कथञ्चिदणुमार्गमुदीरितेषु

स्थानेषु शल्यमचिरेण गतिं करोति ।

सा फेनिलं मथितमच्छमसृग्विमिश्र-

मुष्णं करोति सहसा सरुजा च नित्यम् ॥ १६ ॥

---

शैत्यपिहितद्वारत्वेनातितरां निरोधात्, शैत्येनाभिवृद्धेश्च ; अह:स्वधिकत्वौ-ष्ण्येन पित्तप्रकोपादित्यनुसन्धेयम् । ज्ञेयेत्यादि । बह्वादिगुणमास्रवतीति बहुघनार्ज्जुनपिच्छिलास्रा, बाहुलकात् डः । अर्ज्जुनस्त्वच धवलः । रात्रि-स्रुतिरिति सौम्येन कफाभिवृद्धेरित्यवधेयम् । स्तिमितरुक् स्थिररुक् मन्द-रुग्वा "स्तिमितौ निश्चलार्द्रयोः" इति मेदिनी ॥ १०—१३ ॥

भेषजकल्पनार्थं संसर्गजास्तिस्रो गतीः परिकल्प्योपदिदिक्षति दोषेत्या-दिना । व्यतिकरो व्यतिषङ्गः, संसर्ग इति पर्य्यायाः । कालः संहारो मरणमित्यनर्थान्तरम्, तदुपलक्षिता रात्रिः कालरात्रिः ; कल्पान्तरात्रि-रिति केचित् । नष्टमित्यादि । नष्टमन्तःप्रविष्टतया दृष्टिपथमतिक्रान्तम् । स्थूलं हि शल्यं सुखं निर्ह्रियते तदिदमुच्यते अणुमार्गमिति । एवञ्च स्थूल-ञ्चेन्नष्टं तर्हि तदपि गत्युत्पादनाय प्रभवतीति बुद्धिमता द्रष्टव्यम् । उदी-

यावन्तो गतयो यैश्च कारणैः सम्भवन्ति हि।
तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः॥ १७॥
धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः।
दोषाभिसरणात् तासां न भवन्ति स्तनामयाः॥ १८॥
तासामेव प्रजातानां गर्भिणीनान्तु ताः पुनः।
स्वभावादेव विवृता जायन्ते सम्भवन्त्यतः॥ १९॥
रसप्रसादो मधुरः पक्वाहारनिमित्तजः।
कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते॥ २०॥

---

रितेषु स्थानेषु त्वगादिषु। प्रकृतत्वात् स्रावशब्दोऽत्र द्वितीयान्तत्वेनाध्याहार्य्यः। फेनिलमिति फेनिलत्वं शल्याहतद्वारत्वेन वायोर्निर्गमनासौकर्य्यात्। मथितं निर्ज्जलं तक्रमिवेति मथितं तन्मांसप्रपाकात्, अच्छं निर्म्मलं तत्पुनः सिराप्रपाकात्, उक्तं हि "पक्वासु च तोयनाड़ीभिरिव तोयागमनम्" इति, असृग्विमिश्रशासम्यक्प्रपाकात्, उष्णन्तु शल्यकृतेनाभिघातेन पित्तशोणितविदाहाद्भवतीति लिङ्गानामेषामेवमवस्थाविशेषविषयत्वेनानियतवृत्तित्वादिदमुच्यते सहसेति। सहसा अकस्मादिति पर्य्यायौ॥ १४—१६॥

पारिशेष्यात् स्तनरोगनिदानमधिकरोति यावन्त इत्यादिना। यावन्तो यावत्परिमाणाः, गतयो नाड्यः, यैर्व्वातादिभिरित्यर्थः। कन्यानामिति कन्याशब्दस्येह एकान्ततोऽप्राप्तगर्भासु तात्पर्य्यं न तु कुमारीष्वेव, वक्ष्यति हि "तासामेव प्रजातानाम्" इत्यादि। दोषाभिसरणात् संवृतद्वारतया स्तनामयारम्भकाणां दोषाणामविसर्ज्जनात्। इह हि प्रतीकारविधौ सर्व्वास्ववस्थासु स्तन्यनिर्दोहनं कार्य्यमित्युपदेक्ष्यते, तदिदानीं स्तन्यं निवेदयति रसेत्यादिना। पक्वाहारो निमित्तमस्येति पक्वाहारनिमित्तो रसस्तस्माज्जातः पक्वाहारनिमित्तजः, मधुरो रसप्रसादो रसस्य प्रसन्नो भागः। अत्र "पक्वाहारनिमित्तजो मधुरः प्रसादः" इति सिद्धे, रसशब्दः कारकोप-

विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते ।
सर्व्वदेहाश्रितत्वेऽपि स्तन्यं लक्षणतस्तथा ॥ २१ ॥
तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि ।
शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्त्तते ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥
तदेवापत्यसंस्पर्शाद्दर्शनात् स्मरणादपि ।
ग्रहणाच्च शरीरस्य शुक्रवत् सम्प्रवर्त्तते ।
स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥ २२ ॥
तत् कषायं भवेद्वातात् क्षिप्तञ्च प्लवतेऽम्भसि ।
पित्तादम्लञ्च कटुकं राज्योऽम्भसि च पीतिकाः ॥
कफाद्घनं पिच्छिलञ्च जले चाप्यवसीदति ।
सर्व्वैर्दुष्टैः सर्व्वलिङ्गमभिघाताच्च दुष्यति ॥ २३ ॥

---

न्यायेन झटित्यवबोधार्थः । नन्वेवञ्चेत्तर्हि कथन्तर्हि स्तन्यं रसप्रसादात् स्थानविशेषसंश्रयतः संज्ञामात्रेण भिन्नमपि पाटितेषु शरीरेषु नालोक्यत इत्यत आह विशस्तेष्विति । सर्व्वदेहाश्रितत्वेऽपि "यथा पयसि सर्पिस्तु गुड़श्चेक्षौ रसो यथा । शरीरेषु तथा शुक्रम्" इत्यनागतावेक्षणात्, सर्व्व-शरीरव्यापित्वे सत्यपि विशस्तेष्वणुशश्छिन्नेषु देहेषु यथा शुक्रं न दृश्यते, लक्षणतस्तथा स्तन्यमिति समन्वयः, एतेन सौक्ष्म्यात् देहे नालोक्यत इति निष्कर्षः ॥ १७—२१ ॥

न तावदचेतनस्याऽपि सतः स्तन्यस्य चेतनवत् प्रवृत्तिरप्रसिद्धेति दृष्टान्त-मवतारयति तदेवेति। तदिति शुक्रप्रत्यवमर्शकम्। पित्तादित्यादि ।

यत् चीरमुदके चिप्तमेकीभवति पाण्डुरम् ।
मधुरञ्चाविवर्णञ्च प्रसन्नं तद्विनिर्द्दिशेत् ॥ २४ ॥
सचीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ।
रक्तं मांसञ्च सन्दूष्य स्तनरोगाय कल्पते ॥
पञ्चानामपि तेषान्तु हित्वा शोणितविद्रधिम् ।
लचणानि समानानि वाह्यविद्रधिलचणैः ॥ २५ ॥

इति सुश्रुतसंहितायां निदानस्थाने विसर्प-नाड़ी-
स्तनरोगनिदानं नाम दशमोऽध्यायः ।

---

अम्भसि चिप्ते सति पीतिकाः पीतवर्णा राज्यः सूत्रवत् रेखा भवन्तीत्यर्थः । पञ्चानामित्यादि । पञ्चानां वातादिजानां तेषां स्तनरोगाणामित्यर्थः । अतिरोहितार्थमन्यत् ॥ २२—२५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने विसर्पनाड़ीस्तनरोगनिदानं नाम दशमोऽध्यायः ।

---

# एकादशोऽध्यायः ।

अथातो ग्रन्थ्यपच्यर्व्वुदगलगण्डानां निदानं व्याख्यास्यामः ॥ १ ॥
वातादयो मांसमसृक् प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम् ।
वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ २ ॥

---

शोथसामान्यादिदानीं ग्रन्थ्यादिनिदानमधिकरोति अथात इत्यादिना । अत्र प्रागनुद्दिष्टत्वेनाप्रस्तुतानामप्यपचीप्रभृतीनां व्यपदेशो ग्रन्थिसाम्यादित्यनुसन्धेयम् ॥ १ ॥

आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते छ्रत्यत एति भेदम् ।
कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ३ ॥
दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि ।
रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ ४ ॥
शीतो विवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत्संहननोपपन्नः ।
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनञ्च पूयम् ॥ ५ ॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डूः ।
मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः ॥ ६ ॥
व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि शिराप्रतानम् ।
संपीड्य सङ्कोच्य विशोष्य वापि ग्रन्थिं करोत्युन्नतमाशुवृत्तम् ॥
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ।
अरुक् स एवाप्यचलो महांश्च मर्म्मोत्थितश्चापि विवर्ज्जनीयः ॥७॥

---

वातेत्यादि । कफानुविद्धं कफेन संयुक्तं मेदश्चेति कार्त्स्न्येन योजनीयं न त्वेव कार्त्स्न्येन, परमतो मेदः क्षतत्वेनास्योपदेशात् । वृत्तोन्नतमिति प्रायिकत्वादुपात्तं तथा चावृत्तोऽनुन्नतश्च नानुपपन्नः । विग्रथितं विक्षत्या ग्रन्थिनेवानुगतम्, विशेषणस्यास्य कठोरत्वे तात्पर्य्यम् । अतो वृत्तादिगुणयोगादित्यर्थः । आयम्यते आकृष्य दीर्घीक्रियत इव स्वयमेवेत्यर्थः । एवमुत्तरत्रापि यथायोगं व्याख्येयम् । व्यथ्यत इत्यादयेव । तोदं सूचीविद्धवद्वेदनाविशेषम् । प्रत्यस्यते आकृष्य दूरे निक्षिप्यत इव, छ्रत्यते च्छिद्यत इवेत्यर्थः । भेदं कुठारेण विदारणवद्वेदनाविशेषम् । भिन्न इत्यामावस्थायामेवेत्यवगन्तव्यम्, पक्वावस्थायामेकान्ततः पूयास्रावित्वेनोपलम्भात् । अच्छं पूयरहितत्वेन निर्म्मलम् । सङ्घातेन युक्तः संहननोपपन्नः । शरीर-

हन्वस्थिकक्षाक्षकबाहुसन्धि-मन्यागलेषूपचितन्तु मेदः ।
ग्रन्थिं स्थिरं वृत्तमथायतं वा स्निग्धं कफश्चाल्परुजं करोति ॥ ८ ॥
तं ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः ।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ ९ ॥
कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये ।
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥ १० ॥
गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥
कुर्व्वन्ति मांसोपचयञ्च शोफं तदर्व्बुदं शास्त्रविदो वदन्ति ।
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च ।
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥११॥

---

वृद्धिक्षयाभ्यां हि विशेषेण मेदसो वृद्धिक्षयादिदमुच्यते शरीरेति । पिण्याको निःस्नेहस्तिलकल्कः । सर्पिरत्र स्थानमेव बोध्यम् ॥ २—७ ॥

अपचीनिदानमधिकरोति हन्वित्यादिना । कक्षा अंसस्याधोभागः । अक्षके अंसतो जतुमूलगते द्वे अस्थिनी । बाहुसन्धिपदेनेह गौण्या वृत्त्या द्वौ वङ्क्षणसन्धी एवाभिप्रेयेते इत्यवश्यं वक्तव्यम्, बाहुसन्धौ तथाविधमेदसोऽभावादपचीजन्मानुपपत्तेः; अतएव वाग्भटेनाप्युक्तम् "मेदःस्थाः कण्ठ-मन्याक्षककक्षावङ्क्षणगा मलाः" इति । तमित्यादि । जाले जालाकारे आधारे मत्स्याण्डं मत्स्याण्डजालं राजदन्तादिषु द्रष्टव्यम्; तत्सदृशैर्मत्स्याण्ड-जालप्रतिमैः । अनन्यवर्णैः मेदःकफकृतत्वेन त्वक्सवर्णैरित्यर्थः । चय-प्रकर्षादपचीमिति पृषोदरादिषु द्रष्टव्यम् । वर्षगणानुबन्धो बहुवर्षानु-सरणशील इत्यर्थः ॥ ८।९ ॥

क्रमागतत्वादर्व्बुदनिदानमधिकरोति गात्रेत्यादिना । अत्र क्वचिदित्य-

दोषः प्रदुष्टो रुधिरं शिरास्तु सम्पीड्य सङ्कोच्य गतस्तु पाकम्।
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम्॥
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्।
रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्व्वुदपीडितस्तु॥ १२॥
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम्।
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्॥ १३॥
प्रदुष्टमांसस्य नरस्य बाढमेतद्भवेन्मांसपरायणस्य।
मांसार्व्वुदन्त्वेतदसाध्यमुक्तं साध्येष्वपीमान्युपवर्ज्जयेत्तु॥ १४॥
सम्प्रस्रुतं मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम्।
यज्जायतेऽन्यत् खलु पूर्व्वजाते ज्ञेयं तदध्यर्व्वुदमर्व्वुदज्ञैः।
यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च भवेदसाध्यम्॥ १५॥

---

लिङ्गान्यपचीवन्नियतदेशवृत्तितां निरस्यति। संमूर्च्छितः प्रवृद्धः। मांस-सृक् प्रदूष्येति। अत्र मांसेन मेदोऽप्युपलक्षणात् च भिषेत्यायुर्वेदविदो भाषन्ते, अनन्तरं तयोरप्युपदेशात्। वातेनेत्यादि। तस्येति रक्तजमांसज-व्यतिरिक्तस्येत्युन्नेयम्, अनन्तरं "लक्षणानि ग्रन्थेः समानानि" इत्युक्तेः। स्यादेतत् किन्तावत् रक्तजमांसजयोर्लिङ्गानीत्यत आह दोष इति। सास्रावं रक्तातिप्रपूरणेन त्वगादेरवदरणाद्रक्तस्रावेणानुगतं यथा स्यात्तथा उन्नह्यति उन्नतं करोतीत्यर्थः॥ १०—१२॥

मुष्टीत्यादि। प्रहारादिग्रहणात् शिबिकावहनादीनामादेशः। अश्मोपमं पाषाणवत् कठिनम्, अप्रचाल्यं स्थिरत्वाच्चालनानर्हं यं शोफं प्रकरोति प्रदुष्टत्वात् तदर्व्वुदं वदन्तीति शेषः। एतदेव पुनरवस्थाविशेषे विशिनष्टि प्रदुष्टेति। मांसपरायणस्य मांसेष्वतितरामासक्तस्य अतएव प्रदुष्टमांस-स्यातिमहन्मांसस्यैतदर्व्वुदं बाढमत्यर्थं भवेत् स्फिगादिष्विति शेषः, यदुक्तं

न पाकमायान्ति कफाधिकत्वान्मेदोऽधिकत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्व्वार्व्वुदान्येव निसर्गतस्तु ॥ १६ ॥
वातः कफश्चैव गले प्रवृद्धौ मन्ये तु संसृत्य तथैव मेदः ।
कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥१७॥
तोदान्वितः कृष्णशिरावनद्धः कृष्णोऽरुणो वा पवनात्मकस्तु ।
मेदोऽन्वितश्चोपचितश्च कालाद्भवेत् प्रदिग्धे च गलेऽरुजश्च ॥ १८ ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात् कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रशोषः ॥ १९ ॥
स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु ।
चिराभिवृद्धिं कुरुते चिराद्वा प्रपच्यते मन्दरुजं कदाचित् ।
माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रलेपः ॥ २० ॥
स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदःकृतो नीरुगथातिकण्डूः ।
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम् ॥२१॥
कृच्छ्रात् श्वसन्तं मृदु सर्व्वगात्रं संवत्सरातीतमरोचकार्त्तम् ।
क्षीणन्तु वैद्यो गलगण्डिनं तं भिन्नस्वरञ्चैव विवर्ज्जयेत् तु ॥

---

मांसाभिवृद्धिमधिकृत्य "मांसं स्फिग्गण्डौष्ठोपस्थोरुवाहुजङ्घासु वृद्धिम्" इति । इमानि वक्ष्यमाणानि । सुप्रस्नुतमत्यर्थं रक्तस्रावेणानुविद्धम् । दोषस्थिरत्वात् दोषकृतकाठिन्यात्, ग्रथनात्तेषां दोषाणां ग्रथितत्वादित्यर्थः । सम्प्रति पारिशेष्यात् गलगण्डानधिकरोति वात इत्यादिना । क्रमश इत्यनेन शनैर्वृद्धिं दर्शयति । स्वलिङ्गैर्वक्ष्यमाणैर्वातादिलिङ्गैः । तं तं काल-

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।

महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥ २२ ॥

इति सुश्रुतसंहितायां निदानस्थाने ग्रन्थ्यपच्यर्व्वुदगलगण्ड-

निदानं नामैकादशोऽध्यायः ।

---

विशेषं प्राप्नोति कालात् । प्रदिग्धे मेदःप्रलिप्त इत्यर्थः । स्निग्ध इत्यादि । गलेन गलद्वारा शब्दमव्यक्तध्वनिं कुरुते इत्यर्थः । परिशिष्टं निगदव्याख्या-तम् ॥ १३—२२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने ग्रन्थ्यपच्यर्व्वुदगलगण्डनिदानं नामैकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः ।

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः ॥ १ ॥

वात-पित्त-श्लेष्म-शोणित-मेदो-मूत्रान्त्रनिमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्य-तमः ॥ २ ॥

---

शोथसामान्यादिदानीं वृद्ध्यादिनिदानमधिकरोति अथात इत्यादिना । न तावदुपक्रमेऽनुद्देशादुपदंशश्लीपदयोरिहाभिधानमनुपपन्नम्, तत्र वृद्धेः परिग्रहेणैवानयोरपि परिगृहीतत्वेनाभ्युपगमे दोषाभावात् ॥ १ ॥

वातेत्यादि । अत्र संख्येयग्रहणेनैव संख्यालाभे पुनः सप्तेति संख्यानं द्वन्द्वजादीनामेकान्ततः प्रतिषेधार्थम् । उत्पत्तिहेतुरुत्पत्तेः साक्षात्कारणम् अन्यतमः प्रकर्षेण अन्यो मूत्रान्त्ररूप इत्यर्थः । अत्र हि प्रकर्षमात्रविव-

अधःप्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोशयोर्वृद्धिं जनयति तां वृद्धिमित्याचक्षते ॥ ३ ॥

तासां भविष्यतीनां पूर्व्वरूपाणि वस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोशशोफश्चेति ॥ ४ ॥

तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिमित्तानिलरुजं वातवृद्धिमाचक्षते। पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीञ्चाशुसमुत्थानपाकां पित्तवृद्धिम्। कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिम्। कृष्णास्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिम्। मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिम्। मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रं, वेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं विद्यात् ॥ ५ ॥

भारहरण-बलवद्विग्रह-वृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं द्विगुणमादा-

---

च्छायामिव तमप्, यथा प्रकृष्टो य आद्यः स आद्यतमस्तद्वत्। किन्तावद्वृद्धिरित्याह अध इति। फलकोषवाहिनीरण्डकोषानुसारिणीः। तत्रेत्यादि। अनिमित्तानिलरुजं तदात्वे निमित्तरहितानिलवेदनाम्। तालफलप्रकाशां पक्वतालफलसवर्णाम् ॥ २—५ ॥

भारेत्यादि। प्रकुपितः प्रागुक्तेन कोष्ठतोदादिसमाख्येन प्रकोपलक्षणेनान्वितः। इतरस्य क्षुद्रान्त्रस्य चेत्यर्थः। "क्षुद्रान्त्रावयवं यदा" इति

याधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोशं प्रविश्य मुष्कशोफमापादयत्याध्मातो वस्तिरिवाततः प्रदीर्घः शोफो भवति सशब्दमवपीडितश्चोर्द्ध्वमुपैति, विमुक्तश्च पुनराध्मति, तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥ ६ ॥

तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशन-

---

तन्त्रान्तरीयन्तु प्रायिकत्वादुक्तमित्यदोषः। द्विगुणमित्याभुग्नत्वेन द्वंशम्। फलकोषं प्रविश्येति प्रवेशः फलावलम्बिनोः स्रोतसोर्द्वारविकाशेनेति प्रत्येतव्यम्। आधमति आगमनेनाध्मापयति। इत्यस्मिन् शास्त्रे। असाध्यामित्यसाध्यत्वं प्रायः प्रतिहतक्रियत्वादेवोन्नेयम्, न पुनरेकान्ततोऽप्रतिकार्य्यत्वात्,आयत्ते हि शस्त्रविदो दारणसीवनादिना साधयन्ति कदाचित् ॥ ६ ॥

क्रमिकत्वादुपदंशनिदानमधिकरोति तत्रेत्यादिना। तत्र हस्तादिषु सत्सु तमुपदंशमाचक्षत इत्यन्वयः। ब्रह्मचर्य्यस्य मैथुनराहित्यस्य अतिक्रमणं सहसा परित्यागोऽतिब्रह्मचर्य्यम्; वाग्भटेनाप्युक्तम् "स्त्रीव्यवायनिवृत्तस्य सहसा भजतः" इति। भजतो व्यवायं कुर्व्वत इति तदर्थः। ब्रह्मचारिणीं मैथुनराहित्यादिब्रह्मचर्य्यव्रतधारिणीम्। चिरोत्सृष्टां सुचिरं व्यवायेन परित्यक्ताम्। दीर्घरोमामित्यादौ "अन उपधालोपिनोऽन्यतरस्याम्" ४।१।२८ इति डाप्। सङ्कीर्णरोमां सङ्कशः प्रतिष्ठितरोमाम्,निगूढरोमामभ्यन्तरप्रविष्टत्वेनापाततोऽपरिलक्षितरोमाम्, अचौक्षमेवाचौक्ष्यम् अशुचीत्यर्थः

विष-शूकनिपातनाद्दर्द्दनाद्धस्ताभिघाताच्चतुष्पदीगमनाद्दचौक्ष्य-सलिलप्रक्षालनादवपीडनाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वा-ऽप्रक्षालनादेवंविधाद्वान्यस्मान्मेढ्रभागस्य प्रकुपिता दोषाः क्षते-ऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमित्याचक्षते ॥ ७ ॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः ॥ ८ ॥

तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः ॥ ९ ॥

पैत्तिके ज्वरः श्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च ॥ १० ॥

श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनश्च ॥ ११ ॥

रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्य-त्यर्थं ज्वरदाहौ शोषश्च याप्यस्त्वेव कदाचित् ॥ १२ ॥

सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः क्रिमिप्रादुर्भावो मरणञ्चेति ॥ १३ ॥

कुपितास्तु वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुजङ्घा-

---

"चोक्षो गीते शुचौ" इति मेदिनी । योनिरोगोपसृष्टां योनिव्यापदार्त्ताम्, दुष्टयोनिं दोषाध्युषितयोनिम्, त्रियोनिं पारुष्यादिदोषदुष्टयोनिम् । करजो नखः । शूको नाम लिङ्गवृद्धिकरं सविषकीटशूककृतं लेपादि, निपातनं प्रयोगः । मर्द्दनात् शिलादिभिः प्रपीडनात्, चतुष्पद्यो गवादयः, अवपीडनात् रज्ज्वादिभिर्ब्बन्धनात् ताडनाद्वा ॥ ७—१२ ॥

क्रमागतं श्लीपदमधिकरोति कुपिता इत्यादिना । तुकारः पूर्व्वस्माद्-

स्वप्रतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति तत् श्लीपदमित्याचक्षते ॥ १४ ॥

तत् त्रिविधं वातपित्तकफनिमित्तमिति ॥ १५ ॥

तत्र वातजं खरं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः । पित्तजन्तु पीतावभासमीषन्मृदुज्वरदाहप्रायञ्च । श्लेष्मजन्तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितञ्च ॥ १६ ॥

तत्र संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्ज्ज-नीयानि ॥ १७ ॥

भवन्ति चात्र ।

त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात् ॥ १८ ॥
पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १९ ॥
पादयोर्हस्तयोश्चापि श्लीपदं जायते नृणाम् ।
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः ॥ २० ॥

---

विशेषणार्थः । शोफं जनयन्तीति शोफोऽत्र सज्वरत्वेन विशेषणीयः "यः सज्वरो वङ्क्षणजो भृशार्त्तिः" इति तन्त्रान्तरीयैकवाक्यत्वात् । परिस्फुटति अवदीर्णं भवति । भारिकं गुर्व्विति पर्य्यायौ । महाग्रन्थिकं बृहदाकारै-र्ग्रन्थिभिरनुविद्धम् । वल्मीकजातं वल्मीकमिव बहुशिखराकारत्वेनोत्पन्नम् । परिशिष्टं निगदव्याख्यातम् ॥ १४—२० ॥

इति सुश्रुतसंहितायां निदानस्थाने हद्ग्रपदंशश्लीपद-
निदानं नाम द्वादशोऽध्यायः ।

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने हद्ग्रपदंशश्लीपदनिदानं नाम द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः ।

अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः ॥ १ ॥

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा—
अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीक-
मिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जालगर्द्दभः कक्षा विस्फो-
टकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्करार्व्वुदं
पामा विचर्च्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्तौ
दारुणकोऽरूंषिका पलितं मसूरिका यौवनपिड़का पद्मिनी-
कण्टको जतुमणिर्मशकश्चर्म्मकीलस्तिलकालको न्यच्छं व्यङ्गः
परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं
वृषणकच्छुर्गुदभ्रंशश्चेति ॥ २ ॥

पूर्व्वं हि भागशोऽध्यायवितयेन स्वल्पाक्षराभिधाना व्याधयो व्या-
ख्याताः, इदानीन्तु तत्प्रसङ्गेन ततोऽन्यतरवचनावबुध्यान् व्याधीनधि-
करोति अथात इत्यादिना । क्षुद्रा वचनलेशावगम्यत्वेनाल्पा इत्यर्थः ।
अल्पः क्षुद्र इति पर्य्यायौ । समासेनेत्यादि स्पष्टम् ॥ १—२ ॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ३ ॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पिड़का श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ४ ॥
घनामवक्त्रां पिड़कामुन्नतां परिमण्डलाम् ।
अन्धालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥ ५ ॥
विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् ।
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥ ६ ॥
ग्रन्थयः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ।
कफानिलाभ्यामुद्भूतां विद्यात् तां कच्छपीमिति ॥ ७ ॥
पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि ।
ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥
तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः ।
व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥ ८ ॥
पद्मकर्णिकवन्मध्ये पिड़काभिः समाचिताम् ।
इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ ९ ॥

---

यवेत्यादावनुक्ता अपि वेदनाविशेषा ऊह्या भवन्ति पिड़कासाधर्म्यात् । अन्धालजी स्नायुगतेत्याहुः "श्लेष्मानिलौ श्रितौ स्नायुं पिड़कां परिमण्डलाम् । दुष्टौ जनयतोऽवक्त्रामल्पपूयामकण्डुराम् । आमोडुम्बरसङ्काशां विद्यादन्धालजीन्तु ताम्" इति भोजवचनस्मरणात् । विवृतेत्यादावास्या पिड़कामित्यनुषज्यते, विवृतास्यता चास्य पित्तेनातितरां पाकात् । पाणीत्यादि ।

कर्णोपरि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् ।
शालूकवत् पनसिकां तां विद्यात् श्लेष्मवातजाम् ॥ १० ॥
हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् ।
पाषाणगर्द्दभं विद्याद्बलासपवनात्मकम् ॥ ११ ॥
विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः ।
अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्द्दभः ॥ १२ ॥
बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपात् सम्भूतां कक्षामिति विनिर्द्दिशेत् ॥ १३ ॥
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः ।
क्वचित् सर्व्वत्र वा देहे स्मृता विस्फोटका इति ॥ १४ ॥
कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ।
तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ १५ ॥
नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् ।

---

वल्मीकवदित्यनेनोन्नतप्रचुरशिखरत्वमाख्यायते । पद्मकर्णिकावत् पद्मवीजकोषवत्; कर्णिकाशब्दस्याकारलोप आर्षः । कर्णोपरि कर्णभागे । समन्तात्सर्व्वत । "कर्णस्याभ्यन्तरे जाताम्" इति तन्त्रान्तरीयन्तु बाहुल्यानुशयादुपदिश्यत इत्यविरोधः । शालूकवत्कुमुदादिमूलवत् । विसर्पवदिति । अपाक इति नञयमीषदर्थे, पित्तप्राधान्येन सर्व्वथा पाकाभावस्यायुक्तत्वात् । पित्तात् पित्तोल्वणादित्यर्थः, यदाह भोजः "पित्तोत्कटा-

करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ।
तदेव चतरोगाख्यं तथोपनखमित्यपि ॥ १६ ॥
अभिघातात् प्रदुष्टो यो नखो रुचोऽसितः खरः ।
भवेत् तु कुनखं विद्यात् कुलीनमिति संज्ञितम् ॥ १७ ॥
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ।
कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक् ॥ १८ ॥
विदारीकन्दवद्वृत्तां कचावङ्क्षणसन्धिषु ।
रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम् ॥ १९ ॥
प्राप्य मांसशिरास्नायु श्लेष्मा मेदस्तथाऽनिलः ।
ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् ॥
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ।
मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः ॥
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः ।
स्रवन्ति सहसा रक्तं तां विद्याच्छर्कराव्र्बुदम् ॥ २० ॥
पामाविचर्च्चौ कुष्ठेषु रकसा च प्रकीर्त्तिता ॥ २१ ॥
परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् ॥ २२ ॥

---

त्रयो दोषा जनयन्ति त्वगाश्रिताः ॥ ॥ ॥ विसर्पमाहुस्तं व्याधिमपरे जालगर्दभम् इति । बाहित्यादि । इत्यस्मिन् शास्त्रे इत्यर्थः ॥ १—२० ॥
पामेत्यादि । कुष्ठोक्तानामेषां पुनरिहोपदेशः क्षुद्ररोगमधिकृत्य वक्ष्यमाणप्रतीकारविशेषार्थमित्यनुसन्धेयम् । परीत्यादि । दारी दारणम् ।

शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥ २३ ॥
सकीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा ।
कोलमात्रः सरुक् स्रावी जायते कदरस्तु सः ॥ २४ ॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ ।
दुष्टकर्दमसंस्पर्शादलसं तं विनिर्दिशेत् ॥ २५ ॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः ।
तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते ॥ २६ ॥
दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते ।
कफवातप्रकोपेण विद्याद्दारुणकन्तु तम् ॥ २७ ॥
अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि ।
कफासृक्कृमिकोपेण नृणां विद्यादरूंषिकाम् ॥ २८ ॥
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ।
पित्तञ्च केशान् पचति पलितं तेन जायते ॥ २९ ॥
दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः ।
गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ ३० ॥

---

कीलेन शङ्कुना समानः सकीलः । मसूरिका नाम रोगविशेषो विस्तरशः स्वल्पाक्षरादवगन्तव्यः ॥ २१—२६ ॥

शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः ।
जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ॥ ३१ ॥
कण्टकैराचितं वृत्तं कण्डूमत् पाण्डुमण्डलम् ।
पद्मिनीकण्टकाप्रख्यैस्तदाख्यं कफवातजम् ॥ ३२ ॥
नीरुजं समसुत्पन्नं मण्डलं कफरक्तजम् ।
सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥ ३३ ॥
अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते ।
माषवत् कृष्णमुत्सन्नमनिलान्मशकं दिशेत् ॥ ३४ ॥
कृष्णानि तिलमात्राणि नीरुजानि समानि च ।
वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान् ॥३५॥
मण्डलं महदल्पं वा श्यावं वा यदि वा सितम् ।
सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ३६ ॥
समुत्थाननिदानाभ्यां चर्म्मकीलं प्रकीर्त्तितम् ॥ ३७ ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
सहसा मुखमागम्य मण्डलं विसृजेत् ततः ।
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ३८ ॥
मर्द्दनात् पीड़नाच्चापि तथैवाप्यभिघाततः ।
मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरः ॥

---

समुत्थानेत्यादि । पूर्व्वाचार्य्यैः क्षुद्ररोगत्वेन परिपठितमिदं चर्म्मकीलं प्रसङ्गादर्शोनिदाने प्रागभिहितमिति स्मारयन्नाह समुत्थानेत्यादि । मर्द्द-

तदा वातोपसृष्टन्तु चर्म्म:प्रतिनिवर्त्तते ।
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥
सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित् ।
मारुतागन्तुसम्भूतां विद्यात् तां परिवर्त्तिकाम् ।
सकण्डूः कठिना चैव सैव श्लेष्मसमुत्थिता ॥ ३८ ॥
अल्पीयसीं यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः ।
हस्ताभिघातादथ वाचर्म्मण्युद्वर्त्तिते बलात् ॥
मर्द्दनात्पीड़नाद्वापि शुक्रवेगविघाततः ।
यस्यावपाट्यते चर्म्म तां विद्यादवपाटिकाम् ॥ ४० ॥
वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् ।
मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् ।
मूत्रं प्रवर्त्तते जन्तोर्मणिर्विव्रियते न च ।
निरुद्धप्रकशं विद्यात् सरुजं वातसम्भवम् ॥ ४१ ॥
वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः ।
निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ।
सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम् ॥ ४२ ॥

---

मादित्यादि । सर्व्वतश्चरो वायुरिति सम्बन्धः । प्रतिनिवर्त्तते सम्बन्धं परिवर्त्तते । वातेत्यादि । निरुद्धप्रकशो नाम रोगः "मुदा" इत्याख्यायते ।

शक्रान्मूत्रसमायुक्तोऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥
कण्डूयनात् ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ४३ ॥
स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ।
प्रक्लिद्यते यदा स्वेदात् स कण्डूं जनयेत् तदा ॥
तत्र कण्डूयनात् क्षिप्रं स्फोटः स्रावश्च जायते ।
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ४४ ॥
प्रवाहणातिसाराभ्यां निर्गच्छति गुदं वहिः ।
रूक्षदुर्व्वलदेहस्य तं गुदभ्रंशमादिशेत् ॥ ४५ ॥

इति सुश्रुतसंहितायां निदानस्थाने क्षुद्ररोगनिदानं नाम त्रयोदशोऽध्यायः ।

---

अवेदनमीषद्वेदनम् । सरुजं शश्वत् मूत्रनिरोधजनितवेदनानुविद्धम् । परिशिष्टं निगदव्याख्यातम् ॥ ३७—४५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने क्षुद्ररोगनिदानं नाम त्रयोदशोऽध्यायः ।

# चतुर्द्दशोऽध्यायः ।

अथातः शूकदोषनिदानं व्याख्यास्यामः ॥ १ ॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते । तद्यथा—सर्षपिका, अष्ठीलिका, ग्रथितं, कुम्भीका, अलजी, मृदितं, सम्मूढ़पिड़का, अवमन्थः, पुष्करिका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्पाकः, शोणितार्व्बुदं, मांसार्व्बुदं, मांसपाकः, विद्रधिः, तिलकालकश्चेति ॥ २ ॥

---

क्षुद्ररोगसाधर्म्म्यादिदानीं शूकदोषनिमित्तान् व्याधीनधिकरोति अथात इत्यादिना । शूको नाम सविषो जलसम्भवो जन्तुभेदः, तत्सम्बन्धित्वात् तत्संसृष्टा लिङ्गवृद्धिकरा कामशास्त्रोपदिष्टाः "भल्लातकास्थिजलशूकमथाब्जपत्रमन्तर्विदाह्य मतिमान् सह सैन्धवेन । एतद्विरूढ़बृहतीफलतोयपिष्टमालेपनं महिषविड्विमलीकृतेऽङ्गे ॥ स्थूलं महत्तरतुरङ्गमतुल्यमाशु शेफः करोत्यभिमतं नहि संशयोऽस्ति" इत्याद्या योगा अपि शूका उच्यन्ते ; तन्निमित्तांस्तु व्याधीनिह शूकदोषानाहुः "दोषा ह्यपि रोगशब्दं * * * लभन्ते" इत्यात्रेयस्मरणात् । यद्वा शूकनिमित्ता व्याधय एव शूकदोषाः कथ्यन्ते "आयुर्व्वै घृतम्" इतिवत् ॥ १ ॥

लिङ्गेत्यादि । अक्रमप्रवृत्तानां शूकसंयोगित्वेनानिष्टफलतया निन्दिते भल्लातकास्थ्यादिलिङ्गवृद्धिकरकल्पे प्रवृत्तिमतामित्यर्थः । "क्रमोऽनुक्रमकल्पयोः" इति रुद्रः । विशेषणमिदं "अश्वगन्धाशवरीकुष्ठमांसीसिंहीफलान्वितम् । चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् । स्तनलिङ्गकर्ण-

गौरसर्षपतुल्या तु शूकदुर्भुग्नहेतुका ।
पिड़का कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥ ३ ॥
कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः ।
शूकैस्तु विषसंयुक्तैः पिड़काष्ठीलिका भवेत् ॥ ४ ॥
शूकैर्यत् पूरितं शश्वद्ग्रथितं नाम तत्कफात् ॥ ५ ॥
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभा शुभा ॥ ६ ॥
अलजीलक्षणैर्युक्तामलजीञ्च वितर्कयेत् ॥ ७ ॥
मृदितं पीड़ितं यत् तु संरब्धं वायुकोपतः ॥ ८ ॥
पाणिभ्यां भृशसंमूढ़े सम्मूढ़पिड़का भवेत् ॥ ९ ॥

---

पालिवर्द्धनं स्तनचणादिदम्" इति शूकरहितकल्पनिकरैर्लिङ्गवृद्धिमिच्छतां व्यवच्छेदार्थम् ॥ २ ॥

गौरेत्यादि । शूकस्य दुर्भुग्नं दुरवचारणादवश्यविकारित्वरूपं वलयकौटिल्यं हेतुर्यस्याः सा शूकदुर्भुग्नहेतुका । कठिनेत्यादि । विषसंयुक्तैः "भल्लातकास्थि" इत्यादिनोक्तैः, शूकैरेवेति तुकारेण नियम्यते। विषमैरन्तैर्नतोन्नतैः प्रान्तभागैरुपलक्षितेत्यर्थः । शूकैरित्यादि । यल्लिङ्गं शूकैरामशुकादिफलजातैः "शूङ्गा" इति प्रसिद्धैर्भावैरिवापूरितं पूर्णं कफादिति शूकसम्मूर्च्छितादित्येव एवमुत्तरत्राऽपि शूकस्यानुल्लेखे व्याख्येयम् । तल्लिङ्गं ग्रथितमुच्यते, ग्रथिताख्यरोगान्वयादित्ययमभिसन्धिः । वाग्भटेनाप्युक्तं "लिङ्गं शूकैरिवापूर्णम्" इत्यादि । अलजीत्यादि । अलजी नाम प्रमेहपिड़काभेदः ॥ ३—७ ॥

मृदितमित्यादि । पीड़ितं शूकेनार्त्तं यल्लिङ्गं संरब्धं शोथशूलादिभिरभिभूतं तन्मृदितमुच्यते, मृदितसौसादृश्यादित्ययमाशयः । पाणिभ्यामित्यादि । अत्र वातकोपत इत्यनुवर्त्यते । भृशसंमूढ़े शूकापचारादनन्तरं

दीर्घा वृत्ताश्च पिड़का दीर्य्यन्ते मध्यतस्तु याः ।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥ १० ॥
पित्तशोणितसम्भूता पिड़का पिड़काचिता ।
पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥ ११ ॥
जनयेत् स्पर्शहानिन्तु शोणितं शूकदूषितम् ॥ १२ ॥
मुद्गमाषोपमा रक्ता पिड़का रक्तपित्तजा ।
उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥ १३ ॥
छिद्रैरणुमुखैर्यत् तु चितं लिङ्गं समन्ततः ।
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १४ ॥
पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥ १५ ॥
कृष्णास्फोटैः सरक्तैश्च पिड़काभिश्च पीड़ितम् ।
यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्व्वुदम् ॥ १६ ॥
मांसदोषेण जानीयादर्व्वुदं मांससम्भवम् ॥ १७ ॥
शीर्य्यन्ते यस्य मांसानि यस्य सर्व्वाश्च वेदनाः ।
विद्यात् तं मांसपाकन्तु सर्व्वदोषकृतं भिषक् ॥ १८ ॥
विद्रधिं सन्निपातेन यथोक्तमभिनिर्द्दिशेत् ॥ १९ ॥

---

मर्द्दनेनात्यर्थं सुप्ततामापन्ने लिङ्ग इत्येतत् । मुद्गेत्यादि । शूकाजीर्ण-निमित्तजा पुनः पुनः शूकोपयोगाभिनिर्वृत्त-विकृतिविशेषसम्भूतेत्यर्थः । कृष्णेत्यादि । अत्र लिङ्गमिति पूर्व्वस्मादाकृष्यान्वेयम् । मांसेत्यादि । मांसदोषेण शूकसंमूर्च्छितदोषप्रदुष्टमांसेनेत्यर्थः । विद्रधिमित्यादि ।

कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ।
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ २० ॥
कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः ।
सन्निपातसमुत्थानं तं विद्यात् तिलकालकम् ॥ २१ ॥
तत्र मांसार्व्वुदं यच्च मांसपाकश्च यः स्मृतः ।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ २२ ॥

इति सुश्रुतसंहितायां निदानस्थाने शूकदोषनिदानं नाम चतुर्द्दशोऽध्यायः ।

---

यथोक्तमिति सन्निपातानुसङ्गादुक्तं सन्निपातजविद्रधिमनतिक्रम्येत्यर्थः । कृष्णानीत्यादि । चित्राणि नानावर्णानि, सविषाणि जलशूकादिदुष्टानि । पातितानि प्रयुक्तानि । मांसानि मेढ्रमांसानि । तस्य तं रोगं तिलकालकं विद्यादिति योजना । तत्र सर्षपादिषु मध्ये इत्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ ८—२२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये निदानस्थाने शूकदोषनिदानं नाम चतुर्द्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः ।



अथातो भग्नानां निदानं व्याख्यास्यामः ॥ १ ॥

पतन-पीड़न-प्रहाराक्षेपण-व्याल-मृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति । तत् तु भङ्गजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्च ॥२॥

तत्र सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम् ॥ ३ ॥

तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाशक्तिरुग्ररुजत्वं स्पर्शासहत्वञ्चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥ ४ ॥

विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति । विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च । विवर्त्तिते तु

---

भग्नान्यपि हि शूकदोषवत्स्तोकेनैवाऽभिधातुं शक्यन्ते तदिदानीं क्षुद्रत्वसाधर्म्यात् भग्ननिदानमधिकरोति अथात इत्यादिना ॥ १ ॥

पतनेत्यादि । आक्षेपणमाकर्षणं, व्यालाः सिंहादयः, मृगा हरिणादयः, प्रभृतिग्रहणाद्गलवद्विग्रहादीनामादेशः । अनुसार्य्यमाणं तत्त्वतोऽनुसन्धीयमानम् । सन्धिमुक्तं सन्धिमोक्षस्तस्य च भग्नेतरत्वे सत्यपि तत्साम्याद्व्यपदेशः । तत्रेत्यादि । उत्पिष्टं चूर्णितम्, विवर्त्तितं सव्यदक्षिणविभागेनापवर्त्तितम्, अवक्षिप्तमूर्द्धमधो वा क्षिप्तम्, अतिक्षिप्तं मांसादीनि विदार्य्यापगतम्, तिर्य्यक्क्षिप्तं वक्रत्वेन मनाक्क्षिप्तम् । उक्तमर्थं स्फुटीकृत्याव-

सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च। अविच्छिन्ने सन्धि-विश्लेषस्तीव्ररुजत्वञ्च। अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च। तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति॥ ५॥

काण्डभग्नमत ऊर्द्धं वक्ष्यामः। कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम्॥ ६॥

श्वयथुबाहुल्यं स्पन्दनविवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्व्वास्ववस्थासु न शर्म्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम्॥ ७॥

विशेषतस्तु संमूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकम्। अश्वकर्णवदुन्नतमश्वकर्णकम्। चूर्णितमस्थि तत्तु शब्दस्पर्शाभ्यां बोद्धव्यम्। पिच्चितं पृथुतां गतमनल्पशोफम्। पार्श्वयोरस्थि हीनोन्नतमस्थिच्छल्लितम्। खल्लितं प्रकम्पमानं

शमयति तत्रेत्यादिना। उभयतः उभयपार्श्वतः, अपगमनमपसरणम्, अतिक्रान्तता दूरवर्त्तिता॥ २—५॥

काण्डेत्यादि। काण्डशब्देनेह नलकान्येवाऽभिप्रेयन्त इत्याहुः। स्यादेतत्क्विन्तावदेषां कर्कटकादीनां प्रत्येकशो विशिष्टानि लिङ्गानीत्यत आह विशेषत इत्यादि। मध्यभग्नमस्थि उभयतः ऊर्द्धमधश्च संमूढं कार्य्यानर्हम् ग्रन्थिरिवोन्नतमिति भग्नावच्छेदे सास्थिमांसशूनत्वाद्वच-नीयम्। कर्कटो नाम जलजन्तुभेदः "काँकड़ा" इति विज्ञायते, तदाकार-त्वाद्भग्नमिदं कर्कटमुच्यत इत्यनुसन्धेयम्। हीनोन्नतं किञ्चिदुन्नतम्, खल्लो-

काण्डभग्नम् । अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्न-
ह्यतीति मज्जानुगतम् । अस्थि निःशेषतश्छिन्नमतिपातितम् ।
आभुग्नमविमुक्तमस्थि वक्रम् । अन्यतरपार्श्वावशिष्टं छिन्नम् ।
पाटितमणु बहुविदारितं वेदनावच्च । शूकपूर्णमिवाध्मातं
विपुलं विस्फुटीकृतं स्फुटितमिति । तेषु चूर्णितच्छिन्नाति-
पातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालानां क्षत-
क्षीणकुष्ठश्वासिनां सन्ध्युपगतञ्चेति ॥ ८ ॥

भवन्ति चात्र ।

भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम् ।
जघनं प्रतिपिष्टञ्च वर्ज्जयेत् तच्चिकित्सकः ॥ ९ ॥
असंश्लिष्टं कपालन्तु ललाटे चूर्णितञ्च यत् ।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्द्धि च वर्ज्जयेत् ॥ १० ॥

---

गर्त्तो जातोऽस्येति खल्लितम् "खल्लो वस्त्रभेदे स्याद्गर्त्ते" इति मेदिनी । अस्थ्यवयवोऽस्थिखण्डम् उन्नह्यति उत्क्षिपति । अन्यतरपार्श्वमवशिष्टं भग्नेनाननुविद्धमनेनेत्यन्यतरपार्श्वावशिष्टम् अणुशो बहुविदारितमणुबहुविदारितम् । शूकपूर्णमिवेति वेदनाविशेषे तात्पर्य्यम् । विस्फुटीकृतं विदलीकृतं कणशो भिन्नमित्येतत् ॥ ६—८ ॥

भिन्नमित्यादि । कपालं नामास्थिभेदः जघनं कटिरिति पर्य्यायौ प्रतीतिभागेऽर्थे कर्म्मप्रवचनीयः । एतच्चातिपीड़ितसिरास्नायुकटिभग्नविषयं वक्ष्यमाणप्रतीकारविधिस्तु तदितरविषय इत्यविरोधः । असंश्लिष्टमनागतसंश्लेषं स्तनान्तरे स्तनयोर्मध्ये शङ्खो नाम वक्ष्यमाणे द्वे मर्म्मणी पृष्ठे पृष्ठवंशे वर्जनमिदं मर्म्माद्यभिघातमूलमित्युन्नेयमन्यथा प्रतीकारफलदर्शनात् ।

आदितो यच्च दुर्ज्जातमस्थि सन्धिरथापि वा ।
सम्यक्संहितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ।
सङ्क्षोभाद्वापि यद्गच्छेद्विक्रियां तत् तु वर्ज्जयेत् ॥ ११ ॥
मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्त्तिताः ।
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥ १२ ॥
तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ।
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥ १३ ॥

इति सुश्रुतसंहितायां निदानस्थाने भग्ननिदानं
नाम पञ्चदशोऽध्यायः ।

---

आदितो भग्नात् पूर्व्वतो यदस्थि दुर्जातं शोषादिना दूषितमित्यर्थः । संहितं कृतसन्धानमपिशब्दादसंहितमपीत्यर्थः । संक्षोभात् सञ्चलनात् । विक्रियेह पाकेन विकृतिरित्येव निश्चीयते तदितरत्र प्रतीकारफलावाप्तेः । सम्प्रति वयोऽवस्थाविशेषे संक्षेपेण साध्यासाध्यत्वे उपदिदिक्षति मध्यस्ये-त्यादिना । तिस्रोऽवस्था अत्र वृद्धिर्यौवनं सम्पूर्णता चैवेति वृद्धिविषयसारो-ऽपि स्थिरत्वं प्रति हानेरनुपयोगिकत्वेनोपलम्भात् । परिकीर्त्तिता इत्यातु-रोपक्रमणीय इत्येव । अत्रोपक्रान्तस्य स्थिरत्वेनोपदेशात् बाल्ये च सुख-साध्यत्वेन वक्ष्यमाणत्वाच्च चत्वारिंशत ऊर्द्ध्वं सप्ततिं यावत् क्रमेण कृच्छ्रत्वं तदूर्द्ध्वमतिकृच्छ्रत्वमसाध्यत्वञ्चाध्यवसितव्यं तत्राहन्यहनि धात्वादीनां क्षीय-माणत्वेनोपदेशात् । मा भूत् "अभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुप-दिशन्ति" इति प्रागुक्तेन भङ्गं प्रत्यस्थिसामान्यस्याविशेषेणोपलब्धिरित्यतो विशिनष्टि तरुणेति । अतिरोहितार्थमेतत् ॥ ९—१३ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने भग्ननिदानं नाम पञ्चदशोऽध्यायः ।

---

# षोड़शोऽध्यायः ।

अथातो मुखरोगाणां निदानं व्याख्यास्यामः ॥ १ ॥

मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु । तत्रायतनान्योष्ठौ दन्तमूलानि दन्ता जिह्वा तालु कण्ठः सर्व्वाणि चेति ॥ २ ॥

तत्राष्टावोष्ठयोः । पञ्चदश दन्तमूलेषु । अष्टौ दन्तेषु । पञ्च जिह्वायाम् । नव तालुनि । सप्तदश कण्ठे । त्रयः सर्व्वेष्वायतनेषु ॥ ३ ॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः ॥ ४ ॥

कर्क्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ ।
दाल्येते परिपाव्येते ओष्ठौ मारुतकोपतः ॥ ५ ॥

---

सर्व्व एव हि मुखरोगाः स्वस्थाचराऽभिधानत्वेन प्रागुक्तानतुकरोतीति साधर्म्यादिदानीं मुखरोगाणां निदानमधिकरोति अथात इत्यादिना ॥ १ ॥

मुखरोगा इत्यादि । भिद्यते हि समुदायेभ्यः समुदायी तदिदमुच्यते सर्व्वाणीति । सर्व्वाणीति सामान्येनोक्तमपि दन्तव्यतिरिक्तानीति प्रत्येतव्यम् साधारणशब्दविशेषात् दृश्यते हि दन्तेषु सर्व्वसरा नाम क्वचिदपि नोत्-पद्यन्ते । तत्रेत्यादि । तत्राष्टादिषु मध्ये वातादिनिमित्ता अष्टावोष्ठप्रकोपा इति योजना । ओष्ठप्रकोपशब्देनेह तन्मूला व्याधय एवोच्यन्ते उपचारा-दायुर्व्वै -घृतमितिवत्तदिदमनन्तरोक्तमुपपन्नं भवति कर्क्कशावित्यादि । कर्कशौ खरस्पर्शौ परुषौ कठोरौ स्तब्धौ निश्चलौ दाल्येते गाढं विदार्य्येते

आचितौ पिड़काभिस्तु सर्षपाकृतिभिर्भृशम् ।
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ ६ ॥
सवर्णाभिस्तु चीयेते पिड़काभिरवेदनौ ।
कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥ ७ ॥
सकृत्कृष्णौ सकृत्पीतौ सकृच्छुक्लौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिड़काचितौ ॥ ८ ॥
खर्ज्जूरफलवर्णाभिः पिड़काभिः समाचितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ९ ॥
मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति सृक्कण्योभयतो मुखात् ॥ १० ॥
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ।
अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू ॥ ११ ॥
क्षतजाभौ विदीर्य्येते पाट्येते चाभिघाततः ।
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ १२ ॥

दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशो दन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति ॥ १३ ॥

---

परिपाट्येते लक्षणेन विदार्य्येते इत्यर्थः । सृक्कण्योष्ठप्रान्तद्वितयस्य उभयत- उभयपार्श्वाश्रयिणो मुखात् व्रणास्यात् मूर्च्छन्ति प्रजायन्त इत्यर्थः । "मूर्च्छन्ति चात्र क्रिमयः" इत्यादौ तदर्थे प्रयोगदर्शनात् । घृतमण्डो घृतस्योपरितनो भागः ॥ २—१२ ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ १४ ॥
दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ १५ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ १६ ॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्ततः ।
लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः ॥ १७ ॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।
दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते ।
यस्मिन् स सर्व्वजो व्याधिर्महाशौषिरसंज्ञकः ॥ १८ ॥
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ १९ ॥

---

दन्तेत्यादि । दन्तवेष्टेभ्यो दन्तवेष्टनमांसेभ्यः । अकस्मादिति तदात्वे हेत्वन्तरानपेक्षित्वमाख्यातुम् । प्रक्लेदीनि दन्तादिप्रक्लेदनानि मृदूनि स्त्यानत्वेन स्पर्शसुखानि शीर्य्यन्ते क्वथितत्वेन विश्लिष्यन्ते स्वयमेव, परस्परमन्योऽन्यं पचन्तीत्यनेन पचने यौगपद्यं सूचितमित्यनुसन्धेयम् । दन्ता इत्यादि । परिपीड्यत इत्यतिक्वथितत्वेनेत्यवधेयम् । अत्र "विहन्यो ह्यनिशं दन्तान् तालुौष्ठमपि दारयेत् । महाशौषिर इत्येष सप्तरात्रान्निहन्त्यसून्"

वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च ।
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ।
यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतो गदः ॥ २० ॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥ २१ ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
वर्द्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥ २२ ॥
हानव्ये पश्चिमे दन्ते महाञ्छोथो महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ २३ ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २४ ॥

दन्तगतास्तु दालनः क्रिमिदन्तको दन्तहर्षो भञ्जनकः शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति ॥ २५ ॥

दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः ।
दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ २६ ॥

---

इति तन्त्रान्तरीयमनुस्मर्त्तव्यम् । दन्तमूलगता इत्यादि । यथेरिताः प्राक् नाडीनिदान इत्येव, नाडीमलक्षणानामप्येषां पृथगिहोपदेशो दन्तोदर-प्रादिरूपप्रतीकारविशेषादित्युन्नेयम् ॥ १३—२४ ॥

दन्तेत्यादि । दाल्यन्ते विदीर्यन्ते इत्यर्थः । "दीर्य्यमाणेष्विव रुजा" इति तन्त्रान्तरञ्च । ससंरम्भः शोथरागादिभिरनुविद्धः । क्रिमिदुष्टो दन्तः क्रिमिदन्तकः । संज्ञायां कः । वाग्भटोऽप्याह "पूतित्वात् क्रिमयः सूक्ष्मा

कृष्णश्छिद्री चलः स्रावी ससंरम्भो महारुजः ।
अनिमित्तरुजो वाताद्विज्ञेयः कृमिदन्तकः ॥ २७ ॥
दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च ।
यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात् ॥ २८ ॥
वक्त्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक् ।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ २९ ॥
शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै ।
सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा ॥ ३० ॥
दलन्ति दन्तवल्कानि यदा शर्करया सह ।
ज्ञेया कपालिका सैव दशनानां विनाशिनी ॥ ३१ ॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ ३२ ॥
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः ।
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ ३३ ॥

---

जायन्ते" इत्यादि। वक्रमित्यादि अत्र वक्रता दोषशक्तेरचिन्त्यत्वादूह्यणीया, शर्करा उपलखण्डं गुणघ्नी स्थैर्यनाशिनी। दन्तवल्कानि वल्कलाकाराणि दन्तखण्डानि दलन्ति भिन्दन्ति दोषा इति शेषः। कपालाकारदन्तखण्डसंश्रितत्वात् कपालिकेति नाम। संप्रत्यप्रस्तुतमपि हनुमोक्षं दन्तपीड़ाकरत्वादुपदिदिक्षति वातेनेति। तैस्तैरिति वातव्याधिनिदानाऽभिहितैरुच्चैर्व्याहारादिभिरित्यर्थः। अर्दितलक्षणमिव लक्षणमस्येत्यर्दितलक्षणः; एतेनास्य दन्तपीड़ाकरत्वमपि सूचितं भवत्यर्दितस्य तथाविधत्वात् ॥ २५—३३ ॥

जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उप-जिह्विका चेति ॥ ३४ ॥

जिह्वानिलेन स्फुटिता प्रसुप्ता
भवेच्च शाकच्छदनप्रकाशा ।
पित्तेन पीता परिदह्यते च
चिता सरक्तैरपि कण्टकैश्च ।
कफेन गुर्व्वी बहला चिता च
मांसोद्गमैः शाल्मलिकण्टकाभैः ॥ ३५ ॥
जिह्वातले यः श्वयथुः प्रगाढ़ः
सोऽलाससंज्ञः कफरक्तमूर्त्तिः ।
जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले तु जिह्वा भृशमेति पाकम् ॥ ३६ ॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-
मुन्नम्य जातः कफरक्तयोनिः ।
प्रसेककण्डूपरिदाहयुक्ता
प्रकथ्यतेऽसावुपजिह्विकेति ॥ ३७ ॥

---

जिह्वेत्यादि । स्फुटिता मनाक् विदीर्णा, प्रसुप्ता रसस्पर्शानभिज्ञेत्यर्थः । शाको नाम खरपत्रो वृक्षभेदः, "शेगुन" इत्याख्यायते । बहला दृढ़ा स्थूला वा । कफरक्तयोर्मूर्त्तिरिव मूर्त्तिरस्येति कफरक्तमूर्त्तिः, स श्वयथु-र्मूले, प्रवृद्धः सन् जिह्वां स्तम्भयति पाकञ्च भृशमेतीति तुकारेणाविष्क्रियते व्याधिरयं सान्निपातिक इत्यवगन्तव्यं स्तम्भादिना त्रिदोषलिङ्गेनानुविद्ध-

तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यध्रुषो मांसकच्छपो-ऽर्व्वुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति॥ ३८ ॥

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो
दीर्घः शोफो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत् सम्प्रदिष्टो
व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना॥ ३९ ॥

शोफः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु॥ ४० ॥

शोफः स्तब्धो लोहितस्तालुदेशे
रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥ ४१ ॥

कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा स्यात्॥ ४२ ॥

पद्माकारं तालुमध्ये तु शोफं
विद्याद्रक्तादर्व्वुदं प्रोक्तलिङ्गम्॥ ४३ ॥

दुष्टं मांसं श्लेष्मणा नीरुजञ्च
ताल्वन्तस्थं मांससङ्घातमाहुः॥ ४४ ॥

---

त्वात्। अत्र विशेषयति तन्त्रान्तरम् "प्रायस्तोयं तदा जिह्वा शोषितं चान्तरान्तरा। प्रचुरं स्रावयेत् सद्यः शिराच्छेदादलासके" इति ॥ ३४—३७ ॥

तास्वित्यादि। वातप्रपूरितो वस्तिर्ध्मातवस्तिः। प्रागुक्ताभ्यां श्लेष्मासृग्भ्याम्। तुण्डिकेरी नाम वनकार्पासीफलम्। तत्संस्थानत्वाधिरयं

नीरुक् स्थायी कोलमात्रः कफात् स्या-
न्मेदोयुक्तात् पुप्पुटस्तालुदेशे ॥ ४५ ॥
शोषोऽत्यर्थं दीर्य्यते चापि तालु
श्वासो वातात् तालुशोषः सपित्तात् ॥ ४६ ॥
पित्तं कुर्य्यात् पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥ ४७ ॥

कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूकमधिजिह्वो वलयो वलास एकवृन्दो वृन्दः शतघ्नी गिलायुर्गलविद्रधिर्गलौघः स्वरघ्नो मांसतानो विदारी चेति ॥ ४८ ॥

गलेऽनिलः पित्तकफौ च मूर्च्छितौ
पृथक् समस्ताश्च तथैव शोणितम् ।
प्रदूष्य मांसं गलरोधिनोऽङ्कुरान्
सृजन्ति यान् सासुहरा तु रोहिणी ॥ ४९ ॥
जिह्वां समन्ताद्भृशवेदना ये
मांसाङ्कुराः कण्ठनिरोधिनः स्युः ।
तां रोहिणीं वातकृतां वदन्ति
वातात्मकोपद्रवगाढयुक्ताम् ॥ ५० ॥

---

तुण्डिकेरीत्युच्यते। मेत्तालिङ्गं प्रागुक्तरक्तार्व्वुदलिङ्गम्। पद्माकारं पद्म-कर्णिकासदृशम्, अत्र रक्तादिति बाहुल्यानुशयादुपदिश्यते नातः "श्लेष्म-रक्तसमुत्थानं तत्तालव्र्वुदसंज्ञितम्" इति भोजवचनं विप्रतिषिद्धम् ॥३८—४७॥

कण्ठेत्यादि। जिह्वामिति "द्वितीया आम्रेडितान्तेषु ततोऽन्यत्रापि

क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्ततः स्यात् ॥ ५१ ॥
स्रोतोनिरोधिन्यपि मन्दपाका
गुर्व्वी स्थिरा सा कफसम्भवा वै ॥ ५२ ॥

गम्भीरपाकाप्रतिवारवीर्य्या त्रिदोषलिङ्गा त्रयसम्भवा स्यात् ॥५३॥
स्फोटाचिता पित्तसमानलिङ्गासाध्या प्रदिष्टारुधिरात्मिकेयम्॥५४॥

कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः ।
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥ ५५॥

जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रात् ।
ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्ज्जयेदागतपाकमेनम् ॥५६ ॥

बलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य ।
तं सर्व्वथैवाप्रतिवारवीर्य्यं विवर्ज्जनीयं वलयं वदन्ति ॥ ५७ ॥

गले च शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिदं दुस्तरमेनमाहुर्बलाससंज्ञं निपुणा विकारम् ॥ ५८ ॥

वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च ।
नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ ५९ ॥

---

दृश्यते" इति समन्तार्थयोगे द्वितीया । वातात्मकोपद्रवा मन्यास्तम्भादयः । स्रोत इत्यादावपिना प्रतियोगिपदं समुच्चीयते ॥ ४८—५२ ॥

गम्भीरेत्यादि । अधिजिह्वलक्षणे प्रबन्धशब्दो जिह्वाया उपरितनबन्धमेवाधिकरोति प्रकृतत्वात् तथाच कण्ठदेश इति निष्कर्षः । बलास इत्यादिसंज्ञाबलादेव वलयाकारतास्य वेदितव्या । मर्म्मच्छिदं प्राणाना-

समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपाद्विद्यात् सतोदं पवनास्रजं तम् ॥६०॥
वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः ।
नानारुजोच्छ्रायकरी त्रिदोषाज्ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥६१॥
ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः।
संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ६२ ॥
सर्व्वं गलं व्याप्य समुत्थितो यः शोफो रुजो यत्र वसन्ति सर्व्वाः ।
स सर्व्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य ॥ ६३ ॥
शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्त्यतेऽसौ ॥६४॥
योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥६५॥
प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण ।
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्व्वकृतो विकारः॥६६॥

---

सुपघातकमित्यर्थः, प्राणा हि मर्म्मस्वेव विशेषेणावतिष्ठन्ते । अपाक्यः पाकानर्हः ॥ ५३—५९ ॥

समुन्नतमित्यादि । शतघ्नी शस्त्रभेदः कण्टकाकीर्णमयः पिण्डमित्येतत् । सक्तमासक्तम्, अशनं भक्ष्यम् । सर्व्वमित्यादि । सर्व्वा वातादिजा रुज इति सम्बन्धः । तस्य प्रागुक्तस्य सर्व्वजस्यैव विद्रधेस्तुल्य इत्यर्थः ॥ ६०—६४ ॥

य इत्यादि । अतिप्रताम्यन् अत्यर्थं तमः पश्यन्, प्रसक्तं निरन्तरं कफोपदिग्धेषु कफलिप्तेषु सत्स्वित्यर्थः, प्रतानवान् विस्तृतः ।

सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥६७॥
सर्व्वसरास्तु वातपित्तकफशोणितनिमित्ताः ॥ ६८ ॥
स्फोटैः सतोदैर्वदनं समन्ताद्यस्याचितं सर्व्वसरः स वातात् ॥६९॥
रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितं वापि स पित्तकोपात् ॥७०॥
कण्डूयुतैरल्पस्जैः सवर्णैर्यस्याचितश्चापि स वै कफेन ॥ ७१ ॥
रक्तेन पित्तोदित एक एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञः ॥ ७२ ॥

इति सुश्रुतसंहितायां निदानस्थाने मुखरोगनिदानं
नाम षोड़शोऽध्यायः ।

इति श्रीसुश्रुताचार्य्यविरचिते आयुर्व्वेदशास्त्रे सुश्रुतसंहितायां
निदानस्थानं समाप्तम् ।

---

सर्व्वेत्यादि । शोणितोपादानमत्र मतान्तराभिप्रायेणेति परमतो व्यक्तीभविष्यति नातो "मुखरोगाः पञ्चषष्टिः" इति प्रागुक्तं विप्रतिपन्नं भवति । रक्तेनेत्यादि । इवार्थोऽयमेवशब्दः । पित्तोदित इवेति निष्कर्षः । प्रदिष्ट इति "मुखस्य पित्तजे पाके दाहोषौ तिक्तवक्तृता । क्षारोक्षितक्षत-समा व्रणा दुःखास्तु रक्तजे" इत्येवम्प्रकारेणेत्यवधेयम् । परिशिष्टं निगद-व्याख्यातम् ॥ ६५—७२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
निदानस्थाने मुखरोगनिदानं नाम षोड़शोऽध्यायः ।

समाप्तमिदं निदानस्थानभाष्यम् ।

# सुश्रुतसंहिता।



## शारीरस्थानम्।



रामपुरवोयालिया-प्रवासि-

श्रीहाराणचन्द्रचक्रवर्त्तिकविराज-

विरचित-सुश्रुतार्थसन्दीपनभाष्य-समेतम्।

भूतपूर्व्व-राजकीय संस्कृतविद्यालयाध्यापक-पूज्यपाद-
सर्व्वतन्त्रस्वतन्त्र-तर्कालङ्कारपदाङ्कित महामहोपाध्याय-

स्वर्गीय-चन्द्रकान्तभट्टाचार्य्य-

प्रमुखैः संशोधितम्।



कलिकाताराजधान्याम्

घोषेस्-लेनीय सप्तविंशसंख्याकभवनस्थ-

सत्ययन्त्रे

श्रीहितव्रतचट्टोपाध्यायेन मुद्रितम्।

श्रील योगेशचन्द्रवसाकेन कलिकाताराजधानीतः प्रकाशितम्।

शकाब्दाः १८३२।

मूल्यम्—सार्द्धैकमुद्रापि पणत्रयस्य-आणकद्वयम्।

# शारीरस्थानस्य सूचीपत्रम् ।



| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|---|
| शिवोऽस्तसग्रीवमेव | शिरोऽपसग्रीवमेव | ५७ | २० |
| सङ्गाता: | सङ्घाता: | ५८ | ८ |
| सङ्गेय | सङ्घेय | ५८ | १५ |
| दच्चिन | दच्चिण | ५९ | १२ |
| श्रवणादीन्ये | श्रवणादीन्येव | ६० | १० |
| सङ्गाता | सङ्घाता | ६२ | १० |
| पङ्गित्वात् | पङ्क्तित्वात्, | ६२ | १४ |
| या योग | यथा योग | ६२ | १५ |
| द्वयो: | द्वयो: | ६२ | १७ |
| सङ्गाता | सङ्घाता | ६२ | १८ |
| सङ्गात | सङ्घात | ६२ | १९ |
| सङ्गाता: | सङ्घाता: | ६२ | २२ |
| सङ्ग | सङ्घ | ६२ | १८ |
| प्राग्वग्रहत: | प्राग्वग्राहत: | ७१ | १५ |
| द्रव्याना | द्रव्याणा | ७२ | १३ |
| निसंशय | नि:संशय | ७३ | २१ |
| सर्म्मान्येव | सर्म्माण्येव | ७५ | १४ |
| भवा | भावा | ७८ | १२ |
| शल्या | शल्यो | ७९ | २ |
| सुस्तलुङ्ग | मस्तुलुङ्ग | ८१ | १५ |
| सुस्तलुङ्ग | मस्तुलुङ्ग | ८१ | २२ |
| वेदितव्या: | वेदितव्य: | ८८ | २१ |
| यन्त्रेनैव | यन्त्रेणैव | १०० | १८ |
| मुंड्ह: | मुंडु: | ११५ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|---|
| निपुण | निपुण- | ११६ | १६ |
| मात्मानां | सात्मानां | १२१ | ११ |
| प्रवाशाय | प्रवाहया | १२४ | २ |
| यथाचार | यथचार | १२८ | ५ |
| परिस्रुत | परिस्रुत | १४० | ११ |
| पाययेत | पाययेत् | १४८ | ६ |
| पति पत्यकाले | पतिप्रत्यकाले | १४८ | १४ |
| निद्रानाशन | निद्रानाशन | १५० | १८ |

---

# सुश्रुतसंहिता ।

## शारीरस्थानम् ।

### प्रथमोऽध्यायः ।

अथातः सर्व्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥ १ ॥

सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूप-

---

न तावदविदिते शरीरतत्त्वे व्याधीनां विज्ञानार्थमधीतमपि निदानस्थानं प्रभवति किमपि यथावत्प्रतिपत्तुं प्रतिपादयितुं वा, विशिष्यन्ते हि व्याधयः संश्रयविशेषेण, तदिदानीं तेषां संश्रयभूतान् तांस्तान् भावानुपदिदिक्षुः, क्रमप्राप्तं शारीरस्थानमारिप्समानो भगवान्, सत्यपि मनुष्यस्यैव क्रियाधिष्ठानत्वे, उपकरणत्वेनेतरेषामपि प्रतीकारविधानात्, प्रथमन्तावत् सर्व्वभूतचिन्ताशारीरं नामाधिकरोति अथात इत्यादिना। सर्व्वभूतानीह सर्व्वप्राणिशरीराख्येवेति प्रत्येतव्यम्, "भूतेभ्यो हि परं यस्मात् नास्ति चिन्ता चिकित्सिते" इत्यनागतावेक्षणात्। शारीरीयाशेषभावमधिकृत्य कृतोऽध्यायश्च शारीरः, "अधिकृत्य कृते ग्रन्थे" इत्यण्, सर्व्वभूतचिन्तार्थः शारीरः सर्व्वभूतचिन्ताशारीरः, शाकपार्थिवादिषु द्रष्टव्यः। शेषं समानम् ॥ १ ॥

कार्य्याणां त्रिगुणात्मकत्वमभिधातुं प्राणिवादिकारणं लिलक्षयिषुर्भगवान् प्रसिद्धत्वात् प्रायेण स्वमतानुसारित्वाच्च कापिलमतमाश्रित्याऽभिधत्ते सर्व्वेति। सर्व्वभूतानां कारणमव्यक्तं नामेत्यन्वयः। न व्यज्यत इत्यव्यक्तं प्रत्यक्षागोचर इत्यर्थः। व्युत्पत्तिमात्रमेतत् मूलकारणपर्य्यायोऽयमव्यक्तशब्दः। नन्वव्यक्तस्य कारणापेक्षायामनवस्था स्यादित्यत आह अकारणमिति। नास्ति कारणमस्येत्यकारणम्। तथाच साङ्ख्य-

सखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ॥ २ ॥

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च

---

कारिका—"मूलप्रकृतिरविकृतिः" इति, मूलप्रकृतिर्न कस्यचिद्विकृतिरिति तदर्थः। साङ्ख्यसूत्रञ्च "मूले मूलाभावादमूलं मूलम्" इति। तस्य स्वरूपमाह सत्त्वेति। सत्त्वरजस्तमांसि लक्षणं स्वरूपमस्येति सत्त्वरजस्तमोलक्षणम्। तथाच साङ्ख्याः "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इति, सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः, संयोगविभागवत्त्वात् लघुत्वचलत्वादिधर्मवत्त्वाच्च। गुणशब्दस्तु पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्माटत्वादेव प्रयुज्यते। तेषां सत्त्वादिद्रव्याणां साम्यावस्था चाकार्य्यावस्थेत्येव। साम्यावस्थोपलक्षितं सत्त्वादित्रितयं प्रकृतिरित्यध्यवसितव्यम्, यथाश्रुति सर्गावस्थायां प्रकृत्युच्छेदापत्तेः। इह कार्य्यसत्त्वादिवारणाय साम्यावस्थोपलक्षितमित्युक्तम्। तदिदमखिलस्य जगतः सम्भवहेतुः। तस्य विभागोऽष्टरूपमिति अष्टौ रूपाण्यस्य तत्तथोक्तम्। एतच्च परमतो व्यक्तीभविष्यति। तदव्यक्तमेकमनेकेषां क्षेत्रज्ञानां जीवानामधिष्ठानमाश्रयः। अत्र दृष्टान्तः समुद्र इवेति, औदकानामुदकसम्बन्धिनां भावानां पदार्थानां, यथा बहूनि यादांसि एकं समुद्रमाश्रित्य तिष्ठन्ति तथा बहवः क्षेत्रज्ञा एकमव्यक्तमाश्रित्य तिष्ठन्ति संसरन्तीत्यर्थः अव्यक्तात् पृथग्भावे हि मुच्यन्त इत्यभिसन्धिः॥ २ ॥

तस्मादिति तस्मादव्यक्तान्महानुत्पद्यते। महानिति प्रकृतेराद्यं कार्य्यं बुद्धितत्त्वमाख्यायते। तथाच साङ्ख्यप्रवचनभाष्यम् "यदेतत् विस्तृतं बीजं प्रधानपुरुषात्मकम्। महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते" इति। तच्च निश्चयवृत्तिकमिति बोध्यम्। "अध्यवसायो बुद्धिः" इति सूत्रान्तरस्मरणात्। एतत्तु वृत्तिवृत्तिमतोरभेदविवक्षया सूत्रितमित्यवधेयम्। तल्लिङ्ग एवेति तस्याव्यक्तस्य लिङ्गमिव लिङ्गमस्येति तल्लिङ्गः। यथाव्यक्तं

महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसो भूतादिरिति ॥ ३ ॥

तत्र वैकारिकादहङ्कारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते ॥ ४ ॥

तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मकं मनः ॥ ५ ॥

---

सत्त्वरजस्तमोलक्षणं तथा महानपीत्यर्थः। विशेषस्त्वत्र सत्त्वादीनां वैषम्यमेव। एतेनैव तल्लिङ्गश्चेति व्याख्यातप्रायम्। अहङ्कारोऽभिमानधर्म्मा "अभिमानोऽहङ्कारः" इति साङ्ख्याचार्य्याश्च। अत्र विशदयन्ति वाचस्पतिमिश्राः, तथाहि "यत् खल्वालोचितं मतञ्च अत्राहमधिकृतः शक्तः खल्वहमत्र मदर्था एवामी विषयाः, मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति अतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वात् अहङ्कारः, तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति" इति। सोऽहङ्कारश्च त्रिविधः वैकारिकः सात्त्विकः, तैजसो राजसः, भूतादिस्तामसः ॥ ३ ॥

तत्रेत्यादि। तत्र अहङ्कारेषु मध्ये तैजससहायात् राजससहायात् वैकारिकात् सात्त्विकादहङ्कारात् तल्लक्षणानि सत्त्वलक्षणानि प्रकाशकत्वात् सत्त्वप्रधानानीति तात्पर्य्यम्। अत्रैषां सत्त्वप्राधान्यं प्रत्यविशेषेऽपि बुद्धीन्द्रियमनसां यथा सत्त्वोत्कर्षो न तथा कर्म्मेन्द्रियाणामित्यनुसन्धेयम्। यद्वा राजसस्यापि सहकारित्वात् कर्म्मेन्द्रियाणां रजःप्राधान्यमितरेषान्तु सत्त्वप्राधान्यमचिन्त्यत्वादस्युक्तेः। कानि नाम तावदिन्द्रियाणीत्याह तद्यथेति, उभयात्मकं मन इत्येकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं बुद्धीन्द्रियं कर्म्मेन्द्रियञ्चोभयेषामेवैषां मनोऽधिष्ठितत्व एव स्वस्वविषयेषु प्रवृत्तिरित्ययमाशयः ॥ ४—५ ॥

भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्च तन्मात्राण्युत्पद्यन्ते। तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः; तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥ ६ ॥

---

भूतादेरित्यादि। भूतादेस्तामसाहङ्कारात्तल्लक्षणानि तमोलक्षणानि। यद्यप्येतेष्वहङ्कारेषु मध्ये यथा सात्त्विकतामसयोर्यथास्वमसाधारणं कार्य्यमस्ति न तथा राजसाहङ्कारस्य किमपि, तथापि सात्त्विकतामसयोः कार्य्येणैव तस्य कार्य्यित्वमध्यवसितव्यम्, तदन्तरेणानयोरेकान्ततः कार्य्यानुत्पत्तेः। अतएव साङ्ख्याः "सात्त्विक एकादशकः प्रवर्त्तते वैकारिकादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" इति। अत्र "सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्य्यं कुरुतः, रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्य्यं कुरुत इति तदुभयस्मिन्नपि कार्य्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वम्" इति वाचस्पतिमिश्राः। तन्मात्राणि निर्दिशति तद्यथेति। शब्दतन्मात्रादिशब्दानां संज्ञामात्रत्वं वारयन्नाचष्टे तेषामिति। तेषां तन्मात्रपञ्चकानां यथासङ्ख्यं शब्दादयो विशेषाः विशेषकाः, शब्देन हि विशेषेण शब्दतन्मात्रं स्पर्शतन्मात्रादिभ्यो विशिष्यते, स्पर्शेन च स्पर्शतन्मात्रं शब्दतन्मात्रादिभ्यः, एतेन शेषं व्याख्यातम्। तथाच विष्णुपुराणम् "तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता। तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते" इति। अविशेषत्वमनभिव्यक्तत्वेनैवेत्यविरोधः। अथवा तेषां शब्दादितन्मात्राणां विशेषा अस्मदाद्युपलभ्या आकाशादिगुणाः स्थूलाः शब्दादयः। तेषां विशेषा इत्यनेन शब्दतन्मात्रादीनामविशेषत्वं सूचितं, तथाच विष्णुपुराणवाक्येन न विरोधः। विशेषाणामाश्रयानाह तेभ्य इति। तेभ्यः पूर्व्वपूर्व्वतन्मात्रसहायेभ्यः शब्दादितन्मात्रेभ्यो यथासङ्ख्यं व्योमादीनि पञ्च

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि। अव्यक्तं महान् अहङ्कारः पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतयः, शेषाः षोडश विकाराः ॥ ७॥

---

स्थूलानि भूतान्युत्पद्यन्त इत्यर्थः। तथाच "पूर्व्वः पूर्व्वो गुणश्चैव क्रमशो गुणिषु स्मृतः"इति। अत्र विशेषयन्ति साङ्ख्याचार्य्याः। "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्चपञ्चभ्यः। एते स्मृता विशेषाः शान्ता घोराश्च मूढ़ाश्च" इति। अत्र आकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः सुखाः प्रसन्ना लघवः, केचिद्रजःप्रधानतया घोरा दुःखा अनवस्थिताः, केचित्तमःप्रधानतया मूढ़ा विषणाः। तेऽमी परस्परव्यावृत्ता अनुभूयमाना विशेषा इति स्थूला इति चोच्यन्ते" इति वाचस्पतिमिश्राः। एवमित्यादि। तत्त्वानां पदार्थानां चतुर्व्विंशतिः (अव्यक्तं महानहङ्कार एकादशेन्द्रियाणि पञ्चतन्मात्राणि पञ्चमहाभूतानि चेति) तत्त्वचतुर्व्विंशतिः ॥ ६ ॥

पण्डिता हि विषयावबोधाय बुद्धेर्निमित्तमिन्द्रियं बुद्धीन्द्रियं कर्म्मणामिन्द्रियञ्च कर्म्मेन्द्रियमित्यामनन्ति, तदिदानीं प्राधान्याद्बुद्धीन्द्रियाणां विषयान् कर्म्मेन्द्रियाणाञ्च कर्म्माण्यभिधत्ते तत्रेत्यादिना। तत्र चतुर्व्विंशतितत्त्वेषु मध्ये बुद्धीन्द्रियाणां श्रोत्रादीनां शब्दादय इत्यादिना स्पर्शरूपरसगन्धानां परिग्रहः क्रियते। विषिण्वन्ति विषयिणं सात्मकतया निरूपयन्तीति विषयाः कर्म्मेन्द्रियाणामित्यादौ, यथासङ्ख्यमिति वाचो वचनं, हस्तयोरादानं, उपस्थस्यानन्दः, पाय्वोर्व्विसर्गः, पादयोर्व्विहरणमिति प्रत्येतव्यं प्रागुक्तानुक्रमात्। अव्यक्तमित्यादि। अव्यक्तापेक्षया महदादीनां विकृतित्वेऽपि महत्तत्त्वमहङ्कारस्याहङ्कार एकादशेन्द्रियाणां पञ्चतन्मात्राणाञ्च, पञ्चतन्मात्राणि च पञ्चमहाभूतानां प्रकृतिरित्युक्तमष्टौ प्रकृतय इति। अतएव कापिलाः "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति। नन्वेवं पृथिव्यादयोऽपि गोघटादीनां प्रकृतय इति

स्वः स्वश्चैषां विषयोऽधिभूतम् । स्वयमध्यात्ममधिदैवतञ्च । अथ बुद्धेर्ब्रह्मा । अहङ्कारस्येश्वरः । मनसश्चन्द्रमाः । दिशः

---

तेषामपि प्रकृतित्वं प्रसज्येतेति चेन्न, येषां हि तत्त्वान्तरोपादानत्वमस्ति तेषामेव प्रकृतित्वेनाभ्युपगमात् । तत्त्वान्तरत्वन्तु खलु पदार्थविभाजकोपाधिमत्त्वम्, अतोऽव्यक्तादीनामष्टानां तत्त्वान्तरोपादानत्वात् प्रकृतित्वं नत्वेवं पृथिव्यादीनां तद्विपर्य्यासात्, गोघटादयो हि स्थूलतेन्द्रियग्राह्यतयोः समत्वेन तत्त्वान्तराख्रियन्ते, तथाच "तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतम्" इति सर्व्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रः । इदमत्रावधेयं पूर्व्वमष्टरूपमिति यदुक्तं तान्येतानि प्रकृतेरष्टौ रूपाणि प्रदर्शितानि । शेषा एकादशेन्द्रियाणि पञ्चमहाभूतानि चेत्यर्थः ॥ ७ ॥

सम्प्रति संक्षेपेणोक्तानि महदहङ्कारैकादशेन्द्रियाणि विषयादितः स्फुटीकृत्यावगमयति स्वः स्व इत्यादिना । एषां महदहङ्कारैकादशेन्द्रियाणामित्येव, अधिदैवते तेषामेवोपादानात् । अधिभूतमिति विभक्त्यर्थेऽव्ययीभावः, एषां स्वः स्व आत्मीय आत्मीयो विषयो भूतेष्विति निष्कर्षः । अन्येषां सत्यपि भूतेतरविषयत्वेऽधिभूतमिति विशेषणमायुर्व्वेदाभिमतत्वाददविरुद्धम्, वक्ष्यति हि "भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते" इति । स्वयमध्यात्ममित्यात्मनि देहे स्वयमित्यर्थः । न चैवं निष्क्रिये नष्टशरीरेऽप्यध्यवसायादिप्रसङ्ग इति वाच्यं, तस्य शरीरत्वेनानभ्युपगमात्, तथाहि "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति गौतमसूत्रम् । चेष्टाश्रय इन्द्रियाश्रयः सुखाश्रयो दुःखाश्रयश्च शरीरमिति तदर्थः । आमनन्ति हि "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यादि, स्मृतावपि "वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः । वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्" इत्यादि । दृश्यते च शक्तान्यपि शकटादीन्यनडुहाद्यनधिष्ठितानि नैव प्रवर्त्तन्ते, तदिदमप्युच्यते अधीति । देवतैव दैवतम्, तद्धितोऽयमनन्यार्थः । अधिष्ठातृत्वेनाधिकं दैवतमधिदैवतम् । तद्विवृणोति बुद्धेरित्यादिना । बुद्धेरधिष्ठाता ब्रह्मेत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । नन्वेवं

श्रोत्रस्य। त्वचो वायुः। सूर्य्यश्चक्षुषोः। रसनस्यापः। पृथिवी घ्राणस्य। वचसोऽग्निः। हस्तयोरिन्द्रः। पादयोर्विष्णुः। पायोर्मित्रः। प्रजापतिरुपस्थस्येति ॥ ८ ॥

तत्र सर्व्व एवाचेतन एष वर्गः; पुरुषः पञ्चविंशतितमः। स च कार्य्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति क्षीरादींश्च हेतूनुदाहरन्ति ॥ ९ ॥

अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्म्यवैधर्म्म्ये व्याख्यास्यामः।

---

य एवाधिष्ठाता स एव भोक्तेति देवतानां भोक्तृत्वप्रसङ्गेन शरीरस्य भोक्तृत्वं प्रलीयत इति चेन्न, वागादिष्वधिष्ठातृत्वेनाग्न्याद्युपचारो हि प्रकाशकत्वादिना केनचिन्निमित्तमात्रेण गमयितव्यः स्वरूपेणाग्न्यादिदेवतानां मुखाद्यननुप्रवेशात्, तथाचाणुमात्रेनापि देवतानां नैव भोक्तृत्वप्रसङ्गस्तावन्मात्रेणासामधिष्ठातृत्वाभ्युपगमात् ॥ ८ ॥

तत्रेत्यादि। तत्र प्रस्तुतेषु सर्व्वभूतेषु मध्ये चतुर्व्विंशतितत्त्वरूपो वर्गः सर्व्व एवाचेतनः पुरुषः पञ्चविंशतितमः पञ्चविंशतितत्त्वरूपः चेतन इति तात्पर्य्यम्। स्यादेतत् कथं नु खल्वस्य शश्वदेव ज्ञानं न प्रवर्त्तत इत्याह स चेति। स पुरुषः कार्य्यकरणसंयुक्तः कार्य्यं शरीरं करणानीन्द्रियाणि तत्संयुक्तः सन् चेतयिता चैतन्याश्रयो भवति चेतनां प्रति शरीरस्येन्द्रियाणाञ्च हेतुत्वात्। सत्यपीति प्रधानस्य प्रकृतेरचैतन्ये सत्यपि पुरुषस्य कैवल्यार्थं मोक्षार्थं प्रधानस्य प्रवृत्तिं कार्य्याकारेण परिणाममुपदिशन्ति। अचेतनस्यास्य प्रवृत्तौ क्षीरादींश्च हेतून् दृष्टान्तानुदाहरन्ति कापिला इति शेषः। तथाच "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम्" इति ॥ ९ ॥

अत इत्यादि। समानो धर्म्मः साधर्म्म्यं विरुद्धो धर्म्मो वैधर्म्म्यमिति

तद्यथा—उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौ च सर्व्वगताविति। एका तु प्रकृतिरचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति। बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अवीजधर्म्मिणोऽप्रसवधर्म्मिणो मध्यस्थधर्म्मिणश्चेति ॥ १० ॥

---

फलितार्थः। तत्र प्रथमं तावत् प्रकृतिपुरुषयोः साधर्म्म्यं दर्शयति उभावित्यादिना। उभौ प्रकृतिपुरुषौ अनादी आदिः कारणं तच्छून्यौ; अनन्तौ अविनाशिनौ, अलिङ्गौ लिङ्ग्यतेऽनेनेति लिङ्गमाकारस्तद्रहितौ अतएव अपरौ न विद्यते परः श्रेष्ठो याभ्यां तौ तथोक्तौ सर्व्वगतौ सर्व्वमूर्त्तसंयोगिनौ व्यापकाविति यावत्। सम्प्रति वैधर्म्म्यमुपदिदिक्षुः प्रथमतः प्रकृतिमेवाश्रित्याभिधत्ते एकेत्यादिना। अचेतना जड़ा त्रिगुणा त्रयो गुणाः सुखदुःखमोहाः सत्त्वस्था इति त्रिगुणा तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम्। न तावन्मिथो विरुद्धानामेषां गुणानां सहावस्थानमनुपपन्नं तथाविधानां वातपित्तश्लेष्मणां सन्निपातदर्शनात्। वीजधर्म्मिणी वीजस्य धर्म्मो वीजधर्म्मः सोऽस्या अस्तीति वीजधर्म्मिणी वीजधर्म्मेति वक्तव्ये मत्वर्थीयो वीजधर्म्मस्य नित्ययोगमाख्यातुम्। अस्यैव विवरणं प्रसवेति। प्रसवधर्म्मिणी सर्गावस्थायां कार्य्याकारेण परिणामिनीत्यर्थः। अमध्यस्थधर्म्मिणी सुखदुःखभोगवतीत्यर्थः। तथाचाहुः "तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः" इति। सुखदुःखभोग एव संसारः। न चाचेतनायाः प्रकृतेः संसारोऽनुपपन्न इति वाच्यं पुरुषसंयोगे तच्छायापत्त्या बुद्धेश्चेतनायमानत्वात्, तथाचोक्तम् "तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्" इति। पुरुषस्य वैधर्म्म्यं दर्शयन्नाह बहव इति। पुरि लिङ्गे शेते इति पुरुषः। अत्र "चेतनः पुरुषः" इति सत्यामपि साङ्ख्योक्तौ चेतनावन्त इति लिङ्गान्वयान्नानुपपन्नम्। प्रकृतिधर्म्मविपर्य्यासेन हि पुरुषधर्म्मा द्रष्टव्या इत्यतिरोहितार्थमन्यत् ॥ १० ॥

तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति, तदञ्जनत्वात् तन्मयत्वाच्च तद्गुणा-श्चैव पुरुषा भवन्तीत्येके भाषन्ते ॥ ११ ॥

---

तत्रेत्यादि। कारणानुरूपं कार्य्यमिति शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्योत्पत्तिदर्शनात् विपर्य्ययस्यादर्शनादिति भावः। इति कृत्वा इत्यालोच्य इति हेतोरिति यावत्। एते विशेषा भूतभौतिकरूपाः सत्त्वरजस्तमोमयाः शान्तघोरमूढ़स्वभावाः सुखदुःखमोहस्वभावा इति निष्कर्षः। सत्त्वादीनां सुखदुःखमोहात्मकत्वादिति तात्पर्य्यम्। अतएव साङ्ख्याश्च "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता विशेषाः शान्ता घोराश्च मूढ़ाश्च" इति। तत्रैकस्यैव कार्य्यस्य सुखदुःखमोहात्मकत्वमेवमुन्नेयम्—यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति, सपत्नीं दुःखाकरोति, तामलभमानं पुरुषान्तरं मोहयतीत्येतेनैव सर्व्वे भावा व्याख्याताः। तदञ्जनत्वादिति। तदञ्जनत्वात् तदाकारत्वादित्यर्थः "तदञ्जनता तदाकारता" इति तत्त्ववैशारद्यां वाचस्पतिमिश्राः। कथमेषां तदञ्जनतेत्याह तन्मयत्वादिति। तन्मयत्वात् बुद्धिवृत्तौ प्रतिविम्बनेन पुरुषाणां तद्भावापन्नत्वादित्यर्थः। तथाच पातञ्जलसूत्रम् "वृत्तिसारूप्यमितरत्र" इति। जवाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढ़ोऽस्मीत्यध्यवस्यतीति तदर्थः। अर्थमिमं दृष्टान्तेन स्फुटीकृत्यावगमयति तत्रभवान् वाचस्पतिमिश्रः—"यथा मलिने दर्पणतले प्रतिविम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति" इति। सुखादिमत्यन्तःकरणे प्रतिविम्बितः पुरुषस्तदाकारापत्त्या सुखादिमानिव भवतीत्ययमाशयः। साङ्ख्यभाष्यकारमते तु पुरुषेषु बुद्धिवृत्तीनां प्रतिविम्बनाङ्गीकारात् पुरुषाणां तन्मयत्वमुन्नेयम्। तथाच "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताः प्रतिविम्बन्ति सरसीव तटद्रुमाः" इति। स्फारे विपुले प्रतिविम्बन्ति प्रति-

वैद्यके तु—

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा।
परिणामञ्च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत॥ १२॥

---

विख्यायन्ते। "सर्व्वप्रातिपदिकेभ्यः क्विप्" इति क्विप्। एके साङ्ख्याचार्य्याः॥ ११॥

एवं मतान्तरमनुसन्धाय स्वमतमुपदिदिक्षुः प्रथमं तावत् कानिचित् परकीयमतानि कटाक्षयन्नाह वैद्यके इत्यादि। वैद्यं चिकित्सकमधिकृत्य कृतो ग्रन्थो वैद्यकः। तुकारेण प्रागुक्तां प्रकृतिं निरुणद्धि। प्रकृतिं जगतो मूलकारणम्। न खल्वेते प्रकृतिवादाः कथमपि प्रभवन्ति तात्त्विकीं बुद्धिमधिरोढुं सोढुं वा कमपि विचारमित्यसूक्ष्मदर्शित्वेनैवंवादिनां न्यक्कारार्थमिदमुच्यते पृथुदर्शिन इति। तथाहि स्वभावश्चेत्प्रकृतिः किन्तर्हि स्व एव भावः प्रकृतिः आहोस्वित् स्वीयो भावः। तथाद्ये स्वं प्रति स्वस्य हेतुत्वं प्रसज्येत तच्चेष्यते पूर्व्ववर्त्तिन एव हेतुत्वादन्योऽन्याश्रयप्रसङ्गाच्च, द्वितीयेऽपि स एव दोषो धर्म्मस्य धर्म्मिणि हेतुत्वात्। ये तु पुनः पृथिव्यादीनां नित्यत्वमभ्युपगम्य तेषां स्वभावः प्रकृतिरित्याहुस्तन्मतमप्यश्रद्धेयम्, अचेतनेभ्यः प्राणिशरीराणामुत्पत्त्यनुपपत्तेः आम्नायते हि "द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्म्यम्" इति। सदृशक्तिवत्क्वचिदभ्युपगमेऽपि योऽहं बाल्ये पितरावन्वभवं स एवेतर्हि प्रणप्तॄननुभवामीति बाल्येऽनुभूतस्यार्थस्य स्थाविरे स्मरणं नोपपद्यते, अवयवोपचयापचयतः शरीराणामुत्पादविनाशित्वाभ्युपगमात्, तथाच कुसुमाञ्जलिः "नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्" इति, एकं भूतमिदं शरीरं, अपक्रमात् तत्तच्छरीरपरिमाणनाशेन परिमेयस्य शरीरस्यापि नाशादित्यर्थः। एतेनैव परिणामवादिनां मतमप्यपास्तम्, परिणामो हि पञ्चानां पृथिव्यादीनां परिणतिरुच्यते। ईश्वरः सर्व्वभूतोत्पत्तौ

तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा ।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते ॥ १३ ॥
यतोऽभिहितं तत्सम्बद्धव्यसमूहो भूतादिरुक्तः । भौतिकानि चेन्द्रियाण्यायुर्व्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः ॥ १४ ॥

भवति चात्र ।

इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः ।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥ १५ ॥

---

निमित्तकारणम् नतु मूलं तत्तत्पौर्व्वदेहिककर्म्मसापेक्षत्वात्, अन्यथा वैषम्यनैर्घृण्ये प्रसज्येयाताम्, तथाच भगवान् वादरायणः "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति" इति । कालश्चेदीश्वरादनन्यस्तर्हि नैवोपादानम्, क्रियात्मकत्वे तु क्रियाया उत्पत्तिमत्त्वान्मूलकारणत्वोक्तिरविचारिताऽभिधानमात्रम् । यदृच्छावादे कार्य्यस्याकस्मिकत्वपर्य्यवसानात् नियतत्वमसङ्गतं स्यात्, नोपपद्यन्ते च "एष ह्येव साधु कर्म्म कारयति तं यमूर्द्ध्वं निनीषति" इत्याद्याः कर्म्मविशेषतः फलविशेषाऽभिधायिन्यः श्रुतयः । नियतिस्तु कर्म्मजन्यमदृष्टं तदपि निमित्तकारणमेव नोपादानमित्युपपन्नं भवत्येतेषां पृथुदर्शित्वम् ॥ १२—१४ ॥

स्यादेतत् किन्तु खल्वायुर्व्वेदे भूतानामुत्पत्तिं प्रति मूलकारणं मन्यन्त इत्याह तन्मयानीत्यादि । भूतानि तन्मयानि प्रागुक्तप्रकृतिमयान्यादिशेत् कार्य्यकारणयोरभेदादिति भावः । तस्याः प्रकृतेर्गुणा इव गुणा येषां तानि तद्गुणानि, कारणानुरूपकार्य्यमिति स्थितेरित्ययमभिसन्धिः । तैर्भूतैस्तल्लक्षणः तेषां भूतानां लक्षणमिव लक्षणं यस्य स तथोक्तः, भूतग्रामः प्राणिशरीराणि । तस्य भूतग्रामस्य चिकित्सां प्रत्युपयोगः । अत्र हेतुर्भूतेभ्य इति भूतेभ्यः परं क्षेत्रज्ञे इत्यर्थः । चिकित्सिते चिन्ता नास्तीति सुखदुःखविनाकृतत्वादित्ययमाशयः । उक्तमर्थं दृढ़यन् प्रागुक्तं स्मारयति यत इत्यादिना

न चायुर्व्वेदशास्त्रेषूपदिश्यन्ते सर्व्वगताः चेत्रज्ञा नित्याश्च ।

---

नन्विदमनुपपन्नम् भवतावलम्बिते प्रागुक्ते कापिलीये इन्द्रियाणामभौतिकत्वेनोपदेशादित्यत आह भौतिकानीति। इन्द्रियार्थाः शब्दादयः। उक्तमर्थं प्राचीनसंवादेन स्फुटीकृत्यावगमयन्नाह भवतीति। नियतमव्यभिचारेण गृह्णाति पुरुष इति शेषः। अन्येनातुल्ययोनिना इन्द्रियेण अन्यमतुल्ययोनिमर्थं न गृह्णातीति पूर्व्वेणान्वयः। अयमाशयः। श्रोत्रेन्द्रियमाकाशीयमित्याकाशगुणं शब्दं तेन गृह्णाति पुरुषस्तुल्ययोनित्वात्। आकाशं हि यथा श्रोत्रेन्द्रियस्य योनिस्तथा शब्दस्य। श्रोत्रेन्द्रियेण गन्धन्तु न गृह्णात्यतुल्ययोनित्वात्। श्रोत्रेन्द्रियस्य हि योनिराकाशं गन्धस्य योनिस्तु पृथिवीति॥ अतएव वैशेषिकैरप्युक्तम् "घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाऽभिव्यञ्जकघृतादिवत्" इत्येवमन्यत्राऽपि द्रष्टव्यम्॥ एतेनेन्द्रियाणि स्वस्वप्रकृतिभूतानामसाधारणगुणानां ग्राहकत्वात् भौतिकानीत्युपलम्भात् "भौतिकानि चेन्द्रियाणि" इति प्रागुक्तं समन्वितं भवतीति भावः। न तावदायुर्व्वेदाचार्य्याः केवलमिन्द्रियाणां भौतिकत्वाभ्युपगमादेव पूर्व्वस्मात् भिद्यन्ते किन्तर्हि पुरुषस्यासर्व्वगतत्वेनापीत्याह न चेति। असर्व्वगतेष्वणुपरिमाणेष्वित्यर्थः। क्षेत्रज्ञः पुरुष इति पर्य्यायौ। न ह्यञ्जसा मतमिदमप्रसिद्धं विशिष्टाद्वैतवादिनो हि वैदान्तिकाः क्षेत्रज्ञानणुपरिमाणान् वदन्ति नित्यांश्चाचक्षते। अणुत्वनित्यत्वख्यापकाश्च हेतवः पूर्व्वदेहपरित्यागापरदेहपरिग्रहपरलोकगमनासम्भवादयः कृतनाशाकृताभ्यागमादयश्च ये तत्र विस्तरेणोपदिष्टास्त एवेह हेतुत्वेन लक्षणीयाः। वस्तुतस्तु विशुद्धान्तःकरणत्वाद्योगिभिरेव क्षेत्रज्ञो विभुरित्युपदिश्यते न त्वितरैरिति निश्चीयते, आमनन्ति हि "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः सचानन्त्याय कल्पते। प्राणैश्चित्तं सर्व्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्यन्तरात्मा" इति। अत्राह ब्रह्मविद्याभरणकारः "विशुद्धेऽन्तःकरणे आत्मनो विभुत्वं दर्शयति विपूर्व्वस्य भवतेर्व्याप्त्यर्थत्वात्"

असर्व्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषव्यापकान् हेतूनुदाहरन्ति ॥ १६ ॥

आयुर्व्वेदशास्त्रेष्वसर्व्वगताः क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्म्माधर्म्मनिमित्तम् । त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति । स एव कर्म्मपुरुषश्चिकित्साधिकृतः ॥ १७ ॥

---

इति । अतएव "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति । श्रुतिरपि बुद्धिगुणसम्बन्धेनैवाराग्रमात्रतां शास्ति न तु स्वेनैवात्मना । न तावदणुत्वेनैकदेशस्थितस्य सर्व्वशरीरोपलब्धिर्विरुध्यत इति वाच्यम् । तथाविधस्य चन्दनविन्दोः सर्व्वशरीराह्लादनकत्वदर्शनात्, तथाच शारीरकसूत्रम् "अविरोधश्चन्दनवत्" इति दिङ्मात्रमिदमुक्तम्, विस्तरशस्तु शारीरकभाष्ये द्रष्टव्यम् । तथाचामुमुक्षुवेद्ये आयुर्व्वेदे क्षेत्रज्ञस्याणुत्वेनोपदेशो नानुपपन्नः ॥ १५—१६ ॥

उपसंहरति आयुर्व्वेदेति । "तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति" इत्यनेनाणुत्वे हेतुरपि सूचितः, सर्व्वगतस्य सञ्चारासम्भवात् । "धर्म्माधर्म्मनिमित्तम्" इत्यनेन च धर्म्माधर्म्मफलभोक्ता क्षेत्रज्ञः सुतरां नित्य इति सूचितम् । त एते क्षेत्रज्ञा यतः परमसूक्ष्मा अतोऽनुमानग्राह्याः परमसूक्ष्मत्वादेव न प्रत्यक्षा इति निष्कर्षः । लोहितरेतसोः सन्निपातेष्वित्यधिकरणे घञ्, शुक्रशोणितारब्धेषु शरीरेष्वित्यर्थः । विशेषणमिदं मनुष्यानेवाऽधिकरोतिः प्रकृतत्वादित्यवश्यं वक्तव्यम् देवादीनां तैजसादित्वेनोपदेशात् । उक्तमर्थं द्रढ़यति यत इति । कर्म्मस्वधिकृतः पुरुषः कर्म्मपुरुषः ॥ १७ ॥

तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः ॥ १८ ॥

सात्त्विकास्तु आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च। राजसास्तु दुःखबहुलताटनशीलताधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च। तामसास्तु विषादित्वं नास्तिक्यमधर्म्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्म्मेधस्त्वमकर्म्मशीलता निद्रालुत्वञ्चेति ॥ १९ ॥

---

नन्विदमुक्तं "त एतेऽनुमानग्राह्याः" इति तदिदानीं जिज्ञास्यमिदमापन्नम्, कैर्लिङ्गैरनुमीयन्ते चेतज्ञा इत्येवं विवक्षूनपाकरोति तस्येत्यादिना। तस्य चेतज्ञस्य गुणाः अनुमानसाधना धर्म्मा इत्यर्थः। प्रयत्नो नाम "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्" इत्युक्तं यत्नत्रितयम्। जीवनकारणं तत्र श्वासप्रश्वासादिकारणम्। प्राण ऊर्द्ध्वगो वायुरपानस्त्वधोगः। तिर्य्यग्गमनस्वभावस्याऽपि वायोरूर्द्ध्वाधःप्रेरणं चेतज्ञधर्म्म इत्यभिसन्धिः। बुद्धिर्ज्ञानं विज्ञानं चेतनामात्रमालोचनं वा, सङ्कल्पस्त्विदमित्थमेव कार्य्यमित्येवं मानसव्यापारविशेषो विशेष्यविशेषणभावकल्पना वा, विचारणा प्रमाणैरर्थतत्त्वपरीक्षणम्, अध्यवसायो निश्चयाख्य इदं मया कर्त्तव्यमित्येवंरूपः, विषयोपलब्धिः स एवायमित्येवं बुद्धिः, एभिरनुमीयन्ते चेतज्ञा मृतशरीरे एषामनुपलम्भादिति तात्पर्य्यम्। सात्त्विका इत्यादि। तस्य गुणा इत्यनुषङ्गः। एवमुत्तरत्रापि द्रष्टव्यम्। आनृशंस्यमनैष्ठुर्य्यम् दयेति यावत्। विभज्यान्नादेर्दाने रुचिर्य्यस्य तस्य भावः संविभागरुचिता, तितिक्षा द्वन्द्वसहिष्णुता, धृतिर्धैर्य्यम्, अनभिषङ्गोऽनासक्तिः, आनृतिकत्वमनृतवादित्वम्, बुद्धेर्निरोधो बुद्धेः प्रती-

आन्तरीचास्तु शब्दः शब्देन्द्रियं सर्व्वच्छिद्रसमूहो विविक्तता च। वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्व्वचेष्टासमूहः सर्व्वशरीरस्पन्दनं लघुता च। तैजसास्तु रूपं रूपेन्द्रियं वर्णसन्तापौ भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्च। आप्यास्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च। पार्थिवास्तु गन्धो गन्धेन्द्रियं सर्व्वमूर्त्तिसमूहो गुरुता चेति॥ २०॥

तत्र सत्त्वबहुलमाकाशम्। रजोबहुलो वायुः। सत्त्वरजोबहुलोऽग्निः। सत्त्वतमोबहुला आपः। तमोबहुला पृथिवीति॥ २१॥

श्लोकौ चात्र भवतः।

अन्योन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्द्दिशेत्।
स्वे स्वे द्रव्ये तु सर्व्वेषां व्यक्तं लक्षणमिष्यते॥ २२॥

---

वातोऽज्ञानतेति यावत्। आन्तरीचा इत्यादि। आन्तरीचा आकाशधर्म्मा इत्यर्थः। शब्देन्द्रियं श्रोत्रम्, विविक्तता निर्लिप्तता, स्पर्शेन्द्रियं त्वक्, रूपेन्द्रियं चक्षुः, वर्णो गौरादि, भ्राजिष्णुता दीप्तिः, पक्तिः परिपाकः, अमर्षः क्रोधः, रसनेन्द्रियं रसना, गन्धेन्द्रियं घ्राणम्, मूर्त्तिः काठिन्यम्॥१८—२०॥

पुनर्विशिनष्टि अन्योऽन्येति। सर्व्वाण्येतान्याकाशादीनि अन्योऽन्यानुप्रविष्टानि। सोऽयमन्योऽन्यस्मिन्नन्योऽन्यस्यानुप्रवेशः पञ्चीकरणकारितः। यद्यप्यन्योऽन्यस्मिन्नन्योऽन्यस्यानुप्रवेशोऽस्तीति सर्व्वेषां धर्म्माणां सर्व्वत्रावस्थितिरस्ति तथाऽपि स्वे स्वे द्रव्ये पञ्चीकृतपृथिव्यादौ सर्व्वेषां भूतानां लक्षणं (यथा पृथिव्यादीनां गन्धादि) व्यक्तं पञ्चीकरणात् भूतान्तरेषु सदपि गन्धा-

अष्टौ प्रकृतयः प्रोक्ता विकाराः षोड़शैव तु ।
क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥ २३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने सर्व्वभूतचिन्ता-
शारीरं नाम प्रथमोऽध्यायः ।

---

दिकं पृथिव्याद्यंशस्याल्पत्वान्न व्यक्तमिति भावः। पञ्चीकरणप्रकारस्तु प्रागेव व्याहृतोऽस्माभिः। उपसंहरति अष्टावित्यादिना। स्वतन्त्रमायुर्व्वेदशास्त्रं परतन्त्रं साङ्ख्यादिकम्। चेतज्ञाः स्वतन्त्रे अणवः परतन्त्रे तु सर्व्वगता इति समासेन संक्षेपेणोक्तमिति निष्कर्षः॥ २२—२३ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
शारीरस्थाने सर्व्वभूतचिन्ताशारीरं नाम प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः ।

अथातः शुक्रशोणितशुद्धिंनाम शारीरं व्याख्यास्यामः ॥ १ ॥

वात-पित्त-श्लेष्म-कुणप-ग्रन्थि-पूतिपूय-क्षीण-मूत्रपुरीष-रेतसः प्रजोत्पादने न समर्था भवन्ति ॥ २ ॥

तेषु वातवर्णवेदनं वातेन । पित्तवर्णवेदनं पित्तेन । श्लेष्म-वर्णवेदनं श्लेष्मणा । शोणितवर्णवेदनं कुणपगन्ध्यनल्पं रक्तेन । ग्रन्थिभूतं श्लेष्मवाताभ्याम् । पूतिपूयनिभं पित्तश्लेष्मभ्याम् ।

---

पूर्व्वाध्याये शुक्रशोणितयोः सन्निपाते चेतज्ञा अभिव्यज्यन्तइत्यविशेषान्निरदिक्षत्, इदानीन्त्व वीजत्वादविशुद्धयोस्तयोः प्रतीकारार्थं शुक्रशोणित शुद्धिं नाम शारीर मधिकरोति अथात इत्यादिना । शुक्रशोणितयोः शुद्धिं शुद्धिविधि माचष्ट इति णिचि "सर्व्वधातुभ्य इन्" इत्यौणादिका इनि च शुक्रशोणित शुद्धिः शेषं समानम् ॥ १ ॥

न तावदविदितेहि विकृतिविशेषे भिषजां सहस्रमपि सम्भूय प्रभवति क्षमप्यातुर मुत्थापयितुम्, आमनन्तिच "रोगमादौ परीक्षेत" इति । तदादौ विकृति प्रकार मुपदिशति वातेत्यादिना । वातादिदुष्टं कुणपगन्धि ग्रन्थिभूतं पूतिपूयनिभं क्षीणं मूत्रपुरीषगन्धिचरेतो येषां त इह वातेत्यादिना पदेनाभिप्रेयन्त इति निश्चीयते अनन्तरं तथैवोपदेशात् । पुनर्व्विशिनष्टि तेष्विति । तेषु वातादिदुष्टेषु रेतःसु मध्ये इत्यर्थः । अत्रोपसर्जनस्यापि तदा प्रत्यवमर्शः क्रियते बुद्ध्यासमाकृष्टत्वात् । वातस्य वर्णानरुणादीन् वेदनाश्च रौक्षादीन् करोतीति णिचि अचि च वातवर्णवेदनम् । एवमेवोत्तरत्रापि यथायोगं व्याख्येयम् । शवस्येव गन्धोऽस्येति कुणपगन्धि । पूतिपूय-

क्षीणं प्रागुक्तं पित्तमारुताभ्याम् । मूत्रपुरीषगन्धि सान्निपातेनेति । तेषु कुणप-ग्रन्थि-पूतिपूय-क्षीणरेतसः कृच्छ्रसाध्याः । मूत्रपुरीषरेतसस्त्वसाध्याः । साध्यमन्यच्चेति ॥ ३ ॥

आर्त्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमवीजं भवति । तदपि दोषवर्णवेदनादिभिर्विज्ञेयम् । तेषु कुणप-ग्रन्थि-पूतिपूय-क्षीण-मूत्रपुरीषप्रकाशमसाध्यं साध्यमन्यद्भवति ॥ ४ ॥

भवन्ति चात्र ।

तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत् ।
क्रियाविशेषैर्मतिमांस्तथाचोत्तरवस्तिभिः ॥ ५ ॥
पाययेत नरं सर्पिर्भिषक् कुणपरेतसि ।
धातकीपुष्प-खदिर-दाड़िमार्ज्जुनसाधितम् ॥

---

निभं दुर्गन्धिपूयोपमम् । प्रागिति दोषादिविज्ञानीय इत्येव । अत्र विशेषयति भगवानात्रेयः— "फेनिलं तनुरूक्षञ्च कृच्छ्रेणाल्पञ्च मारुतात् । भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते । सनीलमथवा पीतमत्युष्णं पूतिगन्धिवा । दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् । श्लेष्मणा वद्धमार्गन्तु भवत्यत्यर्थपिच्छिलम् । इति दोषाः समाख्याताः शुक्रस्यतुविशेषतः" इति । तेषु रेतोदुष्टेषु मध्ये इत्यर्थः । अन्यद्रेतोदुष्टजातम् । आर्त्तवमित्यादि । शुक्रदोषोक्तानि लिङ्गानि दुष्ट आर्त्तवे ऽतिदिशन्नाह तदपीति । अत्रदोषवर्णवेदनादिभि रित्यादिना प्रागुक्तानां शोणितवर्णवेदनादीना मादेशः ॥ २—४ ॥

तेष्वित्यादि आद्यान् वातपित्तकफजातान् । क्रियाविशेषै र्यथास्वौषधसिद्धैः सर्पिः प्रभृतिभि स्तन्त्रान्तरीयामृतसारलौहामृतप्राशगोधूमाद्यघृतादिभि

पाययेदथवा सर्पिः शालसारादिसाधितम् ॥ ६ ॥
ग्रन्थिभूते शठीसिद्धं पालाशे वापि भस्मनि ॥ ७ ॥
परुषक-वटादिभ्यां पूयप्रख्ये च साधितम् ॥ ८ ॥
प्रागुक्तं वक्ष्यते यच्च तत् कार्य्यं क्षीणरेतसि ॥ ९ ॥
विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः ॥ १० ॥
स्निग्धं वान्तं विरिक्तञ्च निरूढ़मनुवासितम् ।
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना ॥ ११ ॥
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ॥ १२ ॥

---

चरकाद्युक्तवाजीकरणादिरसायनादिभिश्चेत्यर्थः । आमनन्तिहि "कुर्य्या द्वातादिभिर्दुष्टे स्वौषधम्" तथा वातान्वित इत्युपक्रम्य "नाथरसामलकीयच्च पैत्ते शस्तं विरेचनं । मगधामृतलौहानां त्रिफलाया रसायनं । कफोद्भवं शुक्रदोषं हन्याद्भल्लातकस्य च" इति । पाययेतेत्यादि । अतधातक्यादीनि त्रीण्यपि घृतानि क्वाथकल्काभ्यामेव साधयन्ति भिषजोऽनन्तरोक्तपालाशघृतसाहचर्य्यात् । आम्नायते हि "यत्राधिकारेणोक्तिः + + + तत्रैव कल्कनिर्य्यूहा विष्येते" इति । अत्राविशेषात् क्वाथ्यादष्टगुणं जलं पादशेषः क्वाथः सर्पिषश्चतुर्गुणः कल्कस्तु पादिकः । परुषकादिघृतन्तु कल्कमात्रसाध्यमित्याहुः करणनिर्द्देशात् । प्रागिति दोषादिविज्ञानीये, वक्ष्यते चेति क्षीणवलीयादौ । अर्थमिमं प्रपञ्चेनावगमयति भगवानात्रेयः "वाजीकरणयोगैस्तै रुपयुक्तैः शुभैर्हितम् । रक्तपित्तहरैर्योगैर्योनिव्यापादिकैस्तथा । दुष्टं तावत् यदा शुक्रं तदा तत् समुपाचरेत् । घृतं यज्जोवनीयोक्तं च्यवनप्राश एवच गिरिजस्य प्रयोगश्च रेतोदोषान् व्यपोहति" इति । गिरिजं शिलाजत्विति पर्य्यायौ ; विड्विव प्रभाति गन्धेनेति विट्प्रभम् । अत्रापि पूर्व्वस्मात् घृतमित्यनुषज्यते । यापनार्थोऽयमारम्भ इति गम्यते व्याधेरस्यासाध्यत्वात् । एवमेवोत्तरत्रापि सप्तमीवारे-

स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु ।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥१३॥
ग्रन्थिभूते पिवेत् पाठां त्र्यूषणं वृचकाणि च ॥ १४ ॥
दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ।
पिवेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च ॥ १५ ॥
शुक्रदोषहराणाञ्च यथास्वमवचारणम् ।
दोषाणां शुद्धिकरणं शेषास्वप्यार्त्तवार्त्तिषु ।
अन्नं शालियवं मद्यं हितं मांसञ्च पित्तलम् ॥ १६ ॥
स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ।
शुक्रमिच्छन्ति केचित् तु तैलक्षौद्रनिभं तथा ॥ १७ ॥
शशासृक्प्रतिमं यत् तु यद्वा लाक्षारसोपमम् ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥ १८ ॥
तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि ।
असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात् ॥ १९ ॥

---

ष्वसाध्येषु द्रष्टव्यम् । सम्यग् यथायोगमौषधसिद्धनैत्येतत् । स्त्रीणामित्यादि चतसृष्वित्याद्यासु वातपित्तकफरक्तजास्वित्यर्थः । कल्कादयो योनिचिकित्सितं द्रव्यसङ्ग्रहणीयादिकञ्चाभिसमीक्ष्य लक्षणीयाः । आचमनमत्रोत्तरवस्तिवदुपयोज्याः प्रक्षालनार्थास्त्रिफलादिक्वाथाः । भद्रश्रीर्हरिचन्दनं व्यवहारस्तु देवदारुणाऽपि दृश्यते चन्दनमत्र श्वेतमेवेत्युपदेशः । शेषास्वितरासु अपि-नैतासुचेत्यर्थः । शशेत्यादि । विरञ्जयेत् विशेषेणरञ्जितं कुर्य्यात् ॥ ५—१८ ॥

प्रसङ्गादसृग्दरमभिधत्ते तदेवेत्यादिना । रक्तस्य लक्षणमिव लक्षण-

असृग्दरो भवेत् सर्व्वः साङ्गमर्द्दः सवेदनः।
तस्यातिवृत्तौ दौर्व्वल्यं भ्रमो मूर्च्छा तमस्तृषा।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः॥ २०॥
तरुण्या हितसेविन्यास्तमल्पोपद्रवं भिषक्।
रक्तपित्तविधानेन यथावत् समुपाचरेत्॥ २१॥
दोषैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः।
तत्र मत्स्य-कुलत्थाम्ल-तिल-माष-सुरा हिताः।
पाने मूत्रमुदश्विच्च दधि शुक्तञ्च भोजने॥ २२॥
क्षीणं प्रागीरितं रक्तं सलक्षणचिकित्सितम्।

---

मस्येतिरक्तलक्षणम्, अतः शशेत्यादिनोक्ताद्रक्तलक्षणादार्त्तवादन्यदप्रशस्तं तदार्त्तवमेव नत्वसृग् आदिरक्तमित्येवकारेणाविष्क्रियते, अतिप्रसङ्गेनातिमात्रया दीर्घकालानुवर्त्तित्वेन चानृतावृतावपि प्रवृत्तमसृग्दरं विजानीयादित्यर्थः। न तावदनृतावार्त्तवप्रवृत्तिरनुपपन्ना, प्रवर्त्तकस्य वायो र्विकृतत्वेनानियतक्रियकत्वात्। सवेदनः कट्युरुवङ्क्षणादिवेदनानुविद्धः, तमोऽन्धकारदर्शनम्, वातजारोगाः कम्पादयः। तरुण्या इत्यादि। अत्राल्पोपद्रवेति विशेषणेनार्थाक्षिप्तं भवति बहूपद्रवोऽसाध्य इति। उपद्रवास्त्वत्र प्रागुक्ता दौर्व्वल्यादयः श्वश्वत् स्रावादयश्च। "'श्वश्वत् स्रवन्तीमास्रावं" इत्युपक्रम्य "तामसाध्यां विनिर्द्दिशेत्" इत्युक्तेः। अत्र रक्तपित्तग्रहणेन रक्तार्शोरक्तातिसारावप्युपलक्ष्येते फलसाम्यादित्याहुः। आर्त्तवानुप्रायित्वान्नष्टार्त्तवमप्याचष्टे, दोषैरित्यादिना। मूत्रमिति स्त्रीणां गवामेव, स्मरन्ति हि "स्त्रीणांतीक्ष्णम्" इत्यादि। उदश्विदर्द्धोदकं तक्रं, शुक्तं प्रागुक्तम्। प्रसङ्गान्नष्टार्त्तवविधिं क्षीणा-

तथाप्यत्र विधातव्यं विधानं नष्टरक्तवत् ॥ २३ ॥

एवमदुष्टशुक्रः शुद्धार्त्तवा च। ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपात-स्नानानुलेपनाभ्यङ्ग-नखच्छेदन-प्रधावन-हसन-कथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किं कारणम्? दिवा स्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद् दुःखशीलः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्त्तनात् कुनखी, प्रधावनात् चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्, अतिशब्दश्रवणाद्बधिरः, अवलेखनात् खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् ॥ २४ ॥

दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्यहञ्च भर्त्तुः संरक्षेत्। ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत् ॥ २५ ॥

तत् कस्य हेतोः?

---

र्त्तवे ऽतिदिशन्नाह क्षीणमिति। प्रागिति दोषादिविज्ञानीये, रक्तमित्यार्त्तवमेव प्रकृतत्वात्, अतःक्षीणार्त्तव इत्यर्थः ॥ १९—२३ ॥

एव मित्यादि। ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः। ब्रह्मचारिणी अष्टाङ्गमैथुनराहित्यादिव्रतचारिणी, कथनमित्यर्थमेव वक्ष्यतिहि— "प्रलापी चातिकथनात्"। अवलेखनं केशप्रसाधनं खलतिरिन्द्रलुप्ती ॥ २४ । २५ ॥

पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्त्रं भर्त्तारं दर्शयेदतः ॥ २६ ॥
ततो विधानं पुत्त्रीयमुपाध्यायः समाचरेत् ।
कर्म्मान्ते च क्रमं ह्येनेमारभेत विचक्षणः ॥ २७ ॥

ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिराश्वास्य विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्याञ्चोपेयादिति पुत्त्रकामः ॥ २८ ॥

एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च ।
प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै ॥ २९ ॥

अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः । त्रयोदशीप्रभृतयो निन्द्याः ॥ ३० ॥

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते । द्वि-

---

विधानमत्र समृद्धिकरो यज्ञविशेषः, उपाध्यायस्तु वैदिककर्म्माभिज्ञो याज्ञिकः । कर्म्मान्ते कर्म्मावसाने, एनं वक्ष्यमाणम्, एतदर्थोऽयमेनशब्दः "एनं युवानं पतिम्" इति वृषोत्सर्गमन्त्रवत् । तत इत्यादि तत इति सप्तम्याः सार्व्वविभक्तिकस्तसिल्, तत्र कर्म्मदिन इत्यर्थः । रात्राविति पुत्रसमृद्ध्यर्थमुच्यते वक्ष्यति हि "एवंजाता रूपवन्तः" इत्यादि । साम प्रियवाक्यम् आश्वास्य सान्त्वयित्वा ॥ २६—३० ॥

तीयेऽप्येवं सूतिकागृहे वा। तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति। चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति। न च प्रवर्त्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति, यथा नद्यां प्रतिस्रोतःप्लावि द्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम्। तस्मान्नियमवतीं त्रिरात्रं परिहरेत्। अतःपरं मासादुपेयात्॥ ३१॥

लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै। न च तान् निष्ठीवेत्॥ ३२॥

ध्रुवं चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्व्वकः।
ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा॥
एवं जाता रूपवन्तो महासत्त्वाश्चिरायुषः।
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणो हिताः॥ ३३॥

तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः। स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाशधातुप्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम्। यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते॥ ३४॥

---

ध्रुवमित्यादि। दृष्टान्ते ऋत्वादयोऽतिरोहितार्थाः दार्ष्टान्तिके तु ऋतुर्व्याहृतः स्त्रीणामवस्थाविशेषः, क्षेत्रं गर्भाशयः अम्बु आहाररसः बीजन्तु

तत्र दृष्टिभागमप्रतिपन्नं तेजोजात्यन्धं करोति, तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गाक्षं, श्लेष्मानुगतं शुक्लाक्षं, वातानुगतं विकृताक्षमिति॥ ३५॥

भवन्ति चात्र।

घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते।
विसर्पत्यार्त्तवं नार्य्यास्तथा पुंसां समागमे॥ ३६॥
बीजेऽन्तर्व्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ।
यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ॥ ३७॥
पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत्।
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्॥ ३८॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः।
स योनिशेफसोर्गन्धमाघ्राय लभते बलम्॥ ३९॥
स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते।
कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम्॥ ४०॥

---

शुक्रशोणितम्। एवमुक्तेन विधिनेत्यर्थः। ऋणस्येति "पितुर्ऋणं|पिण्डदानात्" इत्यादिस्मरणात् पिण्डदानादिना पित्रादेर्ऋणसमूहस्य मोक्तारः शोधयितारः अतएव सत्पुत्रा इति योजना॥ ३३—३५॥

घृतेत्यादि—धर्म्मेतरपुरःसराविति इदमत्रावधेयम् कष्टं हि मूत्रपुरीषश्लेष्मादिसंसृष्टस्योल्वाशुचिपटावृतस्य मातुरुपश्लेषोपस्वेदाभ्यां विवर्द्धमानस्य निरुद्धशक्तिप्रज्ञस्यैकस्यापि गर्भस्य क्षणमप्यवस्थातुमयोग्ये मूत्रादिसंपृक्ते सङ्कीर्णे मातुः कुक्षावन्तः शयनं नव वा दश वा मासान् यावद्वाऽप्यजायते, तत्रच पर-

दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते ।
ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम् ॥ ४१ ॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते ।
ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः ॥ ४२ ॥
ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि ।
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥ ४३ ॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा ।
सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः ॥ ४४ ॥
अनया विप्रकृत्या तु तेषां शुक्रवहाः शिराः ॥
हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥ ४५ ॥
आहाराचारचेष्टाभिर्याद्दशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्त्रोऽपि तादृशः ॥ ४६ ॥

---

स्वरं पीड्यमानयो र्द्वयोरविसज्जेन दुःखेनावस्थानं किमिव कर्म्मणः फलमिति विचिन्तयानेन केवलमधर्म्ममन्तरेण किमपि कारणं नोपलभ्यते तदिदमुच्यते धर्म्मेतरपुरःसराविति । धर्म्मेतरोऽधर्म्मः । स्वइत्यादि । यः स्वे स्त्रीये गुदे ब्रह्मचर्य्यात् मैथुनात् पुंवत् पुमानिवोच्छ्रितध्वजः सन् स्त्रीषु प्रवर्त्तते स कुम्भीको विज्ञेयः । य इत्यादि अङ्गनेव उत्तानीभूय विपरीतबन्धेनेतियावत् मोहादज्ञानतः स्वरसादिति निष्कर्षः । एतेनोभयोरेवैवमभिलाषे नैषदोष-इति सूचितं भवति । पुंसामिव स्त्रीणामपि स्वारसिकविपरीतप्रवृत्तिफलमभि-धत्ते ऋताविल्यादिना । इहापि मोहादित्यनुषज्यत इत्यस्याः स्वारसिकत्व-मुपपन्नं भवति । पुरुषवन्न्युब्जीभूयेत्यर्थः । विप्रकृत्या शुक्रप्राशनादिरूपेण

यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते॥ ४७॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत्।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणैः॥ ४८॥
सर्प-वृश्चिक-कुष्माण्ड-विकृताकृतयश्च ये।
गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम्॥ ४९॥
गर्भो वातप्रकोपेण दौहृदे चावमानिते।
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिन एव च॥ ५०॥
मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः।
वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात्॥ ५१॥
मलाल्पत्वादयोगाच्च वायोः पक्काशयस्य च।
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि॥
जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते।
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति॥
निश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति।
मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसम्भवान्॥ ५२॥

---

विपरीतस्वभावेनेत्यर्थः। प्रकृतिः स्वभाव इति पर्य्यायौ॥ ३६—४६॥

सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ ।
तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः ॥ ५३ ॥
भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः ।
भवन्ति सत्त्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः ॥ ५४ ॥
कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे ।
अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान् ॥ ५५ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शुक्रशोणितशुद्धि-
शारीरं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

यदेत्यादि । द्रवन्त्यौ कामुकौ शुक्रमिव शुक्रमार्त्तवमित्येतत्, न त्वेव शुक्रं स्त्रीणां तद्वहस्रोतसोऽभावात् । श्लोकत्रितयमेतत् युक्तिपथमतिक्रामतीति नार्षत्वेनाङ्गीकुर्व्वन्ति केचित् । स्वहृदयेन गर्भहृदयेनच द्वे हृदये यस्याः सा द्विहृदयेत्याचक्षते, तस्या इदं दौहृदं गर्भिण्यभिलाषः । कुणिः कुत्सितकरः । सन्निवेशो यथावदवस्थितिः । भाविता इत्यादि । पूर्व्वदेहेष्विति बहुवचनात् पूर्व्वपूर्व्वदेहेषु भाविताः "भूमुद्धौ चिन्तने मिश्रनेच" इति धात्वर्थस्मरणात् ज्ञानविज्ञानादिना परिशुद्धा इत्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥४७—५५ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
शारीरस्थाने शुक्रशोणितशुद्धिर्नामशारीरं द्वितीयोऽध्यायः ।

# तृतीयोऽध्यायः ।

अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः ॥ १ ॥

सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च ॥ २ ॥

तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति। ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृ-

---

पूर्व्वाध्याये चतुर्णामृत्वादीनां सान्निध्याद्गर्भो भवतीत्युपदिष्टमपरिस्फुटमर्थं स्फुटीकृत्यावगमयन् गर्भावक्रान्तिशारीरं नामाधिकरोति अथात इत्यादिना। गर्भस्तु खलु गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं शुक्रशोणितमित्यतःपरं निवेदयिष्यते तस्यागतिर्गर्भावक्रान्तिः तदभिधायकः शारीरो गर्भावक्रान्तिशारीरः। शेषं समानम् ॥ १ ॥

पूर्व्वं हि "पञ्चमहाभूतशरीरिसमवायः पुरुषः" इति निरदिक्षत् तस्माच्च गर्भो नातिरिच्यत इत्यवोचाम, तत्र पञ्चमहाभूतशब्देन भक्त्या शुक्रशोणितारब्धस्य शरीरस्य शरीरिशब्देन च चेतनस्य परिग्रहात्, तदिदानीं प्रतिपिपादयिषितं गर्भशरीरारम्भकयोः शुक्रशोणितयोः पाञ्चभौतिकत्वं प्रतिपादयति सौम्यमित्यादिना। ननु कुत एतदुच्यते "इतरेषामप्यत्र भूतानां सान्निध्यमस्ति" इत्यतो हेतुमुदीरयति परस्परेति। हेतुत्रितयमेतद्रसविशेषविज्ञानीयवद्व्याख्येयम् ॥ २ ॥

स्यादेतदिदानीन्त्वस्माकमनुजिघृक्षया प्रकृतामेवार्थविचारणां प्रवर्त्तयतु भगवानित्येवमनुनीतो गुरुराह तत्रेति। तत्र ऋतुकाले स्त्रीपुंसयोः संयोगे वायुः शरीरं सर्व्वावयवं विक्षुभ्येति शरीरात् तेजः शरीरगतमाग्नेयमंशमुदीरयत्युद्रिक्तं करोति। ततस्तदनन्तरं तेजोऽनिलसन्निपातात् तेजोऽनिलाभ्यां

ज्यते चार्त्तवेन। ततोऽग्निषोमीयसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसा-वित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगा-दक्षयोऽव्ययोऽचिन्त्योभूतात्मना सहान्वक्षं सत्त्वरजस्तमोभि-र्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रवि-श्यावतिष्ठते ॥ ३ ॥

---

मिलितत्वाच्चुरतं द्रवीभावमापन्नं सत् स्खलितं शुक्रं योनिमुख मभिलक्ष्यीकृत्य प्रतिपद्यते गच्छति,आर्त्तवेन पूर्व्वमाादेव हेतो र्वक्ष्यमाणादार्त्तववहात् स्रोतसो विच्युतेन स्त्रीबीजेन संसृज्यते मिश्रीभावमापद्यते चेत्यर्थः। ततोमिश्रीभावा-दनन्तरमग्नीषोमीयसंयोगात् तत्तद्वीजगताग्नीषोमगुणसम्बन्धात् संसृज्यमानः पाकविशेषात् गर्भाकारेण परिणम्यमानो गर्भो गर्भारम्भकं मिश्रीभावमा-पन्नं शुक्रशोणितमित्यर्थः ; गर्भशब्दस्यात्रादिसंमूर्च्छितशुक्रशोणितविषयत्वेन विवक्षिततया यथाश्रुतस्यार्थस्यासामञ्जस्यात्। गर्भाशयमन्वित्यनुर्भागेऽर्थेकर्म्म-प्रवचनीयः, गर्भाशयस्यांशविशेषं योन्यास्तृतीयमावर्त्त मित्येतत्, वक्ष्यतिहि "तस्यास्तृतीयेत्वावर्त्ते गर्भशय्या प्रतिष्ठिता" इति। प्रतिपद्यते प्राप्नोति। नह्या-त्मसम्बन्धमन्तरेण केवलं गर्भाशयस्थं शुक्रशोणितं गर्भ इति वक्तुमुचितं "शुक्र शोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते" इत्यनागता वेक्षणात्तदिदमुच्यते क्षेत्रज्ञ इत्यादि। क्षेत्रं देहमात्मत्वेन जानातीति क्षेत्रज्ञः रसयिता आस्वादयिता। इत्येवमादिभिः क्षेत्रज्ञादिभिः पर्य्याय वाचकैर्नाम भिर्योऽभिधीयते सोऽसौ अक्षयोनित्यः अव्ययो निर्व्विकारः अचिन्त्यः "मनसातु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः" इति स्मरणात् रजस्तमःपरीतेन मनसाप्यगम्यः दैवसंयोगात् प्राक्तनकर्म्मसम्बन्धात्। भूतात्मना देहवीजेन सूक्ष्मभूतसमु-

तत्र शुक्रबाहुल्यात् पुमान् आर्त्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकमिति। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः ॥ ४ ॥

अदृष्टार्त्तवाप्यस्तीत्येके भाषन्ते ॥ ५ ॥

भवन्ति चात्र।

पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्।
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥
स्फुरद्भुजकुचश्रोणि-नाभ्यूरुजघनस्फिचम्।

---

दायेन सह, परिष्वक्तत्वेन सहभावमापन्न इत्यर्थः। यदाह भगवान् बादरायणः "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति। देहाद्देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति गच्छतीति तदर्थः। अन्वचमित्यनुः सहार्थे कर्म्मप्रवचनीयः, अक्षैरिन्द्रियैः सहेत्यर्थः। अन्वक्षैरिति पाठे तु भूतात्मना लिङ्गशरीरेणेत्येव, अन्वक्षैरनुगतैः "अन्वगन्वक्षमनुगे" इत्यमरः। प्राग्भवीयैरिति निष्कर्षः, आमनन्ति हि 'अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान्" इति। सत्त्वादिभिर्गुणै र्दैवासुरैरपरैः पाशवादिभिश्च भावै रुपलक्षितः सन् वायुनाऽभिप्रेर्य्यमाणइति, वायुना शुक्रप्रच्यावकेनेति गम्यते, चेतनस्य रेतोऽधिष्ठितत्वेन योषितो गर्भाशयेऽन्तःप्रवेशात्। एतच्च "तस्मिन यावत् सम्पातमुषित्वा" इत्यादिच्छान्दोग्यसूत्रभाष्यतात्पर्य्यमनुसन्धायाध्यवसितव्यम्। गर्भाशयं अनुलक्ष्यीकृत्य प्रविश्यावतिष्ठते ॥ ३ ॥

तत्रेत्यादि। तत्र स्त्रीपुंसयोः संयोगे इत्यर्थः। ऋतुस्त्विति तुकारः समुच्चयार्थः, तदयमर्थः, दृष्टार्त्तव ऋतु द्वादशरात्रं दृष्टादृष्टमिश्रस्तु षोड़शरात्रमित्येवं स्मर्य्यते हि "षोड़शर्त्तुनिशाः स्त्रीणाम्" इति।

हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति ॥ ६ ॥
नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा।
ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥
मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत्॥ ७ ॥
तद्वर्षात् द्वादशात् काले वर्त्तमानमसृक् पुनः।
जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ॥ ८ ॥
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला।
पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत् ॥ ९ ॥

तत्र सद्योगृहीतगर्भाया लिङ्गानि—श्रमो ग्लानिः पिपासा सक्थिसदनं-शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः ॥ १० ॥

स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः॥
अकामतश्छर्द्दयति गन्धादुद्विजते शुभात्।

---

युग्मेष्वित्यादि। अन्यथा अयुग्मेष्वित्यर्थः। तस्मादिति ल्यब्लोपे पञ्चमी तं तं युग्मायुग्मकालप्रभावमभिसमीक्ष्येत्यर्थः। शुचिर्विधिवद्ब्रह्मचर्य्यादिपरः, यथोक्तः पूर्व्वाध्याये। वचनमिदं सामान्येनोक्तमपि "शुक्रबाहुल्यात् पुमान्" इत्यादि-स्मरणात् युग्मायां रात्रौ शोणिताधिक्ये स्त्र्येव भवति पुरुषाकृतिः अयुग्मा-याञ्च शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिरित्येव प्रत्येतव्यम् कालस्य निमित्तत्वात् शुक्रशोणितयोश्चोपादानकारणत्वेन प्रावल्यात्। परिशिष्टं निगदव्याख्यातम् ॥ ४—९ ॥

प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते ॥ ११ ॥

तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कटकासनञ्चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणञ्चाकाले वेगविधारणञ्च न सेवेत ॥ १२ ॥

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते ।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥ १३ ॥

तत्र प्रथमे मासि कललं जायते। द्वितीये शीतोष्णानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते; यदि पिण्डः पुमान्, स्त्री चेत् पेशी, नपुंसकं चेदर्व्वुदमिति। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्व्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति। चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति, गर्भहृदयप्रव्यक्तभावाच्चेतनाधातुरभिव्यक्तो भवति। कस्मात्? तत् स्थानत्वात्। तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदयाञ्च नारीं दौहृदिनीमाचक्षते। दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं

---

तदेत्यादि अववन्धोऽत्रानुन्निरणम् स्फुरणमीषत् कम्पनम्। तदेत्यादि। स्नेहादिक्रियामित्यादिग्रहणात् स्वेदादीनामवरोधः। अकालेऽविषोपसर्गादावनात्ययिके काले शोणितमोक्षणञ्चेति सम्बन्धः, तासां तत्रतत्रात्ययिक एवंवि काले शोणितमोक्षणं कार्य्यमित्युपदेक्ष्यते। तत्रेत्यादि। कललं गर्भाकृति-

विकृताङ्गसंतवं वा नारी सुतं जनयति। तस्मात् सा यद्यदिच्छेत् तत् तस्यै दापयेत्। लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति ॥ १४ ॥

भवन्ति चात्र।

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी।
गर्भाबाधभयात् तांस्तान् भिषगाहृत्य दापयेत् ॥
सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम्।
अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥
येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना।
प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥
राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः।
अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥
दुकूल-पट्ट-कौषेय-भूषणादिषु दौहृदात्।
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥
आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते ॥

---

भूतं शुक्रशोणितसन्निपातमात्रम्। मांसपेशीवेति पेशी दीर्घाकृतिरित्यभिसन्धिः। अर्ब्बुदमिवेत्यर्ब्बुदम् अर्द्धपिण्डाकृतिरित्येतत्। गर्भहृदयान्वयाद् गर्भिणी द्विहृदयेत्युच्यते। तत्सम्बन्धित्वात्तदभिलाषो दौहृद इत्याचक्षते ॥ ॥ १०—१४ ॥

इन्द्रियेत्यादि दुकूलं क्षौमं पट्टं चित्रकौषेयं ललितं सुन्दरम्। आश्रमो

देवताप्रतिमायान्तु प्रसूते पार्षदोपमम् ॥
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ॥
गोधामांसाशने पुत्त्रं सुषुप्सुं धावनात्मकम् ॥
गवां मांसे च बलिनं सर्व्वक्लेशसहं तथा ॥
माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतम् ॥
वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम् ॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ॥
सृमराद्विग्नमनसं नित्यभीतञ्च तैत्तिरात् ॥
अतोऽनुक्तेषु या नारी समभिध्याति दौहृदम् ।
शरीराचारशीलैः सा समानं जनयिष्यति ।
कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् ।
यथा तथा दैवयोगाद्दौहृदं जनयेद्धृदि ॥ १५ ॥

पञ्चमे मनः प्रतिबुद्धतरं भवति । षष्ठे बुद्धिः । सप्तमे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः । अष्टमेऽस्थिरंभवत्योजस्तत्र

---

मुनीनां वासस्थानम्, पार्षदा रुद्रानुचराः, "रुद्रैर्वेलाद्यैर्वृषभादिरूढैः सपार्षदैरम्बरमापुपूरे" इति पुराणञ्च । धावनं शीघ्रगतिः । मार्गं मृगमांसम्, विक्रान्तं जङ्घालं वेगवज्जङ्घायुक्तम् । सृमरो गतिशीलो मृगभेदः, विग्नं चञ्चलं कुतस्तु खल्वेवं पृथग्विधं दौहृदमुपजायत इत्याह कर्म्मणेति । यथा कर्म्मणा प्राग्भवीयेन चोदितं जन्तोर्भवितव्यमवश्यभव्यं नानाविधभेदभिन्नं प्रज्ञा-मेधा प्रकर्ष-निकर्षादिकं पुनरिह जन्मनि भवेत्, तथा दैवयोगात् प्राक्तन कर्म्म-सम्बन्धात् दौहृदं विचित्रोगर्भिण्यभिलाषो हृदि जायत इति निष्कर्षः ॥ १५ ॥

पञ्चम इत्यादि । अस्थिरमिति गर्भतो गर्भिण्यां ततश्च गर्भे गमनागमना-

जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च ततो बलिं मांसौ-दनमस्मै दापयेत् । नवमदशमैकादशद्वादशानामन्यतमस्मिन् जायते । अतोऽन्यथा विकारी भवति ॥ १६ ॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, साऽस्य मातुराहाररस-वीर्य्यमभिवहति । तेनोपस्नेहेनास्याभि-वृद्धिर्भवति । असञ्जाताङ्गप्रत्यङ्गप्रविभागन्तुगर्भं निषेकात् प्र-भृति सर्व्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति ॥ १७ ॥

गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वाद्देहेन्द्रियाणाम् । हृदयमिति कृतवीर्य्यो बुद्धेर्मन-सश्च स्थानत्वात् । नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः । पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भ-वस्य । तत्तु न सम्यक् । सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्ती-त्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवत् चूत-फलवच्च । तद्यथा—चूतफले परिपक्वे केशरमांसास्थिमज्जान

दित्यादियानुशासनाल्लब्धम् । निरोजस्त्वात् माता गृहीतौजोऽवस्थायां सर्व्वथ ओजः शून्यत्वादित्यर्थः । स्यादेतत् किन्तर्हि माहतोऽगृहीतौजोवस्थायां जातो जीवति? नेत्याह नैर्ऋतेति । राक्षसानामोजोऽपहारिणोऽ शोऽचेति नैर्ऋतभागः, आमनन्ति च "अष्टमे मासि जातस्य हरन्त्योजो निशाचराः" इति । अस्मै नैर्ऋता येत्यर्थः । अतोपसर्जनस्यापि प्रसवमार्गौ तुला समानत्वात् ॥ १६ ॥

पृथगदृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलक्ष्यन्ते सूक्ष्मत्वात्, तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति। एतेनैव वंशाङ्कुरोऽपि व्याख्यातः। एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥ १८ ॥

तत्र गर्भस्य पितृज-मातृज-रसजात्मज-सत्त्वज-सात्म्यजानि शरीरलक्षणानि व्याख्यास्यामः। गर्भस्य केश-श्मश्रु-लोमास्थि-नख-दन्त-शिरा-स्नायु-धमनी-रेतःप्रभृतीनि स्थिराणि पितृजानि। मांस-शोणित--मेदोमज्जहृन्नाभि-यकृत्-प्लीहान्त्र-गुदप्रभृतीनि मृदूनि मातृजानि। शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि। इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि। सत्त्वजान्युत्तरं वक्ष्यामः। वीर्य्यमारोग्यं बल-वर्णौ मेधा च सात्म्यजानि ॥ १९ ॥

तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति, दक्षिणाक्षिमहत्त्वञ्च, पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति, बाहुल्याच्च पुंनामधेयेषु द्रव्येषु दौहृदमभिध्यायति, स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुंनामान्येव, प्रसन्नमुखवर्णा च

---

मातुरित्यादि। नाभ्यां गर्भाशयोर्द्धावयवसंस्थितायां धमन्यां गर्भस्य नाभिप्रसृतासिराव्याहृतानाड़ी गर्भनाभिनाड़ी प्रतिबद्धा सिराध्यायेव्याचिख्यासित प्रकारेण सुदृढ़ं स्थापिता। उपासन्नं निस्यन्देन स्नेहवतीत्युपस्नेहो ऽत्र मातुराहाररसवीर्य्येन्। आरभ्यार्थोऽयं प्रभृतिशब्दोऽत्रगम् ॥ १७ ॥

भवति, तां ब्रूयात् पुत्त्रमियं जनयिष्यतीति; तद्विपर्य्यये कन्याम्। यस्याः पार्श्वद्वयमुन्नतं, पुरस्तान्निर्गतमुदरं, प्रागभिहितलक्षणञ्च तस्यानपुंसकमिति विद्यात्। यस्या मध्ये निम्नं द्रोणीभूतमुदरं सा युग्मं प्रसूयत इति ॥ २० ॥

भवन्ति चात्र।

देवताब्राह्मणपराः शौचाचारहिते रताः।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान् ॥ २१ ॥
अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते।
अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः ॥
ते ते गर्भस्य विज्ञेया धर्म्माधर्म्मनिमित्तजाः ॥ २२ ॥

इति शारीरस्थाने गर्भावक्रान्तिशारीरं नाम तृतीयऽध्यायः ॥

---

गर्भस्येत्यादि। अत्रेन्द्रियाणा सात्मजत्वेनाऽभिधानं पराऽभिप्रायेणेत्यध्यवसितव्यम्, इह हि तानि भौतिकानीति निरदिक्षत्। चेतनापरपर्य्यायोऽत्र सात्म शब्दः। अतिरोहितार्थ मन्यत् ॥ १८—२२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये शारीरस्थाने गर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः।

# चतुर्थोऽध्यायः ।

अथातो गर्भव्याकरणं नाम शारीरं व्याख्यास्यामः ॥ १ ॥

अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ॥ २ ॥

तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति । तासां प्रथमावभासिनी नाम, या सर्व्ववर्णानवभासयति पञ्चविधाञ्च च्छायां प्रकाशयति । सा व्रीहेरष्टादशभागप्रमाणा, सिध्मपद्मकण्टकाधिष्ठाना । द्वितीया लोहिता नाम व्रीहि षोड़शभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना । तृतीया श्वेता नाम व्रीहिद्वादशभागप्रमाणा चर्म्मदलाजगल्लीमशकाधिष्ठाना । चतुर्थी ताम्रा

---

पूर्व्वाध्याये समासेनाभिहितस्य गर्भस्य पुनर्विस्तरणो व्याख्यानार्थमिदानीं गर्भव्याकरणं नामाधिकरोति अथात इत्यादिना व्याक्रियते विस्तरशो व्याख्यायते प्रत्येतव्योऽर्थोऽनेनेति व्याकरणम् । अत्र हि व्याकर्त्तव्येष्वर्थेष्वग्न्यादय एव भावाः प्राणनस्वभावात् प्रधानानीति प्रथमं तावत् तानेवाधिकृत्याभिधत्ते अग्निरित्यादिना । अग्निरत्र पित्तं सोमः श्लेष्मा भूतात्मा जीवः । प्राणनात् प्राणाः । संज्ञेयमन्यशास्त्रासामान्येति श्रुत्यादौ वाय्विन्द्रियाणामेव प्राणत्वेनाभिधान मविरुद्धम् ॥ १—२ ॥

तस्येत्यादि खल्वितिनिपातो वाक्यालङ्कारार्थः । प्राणा हि प्रस्तुता स्त एवं शब्देन परामृश्यते, तस्मादेवं प्रवृत्तस्य प्राणैर्युक्तस्येत्यर्थः । सन्तानिका सरः ।

नाम व्रीहेरष्टमभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना। पञ्चमी वेदिनी नाम व्रीहिपञ्चमभागप्रमाणा कुष्ठविसर्पाधिष्ठाना। षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्व्वुदश्लीपदगलगण्डाधिष्ठाना। सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना यदेतत् प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटे सूक्ष्माङ्गुल्यादिषु। यतो वच्यत्युदरेषु व्रीहिमुखेणाङ्गुष्ठोदरप्रमाणमवगाढ़ं विध्येदिति ॥ ३ ॥

कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः ॥ ४ ॥

भवतश्चात्र।

यथा हि सारः काष्ठेषु च्छिद्यमानेषु दृश्यते।
तथा धातुर्हि मांसेषु च्छिद्यमानेषु दृश्यते ॥ ५ ॥
स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः ॥ ६ ॥

तासां प्रथमा मांसधरा नाम, यस्यां मांसगतानां शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति ॥ ७ ॥

---

छाया कान्तिरिति पर्य्यायौ, अस्यापञ्चविधत्वञ्च प्रागवगाहतमस्माभिः। इत्थोक्तानि त्वचां प्रमाणानि मध्यशरीराकृतानीत्यवगन्तव्यम्। उक्तमर्थं दृढ़यति यत इति। यद्येवं नस्यात्तर्ह्युदरेष्वित्यपार्थकमभविष्यदित्यभिसन्धिः ॥ ३ ॥

कला इत्यादि। धातुशब्देनेह मांस-शोणित-मेदः श्लेष्म-शुक्राण्येव लक्ष्यन्ते आशयशब्देन च पित्तपक्वाशयाविति गम्यते। अनन्तरं तदधिकृत्योपदेशात्। धातूनामाशयमध्यस्य च मर्य्यादा धात्वाशयान्तरमर्य्यादा। अन्तरं मध्यमित्य-

भवति चात्र।

यथा विसमृणालानि विवर्द्धन्ते समन्ततः।

भूमौ पङ्कोदकस्थानि तथा मांसे शिरादयः॥ ८॥

द्वितीया रक्तधरा नाम, मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति॥ ९॥

भवति चात्र।

वृक्षाद्यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत्।

मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते॥ १०॥

तृतीया मेदोधरा नाम। मेदो हि सर्व्वभूतानामुदरस्थमण्वस्थिषु च महत्सु च मज्जा भवति॥ ११॥

भवति चात्र।

स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः।

अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते॥ १२॥

शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता॥ १३॥

---

मर्थान्तरम्। न तावत् वक्ष्यमाणासु कलासु मध्ये सौक्ष्म्यान्मांसान्तर्गता नाम सहसा चक्षुर्विषयीभवतीत्याह यथेति। धातुः शोणितादिस्तद्दर्शनादेव तद्गताः कला लक्षणीयाः। शब्दादेव तस्य तस्य धातोः कलानुशयित्वादित्ययमाशयः। कलाः पुनर्लक्षणतो निरूपयति स्नायुभिरित्यादिना। जरायुणा जरायुसदृशेन पटेनेत्यर्थः। कलाख्याभागाः कलाभागाः। एतेन धात्वाशयान्तरावरणानि कला इत्युन्नेयम्। द्वितीयेत्यादि। विशेषत इत्यादौ चकारेण पूर्व्वंस्मात्तस्यामित्यनुकृष्यान्वेयम्। शोणितं सम्प्रसिच्यत इति रक्तधराकलानुविद्धत्वादिति भावः॥ ४—१२॥

चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति ॥१४॥

भवति चात्र ।

स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते ।

सन्धय: साधु वर्त्तन्ते संश्लिष्टा: श्लेष्मणा तथा ॥ १५ ॥

पञ्चमी पुरीषधरा नाम, यान्त:कोष्ठे मलमभिविभजते पक्वाशयस्था ॥ १६ ॥

भवति चात्र ।

यकृत् समन्तात् कोष्ठञ्च यथान्त्राणि समाश्रिता ।

उण्डुकस्थं विभजते मलं मलधरा कला ॥ १७ ॥

षष्ठी पित्तधरा नाम, या चतुर्व्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति ॥ १८ ॥

भवति चात्र ।

अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम् ।

तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा ॥ १९ ॥

सप्तमी शुक्रधरा नाम, या सर्व्वप्राणिनां सर्व्वशरीरव्यापिनी ॥ २० ॥

---

पञ्चमीत्यादि । मलमभि समन्ताद्विभजते पक्वमपक्वञ्च पृथक् करोतीत्यर्थ: । उक्तमर्थं स्फुटीकृत्यावगमयति यकृदिति । यकृदित्यादौ "द्वितीयाम्रेडितान्तेषु" इत्यादिना द्वितीया । अन्त्राणीति बहुवचनमाचिन्त्य भूरिप्रयोगदर्शनात् । यकृत्समन्तात् कोष्ठञ्चेति । यकृत: कोष्ठस्यामाशयादेश्च समन्तात् समीपत इत्यर्थ: । एतेनैतदुक्तं भवति । यथा नाभेरधो दक्षिणत: स्थितस्य क्षुद्रान्त्रसीमा-

भवन्ति चात्र ।

यथा पयसि सर्पिस्तु गुड़श्चेक्षुरसे यथा ।
शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः ॥ २१ ॥
द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः ।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते ॥ २२ ॥
कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा ।
स्त्रीषु व्यायच्छतश्चापि हर्षात् तत् सम्प्रवर्त्तते ॥ २३ ॥

गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद्गृहीतगर्भाणामार्त्तवं न दृश्यते । ततस्तदधः प्रतिहतमूर्द्धमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते । शेषञ्चोर्द्धतरमागतं पयोधरावभिप्रतिपद्यते, तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति ॥ २४ ॥

---

सन्निविष्टस्योण्डुकस्यापरप्रान्तेन सम्बद्धं स्थूलान्त्रमूर्द्ध्वमुखीभूय ग्रहण्यादक्षिणपार्श्वतोयकृतोऽधस्तादामाशयमपसव्यं कृत्वा गुदमनुगतम् । तथैव तदन्तर्वर्त्तिनी मलधरा नाम कला उण्डुकस्थं पक्वं मलं विसृजतीति । उण्डुकोनाम व्याचिख्यासितो यन्त्रभेदः । पठीत्यादि । इयमेव ग्रहणीति निर्द्दिश्यते । यथेत्यादि । यथा पयसीक्षुरसे च व्यापकावनुद्भूतरूपौ सर्पिर्गुड़ौ मन्थनादिनाऽऽविर्भवतस्तद्वदेव स्त्रीप्रसङ्गेन शुक्रमिति भावः । स्त्रीषु व्यायच्छतो व्यायामं कुर्व्वतः स्त्रीप्रसङ्गं कुर्व्वतइति निष्कर्षः ॥ १२—२३ ॥

गृहीतेत्यादि । ततो गर्भग्रहणादनन्तरं प्रथमे मासीति यावत्, अपरमर्व्वाचीनम्, द्वितीयमासिकञ्चेत्येतत्, तदद्दष्टमार्त्तवमधः प्रतिहतं स्रोतसामवरुद्धत्वेनाधस्तात् प्रत्याहृतमतएवोर्द्धमागतं सदपरेत्यभिधीयते जरायुरूपेण परिणमत इत्यर्थः । अपरा जरायुरमरेति पर्य्यायाः । शेषं तृतीयादिमासिकम् ॥ २४ ॥

गर्भस्य यकृत्प्लीहानौ शोणितजौ। शोणितफेनप्रभवः फुप्फुसः। शोणितकिट्टप्रभवः उण्डुकः ॥ २५ ॥

असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः।
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति ॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः ॥ २६ ॥
उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्।
कफशोणितमांसानां सारो जिह्वा प्रजायते ॥ २७ ॥
यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्।

---

गर्भस्येति। यकृदिदं दक्षिणभागे नवमपर्शुकावधि स्वैरङ्गुलैश्चतुर्द्दशाङ्गुलमायामेनाष्टाङ्गुलं विस्तारेण, चतुरङ्गुलञ्चोत्सेधेनोपलभ्यते। न चैतद्रञ्जकस्यैवस्थानं किन्तर्हि पाचकस्यापीत्युन्नेयम्, दृश्यते हि शोणितात् निसृतं पाचकं नाम पित्तं द्वेधा विभक्तस्याधःप्रदेशस्योपरिष्टात् प्रतिष्ठिते प्रायः पञ्चाङ्गुलायते सार्द्धाङ्गुलपरिणाहे पित्ताशये सञ्चित्य हंसपक्षनालानुकारिण्या नाड्या ग्रहण्यां निःसरतीति। प्लीहा चाष्टमपर्शुकां यावदधिष्ठितः षडङ्गुलश्चतुरङ्गुलविस्तारः सार्द्धाङ्गुलोत्सेधश्च। फुफ्फुसोनाम प्रायेण कण्ठप्रदेशादारभ्य षष्ठीं सप्तमीं वा पर्शुकामवधीकृत्य लम्बमानः समन्तात्, सप्तमपर्शुकासमदेशवर्त्तिनं कुक्षिवक्षोविभाजिनन्तदपवारणपटं स्पृष्ट्वेव विस्तारेण प्रायः सर्व्वमुरोव्याप्यावतिष्ठते। स चाधस्तात् कोविदारपत्रवद्द्वेधा विभज्यते विभक्तस्य च तस्य दक्षिणो भागो वामात् विशालः किञ्चित् पुरःसरश्च वामस्तु दक्षिणादायतः किञ्चित् पृष्ठानुसारी च। उण्डुकस्तु स्थूल-क्षुद्रान्त्रयोराद्यन्तसीमासन्निविष्टो मलोद्गमप्रतिबन्धिनाऽनुलोमसन्निविष्टेन कपाटद्वितयेनानुविद्धः पार्श्वाङ्गतयैकद्वारया प्रायः षडङ्गुलिमितयाऽननुभूतक्रियया नाड्या समेतः पुरीषविभाजको गोलो यन्त्रभेदः ॥ २५ ॥

अनुप्रविश्य पिशितं पेशीर्विभजते तथा ॥ २८ ॥
मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात् ।
शिराणाञ्च मृदुः पाकः स्नायुनाञ्च ततः खरः ।
आशय्याभ्यासयोगेन करोत्याशयसम्भवम् ॥ २९ ॥

रक्तमेदःप्रसादाद्वृक्कौ । मांसासृक्कफमेदःप्रसादाद् वृषणौ । शोणितकफप्रसादजं हृदयं, यदाश्रया हि धमन्यः प्राणवहाः । तस्याधोवामतः प्लीहा फुफ्फुसश्च, दक्षिणतो यकृत् क्लोम च ॥ ३० ॥

तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति ॥ ३१ ॥

---

असृज इत्यादि । प्रसादः प्रसन्नोभागः । रुक्मं सुवर्णम् । यथार्थं यथाप्रयोजनं दारयेदिति सम्बन्धः । तथेति समुच्चयार्थः । यथार्थं पेशीमांसपिण्डानि विभजतेचेत्यर्थः । अभ्यासयोगेन पौनः पुन्येन आशय्याशयानुरूपोभूत्वा करोति वायुरिति पूर्व्वेणान्वयः । वृक्कोवुक्कश्च पर्य्यायौ वृक्कावाभ्यन्तरे द्वे हृदयावरणे इति प्राञ्चः, शल्यविदस्तु वस्तिशिरसी इत्याहुः । हृदयं हि दक्षिणतस्तृतीयपर्शुकावष्टम्भात् वामं स्तनं द्व्यङ्गुलतो हित्वा षष्ठपर्शुकासन्निधावतिष्ठते तदिदमुच्यते तस्येति । तस्य हृदयस्याधः प्लीहेत्यष्टमपर्शुकासन्निहितत्वादित्युन्नेयम् , फुफ्फुसश्च प्रायेणोरोव्यापकोऽपि बाहुल्यानुशयाद्वामत इति योजना । क्लोम पिपासास्थानं तथाच "अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि सिरामूलं तृष्णास्थानं मतं बुधैः" इति । हृदयाद्दक्षिणदेशवर्त्तित्वन्त्वस्य मुखमात्रेण लक्षणीयम्, यदाह "आमाशयादधस्ताच्च यकृत्सा उपरिस्थिताम् । पित्तपातस्थानक्लोममुखात् प्लीहा-

भवति चात्र ।

पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकशति स्वपतश्च निमीलति ॥ ३२ ॥

निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति । सा स्वभावत एव सर्व्वप्राणिनोऽभिस्पृशति ॥ ३३ ॥

तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रति-पद्यते तदा तामसी नाम निद्रा सम्भवति ; अनवबोधिनी सा प्रलयकाले । तमोभूयिष्ठानामहःसु निशासु च भवति । रजो-भूयिष्ठानामनिमित्तम् । सत्त्वभूयिष्ठानामर्द्धरात्रे । क्षीणश्लेष्मणा-

---

वधिस्थितात् । स्रोतो विनिस्सृतेनाथ सञ्चारेण रसेन च । भिद्यतेऽन्नमनिर्भिन्नं यदासाशय मस्तितः" इति ॥ २६—३१ ॥

पुण्डरीकेणेत्यादि । पुण्डरीकेण सङ्कुचितेन पद्मेनेत्यर्थः । अधोमुखम् अधो-वर्त्तिमुखाकारभागमित्याहुरुभयतोमुखत्वात् । अत्र विशेषयति तन्त्रान्त-रम् "चतुःप्रकोष्ठं हृदयं वामदक्षिणभागतः । तेषां द्वौ दक्षिणौ कोष्ठौ गृहीत्वाऽशुद्ध शोणितम् । सनाक् संशोध्यविसृजेत् सिरया फुफ्फुसेऽनिशम् । तत्र शुद्धं व्रजेत् कोष्ठौ वामौच तदनन्तरम् । तस्मात् सृतं शरीरञ्च जीवयेद्‍ हृयेच्च तत्" इति । तच्च हृदयं शश्वदेव स्पन्दी विशेषतस्तु जाग्रदवस्थायां चेष्टावशात् शोणितवेगबाहुल्येन किञ्चिच्च प्रफुल्लमिवावभातीति व्याजेनोप-दिदिक्षति जाग्रत इति । निमीलति चेष्टा विरहेण शोणितवेगक्षयात् सङ्कु-चितमिवावभातीत्यर्थः । ननु किमिदमुच्यते "स्वपतश्चनिमीलति" इति, पश्य ! स्वप्नोनिद्राचेति पर्य्यायौ, निद्राच शुद्धबुद्धादिस्वभावस्येश्वरस्य माये-त्याख्यायते, सा च शक्तिः, तथाच तदावेशे शक्तिशक्तिमतोरभेदात् सत्त्व-शक्त्या हृदयं विकशतीत्येवमेववक्तुं युज्यते न पुनर्निमीलतीति य एवमाशङ्कते

मनिलबहुलानां मनःशरीराभितापवताञ्च नैव; सा वैकारिकी भवति ॥ ३४ ॥

भवन्ति चात्र।

हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्।
तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम् ॥
निद्राहेतुस्तमः, सत्त्वं बोधने हेतुरुच्यते।
स्वभाव एष वा हेतुर्गरीयान् परिकीर्त्त्यते ॥
पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः।
रजोयुक्तेन मनसा गृह्णात्यर्थाञ्छुभाशुभान् ॥
करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते।

---

तं प्रत्याह निद्रामिति। तु कारोऽप्यर्थे। वैष्णवीमैशीं मायामपिनिद्रां पाप्मानं गुरुवरणस्वभावात् तामसीति समर्थार्थे योगादिप्रतिबन्धात् पापमित्यपदिशन्तीति नानुपपत्तिः। स्यादेतत् कथं पुनस्तामसीयं निद्रा तमःप्रतिबन्धि सत्त्वं सर्व्वशो ऽभिभूय सात्त्विकानप्यभिस्पृशतीत्याह सेति। स्वभावतो निसर्गतः अघटनघटनपटीयस्त्वादिति यावत् ॥ ३२—३३ ॥

कदातु सा सम्भवतीत्याह तत्रेति। यदा तत्र हृदये संज्ञावहानि स्रोतांसि परमसूक्ष्मत्वाद्योगिभिर्योगगम्यानि तद्गतधमनीसंश्रयात् परम्परासम्बन्धेन संस्थितानि चक्षुरादौ प्रसृतानि वेतिशेषः। पुनर्व्विशिनष्टि अनवेति। प्रलयकाले मृत्युकाले अनवबोधिनीति बोधशक्तेः समूलकाषमाकाषादित्यभिसन्धिः। अनिमित्तमिति क्रियाविशेषणम्, ईषदर्थोऽयंनञ् निमित्तं निमित्तसामान्यं काल इति यावत् अल्पकालमित्यर्थः। रजस्चञ्चलतया क्षणभङ्गुरमिति तात्पर्य्यम्। क्षीणेत्यादि नैवेति पूर्व्वस्मान्निद्राशब्द-माकृष्यान्वेयम्, सा अनिद्रेत्यर्थः ॥ ३४ ॥

हृदय मित्यादि। करणानामिन्द्रियाणां वैकल्ये वैक्लव्ये प्रवर्द्धिते सती-

अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥ ३५ ॥

सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात् । प्रतिषिद्धे-ष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्व-कर्म्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानाम-जीर्णिनाञ्च मुहूर्त्तं दिवास्वपनमप्रतिषिद्धम् । रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः । विकृ-तिर्हि दिवास्वप्नो नाम । तत्र स्वपतामधर्म्मः सर्व्वदोषप्रको-पश्च । तत्प्रकोपाच्च कास-श्वास-प्रतिश्याय-शिरोगौरवाङ्गमर्द्दारो-चक-ज्वराग्निदौर्व्वल्यानि भवन्ति । रात्रावपि जागरितवतां वात-पित्त-निमित्तास्तएवोपद्रवा भवन्ति ॥ ३६ ॥

भवन्ति चात्र ।

तस्मान्न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्ज्जयेत् ।
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत् ॥ ३७ ॥
अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः ।
नातिस्थूलकृशः श्रीमान् नरो जीवेत् समाः शतम् ॥३८॥
निद्रा सात्मीकृता यैस्तु रात्रौ च यदि वा दिवा ।
न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥ ३९ ॥
निद्रानाशोऽनिलात् पित्तान्मनस्तापात् क्षयादपि ।
सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥ ४० ॥

---

त्यर्थः । परिशिष्टं निगदव्याख्यातम् ॥ ३५ ॥

निद्रानाशेऽभ्यङ्गयोगो मूर्द्ध्नि तैलनिषेवनम्।
गात्रस्योद्वर्त्तनञ्चैव हितं संवाहनानि च॥
शालि-गोधूम-पिष्टान्न-भक्ष्यैरैक्षवसंस्कृतैः।
भोजनं मधुरं स्निग्धं क्षीर-मांसरसादिभिः।
रसैर्विलेशयानाञ्च विष्किराणां तथैव च॥
द्राक्षा-सितेक्षुद्रव्याणामुपयोगो भवेन्निशि।
शयनासन-यानानि मनोज्ञानि मृदूनि च॥
निद्रानाशे तु कुर्व्वीत तथान्यान्यपि वुद्धिमान्॥ ४१॥
वमेन्निद्रातियोगे तु कुर्य्यात् संशोधनानि च।
लङ्घनं रक्तमोक्षञ्च मनोव्याकुलनानि च॥ ४२॥
कफ-मेदोविषार्त्तानां रात्रौ जागरणं हितम्।
दिवास्वप्नश्च तृट्शूल-हिक्काजीर्णातिसारिणाम्॥ ४३॥
इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत्॥ ४४॥
पीत्वैकमनिलोच्छासमुद्वेष्टन् विवृताननः।
यन्मुञ्चति सनेत्रास्रं स जृम्भ इति संज्ञितः॥ ४५॥

तथादित्यादि। हृषः शुक्लः उद्वर्त्तनं घर्षणं संवाहनं मर्द्दनम्। निद्रेत्यादि। ऐक्षवोगुड़ादिः अन्यानि श्रमादीनि। सरलमन्यत् ॥३७—४३॥

प्रसङ्गात् किञ्चिदुपदिशन्नाह इन्द्रियेत्यादि। इन्द्रियार्थेषु शब्दादिष्वसम्प्राप्तिरसम्यक्सम्बन्धः। ईहेह.चक्षुर्निमीलनादिः। उद्वेष्टन् पृष्ठतः शिरोव्याक्षिपन् विवृताननः पुरुषो यदनिलोच्छ्वासमुच्छ्वासानिलं पीत्वा सनेत्रास्रं

योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्ज्जितः।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रवाधकः॥ ४६॥
सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता।
गतान्त चाप्यनुत्साहः कार्य्येष्वालस्यमुच्यते॥ ४७॥
उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम्।
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्द्दिशेत्॥ ४८॥
वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः।
नचान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्द्दिशेत्॥ ४९।
आर्द्रचर्म्मावनद्धं हि योगान्नमभिमन्यते।
तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्द्दिशेत्॥ ५०॥
मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद्भ्रमः।
तमोवातकफात् तन्द्रा निद्रा श्लेष्मतमोभवा॥ ५१॥

गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परि-
वृद्धिर्भवति॥ ५२॥

भवन्ति चात्र।

तस्यान्तरेण नाभेस्तु ज्योतिःस्थानं ध्रुवं स्मृतम्।
सदा धमति वातस्तु देहस्तेनास्य वर्द्धते॥ ५३॥

---

नेत्राम्बुसहितं मुखव्यनिलोच्छासमितिशेषः स जृम्भेत्यर्थः। उत्क्लिश्योपतसं भूत्वा प्रसेकास्यस्रवष्ठीवनमुज्जिगीर्षा। हृदयोद्वेष्टनं हृदये बन्धनमिव वेदना विशेषः। सुगम मन्यत्॥ ४४—५१॥

गर्भस्येत्यादि। रसोमातुराहाररसः। मारुताध्माननिमित्तेत्यपरिस्फुटमर्थं

उष्मणा सहितश्चापि दारयत्यस्य मारुतः ।
ऊर्द्धं तिर्य्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥ ५४ ॥
दृष्टिश्च रोमकूपाश्च न वर्द्धन्ते कदाचन ।
ध्रुवाण्येतानि मर्त्त्यानामिति धन्वन्तरेर्मतम् ॥ ५५ ॥
शरीरे क्षीयमाणेऽपि वर्द्धेते द्वाविमौ सदा ।
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥ ५६ ॥
सप्त प्रकृतयो भवन्ति । दोषैः पृथक् द्विशः समस्तैश्च ॥५७॥
शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः ।
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥ ५८ ॥

तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रु-नख-केशः क्रोधी दन्तनखखादी च भवति ॥

अधृतिरदृढसौहृदः कृतघ्नः
कृशपरुषो धमनीततः प्रलापी ।

---

स्फुटीकृत्यावगमयति तस्येति । तस्य गर्भस्य नाभेरन्तरेण मध्ये ज्योतिरग्निः "ज्योतिर्दीप्त्यग्नितारासु" इत्यजयः । आधमत्याध्मातं करोति । इदमत्रावधेयम् । ज्योतिरत्रगर्भशरीरं तप्तु ऽभितप्तमयोवत् मृदूकरोति, वातस्तूत्क्षेपनादिनाऽऽयच्छतीति युक्तमुक्तं देह इति । स्यादेतत् कुतस्तुखलु स्रोतांसि नानाकाराणि जायन्त इत्याह उष्मणेति यथास्रोतांसिदारयति तथा स्रोतांसि जायन्त इति योजना ॥ ५२—५६ ॥

सप्तेति । उत्कटः प्रबलः, अनार्य्यः क्षुद्राशयः, सङ्गीते चित्तमस्येति

द्रुतगतिरटनोऽनवस्थितात्मा
वियदपि गच्छति सम्भ्रमेण सुप्तः ॥
अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः ।
किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥ ५९ ॥
वातिकाश्चाजगोमायु-शशाखूष्ट्रशुनां तथा ।
गृध्र-काक-खरादीनामनूकैः कीर्त्तिता नराः ॥ ६० ॥

स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठ-पाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति ॥ ६१ ॥

मेधावी निपुणमतिर्विगृह्य वक्ता
तेजस्वी समितिषु दुर्निवारवीर्य्यः ।
सुप्तः सन् कनक-पलाश-कर्णिकारान्
सम्पश्येदपि च हुताशविद्युदुल्काः ॥ ६२ ॥
न भयात् प्रणमेदनतेष्वमृदुः
प्रणतेष्वपि सान्त्वन-दानरुचिः ।
भवतीह सदा व्यथितास्यगतिः
स भवेदिह पित्तकृतप्रकृतिः ॥ ६३ ॥
भुजङ्गोलूक-गन्धर्व्व-यक्ष-मार्ज्जार-वानरैः ।
व्याघ्रर्क्ष-नकुलानूकैः पैत्तिकास्तु नराः स्मृताः ॥ ६४ ॥

---

गान्धर्व्वचित्तः, सङ्गीतं गान्धर्व्वमित्यनर्थान्तरम् । सम्भ्रमेण वेगेन, अनुकैः शीलैः, खालित्यमिन्द्रलुप्तम्, सान्त्वनं प्रियवाक्यादिना भयाद्यपनयनम् व्रणादिना प्रपीड़िता मुखावस्थाऽस्येति व्यथितास्यगतिः ॥ ५७–६४ ॥

दूर्व्वेन्दीवर-निस्त्रिंशार्द्रारिष्ट-शरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढ़वैरश्च भवति ॥ ६५ ॥

शुक्लाक्षः स्थिरकुटिलातिनीलकेशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः ।
सुप्तः सन् सकमलहंसचक्रवाकान्
सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥ ६६ ॥

रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः ।
क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥
दृढ़शास्त्रमतिः स्थिरमित्रधनः परिगण्य चिरात् प्रददाति बहु ।
परिनिश्चितवाक्यपदः सततं गुरुमानकरश्च भवेत् स सदा ॥६७॥

ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः ।
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः ॥ ६८ ॥
द्वयोर्वा तिसृणां वापि प्रकृतीनान्तु लक्षणैः ।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्द्दिशेत् ॥ ६९ ॥
प्रकोपो वान्यथाभावः क्षयो वा नोपजायते ।
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥ ७० ॥
विषजातो यथा कीटो न विषेण विपद्यते ।
तद्वत् प्रकृतयो मर्त्त्यं शक्नुवन्ति न बाधितुम् ॥ ७१ ॥

---

निस्त्रिंशः खड्गः, आर्द्रारिष्टमार्द्रनिम्बपत्रम्, सुविभक्तगात्रः सुसंश्लिष्ट-शरीरः, मानयितावस्त्रालङ्कारादिना पूजकः, मानकरः सम्मानकरः । छविः कान्तिरिति पर्य्यायौ परिगण्यपरिगणय्यविमृश्येत्यर्थः ॥ ६४—७१ ॥

प्रकृतिमिह नराणां भौतिकीं केचिदाहुः
पवन-दहन-तोयैः कीर्त्तितास्तास्तु तिस्रः ।
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्
शुचिरथ चिरजीवी नाभसः खैर्महद्भिः ॥ ७२ ॥

शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ।
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥
माहात्म्यं शौर्य्यमाज्ञा च सततं शास्त्रबुद्धिता ।
भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणम् ॥
शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता ।
प्रियवादित्वमित्येतद्वारुणं कायलक्षणम् ॥
मध्यस्थता सहिष्णुत्वमर्थस्यागमसञ्चयौ ।
महाप्रसवशक्तित्वं कौवेरं कायलक्षणम् ॥
गन्धमाल्यप्रियत्वञ्च नृत्यवादित्रकामिता ।
विहारशीलता चैव गान्धर्व्वं कायलक्षणम् ॥
प्राप्तकारी दृढोत्थानो निर्भयः स्मृतिमान् शुचिः ।
रागमोहभयद्वेषैर्वर्ज्जितो याम्यसत्त्ववान् ॥
जपव्रतब्रह्मचर्य्य-होमाध्ययनसेविनम् ।
ज्ञानविज्ञानसम्पन्नमृषिसत्त्वं नरं विदुः ॥
सप्तैते सात्त्विकाः कायाः राजसांस्तु निबोध मे ॥ ७३ ॥

---

प्रकृति मित्यादि । पैङ्गल्यं पिङ्गलाक्षत्वं, हरिः पिङ्गलः, प्रसव शक्तिरिह नवाविष्कारशक्तिः, प्राप्तकारी युक्तकारी. दृढोत्थानो दृढोद्यमः ॥ ७२—७३ ॥

ऐश्वर्य्यवन्तं रौद्रञ्च शूरं चण्डमसूयकम् ।
एकाशिनञ्चौदरिकमासुरं सत्त्वमीदृशम् ॥
तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा ।
विहाराचारचपलं सर्पसत्त्वं विदुर्नरम् ॥
प्रवृद्धकामसेवी चाप्यजस्राहार एव च ।
अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम् ।
एकान्तग्राहिता रौद्रमसूया धर्म्मवाह्यता ॥
भृशमात्मं तमश्चापि राक्षसं कायलक्षणम् ॥
उच्छिष्टाहारता तैक्ष्ण्यं साहसप्रियता तथा ।
स्त्रीलोलुपत्वं नैर्लज्ज्यं पैशाचं कायलक्षणम् ॥
असंविभागमलसं दुःखशीलमसूयकम् ।
लोलुपञ्चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ॥
षड़ेते राजसाः कायास्तामसांस्तु निबोध मे ॥ ७४ ॥
दुर्म्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ।
निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥ ७५ ॥
अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता ।
परस्पराभिमर्द्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥ ७६ ॥
एकस्थानरतिर्नित्यमाहारे केवले रतः ।
वानस्पत्यो नरः सत्त्वधर्म्मकामार्थवर्ज्जितः ॥ ७७ ॥
इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा ।
कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत् ॥ ७८ ॥

महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः ।
प्रोक्ता लक्षणतः सम्यग्भिषक् ताश्च विभावयेत् ॥ ७९ ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भव्याकरणं नामशारीरं चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः ।

अथातः शरीरसङ्ख्याव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥

---

ऐश्वर्येत्यादि । रौद्रं भीषणं चण्डं कोपनम्, अनुरूपां यथायोग्याम् ॥ ७४—७९ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये शारीरस्थाने गर्भव्याकरणंनामशारीरं चतुर्थोऽध्यायः ।

---

न खलु गर्भव्याकरणादेव शरीरतत्त्वं सर्व्वशो विज्ञातं भवति, यदुपलभ्य-विमुक्तसन्देहाः सुदुष्करमपि कर्म्म सम्पादयन्त्यनायासेनेति भगवानिदानीं शरीरसंख्याव्याकरणं नामाधिकरोति अथात इत्यादिना । शरीरस्य संख्या पाङ्गप्रत्यङ्गादीनामेकत्वादिपरिमाणं सा नामतोऽभिधीयतेऽनेनेति शरीरसंख्या व्याकरणम् ॥ १ ॥

(शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते । तन्तु चेतनावस्थितं वायुर्विभजति ; तेज एनं पचति ; आपः क्लेदयन्ति ; पृथिवी संहन्ति ; आकाशं विवर्द्धयति । एवं विवर्द्धितः स यदा हस्त-पाद-जिह्वा-घ्राण-कर्ण-नितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते । तच्च षडङ्गं शाखाश्चतस्रो, मध्यं पञ्चमं, षष्ठं शिर इति ॥ २ ॥

अतःपरं प्रत्यङ्गानि वक्ष्यन्ते । मस्तकोदर-पृष्ठ-नाभि-ललाट-नासा-चिवुक-वस्ति-ग्रीवा इत्येता एकैकाः । कर्ण-नेत्र-नासाभ्रु-शङ्खांस-गण्ड-कक्ष-स्तन-वृषण-पार्श्व-स्फिग्-जानु-बाहूरुप्रभृतयो द्वे द्वे । विंशतिरङ्गुलयः । स्रोतांसि च वक्ष्यमाणानि । एष प्रत्यङ्गविभाग उक्तः ॥ ३ ॥

तस्य पुनः सङ्ख्येयानि—त्वचः कला धातवो मला दोषा यकृत्-प्लीहानौ फुफ्फुसउण्डुकोहृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्च्चा रज्जवः सेवन्यः सङ्घाताः

---

प्रथमन्तावत् व्याचिख्यासितार्थविषयीभूतत्वादामूलं शरीरमुपदिशन्नाह शुक्रेति । आत्मा चेतनः प्रकृतयोविकाराश्चोपदिष्टाः सर्व्वभूतचिन्तायाम्, तैरभिव्याप्तमात्मप्रकृतिविकारसम्मूर्च्छितम् । "सम्मूर्च्छनमभिव्याप्तौ" इति मेदिनी । अत्रात्मसम्मूर्च्छितत्वेनैव विनष्टगर्भव्यवच्छेदे पुनश्चेतनावस्थितमिति विशेषणं सुखप्रतिपत्त्यर्थम् । संहन्ति संहतं करोति । प्रकृतमनुसरति तच्चेति । शाखा हस्तपादम्, शिरोऽत्रसग्रीवमेव मस्तकं मस्तकमात्रस्य प्रत्यङ्गत्वेन विवक्षितत्वात् । प्रागुक्तोऽप्ययमर्थः स्थूणानिखननन्यायादिहोपदिश्यत इत्यदोषः ॥२—३॥

सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्म्माणि शिरा धमन्यो योगवहानि स्रोतांसि च ॥ ४ ॥

त्वचः सप्त। कलाः सप्त। आशयाः सप्त। धातवः सप्त। सप्त शिराशतानि। पञ्च पेशीशतानि। नव स्नायुशतानि। त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धिशते। सप्तोत्तरं मर्म्मशतम्। चतुर्व्विंशतिर्धमन्यः। त्रयो दोषाः। त्रयो मलाः। नव स्रोतांसि। षोड़श कण्डराः। षोड़शजालानि। षट् कूर्च्चाः। चतस्रो रज्जवः। सप्तसेवन्यः। चतुर्द्दश सङ्घाताः। चतुर्द्दश सीमन्ताः। द्वाविंशतिर्योगवहानिस्रोतांसि। द्विकान्यन्त्राणि चेति ॥ ५ ॥

विस्तारोऽत ऊर्द्धम्। त्वचोऽभिहिताः, कला धातवो मला दोषा यकृत्प्लीहानौ फुफ्फुस उण्डुको हृदयं वृक्कौ च ॥ ६ ॥

आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमा-

---

तस्येत्यादि। योगः कर्म्मसुकौशलं तेन प्राणादीन् वोढुं शीलमेषां तानि योगवहानि प्राणादिवहानीत्यर्थः। सङ्ख्यान्युपदिश्य सङ्ख्यातुमारभते त्वच इति ॥ ४—६ ॥

विस्तारइत्यादि। अभिहिताः धातवोमलादोषाश्च सू० १४।१५।२१ अ०, शेषाश्च शां।४ अ० इत्यवधेयम्। वाताशयः पक्वाधानं "पक्वाशयो विशेषेण वातस्थानम्" इति स्मरणात्। पित्ताशयो नाम स्थूलां नाड़ीमनुकुर्व्वन्नामाशयपार्श्वावलम्बिशुषिरान्निर्गत्य यकृतोऽधस्तात् पित्तकोषपर्य्यन्तं प्रायस्त्र्यङ्गुलमानेनोन्नस्य पुनःकिञ्चिदवनस्य पित्तकोषान्निर्गतेन पित्तनिःसरणार्थेन हंसपक्षनालाकारेण स्रोतसा क्लोममुखानुविद्धे स्रावकाशे संविष्टोऽष्टाङ्गुल-

शय: पक्वाशयो मूत्राशय: स्त्रीणां गर्भाशयोऽष्टम इति ॥ ७ ॥

सार्द्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्द्धव्यामहीनानि ॥८॥

श्रवण-नयन-वदन-घ्राण-गुद-मेढ्राणि नव स्रोतांसि नराणां

---

मानेनोन्नस्य दक्षिणवस्तिशिर: पृष्ठे कृत्वा पृष्ठवंशस्याध:पर्व्वद्वयं परिहृत्य-पञ्चाङ्गुलमानेन तिर्य्यग्भूयामाशयादध: क्षुद्रान्त्रेण योगमुपैतीति लक्षणीयम्। श्लेष्माशयस्त्वामाशयान्नातिरिच्यते "आमाशय: श्लेष्मण:" इत्यनुशासनात्। न चैवं गते पृथक्त्वेन संख्यानमनुपपन्नम्, एकस्यैव गाथकत्वपाचकत्वभेदात् पृथक्त्वेन परिगणनवत्। एवमेव वाताशयपक्वाशययोरपि समाधेयम्। "शोणितस्य स्थानं यकृत् प्लीहानौ" इति स्थितेऽपि रक्ताशयशब्देनेह त्वगादय एवाभिप्रेयन्ते पारिशेष्यात् "रक्तस्याद्य: क्रमात्परे" इति तन्त्रान्तरीयाच्च। अभ्यवहृतानामामानामप्रागामाशय आमाशय: सचार्द्धचन्द्राकृतिरक्षिप्तान्नगतिरोधिकपाटानुविद्धोदक्षिनपार्श्वावलम्बिग्रथिरोवक्षोगतानामस्थ्नामध: सन्निकृष्टप्लीहत्वेन वामानुसारी च। पक्वाशयोऽन्त्राणीत्यनर्थान्तरम्। मूत्राशयो वस्तिर्नाम प्राग्व्याहृत: नि० २। अं। वक्ष्यतेच शा० ६। अं। गर्भाशयस्तु परमतो निवेदयिष्यते स्वयमेव। आशयेष्वेषु केचिद्गणगन्थे उपदिष्टा अपीह पुन: प्रसङ्गादुपदिश्यन्त इत्यनुसन्धेयम्। सार्द्धेति। वाताशयत्वेन पक्वाशयत्वेन चान्त्राणामुपदेशेऽपि पुनरवान्तरभेदेन प्रमाणाऽभिधानार्थमुपात्तानीत्यवधेयम्। व्यामस्तिर्य्यक् पार्श्वत:प्रसारितयोर्वाह्वोरन्तरालपरिमाणम् ॥ ७—८ ॥

अनभिहितेषु मध्ये क्रमागतत्वात् स्रोतांस्यधिकरोति श्रवणेत्यादिना। छिद्रापरपर्य्यायोऽयं स्रोत:शब्द: "स्रोतांसिखानिछिद्राणि" इति राजनिर्घण्ट:। द्वे "अध: सप्तशिरसि खानि" इति तन्त्रान्तरञ्च। नतावन्मेढ्राणीति मेढ्रशब्दस्येह क्लीवत्वमनुपपन्नम्। "मेढ्रञ्चोन्मादमुष्काभ्यां हीनं क्लीव: स उच्यते" इत्यादाविह्व भूरिप्रयोगदर्शनात्। शब्दस्यास्य मूत्रमार्ग एव तात्पर्य्यम् न पुन: पुंसोऽसाधारणे चिह्ने इत्यवश्यं वक्तव्यम्, अनन्तरमेतानीत्यादिना

बहिर्मुखाणि। एतान्येव स्त्रीणामपराणि च त्रीणि ; द्वे स्तनयो-रधस्ताद्रक्तवहञ्च ॥ ९ ॥

षोडश कण्डराः। तासां चतस्रः पादयोस्तावत्यो हस्त-ग्रीवा-पृष्ठेषु। तत्र हस्त-पादगतानां कण्डराणां नखाः प्ररोहाः। ग्रीवा-हृदय-निबन्धिनीनामधोभागगतानां मेढ्रम्। श्रोणि-पृष्ठ-निबन्धिनीनामधोभागगतानां बिम्बः। ऊरु-वक्षोऽक्षपिण्डादि-गतानाञ्च मूर्द्धा ॥ १० ॥

मांस-शिरा-स्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि। तानि मणिबन्ध-गुल्फसंश्रितानि परस्परनिबद्धानि परस्पर-

---

स्त्रियः प्रत्येतेषामप्युपदेशात्। एतान्येवेति। एतानि श्रवणादीन्येव नव, अपराणि च त्रीणि बहिर्मुखानि स्रोतांसि स्त्रीणां सन्तीति निष्कर्षः। तानि पुन स्त्रीणि विवृणोति द्वे इति। सङ्ख्यानमिदं वाक्यमभिप्रेयत इति निश्चीयते यौवने चुचुकयोरनेकच्छिद्रदर्शनात्। अधस्तान्मूत्रमार्गादधोभागे इत्यर्थः ॥ ९ ॥

षोडशेति। कण्डराः स्थूलाः स्नायवः। तासु च तारतम्येन द्वे द्वे सूक्ष्मे द्वे द्वे स्थूले पादादिषु वर्त्तन्ते तदिदमुच्यते तासामिति। पादशब्देनेह आपाद-तलात् कटिफलकं यावदभिधीयते, हस्तशब्देन पाणितलात् कक्षान्तो देशः, ग्रीवाशब्देन तत्पार्श्वपृष्ठं पृष्ठशब्देन च पृष्ठवंशस्योभयपार्श्वे इत्यनुसन्धेयम्। तासु च हस्तपादगते सूक्ष्मे द्वे द्वे स्वच्छन्दतः सुषुप्तावस्थादिष्वाकुञ्चनप्रसारणे ज्ञापतः स्थूले तु कर्त्तुरभिप्रायमपेक्षते इत्याहुः। प्ररोहा अङ्कुरा इवान्त्यप्रदेश-संश्लिष्टा इत्यर्थः। जननेन्द्रियवचनोऽयं मेढ्रशब्दः। तथा च पुंसां मेढ्रः स्त्रीणां

संश्लिष्टानि परस्परगवाचितानि चेति ; यैर्गवाचितमिदं शरीरम् ॥ ११ ॥

षट् कूर्चास्ते हस्त-पाद-ग्रीवा-मेढ्रेषु। हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोरेकैकः ॥ १२ ॥

महत्यो मांसरज्जवश्चतस्रः। पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे ॥ १३ ॥

सप्त सेवन्यः। शिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैका। ताः परिहर्त्तव्याः शस्त्रेण ॥ १४ ॥

चतुर्दशास्थ्नां सङ्घाताः। तेषां त्रयो गुल्फ-जानु-वङ्क्षणेषु।

---

योनिरिति निष्कर्षः। विश्वः सच्छिद्रं त्रिकाख्यीत्युच्यते। मूर्द्धा शिरः सर्व्वत्र वचनव्यत्यासेन प्ररोहशब्दोऽनुक्तस्यान्वेयः ॥ मांसेत्यादि। मांसादिकृतानि जालानि मांसशिरास्नाय्वस्थिजालानि। जालं गवाच इति पर्य्यायौ। अस्थिमांसगतशोणितसंशोधनार्थं शिराःस्नायवश्च पाणिप्रकोष्ठसन्धौ पादसन्धौचास्थिमांसात्मकं स्वमाश्रयपदमात्मानञ्च जालाकारेण परिणमय्यास्थिमांसयोरन्तः प्रविशन्ति तदिदमुच्यते तानीति। गवाचा जाता एषां तानि गवाचितानि यैर्ज्जालैर्गवाचितं विरलसञ्जातगवाचमित्यर्थः ॥ षड़ित्यादि। कूर्चानाम स्नायुधमनीसन्निपाता स्तेष्वेकैकाः स्नायुसन्निपाताः पञ्चसु ग्रीवाकचावङ्क्षण-भागेष्वेकश्च धमनीसन्निपातोमेढ्रे दृश्यतइत्युच्यते षड़िति ॥ महत्य इत्यादि। पृष्ठवंशमुभयतः पृष्ठवंशस्योभयपार्श्वे इत्यर्थः। "उभसर्व्वतसोः" इति द्वितीया ॥ १०—१३ ॥

सप्तेति। अल्पं सेवनं सेवनी सृगाल्यादिषु द्रष्टव्या "स्त्रीस्यात् काचिन्मृगाल्यादिर्विवक्षापचये" इत्यमरः। शस्त्रप्रतिषेधोऽत्र सन्धानासौकर्य्यान्नला-

एतेनेतरसक्थिबाहू च व्याख्यातौ। त्रिकशिरसोरेकैकः ॥१५॥

चतुर्दशैव सीमन्ताः। ते चास्थिसङ्घातवद्गणनीयाः, यत-स्तैर्युक्ता अस्थिसङ्घाता येऽभिहिताः। सीमन्तास्तु खल्वष्टादशैकेषाम्। ॥ १६ ॥

त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते। शल्य-तन्त्रे तु त्रीण्येव शतानि। तेषामष्टादशोत्तरं शतं शाखासु। पञ्चाधिकं शतं श्रोणि-पार्श्व-पृष्ठोरःकण्ठनाड़ीषु। ग्रीवां प्रत्यूर्द्धं सप्तसप्ततिः। एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते ॥ १७ ॥

एकैकस्यां पादाङ्गुल्यां त्रीणित्रीणि, अङ्गुष्ठे द्वे, तानि चतु-

---

त्यधिकत्वादित्यवधेयम् ॥ चतुर्दशेति। सङ्घाता दृढ़संयोगास्ते च प्रधानभूता-स्तत्राधिष्ठाता नातश्चतुर्दशेत्यनुपपन्नम्। गुल्फजानुवङ्क्षणा नाम यथाक्रमं पादाद्यमध्योर्द्ध्वसन्धयः। यथाहि पादयोर्गुल्फजानुवङ्क्षणाः प्रायस्तथैव हस्तयो-र्मणिबन्धकूर्परकक्षास्तदिदमुच्यते एतेनेति। सक्थिशब्देनेह पादादिस-मुदितस्यैव सक्थ्नः परिग्रहः क्रियते प्रकृतानुयायिगुल्फाद्यनुषङ्गित्वात् ययायोगमेवमेवोत्तरत्रापि व्याख्येयम्। पृष्ठवंशस्याधः संहतमस्थि त्रिक-मुच्यते। अत्राविशेषेऽप्येतेषु सध्ये गुल्फे मणिबन्धे च सप्तानां, कूर्परे त्रयाणां, जानुनि चतुर्णां कक्षवङ्क्षणयोर्द्वयोर्द्वयोः शिरसि षण्णां त्रिके-चित्त्वेन विजृम्भितानां चतुर्णामस्थ्नां सङ्घाता इत्यवधेयम्। सीमन्ताः केश-वर्त्मवद्विकाशिताः सङ्घातनिबन्धना भावविशेषाः। कुतस्त्वस्थिसङ्घातवद्गण-नीयाः? आह यत इति। हि शब्दोऽवधारणार्थः। यतो य अस्थिसङ्घाता उक्ता-स्ते सर्व्व एव तैः सीमन्तैः कारणभूतैर्युक्ता योगं संश्लेषं प्राप्ता इत्यर्थः। एकेषां वाग्भटेनोपासितानामित्यर्थः। "यदाह चतुर्दशास्थिसङ्घाताः सीमन्ता-

द्दश। तलकूर्च्चगुल्फसंश्रितान्येकादश, पार्ष्ण्यामेकं, जङ्घायां द्वे, जानुन्येकम्, एकमुराविति त्रिंशदेकस्मिन् सक्थ्नि भवन्ति। द्वितीयेऽप्येवम्। एतेनैव च जानुवर्ज्जेन बाहू च व्याख्यातौ ॥ १८ ॥

श्रोण्यां पञ्च, तेषां गुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकम्, पार्श्वयोरष्टचत्वारिंशत्। पृष्ठे चतुर्व्विंशतिः, द्वे अंसपीठे, उरसि त्रीणि, अक्षकसंज्ञे द्वे, फुफ्फुसनिबद्धायां कण्ठसंसक्तायां नाड्यामेकविंशतिः ॥ १९ ॥

---

द्विगुणानव" इति। सीमन्तानां सङ्घातनिबन्धनत्वेनाभ्युपगमात् सङ्घातानपेक्ष्यत्वेनाप्याधिक्यमसाम्प्रतं स्यात्, दूरत एव चतुर्भिरित्यभिसन्धाय न प्रपञ्चयते मतमेतत्। त्रीणीत्यादि--वेदवादिनो याज्ञवल्क्यादयः यदाहुः "अस्थ्नां सहषष्ट्याशतत्रयम्" इति। त्रीण्येव शतानीति संयोगविश्लेषेण तावतामेवाविच्छन्नत्वान्नखादीनामस्थित्वेनापरिग्रहादित्यविरोधः। उक्तमर्थं विवृणोति एकैकस्मिन्निति। तले पञ्च, कूर्च्चः स्नायु मर्म्मभेद इति व्यक्तीभविष्यति तदुपलक्षिते देशे त्रीणि, गुल्फे च त्रीणीतियुक्तमुक्तं तलेत्यादि गुल्फयोरधोभागः पार्ष्णि कूर्परादि जानुन्येकमस्थ्यतिरिच्यते तदिदमुच्यते जानु वर्ज्जेनेति ॥ १७--१८ ॥

श्रोणिः कटिः भगगुदोपलक्षिते देशे द्वे नितम्बयोश्च द्वे इत्येतानि संहतानि चत्वार्य्यापाततस्त्रित्वेनावभान्तीति त्रयाणां सङ्ग इति व्युत्पत्त्या त्रिकमित्युच्यते। तत्त्रिकसंश्रितमेकं पृष्ठवंशपुच्छमित्यर्थः। पार्श्वास्थीनि हि पृष्ठवंशादागत्य वक्षःसन्निकर्षे संयुक्ततरुणानि सन्त्येकैकस्मिन् पार्श्वे द्वादश वर्त्तन्ते इत्युभयतो वर्त्तमानानां द्विविधानामस्थ्नां संख्यानादाह अष्टचत्वारिंशदिति। तेषाञ्चोपरितनानि सप्त सप्तोरसा सह संयुज्यन्ते, द्वे द्वे अन्त्ये हित्वा शेषाणि-

ग्रीवायाः पुरस्तात् नवकं, तदूर्द्धमेकम्, अभ्यन्तरतः कर्णशङ्कुल्योरधस्तात् षट्, गण्डकर्णशङ्खेष्वेकैकम्, हनुसमाख्यमेकम्, दन्ताद्वात्रिंशत्, नासायामष्टौ, नासायामुपकनीनकं द्वे, अपाङ्गयोरधस्ताद्द्वे, वर्त्मसंज्ञे द्वे, षट् शिरसि, शिरसोऽभ्यन्तरेच द्वे ॥ २० ॥

---

चायमात्रेण पूर्व्वपूर्व्ववर्त्तिनासहेत्ययं विशेषः। पृष्ठे पृष्ठवंशे चतुर्व्विंशतिरिति सामान्येनोक्तेऽपि ग्रीवायाः पश्चाद्भागे सप्त तत त्रिकपर्य्यन्तञ्च सप्तदशेत्यूह्यम्। भुजशिरसो रासने इव द्वे अस्थिनी अंसपीठे उच्येते। वक्रत्वेन स्थूलप्रान्तत्वेनच कुत्सितोऽचः पाशकोऽचकः, तत् सदृशे द्वे जत्रुतोऽंससन्धिसंसक्ते अस्थिनी अचकेनाम। फुफ्फुसेत्यादि। नाड्यासिति श्वासवहायामित्येव ॥ १९ ॥

ग्रीवायाः पुरस्तात् कण्ठ इत्यर्थः। तदूर्द्धं कण्ठस्योर्द्धदेश इति निष्कर्षः। शङ्खोनाम कर्णापाङ्गयोरन्तरालम्। हनुस्तु कपोलद्वयादधस्तनश्चिवुकादिमुखावयव विशेषः। शालाक्यतन्त्रे नासासन्निकृष्टोनेत्रप्रान्तःकनीनकउच्यते तस्यसमीप इत्युपकनीनकम्। अत्र "तेषां सविंशमस्थिशतं शाखासु। सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोरस्सु। ग्रीवां प्रत्यूर्द्धं त्रिषष्टिः। एवमस्थ्नांत्रीणि शतानि पूर्य्यन्ते। एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश। तलकूर्च्चगुल्फसंश्रितानि दश। पार्ष्ण्यामेकम्। जङ्घायांद्वे। जानुन्येकम्। एकमुरावितित्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतर सक्थि बाहूच व्याख्यातौ। श्रोण्यां पञ्च तेषांगुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकम्। पार्श्वे षट्त्रिंशदेवमेकस्मिन् द्वितीयेप्येवम्। पृष्ठे त्रिंशत्। अष्टावुरसि। द्वे अचकसंज्ञे। ग्रीवायां नवकम्। कण्ठनाड्यां चत्वारि। द्वे हन्वोः दन्ता द्वात्रिंशत्, नासायांत्रीणि; एकं तालुनि, गण्डकर्णशङ्खेष्वेकैकम्। षट् शिरसि" इति पाठान्तरमनाकरं दृष्टविरोधात् ॥ २० ॥

एतानि पञ्चविधानि भवन्ति । तद्यथा-कपाल-रुचक-तरुण-वलय-नलकसंज्ञानि। तेषां जानु-नितम्बांस-गण्ड-शङ्ख-शिरःसु कपालानि। दशनास्तु रुचकानि। घ्राण-कर्ण-ग्रीवाक्षि-कोष-कण्ठनाड़ीषु तरुणानि। पाणि-पाद-पार्श्व-पृष्ठोरःसु वलयानि। शेषाणि नलकसंज्ञानि ॥ २१ ॥

भवन्ति चात्र ।

अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति साराख्येतानि देहिनाम् ॥
मांसान्यत्र निबद्धानि शिराभिः स्नायुभिस्तथा ।
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥ २२ ॥

---

एतानीत्यादि । कपालं घटादेरवयवः, रुचकं सौवर्चललवणखण्डं, तरुणं नूतनं, वलयोहस्तादिभूषणं, क्लोमनलोनलकम् । शब्दानामेषामस्थि तत्साम्याद्व्यपदेशः, तत्र तरुणसाम्यं सौकुमार्य्यात्, वलयसाम्यञ्च यथा कथञ्चिद्गोलाकारत्वाल्लक्षणीयम् । अक्षिकोषोऽक्षिपिधानं वर्त्मेत्येतत्, कण्ठसंसक्ता नाड़ी कण्ठनाड़ी फुफ्फुसनिबद्धा श्वासनाड़ीति यावत् ॥ २१ ॥

अस्थीनिस्तौति अभ्यन्तरेत्यादिना । साराःस्थिरांशः अस्थ्यात्मकाः साराः अस्थिसाराः शरीरिणां स्थूलपुरुषाणां, विशेषणमिदं निष्क्रियनष्टशरीरं निरुणद्धि । परिशिष्टमतिरोहितार्थम् ॥ २२ ॥

सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च ।

शाखासु हन्वोः कट्यां च चेष्टावन्तस्तु सन्धयः ।

शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥ २३ ॥

सङ्ख्यातस्तु दशोत्तरे द्वे शते । तेषां शाखास्वष्टषष्टिः, एकोननवतिः कोष्ठे, ग्रीवां प्रत्यूर्द्धं त्रिपञ्चाशत् ॥ २४ ॥

एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे, ते चतुर्द्दश । जानु-गुल्फ-वङ्क्षणेष्वेकैकः । एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ २५ ॥

पञ्च कटीकपालेषु, चतुर्व्विंशतिः पृष्ठवंशे, तावन्त एव पार्श्वयोः, उरसि षोड़श, फुफ्फुस निबद्धायां कण्ठसंसक्तायां नाड्यां विंशतिः, त्रयः कण्ठे, दन्तपरिमाणा दन्तमूलेषु, नासायामेकः,

---

सन्धय इत्यादि। हन्वोर्हनुमूलयोः, ईषच्चेष्टाहि लोकेऽचेष्टा उच्यन्ते तदिह पृष्ठवंशगतानामीषच्चेष्टानां स्थिरेष्वन्तर्भावाद्विविधा इति नानुपपन्नम्। चेष्टावन्त इति भुम्निवतुप् प्रचूरचेष्टा इत्यर्थः। नेह व्याचिख्यासिताः सन्धयः संयोगसामान्यं किन्तर्हि कोरादयः सन्धिविशेषाः इत्यनन्तरं व्यक्तीकरिष्यति, तेचास्मां शतत्रये यथास्थूलं दशोत्तरे द्वे एव शते दृश्येते; समाम्नायतेच "प्राधान्येन व्यपदेशा भवन्ति" इत्यतः सन्धीनां प्रभूतत्वे सत्यपि युक्तमुक्तं सङ्ख्यातइत्यादि। पार्श्वयोः पृष्ठवंशोभयपार्श्वे पर्शुकास्थिसमवायेनेत्यर्थः। उरसीत्युरोगतपर्शुकान्वयादुभयतश्चतुर्द्दश, अक्षकान्वयाच्च द्वाविति षोड़श; कण्ठे ग्रीवायाः पुरोभागे काकलकादधो द्वौ, काकलकसमाख्ये कण्ठस्योन्नत-

द्वौ वर्त्मसमण्डलजौ नेत्राश्रयौ गण्ड कर्णशङ्खेष्वेकैकः, द्वौ हनुसन्धी द्वावधस्ताच्छङ्खयोः, पञ्च शिरःकपालेषु ॥ २६ ॥

त एते सन्धयोऽष्टविधाः। कोरोदूखल-सामुद्ग-प्रतर-तुन्नसेवनी-वायसतुण्ड-मण्डल-शङ्खावर्त्ताः । तेषामङ्गुलि-मणिबन्ध-गुल्फ-जानु-कूर्परेषु कोराः सन्धयः । कक्षा-वङ्क्षण-दशनेषूदूखलाः ।

---

प्रदेशे चैक इतित्रयः । नासायामित्युपशृङ्गाटकम्, नेत्राश्रयौ नेत्रयोःकनीनकाश्रयावित्यर्थः । गण्डशब्देनेह हनुसंश्रिते नासाद्यधिष्ठानभूते ताल्वाद्यभिनिर्वर्त्तके द्वे अस्थिनी लक्ष्येते । शङ्खयोरधस्तादित्यपाङ्गसन्निकर्ष एवेत्युन्नेयम् । अत्र "त्रयः कटी कपालेषु, चतुर्विंशतिः पृष्ठवंशे, तावन्त एव पार्श्वयोः उरस्यष्टौ, तावन्त एव ग्रीवायां, त्रयः कण्ठे नाड़ीषु हृदयक्लोमनिबद्धास्त्वष्टादश, दन्तपरिमाणा दन्तमूलेषु, एकः काकलके नासायाञ्च, द्वौ वर्त्मसमण्डलजौ नेत्राश्रयौ, गण्डकर्णशङ्खेष्वेकैकः द्वौ हनुसन्धी, द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च, पञ्च शिरःकपालेषु एको मूर्ध्नि" इति पाठान्तरं कतमाः कतमा हृदयक्लोमनिबद्धानाद्यः, कियन्तो वा सन्धयः कस्मिन् कस्मिन् वर्त्तन्ते, आहोस्वित् ग्रीवासन्धीन् विहाय उताहो उपादाय पृष्ठवंशसन्धयः पूर्य्यन्त इत्यवबोधपराहतेन केनचित् साहसिकेन कल्पितमित्यश्रद्धेयम् ॥ २६ ॥

पुनर्विशिनष्टि त इति । कोरोनाम कपाटादिनिबन्धनार्थो यन्त्रभेदः "कवजा" इत्याख्यायते । उदूखलशब्देनेह मुषलस्यापि परिग्रहः क्रियते "धनुर्धरेति धनुः शब्देन वाणस्यापि परिग्रहवत् । छिन्नानामल्पं सेवनं तुन्नसेवनी, वायसतुण्डं काकमुखम् । शङ्खावर्त्तः शङ्खभ्रमः सन्धिपुच शब्दानामेषां तत्साम्यादव्यपदेशः सिंहो माणवक इतिवत् । सम्पुटाकारेण निर्वृत्तः सामुद्गः । चिङ्गटा नाम मत्स्याः प्रकर्षेन तरन्त्यनेनेति प्रतरः स इषास्थिविशेषोऽप्यस्येति व्युत्पत्त्या प्रतरशब्दोऽस्मिन् शास्त्रे "चिङ्गरी" इति प्रसिद्धेषु मत्स्येषु मध्ये

अंसपीठ-गुद-भग-नितम्बेषु सामुद्गाः, ग्रीवा-पृष्ठवंशयोः प्रतराः। शिरःकटीकपालेषु तुन्नसेवनी । हनोरुभयतस्तु वायसतुण्डाः । कण्ठ-नेत्र-फुफ्फुसनाड़ीषु मण्डलाः । श्रोत्र-शृङ्गाटकेषु शङ्खावर्त्ताः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ २७ ॥

अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः ।
पेशी-स्नायु-शिराणान्तु सन्धिसङ्ख्या न विद्यते ॥ २८ ॥

नव स्नायुशतानि । तासां शाखासु षट् शतानि । द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्धं सप्ततिः ॥ २९ ॥

---

हहच्छरीरस्य शिरःकण्टकवदुन्नतास्थिमति सन्धौ रुढ़ इति गम्यते, प्रतरसंज्ञया विवक्षितानां ग्रीवादिसन्धीनां तथात्वात् । अथापिचेत् केषाञ्चित् अज्ञामनुरुध्यमाना मत्यस्यास्य शिरो छित्वा ग्रीवादिभागमेव प्रतरणसाधनत्वेनोरीकृत्य प्रतरशब्दवाच्यमभ्युपगच्छेम तदापि नानुपपत्तिस्तदनुकत्वात् तेषां तेषां सन्धीनाम् । मण्डलसुगोलः । अंसेत्यादि इहापि गुदभगशब्दौ तत्सन्निकृष्टास्थिपरौ । ग्रीवेत्यादौ ग्रीवाशब्दः पृष्ठवंशस्योर्द्धभागे प्रवर्त्तते, पृष्ठवंशग्रहणेनेव ग्रीवाया उपलक्षेऽपि पृथगुपादानं प्रपञ्चार्थम् । कण्ठेत्यादि । फुफ्फुसनिबद्धा नाड़ी फुफ्फुसनाड़ी श्वासनाड़ीति यावत् । अनेन कण्ठगतानां मण्डलत्वेनोपदेशात् काकलस्य यन्मण्डलत्वं प्राप्तं तत् "एकदेशविकृतमनन्यवत्" इतिन्यायान्नानुपपन्नम् । अत "कण्ठहृदयनेत्रक्लोमनाड़ीषु" इत्यनार्षः पाठोहृदयक्लोमनाड़ीनां सन्निहितेऽपि गन्धमात्रेणास्थिसन्धेरदर्शनात् । शृङ्गाटकशब्देनेह तत्सन्निकृष्टो नासामूलवर्त्ती देश एवाभिप्रेयत इति गम्यते यथाश्रुतस्यासामञ्जस्यात्, शृङ्गाटकं हि सिरासन्निपात इत्यतः परं निवेदयिष्यते, प्रकरणञ्चेदमस्थिसन्धीनाम् । केवला यथास्थूलं कात्स्न्या इत्यर्थः ॥ २७—२८ ॥

एकैकस्यान्तु पादाङ्गुल्यां षट् निचितास्तास्त्रिंशत् । तावत्य-एव तलकूर्च्चगुल्फेषु । तावत्य एव जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ ३० ॥

षष्टिः कट्याम् । अशीतिः पृष्ठे । पार्श्वयोः षष्टिः । उरसि त्रिंशत् ॥ ३१ ॥

षट्त्रिंशद्ग्रीवायाम् । मूर्द्ध्नि चतुस्त्रिंशत् । एवं नव स्नायु-शतानि व्याख्यातानि ॥ ३२ ॥

भवन्ति चात्र ।

स्नायुश्चतुर्व्विधा विद्यात् तास्तु सर्व्वा निबोध मे ।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ ३३ ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिसु चाप्यथ ।
वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह ॥ ३४ ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु ।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥ ३५ ॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ।

---

नवेत्यादि । अधिकमर्द्धमत्रेत्यध्यर्द्धम् ॥ २९—३२ ॥

स्नायुरित्यादि । प्रतानवत्यः शाखाप्रशाखाभिर्विस्तारवत्यः शुषिराः सच्छिद्राः । वृत्ताः सर्व्वाः कण्डराः स्थूलाःस्नायवो विज्ञेया स्ता अपि शाखासु सर्व्वसन्धिषु चेति सम्बन्धः ।

आरज्जसा भवेदप्सु न्युक्ता सुसमाहिता ॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ॥
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥
नह्यस्थीनि न वा पेश्यो न शिरा न च सन्धयः ।
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ॥
यः स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा ।
स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहिनाम् ॥ ३६ ॥

पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु, कोष्ठे षट्षष्टिः । ग्रीवां प्रत्यूर्द्ध्वं चतुस्त्रिंशत् ॥ ३७ ॥

एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश । दश प्रपदे । पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव । दश गुल्फ-तलयोः । गुल्फ-जान्वन्तरे विंशतिः । पञ्च जानुनि । विंशति-रूरौ । दश वङ्क्षणे । शतमेवमेकस्मिन् सक्थ्नि भवन्ति । एते नेतरसक्थिबाहू च व्याख्यातौ ॥ ३८ ॥

तिस्रः पायौ । एका मेढ्रे । सेवन्याञ्चापरा । द्वे वृषणयोः । स्फिचोः पञ्च पञ्च । द्वे वस्तिशिरसि । पञ्चोदरे । नाभ्यामेका ।

---

फलकं काष्ठपट्टकं "तक्ता" इत्यभिधीयते । तानि आस्तीर्णान्यत्रेति फलकास्तीर्णा । बन्धनैर्बहुभिर्युतेति समुद्रनौविषयम्, सुसमाहिता सुदृढे-त्यर्थः । न्युक्ता नाविकवाहितेत्यर्थः । हेतुगर्भविशेषणमेतत् । स्नायवः स्नूयन्ते नेत्यादिना । हन्युः स्पर्शादिचयेणाकर्मण्यं कुर्य्युरित्यर्थः ॥ ३२—३६ ॥

पञ्चेति । प्रपदे पादाग्रे स्फिचोः कटिमांसपिण्डयोः, वस्तिशिरसि वृक्कयोः,

पृष्ठोर्द्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः। षट् पार्श्वयोः। दश वक्षसि। अक्षकांसौ प्रति समन्तात् सप्त। द्वे हृदयामाशययोः। षट् यकृत् प्लीहोण्डुकेषु॥ ३९॥

ग्रीवायां चतस्रः। अष्टौ हनुसमाखेऽ एकैका काकलका-गलयोः। द्वे तालुनि। एका जिह्वायाम्। ओष्ठयोर्द्वे। घोणायां द्वे। द्वे नेत्रयोः। गण्डयोश्चतस्रः कर्णयोर्द्वे। चतस्रो ललाटे। एका शिरसि। इत्येवमेतानि पञ्चपेशीशतानि॥ ४०॥

शिरास्नायुस्थिपर्व्वाणि सन्धयश्च शरीरिणाम्।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः॥ ४१॥

स्त्रीणान्तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धिः। अपत्यपथे चतस्रः तासां प्रसृतेऽभ्यन्तरतो द्वे, सुखाश्रिते बाह्ये च प्रवृत्ते द्वे। गर्भच्छिद्र-संश्रितास्तिस्रः। शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव॥ ४२॥

पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति॥ ४३॥

---

हृदयामाशययोरित्यामाशयः पित्ताशयसहितइत्युन्नेयम्। उण्डुकः माग्वग्रहतः। काकलकं कण्ठमणिः कण्ठस्योन्नत प्रदेश इतियावत्। घोणा नासेति पर्य्यायौ। स्त्रीणामित्यादि। प्रसृते प्रसारिते इत्यर्थः। शुक्रार्त्तवप्रवेशिन्य इत्यावर्त्ताकारा एव॥ ३७—४२॥

ननुखलु तद्गर्भच्छिद्रमित्याह पित्तेति। स्थूलक्षुद्रान्त्ववचनोऽपि हि पक्वा-शयशब्दो मुख्ययावृत्त्यास्थूलान्त्रेषुप्रवर्त्तत इत्यवश्यं वक्तव्यम्। विशेषेण पक्वाना-

तासां बहल-पेलव-स्थूलाणु-पृथु-वृत्त-ह्रस्व-दीर्घ-स्थिर-मृदु-श्लक्ष्ण-कर्कशभावाः सन्ध्यस्थि-शिरा-स्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥ ४४ ॥

भवन्ति चात्र ।

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः ।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥ ४५ ॥
सर्म्मशिराधमनीस्रोतसामन्यत्र प्रविभागः ॥ ४६ ॥
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः ।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ ४७ ॥
आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः ।

---

माहारद्रव्यानामधिष्ठानत्वात्, गर्भाशयस्तु पुनस्तन्मूलभागादूर्द्धं पित्ताशयाच्चाधः क्षुद्रान्त्रोपरि वर्त्तते तदिदमुक्तं पित्तपक्वाशयमध्य इति। तासां पेशीनां, बहलो दृढ़ः, पेलवोऽतिकोमलः, स्थिरःकठिनः, मृदुः कोमलः, श्लक्ष्णःचिक्कणः। द्रव्याणि हि गुणान् विहाय किमपि कर्त्तुं न शक्नुवन्तीतिपेशीनां सन्ध्यादिप्रच्छादकत्वादेव तद्गतानां भावानामपि तथात्वमभ्युपगतं भवति तदिदमुच्यते सन्धीत्यादि। बहलादिभावविशेषणमेतत्। न तावत् स्त्रीणां मेढ्राद्यभावात् तास्तु पेश्योहीयन्तइत्याह पुंसामिति। लक्षणं मेढ्रः। अन्तर्गतं गर्भाशयोभयपार्श्व-जातस्रोतोऽवलम्बित्वेनान्तरवस्थितम्। फलमण्डमित्यनर्थान्तरम्। अत्र फले इति वाच्ये फलमिति फलत्वस्यैकविधत्वान्नानुपपन्नम् ॥ ४३—४५ ॥

सर्म्मेत्यादि। अन्यत्र षष्ठसप्तमनवमाध्यायेष्वित्यर्थः ॥ ४६ ॥

स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥ ४८ ॥
त्वक्‌पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः।
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥
तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता।
शोधयित्वा मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः ॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत्।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥ ४९ ॥

तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीड़ितमवर्ष-शतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे

---

शक्तेत्यादि। आभुग्नः कुटिलीकृताङ्गः सङ्कुचिताङ्ग इतिनिष्कर्षः। अभिमुखो मातुः पृष्ठाभिमुखः। प्रसवं प्रसवकालं प्रति लक्ष्यीकृत्य, उपस्थिते जन्मकाले इति यावत्। स्वभावात् स्वभावबलप्रवृत्तात्, सूतिमारुतवेगात्। योनिं योनिमुखमपत्यपथमित्येतत्। शिरसा याति परिवृत्यावाग्भूत्वा निष्क्रमितुमित्याकूतम्। शल्यतन्त्रे दृष्टश्रुताभ्यां निःसंशयाववोधादृते केषुचिदङ्गेष्ववयवेषु न वर्ण्यते "वर्णवर्णक्रिया विस्तारगुण वचनेषु" इति धात्वर्थधारणात् विस्तीर्य्यते विशदमुपदेष्टुं शक्यते इति तात्पर्य्यम्। तथाच शल्यतन्त्रे निःसंशयं ज्ञानमेकान्तेनान्वेष्टव्यमित्याह तस्मादिति। अङ्गानां संशयपरीहारेण निर्णयोऽङ्गविनिश्चयः। अत्रयुक्तिमनुकूलयति प्रत्यक्षत इति। हि यस्मात् प्रत्यक्षतो यद्दृष्टं दर्शनं यच्च शास्त्रदृष्टं शास्त्रेण दर्शनं तदुभयं दर्शनं समासतो मेलनाद्भूयोऽतितरां ज्ञानविवर्द्धनं निःसंशयकरमित्यर्थः ॥ ४७—४९ ॥

तस्मादित्यादि। नद्यकृतत्ते नापिच तैस्तेर्भावैरुपहते विकृते वा शरीरे

चोदयेत् । सम्यक् प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीर-वालवेणुवल्कलकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ ५० ॥

श्लोकौ चात्र भवतः ।

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥ ५१ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शरीरसंख्याव्याकरण-शारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

छातृत्स्नंशरीरतत्त्वं विज्ञातं भवतीत्याह समस्तेत्यादि । अन्त्रगतं पुरीषमन्त्र-पुरीषम् । अवहन्त्यां स्रोतोविरहितायाम्, आपगायां नद्याम् । सूक्ष्मतमः परमसूक्ष्मः यदाह श्रुतिः "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो-जीवः" इति । विभुःप्रभुः चेतज्ञ इत्यर्थः । तपश्चक्षुर्भिरालोचनादिभिरित्यर्थः । तप आलोचनं निदिध्यासनमित्येतत् । "सतपोऽकुरुत" इति श्रुतिः । अवा-पोह्यदूरीहत्य परिशिष्टं निगदव्याख्यातम् ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये शारीरस्थाने गर्भव्याकरणंनामशारीरं पञ्चमोऽध्यायः ।

# षष्ठोऽध्यायः ।

अथातः प्रत्येकमर्म्मनिर्द्देशंनाम शारीरं व्याख्यास्यामः ॥ १ ॥

सप्तोत्तरं मर्म्मशतम् । तानि मर्म्माणि पञ्चात्मकानि । तद्-यथा मांसमर्म्माणि, शिरामर्म्माणि, स्नायुमर्म्माणि, अस्थि-मर्म्माणि, सन्धिमर्म्माणि चेति। न खलु मांसशिरास्नाय्वस्थि-सन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते॥२॥

तत्रैकादश मांसमर्म्माणि । एकचत्वारिंशत् शिरामर्म्माणि । सप्तविंशतिः स्नायुमर्म्माणि । अष्टावस्थिमर्म्माणि । विंशतिः सन्धिमर्म्माणि । तदेतत् सप्तोत्तरं मर्म्मशतम् ॥ ३ ॥

तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति । तेनेतरसक्थि-बाहू च व्याख्यातौ । उदरोरसोर्द्वादश । चतुर्द्दश पृष्ठे । ग्रीवां प्रत्यूर्द्धं सप्तत्रिंशत् ॥ ४ ॥

---

पूर्व्वाध्याये मर्म्मसिराधमनीस्रोतसामन्यत्र प्रविभाग इति निरदिक्षदिदानी-न्त्ववसरवशान्निर्द्दिदिक्षितेषु तेष्वतितरामात्ययिकत्वेन प्राधान्यात् क्रमागतत्वाच्च प्रथमं तावन्मर्म्माण्येव निर्द्देष्टुं प्रत्येकमर्म्मनिर्द्देशं नामाऽधिकरोति अथात इत्या-दिना । एकैकेषां मर्म्मणामुपदेशमधिकृत्य कृतोग्रन्थः प्रत्येकमर्म्मनिर्द्देशः ॥ १ ॥

सप्तेत्यादि । मांसबहुलानि मर्म्माणि मांसमर्म्माणि न पुनर्मांसान्येव मर्म्मा-णीति वाक्यार्थः । वक्ष्यति हि "मर्म्माणि नाम मांससिरास्नाय्वस्थिसन्धि सन्निपाताः" इति । एतेन शेषं व्याख्यातम् । इदमत्रावधेयं मर्म्माभिनिर्वृत्ता-वनात्ययिकमपि मांसमुपादानकारणत्वेनाभ्युपगम्य पृथक्त्वेन मांसमर्म्मव्यपदेश-स्त्वत्र लक्षणविशेषोपलम्भात्, यदुक्तम् "स्पर्शं न जानाति विपाण्डुवर्णो यो मांस-मर्म्मण्यभिताड़ितः स्यात्" इति ॥ २—४ ॥

तत्र सक्थिमर्म्माणि क्षिप्र-तलहृदय-कूर्च्च-कूर्च्चशिरो-गुल्फे-न्द्रवस्ति-जान्वाण्यूर्व्वी-लोहिताक्षाणि विटपञ्चेति । एतेनेतरत् सक्थि व्याख्यातम् ॥ ५ ॥

उदरोरसोस्तु गुद-वस्ति-नाभि-हृदय-स्तनमूल-स्तनरोहिता-पलापान्यपस्तम्भौ चेति ॥ ६ ॥

पृष्ठमर्म्माणि तु कटीकतरुण-कुकुन्दर-नितम्ब-पार्श्वसन्धि-बृहत्यंसफलकान्यंसौ चेति ॥ ७ ॥

बाहुमर्म्माणि तु क्षिप्र-तलहृदय-कूर्च्च-कूर्च्चशिरो-मणि-बन्धेन्द्रवस्ति-कूर्पराण्यूर्व्वीलोहिताक्षाणि कक्षधरञ्चेति । एते-नेतरो बाहुर्व्याख्यातः ॥ ८ ॥

जत्रूर्द्ध्वं मर्म्माणि चतस्रो धमन्यः, अष्टौ मातृकाः, द्वे कृका-टिके, द्वे विधुरे, द्वौ फणौ, द्वावपाङ्गौ, द्वावावर्त्तौ, द्वावुत्क्षेपौ, द्वौ शङ्खौ, एका स्थपनी, पञ्च सीमन्ताः, चत्वारि शृङ्गाटकानि, एकोऽधिपतिरिति ॥ ९ ॥

तत्र तलहृदयेन्द्रवस्ति-गुद-स्तनरोहितानि मांसमर्म्माणि । ॥ १० ॥

---

तानि पुनरधिष्ठानभेदान्नामतो निर्द्दिशति तत्रेत्यादिना । क्षिप्रादीन्ये-कैकान्येकादशेत्युभयस्मिन् सक्थ्नि द्वाविंशतिर्भवन्ति । उदरेति । आद्यानि चत्वार्य्येकैकानि शेषाणि च द्वेद्वे इति द्वादश । पृष्ठेति । एतानि द्वेद्वे इति चतुर्द्दश । बाह्विति सक्थिवत् । जत्रूर्द्ध्वञ्च सप्तत्रिंशदित्येवं सप्तोत्तरं सप्तशतम् , अत चतस्रो धमन्य इति नीलामन्याविभागेन वक्ष्यति ॥ ५—९ ॥

नीला-धमनी-मातृका-शृङ्गाटकापाङ्ग-स्थपनी-फण-स्तनमूलापलापापस्तम्भ-हृदय-नाभि-पार्श्वसन्धि-वृहती-लोहिताचोर्व्व्यः शिरामर्म्माणि ॥ ११ ॥

आणि-विटप-कक्षधर-कूर्च्च-कूर्च्चशिरोवस्ति-चिप्रांस-विधुरोत्क्षेपाः स्नायुमर्म्माणि ॥ १२ ॥

कटीकतरुण-नितम्बांसफलक-शङ्खास्त्वस्थिमर्म्माणि ॥ १३ ॥

जानु-कूर्पर-सीमन्ताधिपति-गुल्फ-मणिबन्ध-कुकुन्दरावर्त्त-कृकाटिकाश्चेति सन्धिमर्म्माणि ॥ १४ ॥

तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति । तद्यथा— सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति । तत्र सद्यःप्राणहराण्येकोनविंशतिः । कालान्तरप्राणहराणि त्रयस्त्रिंशत् । त्रीणि विशल्यघ्नानि । चतुश्चत्वारिंशद्वैकल्यकराणि । अष्टौ रुजाकराणीति ॥ १५ ॥

भवन्ति चात्र ।

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरा-गुदम् ।
हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥ १६ ॥
वक्षोमर्म्माणि सीमन्त-तल-चिप्रेन्द्रवस्तयः ।

---

पुनर्व्विशिनष्टि तत्रेति । धमनीशब्देनेह मन्येलक्ष्येते । तानीत्यादि । सद्यःशब्दोऽयं सप्तरात्र, कालान्तरशब्दश्चविकल्पवृत्त्या पक्षं मासञ्च लक्षयतीति परमतो व्यक्तीकरिष्यति । निर्हृतशल्यं घ्नन्तीति विशल्यघ्नानि ॥ १०—१५ ॥

काटीकतरुणौ सन्धी पार्श्वजौ बृहती च या।
नितम्बाविति चैतानि कालान्तरहराणि तु ॥ १७ ॥
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत् ॥ १८ ॥
लोहिताक्षाणि जानूर्वी-कूर्च्चा विटप-कूर्परा:।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥
अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥ १९ ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च।
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥ २० ॥
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥ २१ ॥

मर्म्माणि नाम मांस-शिरा-स्नाय्वस्थि-सन्धिसन्निपाताः। तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति तस्मान्मर्म्मस्वभिहतास्तांस्तान् भवानापद्यन्ते ॥ २२ ॥

तत्र सद्यःप्राणहराण्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धोयावदन्तर्वायुस्तिष्ठति

---

शृङ्गाटकेत्यादि। कण्ठशिरा मातृकाः। तलं तलहृदयम्। अर्थाश्चैते प्रपञ्चेन स्वयमेव निवेदयिष्यन्त इत्यतो जोषमास्महे ॥ १६—२१ ॥

मर्म्माणीत्यादि। यथासम्भवं व्यस्तसमस्तानां मांसादीनां मेलनानि मांस-

तावज्जीवति, उद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति; तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि; सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके ॥२३॥

केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानाञ्च समवायात् सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि त्रिहीनानां वैकल्यकराणि एकस्मिन्नेव रुजाकराणीति ॥ २४ ॥

यतश्चैवमतोऽस्थिमर्मस्वप्यभिहतेषु शोणितागमनं भवति ॥ २५ ॥

चतुर्व्विधा यास्तु शिराः शरीरे प्रायेण ता मर्म्मसु सन्निविष्टाः। स्नाय्वस्थिमांसानि तथैव सन्धीन् सन्तर्प्य देहं प्रतिपालयन्ति ॥ २६ ॥

---

सिरास्नाय्वस्थिसन्धिसन्निपाताः। प्राणाः प्राणुता अग्नीषोमादयः ॥२२—२३॥

केचिदित्यादि। एकस्मिन्निति संख्याशब्दस्य सप्तच्छदेत्यादौ वीप्सामन्तरेणापि वीप्सार्थता दर्शनादेकैकस्मिन्नित्यर्थः। मर्म्मस्वभिहतेषु शोणितातिप्रवृत्तौ हेतुः सिराऽन्वय, इत्युपदिशन् व्याजेन परामिमतमिदमपाचिकीर्षति यत इत्यादिना। एवंशब्देनानन्तरमुपदेक्ष्यमाणोऽर्थः परामृश्यते, तदयमर्थः। यत एवं चतुर्व्विधाः सिराः प्रायेण मर्म्मसु सन्निविष्टा अतोऽस्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं वेगेन शोणितप्रवृत्ति र्भवति किं पुनरित-

ततः क्षते मर्म्मणि ताः प्रवृद्धः समन्ततो वायुरभिस्तृणोति ।
विवर्द्धमानस्तु स मातरिश्वा रुजः सुतीव्राः प्रतनोति काये ॥ २७ ॥

रुजाभिभूतन्तु पुनः शरीरं प्रलीयते नश्यति चास्य संज्ञा ।
अतो हि शल्यं विनिहर्त्तुमिच्छन्मर्म्माणि यत्नेन परीक्ष्य कर्षेत् ॥ २८ ॥

एतेन शेषं व्याख्यातम् ॥ २९ ॥

तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति । कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति । विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाञ्च करोति । रुजाकरमतीव्रवेदनं भवति ॥ ३० ॥

तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति। कालान्तरप्राणहराणि पक्षान्मासाद्वा । तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति ॥ ३१ ॥

---

रेष्वित्यर्थः । इदमत्राकूतम् यदि ह्येकस्मिन्नेव रुजाकराणीत्यभ्युपगमो न्याय्योऽभविष्यत्तर्हि सिरासम्बन्धविरहितत्वादस्थिमात्रसंसिद्धत्वेन शोणितगन्धवत्स्वस्थिमर्म्मस्वभिहतेषु प्रचुरं शोणितं नागमिष्यदतोमत्तोन्मत्तवचनवन्मन्से प्रत्युक्तं परमतमसङ्गतमित्युपेक्षितव्यम् । तत इत्यादि । ताः सिरा अभिस्तृणोत्याच्छादयतीत्यर्थः, "स्तृञ् आच्छादने" इति धात्वर्थस्मरणात् । मर्म्मणि क्षते सिरावस्थाप्रकारं सांसादावतिदिशति एतेनेति ॥ २४—३१ ॥

अत ऊर्द्धं प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः ॥ ३२ ॥

तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म्म ; तत्र विद्धस्याक्षेपकेण मरणम् ॥ ३३ ॥

मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम तत्रापि रुजाभिर्मरणम् ॥ ३४ ॥

---

अत इत्यादि। अङ्गुलीशब्देनेह तर्जन्येवाभिधीयते साधारणशब्दविशेषात्। मध्ये शेषसन्धिद्वयोः किञ्चिदूर्द्ध्वमन्तराले क्षिप्रकारित्वात् क्षिप्रं नाम विभक्तयोः शाखयोः प्रभवभूतोऽङ्गुलिमितस्तलेऽस्थ्यनुशायी स्नायुस्कन्धः। मर्म्मत्वेनास्य व्यपदेशस्तु प्रायेणैवं व्यापत्तिकरत्वादिति गम्यते, शाखान्तःप्रदेशवर्त्तिस्नायुमात्रे विद्धस्याप्यन्तरान्तरा तद्रूपगतिदर्शनात्। मध्यमेत्यादि। तले हृदयमिव परिरक्षितव्यं तलहृदयम्। मांसमर्म्मसमाख्ये मर्म्मण्यस्मिन् सिरा स्नायुश्च व्यापादयत इति निश्चीयते, ते हित्वा कृत्स्नमपि हि मांसं इक्षमकिञ्चित्करमिवावभाति। पश्य! सिराहि सा स्नायुसचिवा सती वङ्क्षणसन्धेरधस्तादाद्यत एकां शाखां जनयित्वा ऊरुमतीत्य जानुपृष्ठस्य द्व्यङ्गुलादधो द्वेधा विभज्यते तथा विभक्तायाश्च बाह्योभागो जङ्घास्थिद्वयसंयोगसन्निकृष्टमपवारणं भित्त्वा पादपृष्ठमनुसरति, भागश्चाभ्यन्तरोऽस्थ्यनुशायित्वेनैवाधोगच्छन् पार्ष्णिं प्रत्यूर्द्ध्वं द्वादशाङ्गुले पुनर्द्विधाभूत्वाऽभ्यन्तरानुसारिणांऽशेन पादपृष्ठमाश्रयते, अपरेणच पार्ष्णितलमनुसरन् शाखात्रितयरूपेण परिणमति तथा भूतस्यान्तर्व्वर्त्तिनी शाखा प्रसरविशेषेण पुष्णात्याभ्यन्तरं भागम्। अथापरा च सा शाखा कनिष्ठासंसक्तनलकमूलात् कथञ्चिदनुराकारेण साचीभूयापरे नलकमूले स्पृशन्ती तर्ज्जनीनलकमूले प्रलीयते, स्वभावाच्चातितरामापदमापादयत्युपहता तु पुनर्मध्यमानलकसन्निकृष्टे नष्टिटमच्यते मध्यमेत्यभिसंधायास्मिन् शिरास्नायुश्च व्यापादयत इत्य-

क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम ; तत्र पादस्य भ्रमणवेपने भवतः ॥ ३५ ॥

गुल्फसन्धेरध उभयतः कूर्चशिरो नाम ; तत्र रुजाशोफौ ॥ ३६ ॥

पादजङ्घयोः सन्धाने गुल्फो नाम ; तत्र रुजः स्तब्धपादता खञ्जता वा ॥ ३७ ॥

पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम ; तत्र शोणितक्षये मरणम् ॥ ३८ ॥

---

योनाम। अनुरयं लक्षणार्थः पूर्व्वेणेतिच एनवन्तमव्ययम्, एनपं प्रकृत्य "दिक्‌छब्दमात्रात् प्रत्ययं मन्यन्ते" इत्याह काशिका। तदयमर्थः। पादतलस्य मध्येऽन्तर्व्वर्त्तिनि प्रदेशे मध्यमाङ्गुलीमनु लक्षीकृत्य पूर्व्वेण पूर्व्वस्यामदूरवर्त्तिन्यां दिश्यनामिकामध्यमान्तरकान्तराल इति यावत्। अत्रापिना पूर्व्वस्यादिशस्येत्याकृष्यान्वीयते। एवमुत्तरत्रापिद्रष्टव्यम्। रुजाभिः शोणितक्षयकृताभिः स्नायूपघातकृताभिश्च नानाविधाभिर्वेदनाभिरित्यर्थः। एतेनोपरिष्टात् बन्धेन चेत् शोणितमवतिष्ठते सीवनेन स्नायुश्च संयुज्यते तर्हि न मरणमित्यापाततोऽर्थाच्छिन्ने सत्यपि कथञ्चिद्बन्धनसीवनयोरत्यये शैथिल्ये वा प्रभावात् पुनरपि शोणितं प्रवर्त्तते वेदनाश्च प्रवर्द्धन्ते इत्यस्य मर्म्मत्वेनोपदेशोनानुपपन्नः। एवमेवेतरत्रापि निपुनं विभाव्य मर्म्मत्वे हेतुर्व्विवेक्तव्यः॥ ३२—३४॥

क्षिप्रस्येति। उभयत उभयाङ्गुलितो द्व्यङ्गुले इतियावत् "तस्योर्द्ध्वं द्व्यङ्गुले कूर्चः" इति तन्त्रान्तरञ्च। कुच्यते आकुच्यत इति कूर्चः। क्षिप्रघटिकायाः स्नायु स्तदर्थाङ्गुलप्रधानो मर्म्मविशेषः। एवमेवकूर्चशिरोऽपि व्याख्येयम्। पार्ष्णिमित्यादि। अत्र जङ्घामध्ये इत्यविशेषेऽपि मांसपिण्डिकावच्छेद-

जङ्घोर्व्वोः सन्धाने जानु नाम ; तत्र खञ्जता ॥ ३९ ॥

जानुन ऊर्द्धमुभयतस्त्र्यङ्गुलादाणिर्नाम ; तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च ॥ ४० ॥

ऊरुमध्ये उर्व्वी नाम ; तत्र शोणितक्षयात् सक्थिशोषः ॥ ४१ ॥

उर्व्व्या ऊर्द्धमधोवङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम ; तत्र लोहितक्षयेण पक्षाघातः ॥ ४२ ॥

वङ्क्षणवृषणयोरन्तरे विटपं नाम ; तत्र षाण्डामल्पशुक्रता वा भवति । एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि ॥ ॥ ४३ ॥

---

इत्युक्तेयम् । इन्द्रस्य जीवाभिधेयस्येश्वरस्य वस्तिर्वसतिरिवेतीन्द्रवस्तिर्नाम तत्तद्धृदयव्याख्यानावसरे व्याहृतायाः सिरायाः शाखाद्वितयप्रभवभूतास्थ्यनुशाव्यर्द्धाङ्गुलमितः शाखास्कन्धसंपृक्तो मांसमर्म्मविशेषः । जानुनो जानुपृष्ठस्य, उभयतो द्व्यङ्गुलादित्यर्थः । आणी रथचक्राग्रवर्त्ती कीलको यथा रथचक्रं यथावद्धारयति तथेयं शरीरसमाख्यस्य रथस्य चक्रभूतं पादमित्याणिसाम्यात् जानुपृष्ठगता त्वगनन्तरा स्नायुरप्याणिरुच्यते । अत्र "जानुनस्त्र्यङ्गुलादूर्द्धमाणी" इति तन्त्रान्तरन्तु प्रायिकत्वादविरुद्धम् । ऊरुमध्ये इति त्रेधाविभक्तस्योरोरुपरितनभागद्वयावसाने ऊरुगतगम्भीरधात्वनुप्रविष्टसिरैकाङ्गुलप्रधानोमर्म्मभेदः । शोणितक्षयादित्यस्मादेव विपर्य्यये हि मरणमनिवार्य्यं भवति ॥ ३५—४१ ॥

उर्व्व्या इत्यादि । वङ्क्षणसन्धेरध इति सार्द्धाङ्गुलात् द्व्यङ्गुलाद्वेत्येव । यस्मिन्यथाकथञ्चिदुपहते लोहितं सम्यक् चायति स्रावेण क्षिणोति तल्लोहिताक्षं नाम मांससंश्रयः शिराशाखासन्धिभेदः । विटपं शाखाविस्तारं करोतीति विटपम् ॥ ४२—४३ ॥

एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ ४४ ॥

विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि, तानि बाहौ मणिबन्धकूर्परकक्षधराणि । यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरम् ; तस्मिन् विद्धे त एवोपद्रवाः । विशेषतस्तु मणिबन्धे कुण्ठता । कूर्पराख्ये कुणिः । कक्षधरे पक्षाघातः ॥ ४५ ॥

एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि ॥ ४६ ॥

अत ऊर्द्ध्वमुदरोरसोर्मर्म्मस्थानान्यनुव्याख्यास्यामः ॥ ४७ ॥

तत्र वातवर्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म तत् सद्योमारकम् ॥ ४८ ॥

---

अतिदिष्टेषु मध्ये त्रीणि मर्माणि नामतो विशिनष्टि विशेषत इति । तुकारः पूर्व्वपक्षव्यावृत्त्यर्थः । न तावदेतावता कोऽपि भिषजो बाहौ विटपं निर्देष्टुमर्हन्तीति स्फोरयति यथेति । वक्षः कक्षयोर्मध्य इति तु पृष्ठवंशात् ग्रीवांसांसान्तरतः कक्षपार्श्वावलम्बित्वेन कल्पनीयम् । सक्थिमर्मोपदिष्टा एवोपद्रवा बाहुमर्मस्वतिदिश्यन्ते तस्मिन्निति । तस्मिन्निति तदा क्षिप्रादीनि बाहुमर्म्माणि परामृश्यन्ते, तेष्वेकवचनन्तु "नपुंसकमनपुंसकेन" इत्येकशेषएकवद्भावात् बाहुगतक्षिप्रादिष्वित्यर्थ । ते सक्थिमर्मविद्धोपदिष्टा एवेत्यर्थः । उक्तापवादमाह विशेषत इति । कुण्ठताऽकर्म्मण्यता हस्तस्येति तात्पर्य्यम्, कुणिः कुत्सितकरः ॥ ४४—४६ ॥

अत इत्यादि । स्थूलान्त्रासिमुखे संसक्तं स्थूलान्त्रप्रतिबद्धम् । न तावत् गुदोर्द्ध्वप्रदेशस्यैव शिरादिभिः समभिव्याहारात् मर्म्माधिष्ठानत्वेऽभ्युपगमेऽपि

अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम; तत्रापि सद्योमरणमश्मरीव्रणादृते । तत्राप्युभयतो भिन्ने न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति, स तु यत्नेनोपक्रान्तो रोहति ॥ ४९ ॥

पक्वामाशययोर्मध्ये शिराप्रभवा नाभिर्नाम तत्रापि सद्य एव मरणम् ॥ ५० ॥

---

गुदंनाम मर्म्मेति विगतिपिडं भवति तदधिष्ठानत्वान्मज्ञाः क्षोभन्तीतिवत् । तथाच भगन्दरं प्रतीकर्त्तुं शिरादिविरहिते गुदावकाशे विवक्षितश्छेदो नानुपपन्नः । अल्पेत्यादि । वस्तिरयमधोमुखः सावरणश्चोपरिगतेन पथाहेंनेत्यवोचास । तत्र हि विद्धे तदावरणानुप्रविष्टं मूत्रमुपस्नेहन्यायेन मांसमनुप्रविश्य रक्तं दूषयच्छोथादींश्च नानाविधानुपद्रवानापादयत् समूलघातमुपहन्त्यातुरमाश्वेव, यत्र पुन र्निरावरणत्वेन निरत्यये वस्तेःपूर्व्वार्द्धे अश्मर्य्याहरणार्थं व्रणः क्रियते तत्रतु विद्धे दुःखेनोत्तिष्ठन्त्यातुराः प्रादेणेत्याह अश्मरीति । अश्मरीव्रणादश्मरीव्रणाधिष्ठानादृते सावरणे देशे इति यावत्, तत्र वस्तौ विद्धस्यापीति योजना । पुनर्विशिनष्टि तत्रापीति । तत्राऽश्मरीव्रणाऽधिष्ठाने ऽप्युभयतः उभयस्मिन् पार्श्वे भिन्ने न जीवति वस्तेरल्पमांसशोणितत्वेन व्रणयोरनुपसंरोहादित्याकूतम् । नाऽपि चैकस्मिन् भिन्ने सुखमुपरोहेदित्याह एकत इति । यत्नेन मूत्रस्य स्रमार्गप्रतिपत्तये शलाकाप्रणयनादिना यथावद्भेषजोपयोगेनेत्यर्थः ॥ ४७—४९ ॥

अत्राप्रयोजकत्वेऽपि प्रसङ्गाद्गर्भशरीरमात्रविषयं नाभिसमाख्यं मर्म्मोपदिशति पक्वेत्यादिना । पक्वामाशययोर्मध्ये क्षुद्रान्त्रामाशयांशविशेषयोरन्तराले प्रायेणादिमपञ्चाङ्गुलेनाविनाकृतस्य क्षुद्रान्त्रस्योपरिष्टादामाशयदक्षिणांशस्याधस्तादिति यावत् । दृश्यते हि पृष्ठवंशस्याभ्यन्तरवर्त्तिपार्श्वावलम्बिनीभ्यां स्थूलसिराभ्यां निःसृते द्वे शाखे वस्तिमुभयतोऽनुसृत्य नाभ्या-

स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम ; तत्र सद्यएव मरणम् ॥ ५१ ॥

स्तनयोरधस्ताद्‌द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्मणी ; तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते ॥ ५२ ॥

स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम ; तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते ॥ ५३ ॥

अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम ; तत्र रक्तेन पूयभावं गतेन मरणम् ॥ ५४ ॥

---

कारेण परिणमतस्तदिदमुच्यते शिरेति । शिरे प्रभव उत्पत्तिस्थानमस्या इति शिराप्रभवा । तेहि पुनः शिराशाखे जातान्तरकालं नाडीच्छेदिकरी सर्व्वगः कर्म्मणा तिरश्चिनायेते तदस्य गर्भशरीरमात्रविषयत्वं साम्प्रतमित्यध्यवस्यामः ॥ ॥ ५० ॥

हृदयं हि दक्षिणभागे तृतीयपर्शुकासंश्रयोरोस्थिमूलात् द्व्यङ्गुलान्तरितं द्वेधा विभक्तयोः फुफ्फुसयोः सन्धिसमाख्यं देशं मूलेनाऽधिष्ठाय तयोर्विभक्तभागयोरन्तराले तिर्य्यग्भावेन वामं स्तनं द्व्यङ्गुलतो वामे हित्वा षष्ठपर्शुकासान्निध्यमधितिष्ठति तदिदमुच्यते स्तनयोरिति । आमाशयाभिमुखं द्वारं द्वाराकारोभागोऽस्यास्तीत्यामाशयद्वारं, तस्मिंश्च हृदये मनोऽवतिष्ठते तच्च सत्त्वादिमत् तदिदमुच्यते सत्त्वेत्यादि । स्तनयोरिति । अवक्षपृष्ठतोनिःसृते ये द्वे सिरे षष्ठीं सप्तमीं वा तरुणास्थिपर्शुकामवाप्य द्वे द्वे भवतः शाखाकारेण, तयोरेकैकया शाखया स्नाय्वादिसमन्वयात् स्तनयोरधस्तादेते मर्म्मणी निर्वर्त्तेते इत्यध्यवसितव्यम् । उभयत इति प्रथमान्तात् सार्व्वविभक्तिकास्तसिल् उभयं द्व्यङ्गुलं स्थानमित्यर्थः । कोष्ठोऽत्र फुफ्फुसः । स्तनेत्यादि । वचनमिदमनुसन्धेयम् । अंसेत्यादि । ककुदपरपर्य्यायोऽयमंसकूटशब्दो भक्त्या

उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम ; तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मरणम् ॥ ५५ ॥

एवमेतान्युदरोरसोर्द्वादश मर्म्माणि व्याख्यातानि ॥५६॥

अतऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः ॥ ५७ ॥

तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी ; तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते ॥ ५८ ॥

पार्श्वजघनवहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी ; तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च ॥५९॥

---

नराणां स्तन्भस्थे मांसे प्रवर्त्तते इत्यवश्यं वक्तव्यं मनुष्याधिकारत्वाच्छास्त्रस्येत्युन्नेयम् । उभयत्रेति । नाडीशब्देनेह वातवहत्वेन विवक्षितासु वक्षोगतासु सिरासु मध्ये फुफ्फुसाद्धृदयगामिन्यौ स्नायुसचिवे द्वे सिरे लक्ष्येते इति गम्यते तत्र विद्धस्य मरणप्रकारमाभसमौक्ष्य । इह हि काष्ठशब्देन फुफ्फुस एवावबुध्यते कासेत्यादिविशेषणात् ॥ ५१—५६ ॥

अत इत्यादि । पृष्ठवंशं पृष्ठवंशपुच्छसंसक्तत्वेन तदग्रतिभातस्य नितम्बप्रदेशस्योभयत उभयपार्श्वे इत्यर्थः । प्रतिश्रोणीकाण्डमिति प्रतिरयं भागार्थः, काण्डं शाखेतिपर्य्यायौ, श्रोण्याः सव्यापसव्यभागइत्यर्थः । अस्थिनी अधन्छिद्रे किञ्चित् साचीकृते जङ्घा धोमिथः संयुक्ते द्वे कपाले इत्यर्थः । शोणितक्षयस्तत्र सिराभिघातःहेदितव्यः । पार्श्वेत्यादि । अत्र संशयः किं जघन शब्देन कटिसामान्यमभिधीयते उत स्त्रीकट्याः पुरोभाग इति, कुतः संशयः, उभयत्र प्रयोगदर्शनात् । स्त्रीकट्याः पुरोभागे तावत् सुप्रसिद्धो जघनशब्दः कटिसामान्येऽपि क्वचित् प्रयुज्यमानो दृश्यते "पीनस्तन जघनायाः" इति । किंपुनरत्र युक्तं कटिसामान्यमिति, कुतः, अविशेषेणेह

श्रोणिकाकाण्डयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम ; तत्राधःकायशोषो दौर्बल्याच्च मरणम् ॥६०॥

अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम ; तत्र लोहितपूर्णकोष्ठतया म्रियते ॥ ६१ ॥

---

स्त्रीपुंसोरुभयोरेव मर्मोपदेशात् । एवं कटिसामान्यवचनस्यास्य जघनशब्दस्य तद्गतेऽस्थ्नि तात्पर्यमिति बुद्धिमारोहति कुकुन्दराधिष्ठानत्वेनाऽभिधानात् । तथाच पार्श्वजघनबहिर्भागे इति जघनयोः कटिकपालयोः पार्श्वे इतिपार्श्वजघने तयोर्बहिर्भागेऽधःप्रदेशे, पृष्ठवंशमुभयतः पृष्ठवंशत्वेन विजृम्भितयो र्नितम्बाख्योरुभयपार्श्वे नातिनिम्नेऽधस्तादाहतत्वेनानतिगम्भीरे कुकुन्दरे आवर्त्ताकारे हे शुषिरे इत्यर्थः । तत्रविद्धस्य स्पर्शाज्ञानतादि स्नायूपघाताद् भवतीति मन्तव्यम् ॥ ५७—५८ ॥

इदमत्रासनन्ति "श्रोणिगुदयो रुपर्यधो नाभेः पक्काशयः" इति । श्रोणिकाण्डे फलवस्थितेऽत्र द्वे कपाले किञ्चित् साचीकृते इत्यावोचाम, तदिदानीमूर्द्ध्वाधःसंयुक्तयोरनयोर्मध्यगतेनान्तरेण पक्काशयस्य योऽंशो दृष्टिपथ मारुणद्धि तदाच्छादनौतु नितम्बाविलुपदिशन्नाह श्रोणीति । श्रोणिकाण्डयोर्द्वयोः श्रोणिकाण्डयोः समुदितायाः श्रोण्या इति यावत्, उपर्युपरिगतस्याशयस्य पक्काशयस्याच्छादनौ उपर्याशयाच्छादनौ, अन्यानि पार्श्वानि पार्श्वान्तराणि श्रोणिकाण्डगतयोः प्रागुक्तयोरस्थ्नोश्चतुष्पार्श्वानीति यावत्, तैर्दृढ़मासक्तौ, पार्श्वान्तरप्रतिबद्धौ ऊर्द्ध्वाधः संयोगसचिवौ नितम्बौ नामेति योजना ॥ ६० ॥

सन्धीति पृष्ठवंशस्योभयपार्श्वात्तिर्यग्भावेन कटिकपालयोः पार्श्वं मध्यञ्चाधिष्ठाय कुकुन्दरमध्यतोऽधः प्रवृत्ते द्वे सिरे पार्श्वसन्धीति प्रसिद्धे इत्याह अधं इति । अधः पार्श्वान्तरेति प्रत्यासत्त्या श्रोणिकाण्डयोरेव अन्तरं छिद्रमिति

स्तनमूलादुभयतः पृष्ठवंशस्य बृहत्यौ नाम; तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते ॥ ६२ ॥

पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम; तत्र बाह्वोः स्वापः शोषो वा ॥ ६३ ॥

बाहुमूर्द्धग्रीवामध्येऽंसपीठस्कन्धनिबन्धनावंसौ नाम; तत्र स्तब्धबाहुता ॥ ६४ ॥

एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि ॥ ६५ ॥

अत ऊर्द्धमूर्द्धजत्रुगतानि व्याख्यास्यामः ॥ ६६ ॥

तत्र कण्ठनाड़ीमुभयतश्चतस्रो धमन्यः—द्वे नीले द्वे च मन्ये व्यत्यासेन; तत्र मूकता स्वरवैकृतमरसग्राहिता च ॥६७॥

---

पर्य्यायौ। तथाच अधःपार्श्वान्तरप्रतिबद्धौ कुकुन्दरप्रतिबद्धाविति तात्पर्य्यम्। जघनपार्श्वमध्ययोः कटिकपालयोः पार्श्वे मध्ये च, तथा जघनात्तिर्य्यगूर्द्धमूर्द्धप्रदेशे पृष्ठवंशस्योभयपार्श्वे इति यावत्, सिरामर्म्मत्वेनोपदेशात् वर्त्तमानौ स्नायुसङ्घातौ सिराविशेषौ पार्श्वसन्धी नामेति ग्रहीतव्यम्। स्तनमूले लचीक्षत्य ऋजुशलाकाविधन्यायेन पृष्ठवंशस्योभयपार्श्वे हि बृहत्यौ वर्त्तेते तदिदमुच्यते स्तनेत्यादि। उभयतउभयपार्श्वे। पृष्ठेत्यादि। अंसगतं हि त्रिकसंसाधकांसफलाग्रसन्निपातमुपदिशन्ति तदिद मुच्यते त्रिकेति। त्रिकसम्बद्धे इति संपूर्व्वस्य बन्धेरर्थानुसन्धानात् त्रिकसम्बन्धिनी इत्यर्थः, त्रिकोपादानभूते इति निष्कर्षः। अनयोश्चाचकेण सह संयोगसन्निकर्षेऽधोभागेऽर्द्धाङ्गुलं मर्म्मेति विवेक्तव्यम् तत्रैव स्नायून्वयादित्याहुः। बाह्वित्यादि। बाहुमूर्द्धा बाहुशिरः ॥ ६१—६५ ॥

तत्र इत्यादि। सिरे च धमन्यौचेति धमन्यः "विरूपाणामपि समानार्थानाम्" इत्येकशेषः। सिराधमन्योः समानार्थतातु कथञ्चित् धमनीव्याकरणे

ग्रीवायामुभयतश्चतस्रः शिरामातृकाः ; तत्र सद्योमरणम्

शिरोग्रीवयोः सन्धाने कृकाटिके नाम ; तत्र चलमूर्द्धता

कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम ; तत्र वाधिर्य्यम् ॥७०॥

घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम ; तत्र गन्धाज्ञानम् ॥ ७१ ॥

भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम ; तत्रान्ध्यं दृष्ट्युपघातो वा ॥ ७२ ॥

भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम ; तत्राप्यान्ध्यं दृष्ट्युपघातश्च ॥ ७३ ॥

भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम ; तत्र सद्योमरणम् ॥ ७४ ॥

शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम ; तत्र सशल्यो जीवति पाकात् पतितशल्यो वा, नोद्धृतशल्यः ॥ ७५ ॥

---

व्यक्तीभविष्यति। नीला नीलवर्णा धमनीति यावत्, मन्या कण्ठशिरेत्यायुर्वेदे प्रसिद्धम्। व्यत्यासेन विपर्य्ययेण नीलामन्याविभागेनेत्येतत्। एता हि शिरस्तः कण्ठनाडीमुभयतः प्रसृत्य शाखाविभागेन कण्ठाऽधोभागं जिह्वातलञ्चाधितिष्ठन्ति तदिदं साम्प्रतं भवति तत्र मूकतेत्यादि। ग्रीवायामित्यादि। शिराणां मातर इव शिरामातृकाः ककारोऽयमनन्यार्थः। सन्धानं सन्धिः। कर्णेत्यादि। कर्णपृष्ठतः कर्णपृष्ठस्याभ्यन्तरत इत्यर्थः, तथैव परिलक्षितत्वात्। विधुरे नाम

भ्रुवोर्मध्ये स्थपनी नाम ; तत्रोत्क्षेपवत् ॥ ७६ ॥

पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम ; तत्रोन्मादभयचित्तनाशैर्मरणम् ॥ ७७ ॥

घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां शिराणां मध्ये शिरासन्निपातः शृङ्गाटकानि ; तानि चत्वारि मर्म्माणि ; तत्रापि सद्योमरणम् ॥ ७८ ॥

मस्तकाभ्यन्तरोपरिष्टात् शिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिः ; तत्रापि सद्योमरणम् ॥ ७९ ॥

एवमेतानि सप्तत्रिंशदूर्द्ध्वजत्रुगतानि मर्म्माणि व्याख्यातानि ॥ ८० ॥

---

स्नायुमर्म्मविशेषो । घ्राणेत्यादि । स्रोतोमार्गप्रतिबद्धे स्रोतोमार्गत्वगाहते इति तात्पर्य्यम् । भ्रूपुच्छेत्यादि । अत्र पूर्व्वस्मादभ्यन्तरत इत्यनुक्तोऽप्यन्वेयम् । भ्रुवोरित्यादि । भ्रुवोरिति भ्रूशब्दो भ्रूपुच्छान्तभागमेव लक्षयतीति गम्यते आवर्त्तेतिसंज्ञाकरणात् । आवर्त्तोजलभ्रमस्तत्सास्यादावर्त्तौ नाम शङ्खसन्धी इत्युपदेष्टव्यम् । मस्तकेति । पृष्ठवंशादुद्गतं हि शिराजातं मुस्तुलुङ्गाधिष्ठानभूतं शिरसोऽधःकपालं प्रोङ्गिय तदुपरि सन्निपतत्यश्वरोम्नामावर्त्ताकारेणेति युक्तमुक्तं मस्तकेति । उपरिष्टादिति शिरसोऽधः कपालस्येत्येव । नेह रोमावर्त्तेति दृष्टान्तोऽनुपपन्नोविवक्षितरोमानूकसिरास्नायुनुविद्धगोलत्वात् । न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् किञ्चित् विवक्षितांशं मुक्ता सर्व्वसारूप्यं केनचिद्दर्शयितुं शक्यते, सर्व्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । स च रोमावर्त्ताकारः सिरासन्निपातोऽनिर्व्वचनीयं विन्यस्तेन शाखाप्रशाखाविशेषेण सर्व्वं मुस्तलुङ्गमाप्याययञ्छरीरमिदं परिपाति शश्वदित्युपयन्नं भवत्यधिपतिरिति ॥ ६६—८० ॥

भवन्ति चात्र ।

जान्वोः शिरांसि विटपे च सकक्षपार्श्वे
एकैकमङ्गुलमितं स्तनपूर्व्वमूलम् ।
विद्यादङ्गुलद्वयमितं मणिबन्धगुल्फं
त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥
हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्द्ध्नि
चत्वारि पञ्च च गले दश यानि च द्वे ।
तानि स्वपाणितलकुञ्चितसम्मितानि
शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम् ॥
एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः
शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म ।
पार्श्वाभिघातितमपीह निहन्ति मर्म्म
तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम् ॥ ८१ ॥
छिन्नेषु पाणिचरणेषु शिरा नराणां
सङ्कोचमीयुरसृगल्पमतो निरेति ।

---

जान्वोः इत्यादि । शिरांसीत्यनेन कूर्च्चशिरांस्येवाभिप्रेयन्ते भीमो भीमसेन इतिवदेकदेशेन समुदायार्थावगमात् । कक्षयोः समीपभवाभ्यां कक्षधराभ्यां सह वर्त्तमाने इति सकक्षपार्श्वे "पार्श्वः समीपे" इति हेमचन्द्रः ॥
एकैकं प्रत्येकम् अङ्गुलमित मिति "नपुंसकमनपुंसकेन"–इत्येकवत् नपुंसकत्वञ्च । कूर्पराभ्यां सह सपरं सद्वितीयं जानु च । त्रीण्येव प्रत्येकं त्र्यङ्गुल-

प्राप्यामितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं
गच्छत्यतीव पवनश्च रुजं करोति ।
एवं विनाशमुपयान्ति हि तत्र विद्धा
वृक्षा इवायुधविघातनिकृत्तमूलाः ॥
तस्मात् तयोरभिहतस्य तु पाणिपादं
छेत्तव्यमाशु मणिबन्धनगुल्फदेशे ॥ ८२ ॥
मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति
यस्माच्च मर्म्मसु हता न भवन्ति सद्यः ।
जीवन्ति तत्र यदि वैद्यगुणेन केचित्
ते प्राप्नुवन्ति विकलत्वसंशयं हि ॥ ८३ ॥
सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला
जीवन्ति शस्त्रविहतैश्च शरीरदेशैः ।

---

मेव नपुनरन्यथेत्येवकारार्थः । हृदादीनां समाहारो हृद्वस्तिकूर्च्चगुदनाभि, मूर्द्ध्नि चत्वारि शृङ्गाटकानि, पञ्चच सीमन्ताः गले दशहे इति नीला-मन्या-मातृका-संख्यामात् प्रत्येतव्यम् स्वपाणितलकुञ्चितसम्मितानि मुष्टिप्रमाणानीत्यर्थः । एकान्ततो मर्म्माणि परिहर्त्तव्यानीत्याह पार्श्वेति । क्षिप्रेषु तलहृदयेषु चोपहतेषु विवच्चितं मणिवन्धगुल्फच्छेदं युक्त्या समन्वेतुमिदमुच्यते छिन्नेष्विति । एतत्तु प्रतिहतवन्धादिक्रियान्तरविषयमित्युपदिशन्त्याचार्य्याः ॥ ८१—८२ ॥

छिन्नैश्च सक्थिभुजपादकरैरशेषै-
र्येषां न मर्म्मपतिता विविधाः प्रहाराः ॥ ८४ ॥

सोमसारुततेजांसि रजःसत्त्वतमांसि च ।
मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ॥
मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ॥ ८५ ॥

इन्द्रियार्थेष्वसम्प्राप्तिर्मनोवुद्धिविपर्य्ययः ।
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ॥
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ।
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ॥
हते वैकल्यजनने केवलं वैद्यनैपुणात् ।
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ।
विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम् ॥
रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः ।
कुर्व्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥ ८६ ॥

छेदभेदाभिघातेभ्यो दहनाद्दारणादपि ।
उपघातं विजानीयान्मर्म्मणां तुल्यलक्षणम् ॥ ८७

मर्म्माणीत्यादि । चकारेण "तेषु" इत्युपक्रम्य "प्राणास्तिष्ठन्ति" इति प्रागुक्तमनुकर्षति तथाच सति प्राणाधिष्ठानत्वाच्चेत्यर्थः । उक्तमर्थं प्रपञ्चेनाव-गमयति सोमेत्यादिना । विशल्यघ्नेष्विति । चशब्दोऽयं तुशब्दस्यानिवेशी

मर्म्माभिघातस्तु न कश्चिदस्ति
योऽल्पात्ययो वापि निरत्ययो वा।
प्रायेण मर्म्मस्वभिताड़िताऽस्तु
वैकल्यमृच्छन्त्यथ वा म्रियन्ते॥ ८८॥
मर्म्माण्यधिष्ठाय हि ये विकारा
मूर्च्छन्ति काये विविधानराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति
नरस्य यत्नैरपि साध्यमानाः॥ ८९॥

इति सुश्रुतसंहितायां शारीरस्थाने प्रत्येकमर्म्मनिर्देश-
शारीरं नाम षष्ठोऽध्यायः॥ ६॥

---

याक्यमेदप्रयोजनः। अयमर्थः विशल्यघ्नेषु विद्धेषु तत्कारणं तन्मृत्युहेतु-
र्विघ्नेयं यत्तु पूर्व्वोक्तं वायोर्निर्गमनरूपमित्येतत्। रुजेत्यादि। अन्ते परिणामे।
मर्म्मविद्धलक्षणानि मर्म्मच्छेदादावतिदिशति च्छेदेत्यादिना। परिशिष्टं
निगदव्याख्यातम्॥ ८३—८९॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
शारीरस्थाने प्रत्येकमर्म्मनिर्देशोनाम षष्ठोऽध्यायः।

# सप्तमोऽध्यायः ।

अथातः शिरावर्णनविभक्तिंनाम शारीरं व्याख्यास्यामः ॥१॥

सप्त शिराशतानि भवन्ति ; याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानाः। तासां नाभिर्मूलं, ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च ॥ २ ॥

---

प्राग्व्याचिख्यासितत्वेनोररीकृतेष्वर्थेषु मध्ये इदानीं सिरैवानुक्रान्तेति सिरावर्णनविभक्तिं नाम शारीरमधिकरोति अथात इत्यादिना। वर्णनं गुणकर्म्माभिधानं विभक्तिश्च तैस्तैर्भावाविशेषैर्विभागः। सिराणां वर्णनविभक्ती अत्रेति सिरावर्णनविभक्तिः ॥ १ ॥

भगवन् कांकारिं कुर्व्वत्यः कति नाम शिरा अस्मिन् शरीरे वर्त्तन्ते आहोस्वित् किमिवैताः प्रतन्वन्त्युताहो किंमूलाश्च ता इत्येवं विवक्षूनपाकरोति सप्तेति। आराम उपवनं, जलहारिणी प्रणाली, केदारः क्षेत्रम्, कुल्या अल्पा कृत्रिमा नदी, सेवनीनां सेवनीसदृशानां शिराणां, प्रतानाः विस्ताराः। अत्र नाभिर्मूलमिति नाभिशब्दोऽविशेषप्रवृत्तोऽपि गर्भस्य नाभिमेवाधिकरोतितीति निश्चीयते तस्याएव हेरकसिराधमन्यात्मकत्वेन शिरामूलतया विजृम्भितत्वात्, जातोत्तरकालन्तु पुनरष्टमे नवमे वाऽह्नि सिरावल्मन्त्र्विनाछातत्वेन समूलकाषमाकाषाच्च ॥ २ ॥

भवतश्चात्र ।

यावत्यस्तु शिराः काये सम्भवन्ति शरीरिणाम् ।
नाभ्यां सर्व्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥ ३ ॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता ।
शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ ४ ॥

---

तासामित्याद्युक्तमर्थं स्फुटीकृत्य श्लोकेनावगमयति । यावत्यइति । इहापि शरीरिणामिति शरीरिशब्देन गर्भएवाभिप्रेयतइति गम्यते सम्भवन्तीति निर्द्देशात्, सम्पूर्व्वोहि भवतिरुत्पत्त्यर्थः । शिराश्च गर्भावस्थायामेवोत्पद्यन्ते नत्वेवोर्द्धमित्यतः प्राङ्नाभिशब्देन गर्भनाभेरुपादानमेकान्तेन निरङ्कुशं भवतीत्यध्यवसितव्यम् । समन्ततः सर्व्वतः प्रतन्वन्ति विस्तृन्वन्ति शरीरमूलं मातुराहाररसमाहर्त्तुमिति शेषः। यथावन्नाभिं स्तौति नाभिस्था इति । प्राणिनां प्रकृतत्वात् प्राणवतां गर्भाणामित्यर्थः । प्राणाः इहाग्नीषोमादयः प्रागुक्ता भावविशेषाः । न चात्रेयमाशङ्का कर्त्तव्या कथं नु खलु सर्व्वस्मिन् शरीरे शरीरैकदेशे चावस्थिताः प्राणा गर्भाणान्तु नाभ्यां तिष्ठन्तीत्यास्तन्न्याचार्य्या इत्याह प्राणानिति । यतो नाभिरियं प्राणान् प्राणमूलत्वेन प्राणातिदिष्टान् मातुराहाररसाहारिणो गर्भाशयगतान् शिराविशेषान् व्युपाश्रिता उल्वोद्भेदिस्तनाड़ीमूलसंसक्तापिठराकारभावविशेषानुसारिणीभिः "फुल" इति प्रसिद्धानुविद्धाभिरिति यावत्, मातुराहाररसवाहिनीभिः शिराभिरभिसृष्टा प्राणानां परिपोषकं तमेवाहाररसमाहर्त्तुमितिशेषः, तदिदमुपपन्नं भवति "नाभिस्थाः प्राणिनां प्राणाः" इत्यत्राकूतम् । न तावदद्यापि ममास्मिन्नर्थे सम्यक् प्रत्ययो जायते, यथाच नाभिवन्धंवद्धास्ताः शिरा नाभेर्वहिः स्थित्वाऽपि प्रभवन्त्यन्तर्गतं मातुराहाररसमाहर्त्तुं येनोक्तं नाभिस्थाः प्राणिनां प्राणा इत्यतः पुनरपि विशदं विज्ञापयतु भगवानित्याह

तासां मूलशिराश्चत्वारिंशत्—तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति, तावत्य एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नोः—एवमेतानि सप्त शिराशतानि ॥ ५ ॥

तत्र वातवाहिन्यः शिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्; तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ; द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य एव चोदरे, दश वक्षसि। एक-चत्वारिंशज्जत्रुण ऊर्द्ध्वं; तासां चतुर्द्दश ग्रीवायां, कर्णयो-श्चतस्रः, नव जिह्वायां षट् नासिकायाम्, अष्टौ नेत्रयोः।

---

शिराभिरिति। नाभिरियमरकैर्निखातैर्नेमिप्रसक्तैः काष्टचक्रनाभिश्चक्र-पिण्डिकेव शिराभिरिति तस्मिन् "फुल" इतिप्रसिद्धे पिठराकारे वस्तुनि निखाताभिरन्तःशुषिरानुसारिणीभिर्मातुराहाररसहारिणीभिरेवावृता सम-न्तादिदिति[?]त्यर्थः। अतो वाह्यःख्यत्वेन प्रतिभाता अपि ताः शिरा नाभेरन्तः शुषिरानुसारिणीत्वात् प्रभवन्त्यन्तर्गतं मातुराहाररसमाहर्त्तुमनायासेनेत्यय-साशयः ॥ ३—४ ॥

व्यवसितमिदं संक्षिप्तं शिराणां वर्णनं नामेदानीन्तासां प्रक्रान्तां विभक्ति-मेव प्रवर्त्तयिष्याम प्रत्याह तासामित्यादि। सर्व्वैवहत्वेन विवक्षितानामासां वातादिवाहिनीत्वेन व्यपदेशो बाहुल्यानुग्रयादिति[?]तव्यः। वातादीनां स्थानानि

एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां शिराणां व्याख्यातम् ॥ ६ ॥

एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे। एवं रक्तवहाः कफवहाश्च। एवमेतानि सप्त शिराशतानि सविभागानि व्याख्यातानि ॥ ७ ॥

भवन्ति चात्र।

क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्।
करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन् ॥ १

यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः ॥ ८ ॥

भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पत् स्वाः शिराः पित्तं कुर्य्याच्चान्यान् गुणानपि ॥ ९

यदा प्रकुपितं पित्तं सेवते स्ववहाः शिराः।

---

तु प्राग्व्रणप्रश्ने व्याहृतानि। इहापि प्राग्वत् सक्थिशब्दस्य पादाग्रादूरुपर्य्यन्ते देशे तात्पर्य्यम्। विशेषस्त्विति तुकारेणावधारयन् कोष्ठेषु शिराणां सक्थिवत् साम्येनावस्थानमैकान्तेन निरस्यति। कोष्ठे कोष्ठसामान्ये विशेषतः प्रभेदेन तारतम्येनैवेति यावत्। ताः पुनर्विभज्योपदिदिक्षति तासामिति। पृष्ठे पृष्ठवंशस्योभयत इत्यर्थः। तावत्यः षड़ित्यर्थः। तासां कोष्ठगतानामित्यर्थः ॥ ५—७ ॥

क्रियाणा मिति। बुद्धिकर्म्मणां बुद्धिकर्म्मेन्द्रियाणाममोहं दुःखाभावम्। उद्दीर्णतोत्साहशीलता भ्राजिष्णुता कान्तिः। तन्नेत्यादि। आमाशय-

तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥ ९ ॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम्।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन् ॥
यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥ १० ॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्।
स्वाः शिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि ॥
यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥ ११ ॥
नहि वातं शिराः काश्चिन्न पित्तं केवलं तथा।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः ॥
प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्।
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः ॥ १२ ॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना शिराः।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात् ॥
असृग्वहास्तु रोहिण्यः शिरा नात्युष्णशीतलाः ॥ १३ ॥
अत ऊर्द्धं प्रवक्ष्यामि न विध्येद्याः शिरा भिषक्

---

त्वादींश्च भावान् यत्नेनैव निरूपयन्ति कुशलाः। रोहिण्यो रक्तवर्णाः ॥ ८—१३ ॥

अत इत्यादि। व्याससमासाभ्यामुपदिष्टं हि शास्त्रं प्रतिपत्तोः सद्य

वैकल्यं मरणञ्चापि व्यधात् तासां ध्रुवं भवेत् ॥ १४ ॥
शिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान् ।
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि ॥
शाखासु षोड़श शिराः कोष्ठे द्वात्रिंशदेव तु ।
पञ्चाशज्जत्रुणश्चोर्द्धमव्यध्याः परिकीर्त्तिताः ॥ १५ ॥

तत्र शिराशतमेकैकस्मिन् सक्थ्नि भवति । तासां जाल-धरा त्वेका, तिस्रश्चाभ्यन्तराः—तत्रोर्व्वीसंज्ञे द्वे, लोहिताक्षसंज्ञा चैका, एतास्त्वव्यध्याः । एतेनेतरसक्थिबाहू च व्याख्यातौ । एवमशस्त्रकृत्याः षोड़श शाखासु ॥ १६ ॥

द्वात्रिंशत् श्रोण्याम् । तासामष्टावशस्त्रकृत्याः—द्वे द्वे विटपयोः कटीकतरुणयोश्च ॥ १७ ॥

अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्धगां परिहरेत् पार्श्वसन्धिगते च द्वे ॥ १८ ॥

---

प्रत्ययकरं भवतीति मन्वानः प्रथमं तावत् यत्र यावतीषु यावत्योऽव्यध्यास्तन्मात्रमुपदिदिक्षुराह शिरेति । चत्वारि शिराशतानीति चतसृणां वातादिवाहिनीनां सङ्ख्यानादेवमेवोत्तरत्रापि लक्षणीयम् । चतुःषष्टिञ्चेति चकारेण शतमित्यनुकृष्यते शतं चतुःषष्टिश्चेति निष्कर्षः । उक्तमर्थं प्रपञ्चेनावगमयति तत्रेति । अत्र चतुःशतेषु मध्ये इत्यर्थः । ऊर्व्वीलोहिताक्षञ्च द्वे मर्म्मणी प्रागुक्ते । अत्र तु तत्सम्बन्धित्वात् तदुपलक्षितास्ताद्दैरका: शिरास्तत् संज्ञयोपदिश्यन्ते उपचारादित्यनुसन्धेयम् । कोष्ठगताः शिराश्चाधिकरोति

चतस्रो विंशतिश्च पृष्ठवंशमुभयतः। तासामूर्द्ध्वगामिन्यौ द्वे परिहरेद्बृहतीसिरे ॥ १९ ॥

तावत्य एवोदरे। तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत् ॥ २० ॥

चत्वारिंशद्वक्षसि। तासां चतुर्द्दशाशस्त्रकृत्याः, हृदये द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्त्वेषूभयतोऽष्टौ—एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति ॥ २१ ॥

चतुःषष्टिशिराशतं जत्रुण ऊर्द्ध्वं भवति। तत्र षट्पञ्चाशच्छिरोधरायाम्; तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत्, द्वे कृकाटिकयोः, द्वे विधुरयोः। एवं ग्रीवायां षोड़शाव्यध्याः। हन्वोरुभयतोऽष्टावष्टौ; तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत् ॥ २२ ॥

षट्त्रिंशज्जिह्वायाम्। तासामधःषोड़शाशस्त्रकृत्याः—रसवहे द्वे, वाग्वहे च द्वे ॥ २३ ॥

---

द्वात्रिंशदित्यादिना भवन्तीत्यन्तेन ग्रन्थसन्दर्भेण। विटपादिगतानामपि सिराणामुक्तेन मर्म्मलक्षणेन विटपाद्यारम्भकत्वेनाभ्युपगमेऽपि द्वे द्वे विटपयोरित्येवं सप्तमीनिर्द्देशश्चेह वने तिलका इतिवत् कथञ्चिद्भेदविवक्षयेति मन्तव्यम्। तावत्यस्तद्विंशतिः शिरार्थः चत्वारिंशदिति। उपदिश्यतेऽपि स्तनरोहितयोरुभयतो द्वे द्वे स्तनयोरेकैकेति युक्तमुक्तमुभयतोऽष्टाविति ॥ ॥ १४—२१ ॥

द्विर्द्वादश नासायाम्। तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे ॥ २४ ॥

अष्टात्रिंशदुभयोर्नेत्रयोः। तासामेकैकामपाङ्गयोः परिहरेत् ॥ २५ ॥

कर्णयोर्दश। तासां शब्दवाहिनीमेकैकां परिहरेत् ॥ ॥ २६ ॥

नासानेत्रगतास्तु ललाटे षष्टिः। तासां केशान्तानुगताः श्चतस्रः ॥ २७ ॥

आवर्त्तयोरेकैका स्थपन्याञ्चैका परिहर्त्तव्या ॥ २८ ॥

शङ्खयोर्दश। तासां शङ्खसन्धिगतामेकैकां परिहरेत् ॥ ॥ २९ ॥

द्वादश मूर्द्धि। तासामुत्क्षेपयोर्द्वे परिहरेत्, सीमन्तेष्वेकैकामेकामधिपताविति ॥ ३० ॥

---

चतुरित्यादि। अष्टौ मातृकाः चतस्र इति तु मन्यानीलासञ्ज्ञानात्। हनोरुभयतो ऽष्टावष्टावित्यपि शिरोधरागता एवेत्युन्नेयम्। अधःषोड़शेष्वशस्त्रकृत्याः अधःषोड़शाशस्त्रकृत्याः। रसवहे द्वे इत्यादिना ऽनन्तरोपदिष्टाश्चतस्र इति योजना। रसवहे द्वे सेवन्या उभयतो लक्षितव्ये वाग्वहे च द्वे तदुपरीत्युपदिशन्त्याचार्य्याः। औपनासिक्योनासासमीपवर्त्तिन्यो नासातलेपार्श्वगता इति निष्कर्षः। उद्दिश्यते अन्विष्यतेऽनेति उद्देशो ऽवकाशः। नासेत्यादि। अत्र षष्टिरित्युक्तेऽपि नासागताः षट् नेत्रगताश्चतुर्व्विंशतिरेव-

एवमसञ्जत्या: पञ्चाशज्जत्रुण ऊर्द्धमिति ॥ ३१ ॥

भवति चात्र ।

व्याप्नुवन्त्यभितो देहं नाभित: प्रसृता: शिरा: ।
प्रताना: पद्मिनीकन्दाद्विसादीनां यथा जलम् ॥ ३२ ॥

इति सुश्रुतसंहितायां शारीरस्थाने शिरावर्णनविभक्तिर्नाम शारीरं सप्तमोऽध्याय: ॥ ७ ॥

---

ललाटे दृश्यते, अथ चेत् शिराशब्देन "सिराविकारा एव धमन्य:" इति पराभिमतसाम्यित्योभे एव सिराधमन्यौ परिगृह्येते तर्हि नानुपपत्ति: । तासामित्युत्तरत्राप्यनुपद्यते । तासां ललाटानुसारिणीनां नासानेत्रगतानामित्यर्थ:। सीमन्तेषु पञ्चस्वित्युक्तेयम् । उपसंहरति व्याप्नुवन्तीति । यथा पद्मिनीकन्दात् प्रसृता निर्गता विसादीनां विसमृणालानां प्रताना जलं व्याप्नुवन्तीत्यन्वय: । परिशिष्टं निगदव्याख्यातम् ॥ २२—३२ ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये शारीरस्थाने शिरावर्णनविभक्तिर्नाम शारीरं सप्तमोऽध्याय: ।

---

# अष्टमोऽध्यायः ।

अथातः शिराव्यधविधिशारीरं व्याख्यास्यामः ॥ १ ॥

बाल-स्थविर-रुक्ष-क्षतक्षीण-भीरु-परिश्रान्त-स्त्रीमद्याध्व-कर्शित-मत्त-वान्त-विरिक्तास्थापितानुवासित-जागरित-क्लीब-कृश-गर्भिणीनां कास-श्वास-शोष-प्रवृद्धज्वराक्षेपक-पक्षाघातो-पवास-पिपासा-मूर्च्छाप्रपीड़ितानाञ्च शिरां न विध्येत्, याश्चा-व्यध्याः व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिता इति ॥ २ ॥

शोणितावसेकसाध्याश्च विकाराः प्रागभिहितास्तेषु चाप-

---

नह्यनुपदिष्टानां व्यधेन परिहर्त्तव्यानां शिराणां विज्ञानादेव शिराव्यधं चिकीर्षन्तो भिषजः सहस्रमपि सम्भूय प्रभवन्ति कञ्चिदप्यातुरं सुखायुषा योजयितुं विधिवर्ज्ज्ञानापेक्षत्वाद्यथावद्व्यधनस्येति तत्त्वेदानीं शिराव्यधविधिमधिकरोति अथात इत्यादिना । परिदृष्टकर्म्माणः शल्यविदस्तत्र शिराधमन्योः प्रायेणैकरूपत्वमभिसमीक्ष्य व्यधने फलं प्रत्यविशेषाच्च शिराग्रहणेनैव धमनीनामपि परिग्रहं कुर्व्वन्ति तत्तु नासाम्प्रतमित्यनुसन्धेयम् ॥ १ ॥

न खलु विधिरयं सर्व्वत्र सिद्धिमारोहति क्वचिदपि चापादयति कष्टतमामापदमुपघातायेति प्रथमं तावद्विस्पष्टं पर्य्युदस्यति बालेति । अव्यध्याः प्रागुक्ताजालधरादयः, अदृष्टा गम्भीरगतिकत्वादृष्टिपथमनाक्रान्ताः, अयन्त्रिता अनुत्थिताश्च रक्तं न विस्रावयन्तीति प्रतिषिध्यन्ते । शोणितेत्यादि । प्रागिति शोणितवर्णनीयेऽष्टविधशस्त्रकर्म्मस्थे च । अनुक्तेषु गुल्मप्लीहादिषु, यथा-

छेद्यन्येषु चातुरेषु यथाभ्यासं यथान्यायञ्च शिरां विध्येत् ॥ ३ ॥

प्रतिषिद्धानामपि च विषोपसर्गे चात्ययिकेषु शिराव्यधनमप्रतिषिद्धम् ॥ ४ ॥

तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्म्मान्तर्व्वल्कललतानामन्यतमेन यन्त्रयित्वा नातिगाढ़ं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा शिरां विध्येत् ॥ ५ ॥

नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते ।
शिराणां व्यधनं कार्य्यमरोगे वा कदाचन ॥ ६ ॥

---

अभ्यासं यथासन्नम्, एतत्तु मुख्यानामदर्शनविषयम् । स्मरन्ति च "× × यथोक्तानामदर्शने । मर्म्महीने यथासन्ने देशेऽन्यां व्यधयेच्छिराम् ।" इति । यथान्यायं यथोचिताम्, इति तु व्यध्यासु बहीपूत्थितासु विसृश्य व्यधनार्थम् । प्रतीति । विषोपसर्गे सर्पदंशनाद्युपस्थिते तस्मिन् तस्मिन् विकारे, आत्ययिकत्वेनैवास्योपलम्भेऽपि एवमुपादानमेकान्तेनाप्रतिषिद्धत्वमाख्यातुम् । आत्ययिकेषु विसर्पादिषु । तत्रेति । उपस्थाप्य पुरोधसा देवानर्च्चयित्वेत्यर्थः । उपपूर्व्वो हि तिष्ठतिरर्च्चार्थः । "ज्ञातस्वन्त्ययनः स्निग्धरसान्नप्रतिभोजितः" इति तन्त्रान्तरञ्च । आसीनं ललाटादिगतशिराव्यधनार्थमुपविष्टम् । स्थितं पादादिगतशिराव्यधनार्थं दण्डवदवस्थितमित्यर्थः । प्राणान् यथासम्भवं प्राणत्वेनोपदिष्टान् वाय्वादीन्, अबाधमानोऽपीड़यन्, यन्त्रयित्वा शोणितगतिनिरोधेन शिरोत्थापनार्थं यथायथं्बन्धेनोपपाद्य, आसाद्याश्रित्य शिरामिति शेषः ॥ २—६ ॥

तत्र व्यध्यशिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोरुपरि कूर्परसन्धिद्वयं निवेश्य हस्तावन्तर्गूढ़ाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात् स्थितेन वाम-हस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूया-द्दक्षिणहस्तेन शिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावे-ष्टयेत्यस्रक्स्रावणार्थं यन्त्रं पृष्ठमध्ये च पीड़येति, कर्म्मपुरुषञ्च वायुपूर्णमुखं स्थापयेत्, एष उत्तमाङ्गगतानामन्तर्म्मुखवर्ज्जानां शिराणां व्यधने यन्त्रणविधिः॥ ७॥

---

तत्रेत्यादि। प्रत्यादित्यमुखमितिदर्शनसौकर्य्यार्थमिदमुच्यते तेन यथेयं सिरा स्फुटं दृष्टिपथमाक्रामति विशेषणस्यास्य तथाभूतत्वे तात्पर्य्य-मिति निश्चीयते, अपरार्थपरिग्रहे हि मध्यन्दिने कर्म्मणि कर्त्तव्ये कर्म्मपुरुष-स्योदञ्चितमुखत्वं प्रसज्येत, तन्नेष्यते क्रियाऽसौकर्य्यात्। अरत्निमात्रोच्छ्रित-मुत्थकिञ्चित्कारमिवावभाति, यस्मादेव भूमावुपविश्य कर्म्मकुर्व्वाणानामस्माकं नियमेन सिद्धत्वात्। निवेश्य संस्थाप्य, तलसंहताङ्गुष्ठेन पाणिना कृता मुष्टिर्यत तावन्तर्गूढ़ाङ्गुष्ठकृतमुष्टी परिक्षिप्य विन्यस्य यन्त्रणशाटकं यन्त्रण-वस्त्रम्, तत इति द्वितीयान्तात् सार्व्वविभक्तिकस्तसिल् तं पुरुषमित्यर्थः। नात्यायतशिथिलं नात्याकृष्टं नाऽपिच शिथिलं सममित्येतत्, यन्त्रणं यन्त्रण-शाटकम्, आवेष्टय द्विस्त्रिर्व्वाऽऽवर्त्तय चकारात् यन्त्रं यन्त्रणं यथास्यात्तथा पृष्ठमध्ये स्कन्धयोरन्तराले पीड़य आकर्षय इति च ब्रूयादित्यन्वयः। जिह्वादि-गतानां हि शिराणां यन्त्रणविधिः परस्तो निवेदयिष्यते तदिदमुच्यतेऽन्त-र्रिति। मुखस्यान्तरित्यन्तर्मुखं तद्वर्ज्यन्त्यात्रयत्नेन परित्यजन्तीति कर्म्म-

तत्र पादव्यध्यशिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्यागुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुलं पट्टादीनामन्यतमेन बद्ध्वा वा पादशिरां विध्येत् ॥ ८ ॥

अथोपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्ववद्यन्त्रं बद्ध्वा हस्तशिरां विध्येत् ॥ ९ ॥

गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परः स्यात् ॥ १० ॥

---

स्थनीत्यन्तर्मुखवर्ज्या जिह्वादिगतेतरा इत्यर्थः। अत्र "सक्थ्नोराकुञ्चितयो र्निवेश्य कूर्परसन्धिद्वयस्योपरि" इत्ययं विसंष्ठुलः पाठो नार्हति यथावद्यन्त्रणप्रकारमाख्यातुम् ॥ ७ ॥

तत्रेत्यादि। अत्र समे देश इत्यमांसलपादविषयम्। मांसलन्त्विष्टकागुडकादीनामन्यतमस्मिन्नेव स्थापनीयम् अन्यथा हि नोत्तिष्ठन्ति शिराः प्रायेण। उच्चैः कृत्वाऽवलम्बनार्थं प्रपदमात्रेण भूमौ विन्यस्येत्यर्थः। आगुल्फं गुल्फमभिव्याप्य गुल्फादूर्ध्वेत्वा जानुसन्धेरधो हस्ताभ्यां प्रपीड्य शाटकेन वस्त्रेणावेष्ट्य, पचान्तरमाह व्यध्यप्रदेशस्येति। अत्र "श्लोणादीनामन्यतमेन बद्ध्वा पादशिरां विध्येत्" इत्यसमञ्जसः पाठः आगुल्फं जानुसन्धेरधो बद्धस्य पुनर्व्यध्यप्रदेशस्योपरि चतुरङ्गुले बन्धनानर्थक्यात्, उक्तेऽस्मिन् चतुरङ्गुलमात्रे बन्धनेनापि शिरोत्थानाच्च। अथेत्यादि। पूर्ववत् पादवत् कूर्परसन्धेरधःशाटकेनावेष्ट्य व्यध्यप्रदेशस्योर्ध्वं चतुरङ्गुले वा पट्टादीनामन्यतमेन बद्ध्वेत्यर्थः। गूढाङ्गुष्ठकृतमुष्टी हस्तौ उपरिष्टादूर्ध्ववर्त्तिन्यासने सम्यक् स्थापयित्वा सुखोपविष्टस्य हस्तशिरां विध्येदित्यन्वयः। अत्र गूढाङ्गुष्ठ-

श्रोणीपृष्ठस्कन्धेषून्नमितपृष्ठस्यावाक्शिरस्कस्योपविष्टस्य विस्फूर्ज्जितपृष्ठस्य विध्येत्॥ ११॥

उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरस्कस्य विस्फूर्ज्जितदेहस्य॥ १२॥

बाहुभ्यामवलम्ब्यमानदेहस्य पार्श्वयोः॥ १३॥

अवनामितमेढ्रस्य मेढ्रे॥ १४॥

उन्नमितविदष्टजिह्वाग्रस्याधोजिह्वायाम्॥ १५॥

अतिव्यात्ताननस्य तालुनि दन्तमूलेषु च॥ १६॥

एवं यन्त्रोपायानन्यांश्च शिरोत्थापनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन व्याधिवशेन च विदध्यात्॥ १७॥

मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यात्ततोऽन्येष्वर्द्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन॥ १८॥

अस्थ्नामुपरि कुठारिकया विध्येदर्द्धयवमात्रम्॥ १९॥

---

हृतमुष्टित्वे चेच्छिरा नोत्तिष्ठेत्तदाऽऽम्रफलाकारं पाषाणादिखण्डं हस्तेन-ग्राहयित्वोक्तेन विधिना यन्त्रणं कार्य्यमित्युपदेशः। श्रोणीविद्ध्याद्यौ प्रति प्रागुक्तेषु यन्त्रणप्रकारेषु मध्ये प्रसारितसक्थिवाहुत्वमात्रं निरस्यन्नाह श्रोणीति। विस्फूर्ज्जितपृष्ठस्य आञ्चितत्वेन दृढविस्फारितपृष्ठस्य। बाहुभ्यामिति वृक्षशाखाद्यालम्बिताभ्यामेव, अवलम्ब्यमानदेहस्य उच्चैरवस्थाप्यमानशरीरस्य। अवनामितमेढ्रस्य आनमितमेढ्रस्य पक्वीकृतमेढ्रस्येति यावत्॥ ८—१९॥

भवन्ति चात्र ।

व्यभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले ।
हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥ २० ॥
सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक् ।
मुहूर्त्तं रुद्धा तिष्ठेच्च सुविद्धां तां विनिर्द्दिशेत् ॥ २१ ॥
यथा कुसुम्भपुष्पेभ्यः पूर्व्वं स्रवति पीतिका ।
तथा शिरासु विद्धासु दुष्टमग्रे प्रवर्त्तते ॥ २२ ॥
मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च ।
न वहन्ति शिरा विद्धास्तथानुत्थितयन्त्रिताः ॥ २३ ॥
क्षीणस्य बहुदोषस्य मूर्च्छयाभिद्रुतस्य च ।
भूयोऽपराह्णे विस्राव्या सापरेद्युस्त्र्यहेऽपि वा ॥ २४ ॥
रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः ।
नचातिप्रस्रुतं कुर्य्याच्छेषं संशमनैर्जयेत् ॥ २५ ॥

---

व्यभ्र इत्यादि । व्यभ्रे मेघरहिते काले स्रवेत् स्रावयेत्, रुद्धा यन्त्रं विमुच्य अङ्गुल्या पीड़िता, वस्त्रेणावेष्टिता वा तिष्ठेत् स्रावयेदसृगिति शेषः । क्षीणस्य मरणभयेन विस्रावस्य न पुनर्दुर्ब्बलस्येति वक्तव्यमेव तस्य प्राक्प्रति-षेधात्, एवमेव मूर्च्छयाभिद्रुतस्येत्यपि व्याख्येयम् प्रागुक्तानुस्मरणात् । बहुदोषस्येत्युभयत्रैवान्वीयते । अत्र बहुदोषस्येति विशेषणात् स्वल्पदोषेष्वे-तेषु नैष विधिरित्यर्थाच्चित्तं भवति । अपरदिवसपर्य्यायोऽयमपरेद्युः-शब्दोऽव्ययम् । सा शिरेत्यर्थः । अत्र कालत्रयनिर्द्देशोऽवस्थाविशेषमभि-

बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥ २६ ॥

तत्र पाददाह-पादहर्ष-चिप्प-विसर्प-वातशोणित-वात-कण्टक-विचर्च्चिका-पाददारीप्रभृतिषु क्षिप्रमर्म्मण उपरिष्टाद्-द्व्यङ्गुले व्रीहिमुखेण शिरां विध्येत् ॥ २७ ॥

श्लीपदे तच्चिकित्सिते यथा वक्ष्यते ॥ २८ ॥

क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले ॥ २९ ॥

अपच्यामिन्द्रवस्तेरधस्ताद्द्व्यङ्गुले ॥ ३० ॥

जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले गृध्रस्याम् ॥ ३१ ॥

ऊरुमूलसंश्रितान्तु गलगण्डे ॥ ३२ ॥

एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ ३३ ॥

---

समीक्ष्य यथाऽवसरं व्यधनार्थम्। बलिन इति। अत्र "वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति स्थितेऽपि बहुशोऽभिवीक्ष्य बलवत्त्वादिधर्म्मवतामिदानीं द्विपलमेव परं प्रमाण-मित्यध्यवस्यामः ॥ २०—२६ ॥

तत्रेत्यादि। पादशब्दावेतौ शाखामात्रमुपलक्षयत इति गम्यते हस्त-दाहादावप्यस्य विधेरुपयोगात्। क्षिप्रमर्म्मण इति जातावेकवचनं यथासम्भवं क्षिप्रमर्म्मण इत्यर्थः। केनचिदत्रावबाहुकोऽपि पठ्यते तन्न समीचीनं प्रती-कारविधावस्य श्रवेन जिज्ञासितत्वात्। शिरां विध्येदित्युत्तरत्राप्यनुषज्यते।

विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिकानामिकयोर्मध्ये वा ॥ ३४ ॥

एवं दक्षिणबाहौ यकृद्दाल्ये एतामेव च कासश्वासयो-रप्यादिशन्ति ॥ ३५ ॥

गृध्रस्यामिव विश्वाच्याम् ॥ ३६ ॥

श्रोणिप्रति समन्ताद्द्व्यङ्गुले प्रवाहिकायां शूलिन्याम् ॥३७॥

परिवर्त्तिकोपदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये ॥ ३८ ॥

वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च ॥ ॥ ३९ ॥

---

न तावदेकसक्थिगतशिराव्यधेनोभयसक्थिसंश्रिताव्याधयः प्रशान्तिमापद्यन्ते नापि चोभयसक्थिगतानां शिराणां व्यधेन बाहुसंश्रिता इत्याह एतेनेति। इदमत्रावधेयम्, सक्थ्नि यानि गुल्फजानूरुमूलानि बाहौ तु तानि मणि-बन्धकूर्परकक्षमूलानीति विशेषः। सक्थितो बाह्वोः किञ्चित् विशेषं दर्शयति विशेषत इति। अत्रादिशन्तीत्यनेन कासश्वासयोः सिराव्यधनं नाभिनन्द-त्याचार्य इत्याविष्कृतं भवति। अत्र "यकृद्दाल्ये कफोदरे च" इत्यनाकरः पाठः कफोदरे शिराव्यधस्यानुपयोगात्। गृध्रसीमिवेत्यनेन विश्वाच्यां कूर्परसन्धेरुपर्यधो वा चतुरङ्गुल इत्याख्यातं भवति। श्रोणीत्यादि। परि-वर्त्तिका क्षुद्ररोगभेदः। अहो गुरोरश्रुतसुश्रुतः कश्चित् मूत्रवृद्ध्यां दको-दरे च दोषोदकावसेचनार्थं विधित्सिते व्यधने एव शिराव्यधो मन्यमानोऽत्र "वृषणयोः पार्श्वेमूत्रवृद्ध्यां" तथा "नाभेरधश्चतुरङ्गुले सेवन्यावामपार्श्वे दकोदरे" इत्यश्रुतपूर्व्वमसमञ्जसपाठमचचार: स्वस्यैवाश्रुतत्वमदृष्टकर्म्मत्वमस्था-नवादित्वेन पुनर्व्यधशिरत्वख्याख्यापयतीति सुधियः शृणुध्वम् ॥ ३७—३९ ॥

बाहुशोषावबाहुकयोरप्येके वदन्त्यंसयोरन्तरे ॥ ४० ॥

त्रिकसन्धिमध्यगतां तृतीयके ॥ ४१ ॥

अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां चतुर्थके ॥४२॥

हनुसन्धिमध्यगतामपस्मारे ॥ ४३ ॥

शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादेऽपस्मारे च ॥ ४४ ॥

जिह्वारोगेष्वधोजिह्वायां दन्तव्याधिषु च ॥ ४५ ॥

तालुनि तालव्येषु ॥ ४६ ॥

कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च ॥ ४७ ॥

गन्धाग्रहणे नासारोगेषु च नासाग्रे ॥ ४८ ॥

तिमिराक्षिपाकप्रभृतिष्वामयेषूपनासिके ललाट्यामपाङ्ग्यां वा; एता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति ॥ ४९ ॥

---

पार्श्वेत्यादि । विधिरयं कफजविद्रधिविषय एवेति प्रत्येतव्यम् । वक्ष्यति हि "यथोद्दिष्टां शिरां विध्येत् कफजे विद्रधौ" इति । बाह्वित्यादि । परमतमेतत् स्वाभिमतविरुद्धमित्युपरिष्टाद्व्यक्तीभविष्यति । उरोऽपाङ्गललाटेषु गताश्चेति शेषः । दन्तव्याधिषु चेति चकारेणाधइत्याकृष्यते दन्तव्याधिषु नानाविधेषु क्रिमिदन्तेष्वधोदन्तमूले इति निष्कर्षः । तालव्येषु तालुभवेषु रोगेष्वित्यर्थः । कर्णयोरिति । तद्रोगेषु कर्णरोगेष्वित्यर्थः । एतेनैव कर्णशूलस्याप्युपलम्भेऽपि पृथगुपादानं विशेषेणोपयोगिकत्वमाख्यातुम् । उपनासिके नासिकायाः समीपे प्रकृतत्वात् शिरां विध्येदिति योजना । ललाटभवा ललाट्या एवमेवापाङ्ग्याच प्रत्येतव्या । एता औपनासिक्यादयः, प्रभृति

अत ऊर्द्ध्वं दुष्टव्यधनमनुव्याख्यास्यामः ॥ ५० ॥

तत्र दुर्व्विद्धातिविद्धा कुञ्चिता पिच्चिता कुट्टिता अप्रसुता अत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिता अनुत्थितविद्धा शस्त्रहता तिर्य्यग्विद्धा अपविद्धा अव्याध्या विद्रुता धेनुका पुनःपुनर्व्विद्धा मांसशिरास्नायुस्थिसन्धिमर्म्मसु चेति विंशतिर्दुष्टव्यधाः ॥ ५१ ॥

तत्र या सूक्ष्मशस्त्रविद्धा न व्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्व्विद्धा। प्रमाणातिरिक्तविद्धायामन्तःप्रविशति शोणितं शोणितातिप्रवृत्तिर्वा सातिविद्धा। कुञ्चितायामप्येवम्। कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता। अनासादिता पुनःपुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता। शीतभयमूर्च्छाभिरप्रवृत्तशोणिता अप्रसुता। तीक्ष्णमहामुखशस्त्रविद्धा अत्युदीर्णा। अल्परक्तस्राविण्यन्तेविद्धाऽन्तेऽभिहता। क्षीणशोणितस्यानिलपूर्णा परिशुष्का। चतुर्भागावसादिता किञ्चित् प्रवृत्तशोणिता कूणिता। दुःस्थानबन्धनाद्वेपमानायाः शोणित-

---

ग्रहणादभिष्यन्दादीनामादेशः। उक्तेष्वेतेषु रोगेषु व्यध्या इत्यूह्यम्। इति शब्दो व्यध्यानामुपदेशपरिसमाप्त्यर्थः ॥ ४०—४८ ॥

अत इत्यादि। दुष्टो व्यधो यासां ता दुष्टव्यधाः। कुञ्चिता स्वतः सङ्कुचिता। एवमतिविद्धोक्तं लिङ्गमित्यर्थः। धारादिविरहितत्वेनाकर्म्मण्यं शस्त्रं कुण्ठशस्त्रमुच्यते। पृथुलीभावः पृथुभावः सजयमनल्पार्थः। अनासादिता सम्यगनुत्थि-

सम्मोहो भवति सा वेपिता। अनुत्थितविद्धायामप्येवम्। छिन्नातिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता। तिर्य्यक्-प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा। बहुशःक्षता हीन-शस्त्रप्रणिधानेनापविद्धा। अशस्त्रकृत्या अव्यध्या। अनवस्थित-विद्धा विद्रुता। प्रदेशस्य बहुशोऽवघट्टनादारोहव्यधा मुहु-र्म्मुहुः शोणितस्रावा धेनुका। सूक्ष्मशस्त्रव्यधनाद्बहुशो विच्छिन्ना पुनःपुनर्व्विद्धा। मांसशिरास्नाय्वस्थिसन्धिमर्म्मसु विद्धा वा रुजां शोषं वैकल्यं मरणं वापादयति ॥ ५२ ॥

---

तत्त्वेनालब्धा। चतुर्थीभागश्चतुर्भागोऽन्तर्गता शोणितधरा कलेति यावत् तत्रा-ऽवसादिता सङ्कुचिततया रक्तं विस्रावयितुमक्षमा चतुर्भागावसादिता, न ताव-दर्थोऽयमनुपपन्नः "कूण सङ्कोचे" धातुस्तस्य कूणितेति रूपेण संज्ञाकरणात्। दुःस्थानम् अयथास्थानम् सुदूरमित्येत् तत्र यन्त्रणादस्थानबन्धनात् वेपमानायाः कम्पमानायाः शोणितसम्मोहः शोणितगतिनिरोधोभवति यथापदयन्त्रित-त्वादित्याकूतम्। अनुत्थितेत्यादावेवंशब्देन शोणितसम्मोहः परामृश्यते। शोणितसम्मोहोमुहुर्मुहुः शोणितगतिनिरोधः। क्रियासङ्गकरी बन्धेना-योजिता सती क्रियाणां शोणितवर्णनीयोक्तानां शोणितातिप्रवृत्तिनिमित्तानां शिरोऽभितापादीनां सम्बन्धं करोतीत्यर्थः। सङ्गो मेलनं सम्बन्धइत्यनर्था-न्तरम्। हीनशस्त्रं कुण्ठशस्त्रम्। अनवस्थितमनवस्थानं चञ्चलत्वमित्येतत्, तथाभावे विद्धा अनवस्थितविद्धा। बहुशोऽवघट्टनात् कर्म्मकर्त्तुरनैपुण्ये-नान्तःप्रविश्य स्पन्दितस्य शस्त्रस्यानेकशश्चलनात् आरोहव्यधा आरोहो दैर्घ्येणोपलक्षितो व्यधो यस्या सा तथोक्ता। मांसेत्यादि। मांसादिसमा-ख्येषुमर्म्मस्वित्यर्थः। अत्र मर्म्मणां मांसादिसन्निपातत्वेनोपदेशान्मर्म्मस्विति सिद्धमांसादिशब्दः प्रपञ्चार्थः। परिशिष्टं निगदव्याख्यातम् ॥ ५१—५२ ॥

भवन्ति चात्र ।

शिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः ।
मत्स्यवत् परिवर्त्तन्ते तस्माद्यत्नेन ताड़येत् ॥
अजानता गृहीते तु शस्त्रे कायनिपातिते ।
भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥
स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि ।
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् शिराव्यधात् ॥
शिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः ।
यथा प्रणिहितः सम्यग्वस्तिः कायचिकित्सिते ॥ ५३ ॥

तत्र स्निग्ध-स्विन्न-वान्त-विरिक्तास्थापितानुवासित-शिरा-विद्धैः परिहर्त्तव्यानि क्रोधायास-मैथुन-दिवास्वप्न-वाग्व्यायाम-यानोत्थानासन-चंक्रमण-शीत-वातातप-विरुद्धासात्म्याजीर्णान्या-बललाभान्मासमेके मन्यन्ते । एतेषां विस्तरमूपरिष्टाद्वक्ष्यामः ॥ ५४ ॥

शिराविषाणतुम्बैस्तु जलौकोभिः पदैस्तथा ।

---

शिरास्वित्यादि । शिरासु यथावच्छिराव्यधेषु शिक्षितःसंसिद्धनिपुण इत्यर्थः । ताड़येद्विध्येदिति तात्पर्य्यम् । तत्रेत्यादि । अत्र प्रकृतत्वात् शिराविद्धैरिति वक्तव्ये स्निग्धादीनामुपदेशः प्रासङ्गिकः । शिराविद्धै-रिति "वाहितान्यादिषु" द्रष्टव्यं । वाग्व्यायाम उच्चैर्भाषणम् यान-मश्वाद्यादिद्रुतयानमेव उत्थानं चिरं दण्डवदवस्थानम् , आसनं चिरोपवेशनम्

अवगाढं यथा पूर्व्वं निर्हरेद्दुष्टशोणितम् ॥ ५५ ॥
अवगाढ़े जलौका स्यात् प्रच्छानं पिण्डिते हितम्।
शिराङ्गव्यापके रक्ते शृङ्गालावू त्वचि स्थिते ॥ ५६ ॥
इति सुश्रुतसंहितायां शारीरस्थाने शिराव्यधविधिशारीरं
नामाष्टमोऽध्यायः ॥ ८ ॥

---

उपरिष्टादित्यातुरोपद्रवचिकित्सितइत्येव। उपसंहरति सिरेति। यथा-पूर्व्वं पूर्व्वाननतिक्रान्तैः शिरादिभिरवगाढ़मन्तःप्रविष्टं दुष्टशोणितं निर्हरे-दित्यर्थः। एतेनात्यवगाढ़तमं दुष्टशोणितं शिराव्यधेन गाढ़तमं शृङ्गेण गाढ़तरमलावुना गाढ़ं जलौकोभिः पारिशेष्यात्त्वक्गतत्वेनानवगाढ़न्तु पदैः प्रच्छानैरुपरिष्टाद्बद्ध्वा अधस्तादूर्द्ध्वप्रसृतेन बहुशोऽवचारितेन शस्त्रेण त्वचिक्षतैः सरलविरलैश्छेदैरितियावत् निर्हरेदित्युक्तं भवति। पक्षान्तरमवतारयति अवेति। पिण्डितं संहतं घनीभूतमित्येतत्। शिरा शिराव्यधः। न ताव-द्वचनस्यास्य पक्षान्तरविषयत्वमश्रद्धेयम् "× × प्रच्छानं पिण्डिते वा स्यादवगाढ़े जलौकसः। त्वक्स्थेऽलावुघटीशृङ्गं शिरैव व्यापके ऽसृजि" इति स्फुटवादिना वाग्भटेन वाग्वद्वोपादानात्। अतिरोहितार्थमन्यत् ॥५३—५७॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
शारीरस्थाने शिराव्यधविधिर्नाम शारीरमष्टमोऽध्यायः।

# नवमोऽध्यायः ।

अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥

चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः । तत्र केचिदाहुः शिराधमनीस्रोतसामविभागः, शिराविकारा एव धमन्यः स्रोतांसि चेति । तत्तु न सम्यक् । अन्या एव हि धमन्यः स्रोतांसि च शिराभ्यः । कस्मात् ? व्यञ्जनान्यत्वान्मूल-

---

सिरानन्तरं हि धमन्यः स्रोतांसि चैव प्रक्रान्तानीति तान्युपदेष्टुमिदानीं धमनीव्याकरणं नामाऽधिकरोति अथात इत्यादिना । धमन्यादिव्याकरणं धमनीव्याकरणं शाकपार्थिवादिषु द्रष्टव्यं, धमनीस्रोतोव्याकरणमित्येतत् परमतः स्रोतसामप्युपदेशात् ॥ १ ॥

चतुरित्यादि । अभिहिताः शोणितवर्णनीयादावुपदिष्टाश्चतुर्विंशतिर्धमन्यो नाभिप्रभवा गर्भनाभिसम्भूता इत्यर्थः । एतेन "नाभिस्थाः प्राणिनां प्राणाः" इति प्रागुक्तं सम्यङ्निरवद्यं भवति तदात्वे धमनीनामपि संश्रयेण प्राणानामभिहतेः प्रकृतमर्थमसंशयं प्रतिपिपादयिषुः प्रथमन्तावत् प्रतिकूलवादिनां मतं दूषयति तत्रेति । तत्र धमनीव्याकरणइत्यर्थः । अविभागोऽविशेषः स च पुनरितराहृत्त्येकजातिमत्वमेव एतदेव स्फोरयति सिरेति । धमन्यः स्रोतांसि च सिराविकारा एव, न पुनरन्यथेत्येवकारार्थः । तथाच सिरात्वमेषां सामान्यमिति निष्कर्षः । इति शब्दः परमतावसानार्थः । स्वमतमुपक्रमते तदिति सर्वथा प्रकृत्यनुरूपा एव विकारा भवन्तीत्यभिमानेन मतं प्रतिपक्षं हेतुमुपन्यस्यति, व्यञ्जनेति । व्यञ्जनान्यत्वाल्लिङ्गान्यत्वात्

सन्निमयात् कर्म्मवैशेष्यादागमाच्च । केवलन्तु परस्परसन्निकर्षात्

---

सिराणामिव धमनीनामपि हिराहतमांसात्मकनाडीस्वरूपत्वे सत्यपि किञ्चिन्मृदुत्वेन मन्दसङ्कोचविकाशित्वेन च, स्रोतसां पुनः स्वच्छतरतनु-कोमलपटावृतानाहतत्वेनातितरां मृदुत्वेन मन्दतरसङ्कोचविकाशित्वेन च वैशिष्ट्यादिति यावत् । अथ न खल्वे तावता दोषोऽनुपज्येत सिराविकारत्वे-नैषामुपदेशात् तथाहि विकारोनाम प्रकृतेरन्यथापरिणतिरुच्यते तथा परिणताश्च भावा दध्यादिनिदर्शनादन्यव्यञ्जनबहुला एव भवन्तीति वक्तुं साम्प्रतमित्यत आह मूलेति । नियमोऽभ्युपगमश्चेति पर्य्यायौ । तदयमर्थः । मूलानां पृथक्त्वेनाभ्युपगमो यस्मात्तस्मान्मूलसन्नियमात् सङ्घातानां मूल-सिरादीनां विजातीयत्वेनावहितमनसां प्रत्यक्षोपलम्भादिति निष्कर्षः । नहि तावत् प्रत्यक्षमात्रं नामैकान्तेन प्रमितिकरणं दृश्यते हि सतामपि भावानां करणदौर्ब्बल्यादिदोषात् प्रत्यक्षानुपलब्धिरेवञ्चेदत्राजिहीर्षसि तथा-ऽपि नैव दोषान्निर्म्मोक्षोऽस्तीत्याह कर्म्मेति कर्म्मवैशेष्यात् सिराणां धमनी-स्रोतोनिचयाजन्यकर्म्मविशेषजनकत्वादित्यर्थः । इदमत्राकूतम् महता परिकरबन्धेन शोणितसहितानां त्रयाणां वातादीनां वहनं हि सरणं तदात्मककर्म्मविशेषजनकतावच्छेदकतया निरूपिता हि सिरात्वजाति-स्तादृशकर्म्माजननीषु धमनीषु स्रोतःसु च वर्त्तितुं नैवोत्सहते अनति-प्रसक्तस्यैवावच्छेदकत्वनियमात् ; जोषमास्स्व वर्त्तते पुनरपरमपि प्रगाढ़ं प्रमाणमित्यागम माश्रयते आगमाच्चेति । आगमात् "सिराधमन्यो योगवहानि स्रोतांसि च" तथा "सिरास्नायुधमनीःपरिहरन्" इत्यादेराप्तवचनाच्चान्या एवहि धमन्यः स्रोतांसि च सिराभ्य इत्यसंशयमध्यवसितव्यम् , आप्ताश्चवि-तथवचना ऋषयो नैवाप्रमाणन्ते भाषन्त इति हृदयम् । नन्वयमागमनिचयः शिरादीनां विजातीयत्वं वक्ष्यामीति न प्रवृत्तः किन्तर्हि प्रकृतिविकृति-भेदेन विभिन्नानामेषां व्याचिख्यासितत्वं शस्त्रेण परिहर्त्तुं शक्यत्वे परि-

सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति ॥ २ ॥

तासान्तु नाभिप्रभवाणां धमनीनामूर्द्धगा दश, दश चाधोगामिन्यः, चतस्रस्तिर्य्यग्गाः ॥ ३ ॥

ऊर्द्धगाः शब्द-रूप-रस-गन्ध-प्रश्वासोच्छ्वास-जृम्भित-क्षुद्धसित-

---

हार्थत्वञ्चेति शास्त्रमिदमवगाह्यनिश्चीयते तदिदमनुपपन्नं भवत्यागमाच्चेति, नाऽपिच भवतः यद्यामनुरुध्यमानाः कर्म्मवैशेष्यं कथमपि नियमेनाभ्युपगन्तुं शक्यामो नेदिष्टं कर्म्मस्वविभागं पश्यन्त इत्याह कीवलमिति। तुकारः पक्षव्यावृत्त्यर्थः। नन्वत्र परस्परसन्निकर्षश्चेदविभागवत् प्रतीतौ हेतुस्तर्हि च्छायातपयोरपि तथा प्रतीतिः प्रसज्येत तयोरपि परस्परसन्निकर्षादित्याह सदृशेति। आगमः प्रकृतिः कर्म्मचेह प्रज्ञातत्वात्तत्तद्धातूनां वहनं, तुल्यरूपे आगमकर्म्मणी येषां तेषां भावस्तस्मात् सदृशागमकर्म्मत्वात्। नन्वेवं गते एकशकटवाहिनोः सव्यदक्षिणयो र्गोमहिषयोरप्यविभागप्रतीतिरापद्येतेत्याह सौक्ष्म्याच्चेति। सौक्ष्म्यात्यन्ताद्विना सहसा वेगवत्तरणादिरूपतत्तदसाधारणकर्म्मवत्तयानुभवेनाविषयीकरणादित्यर्थः। नचैतदाप्तवस्तुमातमित्यवधेयम् निर्वक्ति हि भगवानात्रेयः "ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिरा" इति। ध्मानाद्रसादीनां यथावदीरणेनान्तरन्तर्दीपनाद्धमन्यः स्रवणान्मांसादीनाप्याययितुं रसादीनां क्षरणात् स्रोतांसि, सरणाद्वेगेन शोणितसहितानां त्रयाणां वातादीनां वहनात् सिरेति तदर्थः। तथाच बलवत्तरविरोधिप्रमाणसत्त्वाद्भवादृशां प्रत्यक्षे नाश्वासः, विन्ध्यहास्तं हि भवतीव प्रत्यक्षमात्रं न प्रमाणमिति तु रहस्यम् ॥ २ ॥

तासामित्यादि। ऊर्द्धगाः शिरः प्रपन्नाः, अधोगामिन्यः पादानुसारिण्यः तिर्य्यग्गाः पार्श्वप्रसृताः। ताः पुनः कर्म्मतो विभज्योपदिदिक्षति ऊर्द्धगा-

कथित-रुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते—तास्त्रिंशत्। तासान्तु वात-पित्त-कफ-शोणित-रसान् द्वे द्वे वहतः—ता दश। शब्द-रूप-रस-गन्धानष्टाभिर्गृह्णीते, द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते। द्वे चाश्रुवाहिन्यौ। द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते। ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः। तास्त्वेता स्त्रिंशत् सविभागा व्याख्याताः। एताभिरूर्द्ध्वं नाभेरुदर-पार्श्व-पृष्ठोरः स्कन्ध-ग्रीवा-बाहवो धार्य्यन्ते याप्यन्ते च ॥ ४ ॥

---

इत्यादिना। अत्राहुरपरे यथा श्रोत्रादिगतासु तासु तासु स्नायुषु दुष्टासु च्छिन्नासु वा सन्तोऽपि शब्दादयो नैव श्रोत्रादिविषयीभवन्ति अपि चापरे-केचिद्भावा विनश्यन्त्येकान्तेन न तथा धमनीषु तथाविधासु किमपीति स्नायव एव शब्दादीनभिवहन्ति न पुनर्धमन्य इति तत्तु न सम्यक्, धमन्यस्ताव-दाहाररससमर्पणेन स्नायूर्बिभ्रति विभ्रत्यस्तु तासेद्विपद्यन्ते तद्वर्णुना कालेन तदाश्रितत्वात् स्नायूनामपि समूलघातमुपहतत्वेनोपलम्भात्। नचैतदश्रद्धेयं राजा करोतीति भृत्यैः कृतेषु कर्म्मसु भर्त्तृकर्त्तृत्वप्रसिद्धिदर्शनात्। एव-मेवोत्तरत्रापि द्रष्टव्यम्। पुनर्विशिनष्टि तास्त्विति। अभिरयमित्थम्भूतार्थः। तदयमर्थः हृदयमभिप्रपन्ना हृदयविषये प्रपन्नत्वलक्षणं कथञ्चिदाश्रितत्व-लक्षणं कञ्चित्प्रकारमापन्नास्तु ता धमन्यस्त्रिधेति रसवाहिनीमूलत्वेन हृद-योर्द्ध्वदेशसंसक्तत्वेन हृदयपृष्ठानुशायित्वेन चेत्यध्यवसितव्यम्। तास्त्रिंशदिति यथा प्रधानं शाखाप्रशाखापरिसंख्यानेनेति बोध्यम्। वातादयस्त्वत्र रस-

भवति चात्र ।

ऊर्द्धं गतास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः ।
अधोगमास्तु वक्ष्यामि कर्म्म तासां यथायथम् ॥ ५ ॥

अधोगमास्तु वात-मूत्र-पुरीष-शुक्रार्त्तवादीन्यधो वहन्ति । तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमेवान्नपानरसं विपक्व-मौष्ण्याद्विरेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्ति, अर्पयन्ति चोर्द्धं गतानां, तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति, मूत्र-पुरीष-स्वेदांश्च विरेचयन्ति, आम-पक्वाशयान्तरे च त्रिधा जायन्ते—तास्त्रिंशत् । तासान्तु वात-पित्त-कफ-शोणित-रसान् द्वे द्वे वहतस्ता दश, द्वे अन्नवाहिन्यावन्त्राश्रिते, तोयवहे

---

-शोणितसहिता एवेत्यवगन्तव्यम्, शरीरेऽस्मिन् शुद्धवातादिवाहिनीनामद-र्शनात् । शब्देत्यादि । अष्टाभिरिति श्रोत्रनेत्ररसनाघ्राणेन्द्रियप्रसृताभि-रेव गृह्णीते प्रत्येकं द्वाभ्यां द्वाभ्यामितिशेषः । अतेन्द्रियार्थेषु मध्ये स्पर्श-स्तिर्य्यग्गाणां धमनीनां कर्म्मत्वेन वक्ष्यतइति नेहोपदिश्यते । द्वाभ्यामित्यादा-वविशेषेऽपि भाषते जिह्वागताभ्यां, घोषमव्यक्तध्वनिं करोति कण्ठगताभ्याम् । स्वपिति प्रतिबुध्यते च हृदयोर्द्ध्वदेशसंसक्ताया: चतसृभिः शाखाभिरित्यु-न्नेयम्, स्वापबोधौ प्रति हृदयस्य निमित्तत्वेनोपदेशात् । सर्व्वास्त्वेता धमन्यो -सङ्क्षिप्य संज्ञयित्वा एव लक्ष्यन्ते । परिशिष्टं निगदव्याख्यातम् ॥ ३—५ ॥

अथ इत्यादि । अधोवहन्त्युपरिष्टात् क्रमशस्तत्तदधिष्ठानसङ्कोच-विकाशाभ्यामधोनयन्तीत्यर्थः । पुनर्विशिनष्टि ता इति, अभिप्रपन्ना इति समानं, तथाच पित्ताशयमभिप्रपन्नाः समन्तादग्रहणीमाश्रिताइति

द्वे, मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय, ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्। द्वे वर्च्चोनिरसन्यौ स्थूलान्त्रप्रतिवद्धे, अष्टावन्यास्तिर्य्यग्गाणां धमनीनां स्वेदमर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा-व्याख्याताः। एताभिरधो नाभेः पक्वाशय-कटी-मूत्र-पुरीष-गुद-वस्ति-मेढ्र-सक्थीनि धार्य्यन्ते याप्यन्ते च॥ ६॥

भवति चात्र।

अधोगमास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः।
तिर्य्यग्गाः संप्रवक्ष्यामि कर्म्म तासां यथायथम्॥ ७॥

---

निष्कर्षः। ततस्थं पित्ताशयस्थमेव न पुनर्गवाद्याकारेण विन्यस्तानां वक्ष्यमाणानां तिर्य्यग्गाणां रसहारिणीनां धमनीनां सर्व्वशरीरानुसारित्वेनामुखाद्गुदपर्य्यन्तेऽखिलेष्वन्नपानाश्रयेष्ववस्थितमित्येवकारेणावगमयति। श्रोण्यग्रात् पित्ताश्रयाद् विरेचयन्त्योऽन्नपानात् पृथक्कुर्व्वन्त्यस्तु ताधमन्यः शरीरमभिसर्व्वतस्तर्पयन्ति प्रीणयन्ति, अर्पयन्ति निक्षिपन्ति चोर्द्धगतानां तिर्य्यग्-गतानामितिशेषे षष्ठी। रसस्थानं नाभेर्नेदिष्ठं पृष्ठवंशभागमाश्रित्य वामं स्कन्धं यावदुत्थाय रक्तवाहिन्या धमन्या योगमुपगतं रसाधिष्ठानभूतं नाड़ीभेदश्चाभि समन्तात् पूरयन्ति, विरेचयन्ति वहिर्निःसारयन्ति। आमपक्वाशयान्तरे पित्ताशयइत्यर्थः। त्रिधेति समानम्। मूत्रवस्तिमभि प्रपन्ने कथञ्चिन्मूत्रवस्तिमाश्रिते वस्तेरूर्द्धदेशसंसक्तेइति यावत्। मूत्रवहे द्वे इति द्वक्तः प्रसूते एव। शुक्रप्रादुर्भावाय शुक्रजननाय शुक्रवहे द्वे, द्वे विसर्गाय शुक्रनिःसरणाय शुक्रवहे द्वे इत्यर्थः। ते चाण्डाधस्ताल्लिङ्गमूलसंसक्ते, तासु च वाह्ये द्वे शुक्रप्रादुर्भावाय आभ्यन्तरे च द्वे विसर्गायेति द्रष्टव्यम्; स्वेदं घर्म्मम्॥ ६—७॥

तिर्य्यग्गाणान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते, तास्त्वसङ्ख्येयाः। ताभिरिदं शरीरं गवाक्षितं विवद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिवद्धानि; यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्व्वहिश्च, तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्कानि, तैरेव स्पर्शसुखमसुखं वा गृह्णाति। तास्त्वेताश्चतस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः ॥ ८ ॥

भवतश्चात्र।

यथा स्वभावतः खानि मृणालेषु विसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते ॥ ९ ॥

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति।

---

तिर्य्यग्गाणामित्यादि। गवाक्षितं सञ्जातगवाक्षं जालेनेवाकीर्णमित्येतत्, विवद्धं वन्धेनोपगतं, आततं व्याप्तम्, स्पर्शसुखं नातिशीतोष्णस्पर्शम्, असुखमिति स्पर्शानुषङ्गादतिशीतोष्णस्पर्शमित्यर्थः ॥ ८ ॥

यथेत्यादि अत्र धमनीत्रैविध्यात् त्रिविधमृणालसौसादृश्यं दर्शयितुमिदमुच्यते मृणालेष्विति, विसमत्र सूक्ष्मतरमृणालं, मृणालन्तु स्थूलं सूक्ष्मञ्चेति त्रैविध्यं दर्शितं भवति ॥ ९ ॥

सर्व्वमिदमवबुद्धमिदानीन्त्विदमेव तावज्जिज्ञास्यं किन्नु खलु भगवन् शब्दादेवेन्द्रियप्रसृताः शब्दादिवाहिन्योधमन्यो युगपच्छब्दादीनाभिवहन्ती-

पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ १० ॥

अत ऊर्द्धं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः ॥ ११ ॥

---

त्वेवं ये प्रत्यवतिष्ठन्ते तान् प्रत्याह पञ्चेति पञ्चेन्द्रियाण्यभिमुखेन प्राप्ताः पञ्चाभिभूताः पञ्चेन्द्रियप्रसृताइति यावत्, तुकारेण धमन्यन्तरं व्यवच्छिनत्ति, अथेत्ययमारम्भार्थः। आम्नायते च "मनः पुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति" इति, श्रूयते च "यन्मनसा ध्यायति तद्वाचा वदति" इत्यादि। तथा च प्रक्रान्तत्वादुक्तलक्षणा धमन्यः अथ अर्थानां परिग्रहोपक्रमे पञ्चसु शब्दादिष्वर्थेषु पञ्चेन्द्रियं श्रोत्रादिकम्, असति बाधे वाक्यानां सावधारणत्वनियमात्, पञ्चकत्वएव भावयन्ति तेषुतेष्विन्द्रियेषु मनसः समावेशेनालोचयन्ति न पुनर्युगपन्मनसोऽणुत्वादेकत्वाच्चेति भावः। तथाच युगपज्ज्ञानानुत्पत्तिलिङ्गकमनःसंयोगसम्पादकत्वेन पञ्चकत्वोभावनोपयोगित्वमासां नानुपपन्नमित्यवधेयम्। अत्र पञ्चस्वित्युपदेशेन समानजातीये विषये सहस्रशोभावनमप्यविरुद्धमित्यर्थाच्चिप्तं भवति। अथ यदि इन्द्रियाभिमुखमेव प्रसृतास्ताधमन्यः किन्तर्हि विनाशकाले "पुरुषस्य प्रयतो वाङ्मनसि, मनः प्राणे" इत्यादिना श्रुतं पुनरिन्द्रियाणां प्रतिलोमगमनाभिनिर्व्वर्त्त्यं प्राणोपसंहारं प्रति मार्गान्तरमभ्युपगच्छसि नेत्याह पञ्चेति। विनाशकाले पञ्चसु प्राणादिपञ्चके पञ्चेन्द्रियमिति "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायादुपदिश्यते वाह्यकरण निचयमित्यर्थः, यदाह भगवान् भाष्यकारः "प्राणश्च तदोर्द्धोच्छ्वासी स्वात्मन्युपसंहृत वाह्यकरणः" इत्यादि। नेह प्राण इत्येकवचनं विप्रतिषिद्धं भवति "अतएव प्राणः" इति शारीरकसूत्रभाष्ये प्राणस्य पञ्चवृत्तौ वातविकारे प्रसिद्धतरत्वेनाभ्युपगमात्। भावयित्वा प्रापयित्वा

तानि तु प्राणान्नोदक-रस-रक्त-मांस-मेदोमूत्र-पुरीष-शुक्रा-र्त्तववहानि, येष्वधिकारः, एकेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य क्रोशन-विनमन-मोहन-भ्रमण-वेपनानि मरणं वा भवति। अन्नवहे द्वे तयोर्मूलमामाशयोऽन्न-वाहिन्यश्च धमन्यः। तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्द्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे, तयोर्मूलं तालु क्लोम च। तत्र विद्धस्य पिपासा सद्योमरणञ्च। रसवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य शोषः

---

उपसंहृत्येति यावत्। इदमत्राकूतम् विनाशकाले ऊर्द्धोच्छासिप्राणाकर्षण-विह्वलास्ता एव धमन्यः प्रतिलोमवृत्तया सर्व्वप्राणिनेन्द्रियजातमाकर्षन्त्यं पञ्चतयं प्राणं प्रापयित्वैव निष्क्रियत्वेन पञ्चभूतावशेषत्वं प्राप्नुवन्ति। एवञ्च धमनीनामेव तादृशप्राणोपसंहारसाधनक्षमत्वेन तावत्कालमवस्थाननिय-मात्मार्गान्तरमपेक्षितव्यमित्यध्यवसेयम् ॥ १० ॥

धमन्यस्तावदवसिता इदानीन्तु प्रक्रान्तानि स्रोतांसि प्रकृत्य दुरधि-गमत्वादेकान्तेन प्रवर्त्तयितव्यानि तन्मूलविद्धलक्षणानि संक्षेपेण प्रवर्त्तयिष्यास इत्यभिसन्धाय प्रतिजानीते अत इत्यादिना। नन्वस्मिन् शास्त्रे द्विविधानि स्रोतांस्युपदिश्यन्ते बहिर्मुखान्यन्तर्मुखानि चेति तदिदं जिज्ञासामहे कतरा-णीह स्रोतांस्यभिप्रेयन्ते मूलविद्धलक्षणमुपदेष्टुमित्यपेक्षायामाह तानीति, येषु स्रोतःस्वधिकारः "द्वाविंशति र्योगवहानि स्रोतांसि च" इत्येवं प्रस्ताव-मात्रं कृतं नपुनर्व्याकरणं तानि प्राणवहादीन्येवात्राभिप्रेयन्त इति तात्पर्यम्

प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च । रक्तवहे द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यः । तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति । मांसवहे द्वे तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यः । तत्र विद्धस्य श्वयथुर्मांसशोषः शिराग्रन्थयो मरणं वा । मेदोवहे द्वे, तयोर्मूलं कटी वृक्कौ च । तत्र विद्धस्य स्वेदागमनं [१]स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च । मूत्रवहे द्वे, तयोर्मूलं वस्तिर्मेढ्रञ्च । तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च । पुरीषवहे द्वे, तयोर्मूलं पक्वा-

---

[१] एकेषामन्येषान्तु मते तानि स्रोतांसि वहनीत्यर्थः । स्मरन्ति हि "अति वहुत्वात्तु खलु केचिदपरिसंख्येयान्याचक्षते" इति । नन्वेवं गते किन्तावदध्यवस्यामोऽपरिसंख्येयान्याहोस्विदेतावन्तीति संशयमपाकरोति एतेषामिति । शरीरं हि तत्त्वतोऽविचिन्वानाः प्राणवहादीनामेव पृथग्विधान् प्रभेदानभिसमीक्ष्यापरिसंख्येयानीत्याचक्षते नपुनरेवं वस्तुगतिरित्यतः परमतं नाध्यवसेयमित्याकूतम् । प्रस्तुतमर्थं स्फुटीकृत्यावगमयति तत्रेति । प्राणवहे द्वे फुफ्फुससव्यापसव्यभागात्मके । क्रोशनमत्र सहसा हा हतोऽस्मीत्येवं मूर्च्छाग्रजमुच्चैः सकृत् प्रचण्डमाक्रन्दनम्, विनमनमानतपृष्ठत्वम् । अन्नवहं हि स्रोतो जिह्वातलात् काकलकाधोयावत् स्थूलं ततश्चामाशयपर्यन्तं किञ्चित् सूक्ष्ममित्युक्तं द्वे इति । क्रोमानुविद्धमेकमेकञ्चोपतालुकमुदकमावहतीत्युक्तमुदकवहे द्वे इति । अत्र सद्योमरण मित्याध्मानकण्ठावरोधादिनेत्यध्यवसितव्यम् । रसवहे द्वे इति रसस्थानोर्ध्वाधोविभागेनेत्येव । प्राणवह-

शयो गुदश्च। तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च। तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे, तयोर्मूलं गर्भाशय आर्त्तववाहिन्यश्च धमन्यः। तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद्रुजाप्रादुर्भावः। वस्ति-गुद-विद्धलक्षणञ्च प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत्॥ १२॥

---

विद्धवत् प्राणवहमूलविद्धवदित्यर्थः। अत्र प्राणवहविद्धवन्निङ्गानि चेति सिद्धे मरणमिति प्रपञ्चार्थम् प्रभावान्मरणस्य सद्यस्कालमाख्यातुं वा। रक्तवहे द्वे पृष्ठवंशदक्षिणतोयकृत्प्लीहानुप्रविष्टे। मांसवहे मेदोवहे च द्वे द्वे विजिज्ञासितव्ये। स्नायुश्च त्वक् चेति स्नायुत्वचं "द्वन्द्वाच्चुदषहान्तात् समाहारे" इति पा०सू०५।४।१०६। टच्। मूत्रवहे द्वे ह्रक्तनः प्रस्तते एव। पुरीषवहे उण्डुक क्षुद्रान्त्रसमाख्ये, परिपक्वानामाहारद्रव्याणामाशय इति व्युत्पत्त्या पक्वाशयशब्दस्येह वृहदन्त्रे तात्पर्य्यमित्याहुः, अत्र दुर्गन्धतेति मलनिर्गमनादित्येव। शुक्रवहे आर्त्तववहे च द्वे द्वे प्रायेण शुक्रार्त्तववहधमनीसहचरे इत्युन्नेयम्। लक्षणतः प्रकृतानुरूपत्वादिदानीमप्रस्तुतमपि सेवनीच्छेदलक्षणमभिधत्ते, सेवनीति। सेवनीह गुदतोवृषणमूलं यावदवस्थितेति प्रत्येतव्यम्। प्रागिति स्रोतोऽधिकारे, उक्तं "तत्रविद्धस्यानद्धवस्तिता" इत्यादिना "ग्रथितान्त्रताच" इत्यन्तेनचाभिहितम्। इदन्तु कादाचित्कविषयमित्यवगन्तव्यम्॥ ॥ ११—१२॥

मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्।
स्रोतस्तदिति विज्ञेयं शिराधमनिवर्ज्जितम्॥ १३॥
इति सुश्रुतसंहितायां शारीरस्थाने धमनीव्याकरणं
नाम शारीरं नवमोऽध्यायः॥ ९॥

---

सम्प्रति सुखप्रतिपत्त्यर्थं परिभाषाविशेषेण स्रोतांस्यवगमयति मूलादिति। देहे देहमध्ये मूलात् मूलीभूतात् खात् यथास्वं व्याहृतात् हृदयाद्यात् खभ्रात् प्रसृतं निर्गतम्, अभिवाहि प्राणादिवहनशीलं शिराधमनिवर्जितं यदन्तरं छिद्रं तत्स्रोतोविज्ञेयम् धमनिर्धमनीतिपर्य्यायौ इति शब्दः स्रोतोलक्षणपरिसमाप्त्यर्थः। नखल्वेतावता शुषिरासु स्नायुष्वतिव्याप्तिरितिवाच्यम् अनभिवाहित्वात्। अत्र विशेषयति भगवानात्रेयः "स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनिच। स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानिच" इति। अत्र चकारद्वयं वृत्तादिगुणयोगात् महसा स्रोतस्त्वेन बुद्धिविषयं नारुकचूर्णां फुफ्फुसादीनामसंशयं स्रोतस्त्वमाख्यापयतीति नापार्थकम्॥ १३॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये
शारीरस्थाने धमनीव्याकरणं नाम शारीरं नवमोऽध्यायः।

---

# दशमोऽध्यायः ।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः ॥ १ ॥

गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेत्, मलिनविकृतहीनगात्राणि न स्पृशेत्, दुर्गन्धदुर्द्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः, शुष्कं पर्य्युषितं कुथितं क्लिन्नञ्चान्नं नोपभुञ्जीत, बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्करांश्च भावानुच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति, नचाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत, नचायासयेच्छरीरं, पूर्व्वोक्तानि च परिहरेत्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत्, सामान्यमेतदाप्रसवात् ॥ २ ॥

---

सम्प्रति "गर्भिण्या व्याकृतिस्तथा" इत्युद्देशक्रमागतत्वाद् गर्भिणीव्याकरणं नाम शारीरमधिकरोति अथात इत्यादिना। गर्भिण्या व्याकरणं गर्भिणीव्याकरणं गर्भिण्याऽऽहाराचारादिविहितसाधनमित्येतत् ॥ १ ॥

गर्भिणीत्यादि। विकृतोऽङ्गः हीनोऽधमश्चण्डालादिः। उद्वेजनीया इति बाहुलकात् करणेऽनीयः व्याकुलचित्ततासञ्जननीरित्यर्थः। सङ्करान् सञ्जननान्। यानि तीक्ष्णोष्णादीनीत्यर्थः। पूर्व्वोक्तानि गर्भावक्रान्तावशेष्यत्वेनोपदिष्टानि। दृढप्रत्ययार्थं पुनरिदमुक्तमित्यदोषः। अपाश्रयश्चन्द्रातपश्चेति पर्य्यायौ। असम्बाधं मत्कुणादिविरहितम् ॥ २ ॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीत-द्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेत्, चतुर्थे दध्ना, पञ्चमे पयसा, षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांस-सहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टम्, षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्यायते गर्भः। अष्टमे बदरोदकेन बलातिबला-शतपुष्पा-पलल-पयोदधि-मस्तु-तैल-लवण-मदनफल-मधु-घृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थ-मनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैले-नानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोप-क्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनु-पद्रवा प्रसूयते। नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ। तत्रारिष्टं ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां श्वेत-

---

विशेषत इत्यादि। अत्र पराऽभिमतमाचक्षाणः पुनराचष्टे विशेषत-इति। पृथक्पर्ण्यादिर्विदारीगन्धादिगणे द्रष्टव्यः। पललशब्देनात्र ग्राम्यजाङ्गलमांसयोरेव परिग्रहः क्रियते। अत्र बलादीनां चतुर्णां शरावमितः क्वाथः पयः प्रभृतीनां त्रयाणामर्द्धशरावो मधुतैलघृतानां प्रत्येकशः कर्षौ लवणमदनयोस्तु शाणएवालमास्थापनाय॥ स्मरन्तिहि "आदित्य" इत्युपक्रम्य "विष्टिलग्नादिने वदन्ति मुनयो वेश्मादि कार्यं शुभम्" इत्यादि,

रक्त-पीत-कृष्णेषु भूमिप्रदेशेषु विल्व-न्यग्रोध-तिन्दुक-भल्लातक-निर्म्मितसर्व्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम् ॥ ३ ॥

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने ।

सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ४ ॥

ततोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ॥ ५ ॥

---

तदिदं विशिनष्टि तत्रेति। तत्र प्रशस्तितिथ्यादावित्यर्थः अरिष्टं सूतिकागृहम्। ब्राह्मणीत्यादौ ब्राह्मणादिजातीयानां स्त्रीणाम्। विल्वेत्यादौ च यथा क्रमं विल्वादिनिर्म्मितेन्धनकाष्ठसर्व्वागारांशमित्यर्थः। यथाक्रमं ब्राह्मण्यादि क्रमेण विल्वादिमयी खट्वाऽस्त्रवेति तन्मयपर्य्यङ्कम्। सुविभक्तपरिच्छदं यथावद्विन्यस्तोदूखल-मुषल-तैल-सर्पिरादिकं वसनाच्छादनादिसम्पदुपेतञ्चेत्यर्थः। रक्षेह आदानीप्रभृतिभिः समन्ततः परिवारणरूपा, सर्षपादिविकीरणरूपा च, मङ्गलन्तु सन्नीपसन्निहितोदकुम्भस्थापनादि, एतच्च चरकादि तन्त्रान्तराण्यधिगम्याध्यवसेयम् ॥ ३ ॥

जात इत्यादि। शिथिलतेह गर्भस्य स्रंसनादेव भवतीति गम्यते। पद्ममुकुलावयवम् रोहितमत्स्यस्य मुखाकारत्वेनोपदिष्टा हि योनिरवश्यं हृदयसम्पर्कवतीति भूयिष्ठं तदाकारत्वात्। विशेषतस्त्वापन्ने गर्भे सम गर्भाभिवृद्ध्या ऽभिरुद्धा, अपिचोपस्थिते प्रजननकाले बहिर्द्वारं प्रत्यङ्गुल्यग्राऽभिलक्षितलेनासन्नमुखी निसर्गत एव वियुक्तबन्धना भवत्यास्तेन तदिदमुच्यते मुक्त इति।

प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत्। ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति ॥ ६ ॥

अथास्या विशिखान्तरमनुलोममनुसुखमभ्यञ्ज्याद् ब्रूयाच्चै-नामेका सुभगे प्रवाहस्वेति नचाप्राप्तावी प्रवाहस्व। ततो विमुक्ते गर्भनाड़ीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु च

---

तथाच सिंहोमाणवक इति वद्गौणोऽयं हृदयशब्दो योनिं लक्षयतीति हृदय-बन्धने योनिमुखबन्धे मुक्ते ऽङ्गुल्यग्रेण स्फुटितत्वेनानुभूत इत्यर्थः। जघनं स्त्रीश्रोणिः। तच्चेह कुक्षिसहितमेव ग्राहयन्ति कुशलाः। प्रेत्यादि। कुमारपरिवृतामिति हर्षेण क्लेशापवारणार्थमुपदिश्यत इति गम्यते, अतः कुमारशब्देन स्निग्धानां कुमारीणामपि परिग्रहोन्याय्यः। पुन्नामफलहस्तत्वं पुनः सुखप्रसवं मत्यैनां त्वरयतीत्याचक्षते तदिद मुक्तं पुन्नामेति। पुन्नामा पुन्नागः "पुन्नागः × × × × पुन्नामा पाटल द्रुमः" इति राजनिर्घण्टः। सम्भृतां क्षीरादिसंसृष्टत्वेन बलकरीमित्यर्थः। उपधानं शिरोधानं "बालीश" इत्याख्यायते परिशिष्टं निगदव्याख्यातम् ॥ ४—६ ॥

अथेत्यादि विशिखान्तरं योने र्बहिर्द्वारमपत्यपथमित्येतत्। अभ्यञ्ज्यात् कोष्णेन तैलेनेतिशेषः। अत्र विशिखान्तरग्रहणेनैव कटिपार्श्वपृष्ठसक्थिदे-शानामपि परिग्रहः क्रियते प्रजननसौकर्य्याच्चरकैकवाक्यत्वाच्च। एका चतसृणां-मध्ये काचिदित्यर्थः, प्रवाहस्वेति वाहतेर्लोट् वेगेन प्रवर्त्तयितुं यतस्वेति सन्दर्भः।

प्रवाहेथाः शनैः शनैः। ततो गर्भनिर्गमे प्रगाढ़म्। ततो गर्भे योनिमुखं प्रपन्ने गाढ़तरमाविशल्यभावात् ॥ ७ ॥

अकालप्रवाहणाद्बधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति ॥ ८ ॥

तत्र प्रतिलोममनुलोमयेत् ॥ ९ ॥

गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्म्मोकेण पिण्डीतकेन वा। बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा ॥ १० ॥

अथ जातस्योल्वमपनीय मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यात्। ततो नाभिनाड़ीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत् तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात् ॥ ११ ॥

---

आवी ,प्रसववेदना गर्भनाड़्याः सूतिमारुतवेगेनावस्रंसमानस्य गर्भाशयस्य प्रवन्धः प्रकर्षेण गतिरोधो यत्र तस्मिन् गर्भनाड़ीप्रवन्धे योनेर्बहिर्द्वारे, विमुखे प्रस्फुटिते इत्यर्थः। आविशल्यभावादाप्रसवादिति सन्दर्भः। व्यस्तहनुंतिर्य्यङ् न्यस्तहनुं मूर्द्धाभिघातिनं विकृतमस्तिष्कम्। प्रतिलोमं वैपरीत्येनापत्यपथमनुप्राप्तम् अनुलोमयेत् मूढ़गर्भचिकित्सितमभिसमीक्ष्य बहिर्निष्क्रमणोपयोगिनं कुर्य्यादित्यर्थः। पिण्डीतकं मदनफलम्। हिरण्यपुष्पी स्वर्णकेतकी आरग्वध इत्यन्ये। सुवर्च्चला सूर्य्यमुखी विशल्या गुड़ूची। सम्प्रत्यात्ययिकत्वात् प्रकृतमर्थं हित्वा प्रासङ्गिकं किञ्चिदभिधत्ते अथेत्यादिना। उल्वमपनीयेति

अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधु-सर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्। ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्व्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च ॥ १२ ॥

धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्।
चतूरात्रात् त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ १३ ॥

तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च ततः प्राङ्-

---

सामान्येनोक्तोऽप्युत्स्वाहतत्वदन्यवश्यं वक्तव्यम्। प्रजननात् प्रागेवोल्वस्य प्रायशो जिज्ञासितत्वेन परिलक्षितत्वात्, संशोध्य श्लेष्मापकर्षणेन निर्म्मलीकृत्य। पिचुं दद्यादित्यत्र तालून्यस्येति परिशिनष्टि तन्त्रान्तरं, तथाच "दक्षिणतर्ज्जन्या तालून्नम्यावगुण्ठयेत्। शिरसि स्नेहपिचुना" इति। आयम्य दैर्घ्येण परिमाय वद्धेति बन्धनं शोणितगतिनिरोधार्थं ग्रीवायां बध्नीयादिति तु नितरां रसादिगतिप्रतिबन्धेन त्वरितमुच्छोषयितुमित्युन्नेयम्। आश्वास्य चक्षुरादौ शीतलजलावसेचनेन व्यपगतक्लमं कृत्वेत्यर्थः। अनन्ता शारिवा। अत्र सुवर्णचूर्णमित्युक्तेऽपि सर्षपमात्रं सुवर्णसिन्दुरमेवोपयुञ्जन्ति कुशलाः। सर्व्वगन्धं नाम "चातुर्ज्जातककर्पूरकक्कोलागुरुकुङ्कुमम्। लवङ्गसहितञ्चैव सर्व्वगन्धं प्रकीर्त्तितम्" इत्युक्तं द्रव्यजातम् ॥ ७—१२ ॥

तस्मादित्यादि। तस्माच्चतूरात्रात् त्रिरात्राद्वा स्तन्यप्रवृत्तेः। मन्त्रपूतमिति "तदेदमग्निमिथुनम्" इत्यादि छान्दोग्यश्रुतिभाष्ये ॐकारस्य सर्व्वकामावाप्तिगुणवत्वेनाभ्युपगमादोङ्काराभिमन्त्रितमित्यर्थः। पाययेत् स्तन्या-

न्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत् ॥ १४ ॥

अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिःक्वाथेनोपचरेत् सशेषदोषान्तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत्। एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादादुष्टशोणितात्। विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत् त्रिरात्रम्। ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलञ्चावेक्ष्य। अनेन विधिनाध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात् पुनरार्त्तवदर्शनादित्येके ॥ १५ ॥

---

आवजनितदोषोपशमार्थं न पुनराहारार्थमिति निश्चीयते ऽन्तेरणीयस्त्वेन मध्वादीनां गन्धमात्रेणोपयोगात् तथाच तत्र तत्र आहारार्थं "स्तन्याभावे पयस्छागं गव्यं वा तद्गुणं हितम्" इत्यागमानुसरणं नानुपपन्नम्। वक्ष्यति च "क्षीरसात्म्यतया क्षीरमाजम्" इत्यादि, चकारात्तृतीयेऽप्यहनि लक्षणासिद्धमेव। लक्षणा स्वनामप्रसिद्धा। ततस्तदनन्तरञ्चतुर्थेऽहनीत्यर्थः। स्वपाणितलसम्मितं कुमारपाणितलधारणार्हं पाययेत् स्तन्यानुपानमित्यर्थाच्चित्रं भवति प्राङ्निवारितस्तन्यमिति विशेषणात्। उक्तञ्च "प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम्। स्तन्यानुपानम्" इत्यादि। प्रकृतमनुसरति अथेति। अथोल्वापनयनादितदहःकृत्यावसानानन्तरम्। बलातैलं मूढगर्भचिकित्सिते वक्ष्यमाणम्। वातहरौषधानि

धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत् पिप्पल्यादिकषायानुपानं स्नेहनित्या च स्यात् त्रिरात्रं पञ्चरात्रं वा। बलवतीमबलां यवागूं पाययेत् त्रिरात्रं पञ्चरात्रं वा। अत ऊर्द्धं स्निग्धेनान्नसंसर्गेणोपचरेत् प्रायशश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्। क्रोधायासमैथुनादीन् परिहरेत्॥ १६॥

भवतश्चात्र।

मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात्॥

---

सु॰ ३८। ३९ अ॰ उपदिष्टानि वीरतर्व्वादिप्रभृतीनि भद्रदार्व्वादीनि च। उपचरेत् सेवेत शरीरसंपृक्तक्लेदापनयनार्थं प्रक्षालयेदिति तात्पर्य्यम्। सशेषदोषां सावशेषदुष्टशोणिताम्। जाङ्गले हि देशे निसर्गत एव वातपित्ते प्रकोपमापद्येते विशेषतश्च प्रजातायाः शून्यशरीरत्वेनेति तां प्रति विशिनष्टि धन्वेति। धन्वा मरुर्जाङ्गलश्चेति पर्य्यायाः। धन्वभूमिजातेति धन्वभूमौ जातं जननं गर्भमोचनमस्यास्ता इत्यकारो मत्वर्थीयः। मात्रां यथायोगं परिमाणं स्नेहनित्या स्नेहाभ्यङ्गनित्येत्यर्थः। त्रिरात्रं पञ्चरात्रं वेति स्निग्धत्वच्छ गाषेद्योनियम इति गम्यते तथाचास्निग्धभावादिति तात्पर्य्यम्। अबलां नारीं सूतिकामिति यावत्, अत बलवतीमिति विशेषणात् दुर्व्वलान्तु मण्डादिकं पाययेदित्यर्थादाक्षिप्यते॥ १४—१६॥

प्रजाता हि स्त्रियः प्रवाहणवेदनाक्लेदरक्तस्रुतिविशेषेण विशेषतः शून्यशरीरा भवन्ति, तदिदानीं तासां व्याधेः कृच्छ्रत्वमत्यपतर्पणादसाध्यत्वञ्चाख्याय प्रतीकारक्रममुपदिदिक्षति मिथ्येत्यादिना। मिथ्याचारात् परिहार्य्याणामपरिहाराद्विहितानामाहारविहाराणां विभ्रमादयथावदवचारणादिति

तस्मात् तां देशकालौ च व्याधिसात्म्येन कर्म्मणा।
परीक्ष्योपचरेदेवं नेयमत्ययमाप्नुयात्॥ १७॥

अथापराऽपतन्त्यानाहाध्मानौ कुरुते तस्मात् कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत्। कटुकालावुकृतवेधनसर्षपसर्पनिर्म्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्। लाङ्गलीमूलकल्केन वास्याः पाणिपादतलमालिम्पेत्। मूर्द्ध्नि वास्या महावृक्षक्षीरमनुषेचयेत्। कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्। शालिमूलकल्कं वा पिप्पल्यादिं वा मद्येन। सिद्धार्थक-कुष्ठ-लाङ्गली-महावृक्षक्षीरमिश्रेण सुरामण्डेन वास्थापयेत्। एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरवस्तिं दद्यात् स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत्॥ १८॥

प्रजातायाश्च नार्य्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधः पार्श्वयोर्वस्तौ वस्ति-

---

यावत्। अपतर्पणं लङ्घनमित्यनर्थान्तरम्। परीक्ष्य यस्मादेवंगुणौ देशकालाविवं दोषवलसात्म्यसत्त्वप्रकृतिवयस्का चेयं तस्मादिवमेशाहाराचारौषधानि न्याय्यानीति निश्चय उपचरेत् प्रतिकुर्य्यादित्यर्थः। अत्ययं विनाशम्॥ १७॥

अथो एवासात्यविकासर्थं हित्वा सुदूरमाचिप्तोऽस्मि कथाप्रसङ्गेन तिष्ठलधुना तमेवार्थं प्रवर्त्तयिष्यामीत्यभिसन्धायाह अथेति। अथ प्रजननानन्तरम्, अपरा जरायुरमरेति पर्य्यायाः, कृतवेधनं जाली 'तितपोला' इत्यभिधीयते। लाङ्गली 'ईशलाङ्गला' इत्याख्यायते। महावृक्षः स्नुही, पिप्पल्यादिः सू० ३८

शिरसि वा ग्रन्थिं करोति । ततश्च नाभि-वस्त्युदर-शूलानि भवन्ति सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः । समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम् । तत्र वीरतर्व्वादिसिद्धं जलमूषकादिप्रतीवापं पाययेत्, यवाक्षारचूर्णं वा सर्पिषा सुखोदकेन वा, लवणचूर्णं वा पिप्पल्यादिक्वाथेन, पिप्पल्यादिचूर्णं वा सुरामण्डेन, वरुणादिक्वाथं वा पञ्चकोलैलाप्रतीवापं, पृथक्पर्ण्यादिक्वाथं वा भद्रदारुमरिचसंसृष्टं, पुराणगुड़ं वा त्रिकटुकचतुर्ज्जातककुस्तुम्बुरुमिश्रं खादेदच्छं वा पिबेदरिष्टमिति ॥ १९ ॥

अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत् । पीलु-बदरी-निम्ब-परूषकशाखाभिश्चैनं वीजयेत् । मूर्द्ध्नि चास्याहरहस्तैलपिचुमवचारयेत् । धूपयेच्चैनं रक्षोघ्नैर्धूपैः । रक्षोघ्नानि चास्य पाणि-पाद-शिरोग्रीवास्ववसृजेत् । तिलातसी-सर्षपकणांश्चात्र प्रकिरेत् । अधिष्ठाने चाग्निं

---

अध्यायोक्तः । प्रजाताया इत्यादि । प्रजातायाः प्रसूतायाः । वीरतर्व्वाद्यूषकादी सू० ३८ अ० द्रष्टव्यौ । प्रतीवापः कल्कोऽत्र प्रक्षेपविधिना प्रदेयः । पृथक्पर्ण्यादि विदारीगन्धाद्यवयवविशेषः । चतुर्ज्जातं त्वगेलापत्रकेशरम्, अरिष्टं चिकित्सिते वक्ष्यमाणमरिष्टजातम् ॥ १८—१९ ॥

अवसितमिदं सद्यः सूतिकापरिरक्षणं नाम सम्प्रति तु सुकुमारत्वेनातितरां प्रयत्नार्हं कुमारं प्रत्येव व्याचिख्यासितं किञ्चिद्व्याख्यास्याम इति सम्प्रधार्य्याह अथेति । यथोक्तेन विधिना स्नापनानन्तरं पीलुः कोङ्कणदेशप्रसिद्धो

प्रक्षालयेत् । अशितोपासनीयञ्चावेक्षेत ॥ २० ॥

ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं नक्षत्रनाम वा ॥२१॥

ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयसमरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्द्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्म्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यबलवृद्धये बालस्य । तत्रोर्द्ध्वस्तनी करालं कुर्य्यात् । लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत् । ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत् परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ।

---

गुड़फलोवृक्षः । परूषकः "फलसा" इत्यभिधीयते । रक्षोघ्नै रात्रेयाद्युक्तेन रक्षोघ्नसमाख्यातेन वचाकुष्ठक्षौमकहिङ्गुसर्षपातसीलशुनादिना कृतैरित्यर्थः । अवसृजेत् विसृजेत् । कणोऽति सूक्ष्मांशः । ज्योतिःशास्त्राभिहितशतपदचक्रोद्भूतं नक्षत्रानुयायि नाम नक्षत्रनाम ॥ २० ॥

तत इत्यादि । यथावर्णं समानजातीयाम्, अचपलां विनीताम् प्रसन्नक्षीरां स्तन्यदोषविनाकृताम् अव्यङ्गाम् अविकृताङ्गीम्, कुले जातां सद्वंशजाम्, श्यामां "शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता" इत्युक्तलक्षणाम् । आपाततोऽनवबोध्यदोषत्वेनोर्द्ध्वलम्बस्तन्योरेव दोषं दर्शयति तत्रेति । तत्र तासु मध्ये ऊर्द्ध्वस्तनी

चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः ।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥ २२ ॥

अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद् व्याधिजन्म भवति । अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्सुहित-स्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः । तस्मादेवं विधानं स्तन्यं न पाययेत् ॥ २३ ॥

क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति । अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यव-गोधूम-शालि-षष्टिक-मांसरस-सुरा-सौवीरक-पिण्याक-लशुन-मत्स्य-कशे-रुक-शृङ्गाटक-बिस-विदारिकन्द-मधुक-शतावरी-नलिकालाबू-कालशाकप्रभृतीनि विदध्यात् ॥ २४ ॥

---

करालं स्तनाभ्यां दन्तमूलान्युन्नेतुमीरणादुन्नतदन्त मित्यर्थः । 'करालो-दन्तुरे' इत्यमरः । धात्र्युपदेशोऽयं मातुर्विशुद्धस्तन्याभावविषय इत्यवगन्तव्यम् "मातुरेव पिबेत् स्तन्यं तत्परं देहवृद्धये । स्तन्यधात्र्यावुभे कार्य्ये तद-सम्पदि वत्सले ।" इति-स्मरणात् । परिशिष्टं निगदव्याख्यातम् ॥ २१—२२ ॥

अत इत्यादि । अपिशब्दोऽयं तु शब्दस्थानसन्निवेशी अपरिस्रुतत्वे फलं दिशिनष्टि । उत्सुहितं परितृप्तं परिपूर्णमित्येतत् । वात्सल्यं स्नेहानुगुणो-रसविशेषः । नलिका नलीतिपर्य्यायौ कालशाकं आर्द्रीयः शाकभेदः ।

अथास्याः स्तन्यमप्सु परीक्षेत; तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात् तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधित-शोकार्त्त-श्रान्त-प्रदुष्टधातु-गर्भिणी-ज्वरितातिक्षीणातिस्थूल-विदग्धभक्त्य-विरुद्धाहारतर्पितायाः स्तन्यं पाययेन्नाजीर्णौषधञ्च बालं दोषौषधाशनानां तीव्रवेगोत्पत्तिभयात्॥ २५॥

भवन्ति चात्र।

अध्यशनाजीर्णगुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति॥ २६॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः।

---

प्रभृतिग्रहणात् वीरणादीनामादेशः। अथेत्यादि सीदति निमज्जति। शुद्धेतरत् सर्व्वमशुद्धमित्यर्थापन्नमर्थं मन्दबुद्धीनां सुखप्रत्ययार्थं प्रपञ्चेनावगमयति तन्त्रान्तरम्, तथाच "कषायं फेनिलं रुक्षं वर्च्चोमूत्रविबन्धकृत्। पित्ताद्दुष्टाम्लकटुकं पीतराज्यप्सु दाहकृत्। कफात् सलवणं सान्द्रं जले मज्जति पिच्छिलम्। संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम्" इति। यथा कथञ्चिदजीर्णे ह्यग्निर्मन्दीभवत्याप्नायते च "दोषच्छन्नोऽनलोनालं पक्तुं दोषौषधाशनम्" इत्यत आह दोषेति। तीव्रोऽजीर्णजो वेगः तीव्रवेगः। एतेनाजीर्णाशनञ्चौषधमपि न पाययेदित्यर्थापन्नं भवति फलसाम्यात्॥ ॥ २३—२५॥

अध्यशन इत्यादि। विषमैः "बहुस्तोकमकाले वा विज्ञेयं विषमाशनम्" इत्युक्तलक्षणैः दोषलैर्दोषसञ्जनने रितरैराहारविहार विशेषै-

दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ।
भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत् ॥ २७ ॥
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ।
मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति ॥
निमीलिताक्षो मूर्द्धस्थे शिरोरोगे न धारयेत् ।
वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति ॥
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ।
कोष्ठे दोषान् विजानीयात् सर्व्वत्रस्थांश्च रोदनैः ॥२८॥

तेषु च यथाभिहितं मृदच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात्, क्षीरान्नादस्यात्मनि धात्र्याश्च; अन्नादस्य कषायादीनात्मन्येव न धात्र्याः । तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलिपर्व्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात्, कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय, कोलसम्मितामन्नादायेति ॥ १९ ॥

---

रित्यर्थः । उक्तमर्थंमपच्छेनावगमयति मिथ्येति । तान् व्याधीन् विभावयेत् स्थानतो निर्णेतुं चिन्तयेदित्यर्थः । निर्णयप्रकारमाह अङ्गेति । तेष्वित्यादि । यथाविहितमिति भाविनि भूतवदुपचारादुपदिश्यते । यथाभिधास्यमानमित्यर्थः । अत्राविशेषेऽपि बलवति स्तन्यदोषे धात्र्यास्तु विरेचनादयो न प्रतिषिध्यन्ते, वदन्ति हि "युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान्" इति । अत्र मासादूर्द्धमिति विशेषणान्मासं यावत्ततोऽपि कनीयसी मात्रा परिकल्प्येति गम्यते । मात्रोपदेशोऽयं कल्पनासोपानमात्रप्रदर्शनार्थं इति

येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥ ३० ॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे ।
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥ ३१ ॥
न च तृष्णाभयादञ्च पाययेत शिशुं स्तनौ ।
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात् ॥ ३२ ॥
मस्तुलुङ्गक्षयाद्यस्य वायुस्तालुस्थि नामयेत् ।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ।
पानाभ्यञ्जनयोर्योज्यं शीताम्बूद्वेजनं तथा ॥ ३३ ॥
वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ।
सात्वतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥ ३४ ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।

---

निर्यीयते । "मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः । व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्यमात्रां प्रयोजयेत्" इति स्मरणात् । चीरशब्दस्येहस्तन्ये तात्पर्य्यमन्नशब्दस्य च तदितरस्मिन्निति अनुसन्धेयम् ॥ २६—२९ ॥

येषामित्यादि । यथार्थत इति निष्प्रयोजनपर्य्यायोऽयमर्थशब्दो यथा मशकार्थो धूम इति । तथाच अर्थ ''निर्द्दशाहमपि ज्ञात्वा कफोत्तर मलङ्घितम् । न सर्पिः पाययेत्' इत्युक्तं ज्वरप्रतिषेधे वक्ष्यमाणञ्च प्रतिषेधमनतिक्रम्य इतराभ्यामन्नादक्षीरान्नादाभ्यान्तु सर्पिरहितमुपदिशेदित्यर्थः । न चेति प्रतिषेधोऽयमजीर्णशङ्कयेति गम्यते, अतो यावन्नासावाशङ्का बुद्धिमधितिष्ठति तावदल्पमल्पं पाययेदेव, उपस्थितायाञ्च तस्यामाशङ्कायां

रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ३५ ॥

क्षीराहाराय सर्पिः पाययेत् सिद्धार्थक-वचा-मांसी-पयस्या-पामार्ग-शतावरी-सारिवा-ब्राह्मी-पिप्पली-हरिद्रा-कुष्ठ-सैन्धव-सिद्धं, क्षीरान्नादाय मधुक-वचा-पिप्पली-चित्रक-त्रिफला-सिद्धम्, अन्नादाय द्विपञ्चमूली क्षीरविदारी-तगर-भद्रदारु-मरिच-मधुक-विड़ङ्ग-द्राक्षा-द्विब्राह्मीसिद्धम् ॥ ३६ ॥

तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ॥ ३७ ॥

बालं पुनर्गात्रसुखं गृह्णीयात्, नचैनं तर्ज्जयेत्, सहसा न प्रतिबोधयेद्वित्रासभयात्, सहसा नापहरेदुत्क्षिपेद्वा वातादिविघातभयात्, नोपवेशयेत् कौब्जभयात्, नित्यञ्चैनमनुवर्त्तेत प्रियशतैरजिघांसुः। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्त्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति। वातातप-विद्युत्प्रभा-पादप-लता-शून्यागार-निम्नस्थान-गृहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ॥ ३८ ॥

नाशुचौ विसृजेद्बालं नाकाशे विषमे न च ।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा ।

---

मात्रयाऽन्तरान्तरा यथास्वौषधसिद्धं जलमेव पाययेदित्युपदिशन्त्याचार्य्याः। शीताम्बूद्वेजनं चक्षुरादौ शीतलजलावसेकः ॥ ३०—३५ ॥

क्षीरेत्यादि। पयस्या क्षीरकाकोली भार्गी ब्राह्मीनाम शाकश्चेति द्विब्राह्मी, तर्ज्जयेत् भर्त्सयेत्, प्रतिबोधयेत् जागरितं कुर्य्यात्, नापहरेत् नाकर्षेत् नोत्क्षिपेत् क्रीड़नार्थमपि नोर्द्ध्वमुत्क्षिपेत्, वातादिभिर्बाधनं वातादिविघातः, अनुवर्त्तेत सेवेत, अजिघांसुः स्निग्धः, उदग्रमुन्नतम्। दुष्टानां

दद्यादाल्लन्यपर्य्याप्तिर्बालानां वीक्ष्य मात्रया ॥ ३९ ॥

षण्मासाच्चैनमन्नं प्राशयेल्लघु हितञ्च। नित्यमवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात्। प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ॥ ४० ॥

अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परितुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्द्धं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्ब्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं, विस्तरेणोत्तरे वक्ष्यामः ॥ ४१ ॥

शक्तिमन्तञ्चैनं ज्ञात्वा यथावर्णं विद्यां ग्राहयेत्। अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमाहरेत् पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति ॥ ४२ ॥

ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्ब्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ ४३ ॥

---

वक्ष्यमाणानां स्कन्दादिग्रहाणामुत्पातो यस्मात् स दुर्ग्रहोपसर्गः शौचाचारभ्रंशादिति परमतोव्यक्तीभविष्यति ॥ ३६—३९ ॥

षण्मासादिति। षण्मासादिति मुख्यकालविषयमवधेयम् "षष्ठेऽन्नप्राशनं कुर्य्याद्यद्वेष्टं मङ्गलं कुले" इति, मनूक्तेः। उक्तमर्थं द्रढ़यति प्रयत्नत इत्यादिना। हि शब्दस्यानाधिष्ठानोऽयं षण्मासोविधेरस्यैकान्ततोऽवचार्य्यत्वं

अतिवृद्धायां दीर्घरोगिण्यासन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्व्वीत । पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति ॥ ४४ ॥

तत्र पूर्व्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशय-काटी-वङ्क्षण-वस्तिशूलानि रक्तदर्शनञ्च । तत्र शीतैः परिषेकावगाह-प्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च । गर्भस्फुरणे मुहु-र्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत् ॥ ४५ ॥

प्रस्रंसमाने सदाहपार्श्व-पृष्ठ-शूलासृग्दरानाह-मूत्रसङ्गाः, स्थानात् स्थानञ्चाक्रामति गर्भे कोष्ठे संरम्भः ; तत्र स्निग्ध-शीताः क्रियाः ॥ ४६ ॥

वेदनायां महासहा-क्षुद्रसहा-मधुक-श्वदंष्ट्रा-काण्टकारिका-सिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत् ; मूत्रसङ्गे दर्भादिसिद्धम् ; आनाहे हिङ्गु-सौवर्च्चल-लशुन-वचासिद्धम् । अत्यर्थं स्रवति रक्ते कोष्ठागारिकागारमृत्पिण्ड-समङ्गा--धातकीकुसुम--नवमालि-का-गैरिक-सर्ज्जरस-रसाञ्जनचूर्णं मधुनावलिह्याद्यथालाभम् ।

---

प्रतिपादयति । स्पष्टमेतत् किन्तावदुपसृष्टलिङ्गानि यतएवं बिभेमीत्याह षष्ठीति । षष्ठोपसर्गारम्भे इत्यर्थः । छुछुन्दरी गन्धमूषिका, मत्कुणः शय्याकीटः 'छारपोका' इत्याख्यायते । शङ्कीत्यादि । यथावर्णं यथास्ववर्णोचिताम् । पञ्च-विंशतिर्वर्षाणि वयःपरिमाणमस्येति खः "वर्षाल्लुक् च" इति पा०सू०५।१।८८ तस्य लुक् पञ्चविंशतिवर्षः । पित्र्यं श्राद्धादि, धर्म्मोऽग्निहोत्रादिः, अर्थस्तदर्थ-मर्थसंग्रहः । न तावत् स्त्रीतोधर्म्मार्थयोः प्राप्तिरनुपपन्ना "सस्त्रीकोधर्म्ममाचरेत्" तथा "अर्थस्य संग्रहे चैनां व्ययेचैव नियोजयेत्" इति स्मरणात् ॥ ४०—४४ ॥

तत्रेत्यादि । पूर्व्वोक्तैः गर्भावक्रान्तावुपदिष्टैः कारणै र्व्यायामादिभिस्तत्र

न्यग्रोधादित्वक्प्रवालकल्कं वा पयसा पाययेत्, उत्पलादिकल्कं वा कशेरु-शृङ्गाटक-शालूककल्कं वा शृतेन पयसा, उडुम्बर-फलोदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टम्। न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत्॥ ४७॥

अथादृष्टशोणितवेदनायां मधुक-देवदारु-पयस्यासिद्धं पयः पाययेत, तदेवाश्मन्तक-शतावरी-पयस्यासिद्धं विदारिगन्धादि-सिद्धं वा बृहतीद्वयोत्पल-शतावरी-सारिवा-पयस्या-मधुकसिद्धं वा एवं क्षिप्रमुपक्रान्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते ॥४८॥

व्यवस्थिते च गर्भे गव्येनोडुम्बरशलाटुसिद्धेन पयसा भोजयेत्। अतीते लवण-स्नेहवर्ज्याभिर्यवागूभिरुद्दालका-दीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि। वस्त्युदरशूलेषु पुराणगुड़ं दीपनीयसंयुक्तं पाययेदरिष्टं वा॥ ४९॥

---

गर्भे पतिष्यत्काले पिपतिषतीत्यर्थः। जीवनीयोत्पलादौ सू० ३८ अ० उपदिष्टौ तत्राद्यः काकोल्यादिरिति गद्यते, संरम्भोऽल्पानिर्व्वचनीयः सशब्दो वेदनाविशेषः। महासहा माषपर्णी, क्षुद्रसहा मुद्गपर्णी, दर्भादि-र्नाम प्रागुक्तः कुशादिर्गणः। कोष्ठाकारेण मृदागारेण चरतीति कोष्ठा गारिका कीटभेदः 'कुमड़ा पोका' इत्याख्यायते तस्यागारं कोष्ठागारिका-गारम्। समङ्गा वराहक्रान्ता, वनमालिका वनलज्जिकेति पर्य्यायो "वन-वेली" इति विज्ञायते। न्यग्रोधादिर्गणभेदः, प्रवालं नवपल्लवः कशेरुः "कालकेशुर" इति प्राकृताः। शालूकम् कुमुदादिकन्दः। अथेत्यादि उपावर्त्तन्ते निवर्त्तन्ते॥ ४५—४८॥

व्यवस्थित इत्यादि। व्यवस्थिते स्थिरीभूते स्पन्दनेनविनाकृते इति निष्कर्षः।

वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः ; सोऽतिकालमवतिष्ठमानो व्यापद्यते, तां मृदुना स्नेहादिक्रमेणोपचरेत् । उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत् । माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेत् मधु माध्वीकञ्चानुपिबेत् सप्तरात्रम् । कालातीतस्थायिनि तु गर्भे विशेषतः सधान्यमुदूखलं मुषलेनाभिहन्याद्विषमे वा यानासने सेवेत ॥ ५० ॥

वाताभिपन्न एव शुष्यति गर्भः । स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च, तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत् ॥ ५१ ॥

शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरम् । तत् कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति

---

अतीते गते पतित इति यावत् । उद्दालको वनकोद्रवः 'कोदो' इति प्रसिद्धस्यैव भेदः ।,आदिना शाल्यादीनामादेशः । सम्प्रति सप्रतीकारं लीनंनामगर्भमधिकरोति वातेत्यादिना । स्रोतसामार्त्तववहादीनां वातोपद्रवगृहीतत्वाच्छोषादिभि रुपद्रुतत्वाल्लीयते श्लिष्यति नितरामनाप्यायितत्वेन लीनो भवतीति यावत् । उत्क्रोशः कुररी, कुल्माषा अर्द्धस्विन्ना गोधूमादयः । लीनादनन्तरं प्रायः प्रतीकारसाम्यादाह कालेति । कालातीतस्थायिनीति । "सञ्जातसारे महतिगर्भे योनिपरिस्रवात् । वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः" इत्यादि स्मरणात् योनेः परिस्रावादन्यस्माद्वा कारणात् सञ्जातसारत्वेऽप्यसम्यक् परिवृद्धत्वेन सुसङ्कुचिताशयद्वारत्वेनच प्रजननकालमतिक्रामिणीत्यर्थः । अत्र लीनप्रतीकाराद्भिन्नं किञ्चिदुपदेष्टुमिदमुच्यते । विशेषत इति । अत्राऽविभागेऽपि लीनोक्तेनाप्याय्यैव मुषलाभिहननादिकमुपदिशन्ति वृद्ध-

क्षाम्यन्ति । तदेव कदाचित् प्रलीयमानं नागोदरमित्याहुः ; तत्रापि लीनवत् प्रतीकारः ॥ ५२ ॥

अत ऊर्द्ध्वं मासानुमासिकं वक्ष्यामः ॥

मधुकं शाकबीजञ्च पयस्या सुरदारु च ।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम् ।
पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका ॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता ॥
वत्स्यैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः ।
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ ५३ ॥

---

म्नतः । यदाह "तैरेवच सुदृशायाः क्षोभणं यानवाहनैः" इति । वाताऽभिपन्नइति । शोकोपवासादिभिः प्रवृद्धेन वायुना प्रपीडितोवाताऽभिपन्नः । लीनस्तु "लीनाख्ये निस्फुरे" इत्यादितन्त्रान्तरीयस्मरणान्न स्पन्दते नाऽपि च शुष्यतीति गम्यते अयन्तु न तथेत्यस्योपदेशस्यापार्थकत्वेन पर्य्यनुयोगस्यानवकाशः । शुक्रेत्यादि । अवक्रान्तजीवं शुक्रशोणितं गर्भ इति यावत्, वायुनाऽभिप्रपन्नं प्रपीड़ितं सदुदरमाध्मापयतीत्यन्वयः । उपशान्तं निवृत्ताध्मानमित्यर्थः । नैगमेषो नाम वक्ष्यमाणोग्रहविशेषस्तेनापचितं नैगमेषापहृतम् । न तावदर्थोऽयमनुपपन्नोऽपपूर्व्वस्य हरतेरपहारेति तदर्थे प्रयोगदर्शनात् । लीनवत् लीनगर्भवत् ॥ ४९—५२ ॥

अत इत्यादि । मासानुक्रमेण मासिभवं भेषजं मासानुमासिकम् "कालाद् ठञ्" पा०सू०४।३।११ इति ठञ् । शाकः 'शेगुन्' इत्याख्यायते । अश्मन्तकः

कपित्थबृहतीबिल्व-पटोलेक्षुनिदिग्धिकाः ।
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ॥ ५४ ॥
नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥ ५५ ॥
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् ।
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ॥ ५६ ॥
एवमाप्याय्यते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ५७ ॥

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्ध्वं प्रसवमानाया नार्य्याः कुमारोऽल्पायुर्भवति ॥ ५८ ॥

अथ गर्भिणीं व्याध्युत्पत्तावल्पये च्छर्द्दयेत्, मधुराम्ले-नाम्लोपहितेनानुलोमयेच्च, संशमनीयञ्च मृदु विदध्यात्, अन्नपानयोरश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च, गर्भा-विरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः ॥ ५९ ॥

---

पाषाणभेदः ताम्रवल्ली मञ्जिष्ठा, ह्लादनी वन्दा 'परगाछा' इति प्राकृताः । लतेह गुड़ुची अनन्ता श्यामालता, पद्मा भार्गी क्षीरिशुङ्गा वटादिप्ररोहाः त्वक् गुड़त्वक् मधुपर्णिका गुड़ुची, कपित्थेत्यादि । पटोलमूलमत्र मनागेवो-पयोज्यं विरेचनभयात् ॥ ५३—५७ ॥

स्त्रीणां हि पञ्चाशति वर्षे आर्त्तवं क्षयं याति इत्युपदिष्टम्, अथापि चेत् कस्याश्चिदाहारगुणप्रकर्षादुपादानविशेषाद्वा ऽधिकं कालं तत् प्रवर्त्तते तर्हि षट्पञ्चाशतः परं प्रसवमानायास्तस्याः प्रहीनबलवीर्य्यत्वेन कुमारो ऽल्पा-युर्भवतीत्यावेदयितुमिदमुच्यते निवृत्तेति । प्रसूते ऽनेनेति प्रसवः पञ्चाशद्वर्षपर्य्यन्त कालस्तावदेव प्रायेणार्त्तवस्याक्षय्यत्वेनाभ्युपगमात् । तथाच निवृत्तप्रसवाया अतीतपञ्चाशद्वर्षायाः षड्भ्योवर्षेभ्य ऊर्द्ध्वम् । प्रसवमानाया ऋतु[illegible] प्रसवं कुर्व्वन्त्या इत्यर्थः । अथेत्यादि अल्पयेदोषाणामतिक्रमे संशो[illegible] प्रबलदोषे

भवन्ति चात्र ।

सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ।
मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम् ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा ।
हेमचूर्णानि कैटर्य्यः श्वेता दूर्व्वा घृतं मधु ॥
चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि ।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः ॥ ६० ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भिणीव्याकरणं शारीरं नाम दशमोऽध्यायः ॥ १० ॥

---

इति श्रीसुश्रुताचार्य्यविरचित आयुर्वेदशास्त्रे सुश्रुतसंहितायां शारीरस्थानं समाप्तम् ।

---

इति यावत् । अन्नपानयोर्मध्ये मृदुवीर्य्यादिकमश्नीयादित्यन्वयः । सौवर्णमित्यादि । मत्स्याक्षको ब्राह्मी शङ्खपुष्पी स्वनामप्रसिद्धा व्यवहारन्तु 'ढोल कलसी' इत्यभिहितस्यैव । अर्कपुष्पी कुटुम्बिनीति पर्य्यायौ । कैटर्य्यः कट्फलः । परिशिष्टमतिरोहितार्थम् ॥ ५८—६० ॥

इति श्रीहाराणचन्द्रचक्रवर्त्तिविरचिते सुश्रुतार्थसन्दीपने सुश्रुतभाष्ये शारीरस्थाने गर्भिणीव्याकरणं नाम शारीरं दशमोऽध्यायः ।
समाप्तञ्चेदं शारीरस्थानभाष्यम् ।